PUBLISHED BY THE GRACIOUS PERMISSION
OF
**His Highness Rajarajeshwar Maharajadhiraj**
**MAHARAJA SHRI HARISINGHJI BAHADUR, G.C.S.I., G.C.I.E., K.C.V.O.,**
MAHARAJA OF JAMMU AND KASHMIR,
From the original manuscript in
His Highness' private library

---

MAGHABATTA'S

# SHISHUPALAVADHA.

WITH

THE COMMENTARY (SANDEHA—VISHAUSHADHI)

OF

## VALLABHADEVA.



EDITED BY

**RAM CHANDRA KAK**

AND

**HARABHATTA SHASTRI.**

---

**1935.**

SRINAGAR, KASHMIR.

# ŚIŚUPĀLAVADHA.



## PREFACE

The edition of the Śiśupālavadha of Māgha with Vallabha's commentary, which is being presented in the following pages to the scholars and students of sanskrit, is based on the collation of the following manuscripts :—

( *a* ) Of His Highness' Private Library, No: 241. Section 13. Of birch-bark. Old and decayed. Written in Śāradā Script. Contains 375 leaves, first five leaves missing together with others here and there. Has 20 lines per leaf with 25 to 29 letters in each line. Measures $9\frac{1}{4}'' \times 8''$.

( *b* ) Of Sri Pratap Museum, Srinagar. On birch-bark. Very old and decayed. Mostly correct. Contains 300 leaves with some missing at the beginning, in the middle and at the end. Measures $9'' \times 8''$. Each leaf contains 22 lines with 30 letters in every line.

( *c* ) Belonging to Śivaji Chandra of Srinagar. Old and decayed. Written in Śāradā Script. Without a number of leaves at the end. Contains 370 leaves, each having 22 lines of 27 letters. Measures $8'' \times 10''$.

## INTRODUCTION.

The Śiśupālavadha of Māgha is very well known in its original form and through quotations. It is a poem containing twenty cantoes. Its theme is borrowed from the Mahābhārata. The epic tale as described in it is very beautifully given by the eminent historian of the Sanskrit literature A.B. Keith.

The author of the poem Māgha does not say anything about himself except that he was the son of Dattaka otherwise called Sarvāśraya and grand-son of Suprabhadeva minister to Dharmalābha ( Varmalāta of the inscription according to some scholars ). Māgha bears another name i. e, Ghaṇṭāmāgha. As regards his date scholars differ very much. Some assign him to the 7th century A.D., while others to the early part of the 8th century A.D. But about this point there is no doubt that he lived long before Ānandavardhana of the 9th century A.D., who quotes him in his own Dhvanyāloka at pages 114 and 115 ( Bombay edition ).

The Śiśupālavadha has been so popular that it has been commented upon by more than a dozen scholars in Sanskirt. The present edition is published along with the commentary of Vallabhadeva a Kashmirian author. Name of the commentary is Sandehavishaushadhi ( an anecdote against the poison of doubts ). It is written in such a sweet and simple style that even an ordinary student can understand it very easily.

There are two or three Sanskirt writers who go by the name of Vallabhadeva, but the commentator Vallabhadeva above referred to is clearly known to us from Kaiyaṭa's mention of him. Kaiyaṭa in his commentary on the Devīśataka of Ānandavardhana declares that he was the grand-son of Vallabhadeva and son of Chandrāditya. According to this declaration Vallabhadeva appears to have flourished in the first half of the 10th century A.D. He also bore the name of Paramārtha-Chihna. From his own mouth it is known that he was the son of Ānandadeva, that he was a devotee of Śiva and that his teacher was Prakāśavarsha.

His works are :—

1. Commentary on Raghuvaṃśa.
2. ,, ,, Kumārasambhava.
3. ,, ,, Meghadūta.
4. ,, ,, Vakroktipanchāśikā.

5. Commentary on Sūryaśataka.
6. ,, ,, Rudraṭālankāra.
7. Gloss on Devīśataka.

The manuscript in possession of the Research Department has the following verses at the end :—

सूनुरानन्ददेवस्य रणभूव्योमभास्वतः ।
व्यधत्त टीकां काव्येऽस्मिन् वल्लभः सूरिवल्लभाम् ॥ १ ॥
विवरणमन्यद् दृष्ट्वा बुधैस्ततो ज्ञास्यते विशेषोऽत्र ।
येन न भुक्तं निम्बं द्राक्षायां किं गुणज्ञोऽसौ ॥ २ ॥
श्लोकानां सूचनैषात्र सहस्राणि दशैवच ।
मूलग्रन्थसहायात्तु द्वे सहस्रे तथा दश ॥ ३ ॥
विवृतिं विधाय शुभलव आप्तो यः खलु मयाद्य तेनास्तु ।
मात्सर्यगदविरहितो लोकः परहितसुभाषितव्यसनी ॥ ४ ॥

The verse number 3 gives the extent of the commentary as also of the text in the scale of the Anushṭup metre.

The verse number 4 is written in imitation of the conclusion of the Mahāyāna works.

Srinagar, Kashmir.<br>January 11, 1941.

MADHUSUDAN KAUL.

# शिशुपालवधम् ।

## माघभट्टविरचितम् ।

### वल्लभाचार्यविरचितया संदेहविषौषध्याख्यया व्याख्ययोपेतम् ।



### प्रथमः सर्गः ।

श्रियः पतिः श्रीमति शासितुं जग-
ज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्
हिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥

यस्य भृङ्गावलिः कण्ठे दानाम्भोराजिराजिते ।
भाति रुद्राक्षमालेव स नः पायाद्गणाधिपः ॥ १ ॥
अभीष्टफलसंपत्तिहेतुं स्मृत्वा सरस्वतीम् ।
शिशुपालवधे काव्ये सारटीका विधीयते ॥ २ ॥
कृता महद्भिर्यत एव टीका ममापि यत्नस्तत एव युक्तः ।
ब्रह्माच्युताभ्यर्चितपादपद्मो न पूज्यते किं मनुजैर्महेशः ॥ ३ ॥
सत्यं रम्याणि वस्तूनि दूषयन्ति समत्सराः ।
किंतु केचित्प्रमाणज्ञा विद्यन्ते पश्चषा नराः ॥ ४ ॥

अभिलषितासिद्ध्यर्थं मङ्गलादि काव्यं कर्तव्यमिति[१] स्मरणात् कविः श्रीशब्दमिहादौ प्रयुङ्क्ते । हरिर्मुनिं ददर्शेति वाक्यार्थः । को हरिरित्याह—श्रियः पतिर्लक्ष्मीनाथो विष्णुः । मुनिं कमित्याह—हिरण्यगर्भाङ्गभुवं ब्रह्मतनयं नारदम् । यद्यपि च मुनित्वेनाप्यसौ तदा नाज्ञायि तथापि येन केनचिच्छब्देन निर्देशे कर्तव्ये मुनिशब्दः प्रयुक्तः, कवेर्वा वचनमेतत् तेन चादौ ज्ञातमेव । कदाद्रा-

---

१ 'तिकर' क. पाठः ।

क्षीत् वसुदेवसद्मनि शूरतनयगृहे श्रीमति [1]संपत्तियुक्ते वसन् तिष्ठन् कलिद्वापरसंधावित्यर्थः । ननु भगवान् पुरातनमुनिर्बदर्याश्रमनिवासी किमिति तत्रोवासेत्याह—जगत् भुवनं शासितुं रक्षितुम् । एतेन कर्माधीनत्वं भगवतो निरस्तम् । कीदृशो हरिर्जगतां भुवनानां निवासः आधारः । निवसन्त्यस्मिन्निति निवासः । मुनिं कीदृशमम्बरादाकाशादवतरन्तं पतन्तम् । अङ्गभूशब्द उपचारान्मानसेऽपि पुत्रे प्रवर्तते यथा सरसिजशब्दः स्थलपद्मे "उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसंभवः परागः । वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मी"मिति । अत्र केचिदचूचुदन्—शौरिर्जगच्छासितुं वसुदेवसद्मनि वसन्नम्बरादवतरन्तं नारदं ददर्शेत्येतावतैव विवक्षितस्यार्थस्योक्तत्वात् पदान्तरोपादानं वृत्तपूरणार्थमेवेति, तदसम्यक् यतोऽत्रैवं सत्यनुप्रासः शब्दालंकारस्त्यक्तः स्यात् विरोधाभासश्चार्थालंकारः । यः किल साक्षाच्छ्रीपतिः स श्रीमति गृहे वसति यश्च जगन्निवासः स परगृहे वसतीति । मङ्गलादित्वं च काव्यस्य नोक्तं स्यात् । किंच स्वरूपप्रतिपादनाय विशेषणानि न प्रयोक्तव्यानीति न केनचिन्निषेधः कृतः । श्रीमतीत्यनेन तु वसुदेवस्य कंसादिरिपुविनाशः प्रतिपादितः, नहि तेषु सत्सु तद्गृहे श्रीमत्ता भवति । तथा यदि नारदमित्येतावदुच्यते ततस्तस्य पूजाहेतुर्ब्रह्मपुत्रता नोक्ता स्यात्, चयस्त्विषामित्यादिश्च निरवतारः स्यादिति सर्वमेव निरवद्यम् । सर्गेऽस्मिन् वंशस्थं वृत्तम् । तल्लक्षणं तु "उशन्ति वंशस्थमिदं जतौ जरा"विति ॥ १ ॥

**गतं तिरश्चीनमनूरुसारथेः**
**प्रसिद्धमूर्ध्वं ज्वलनं हविर्भुजः ।**
**पतत्यधो धाम विसारि सर्वतः**
**किमेतदित्याकुलमीक्षितं जनैः ॥ २ ॥**

कीदृशं मुनिमद्राक्षीदित्याह—जनैः सामान्यलोकैरित्यस्मात्कारणादाकुलं ससंभ्रममीक्षितं दृष्टम् । तदेव कारणमाह—एतदधो धाम तेजः पतति प्रसरति सर्वतः सर्वस्यां दिशि विसारि व्यापि किमेतत्किं वस्तु एतद्भवेदित्यर्थः । स्वरूपनिर्देशार्थ इतिशब्द इति त्वन्ये । इतीत्थमाकुलमनिश्चितमैक्षीत्यर्थः । कदाचि-

---

[1] 'सर्वसंमृद्धि' क. पाठः ।

त्सावित्रमेतत्तेजो भवेन्नेत्याह—अनूरुसारथेरादित्यस्य तिरश्चीनं तिर्यग् गतं प्रसरणं प्रसिद्धं प्रतीतमेतच्चाधः पतति । कदाचित्कार्शानवं स्यान्नेत्याह—हविर्भुजोऽग्नेरूर्ध्वं ज्वलनं प्रतीतम्, एतच्च सर्वतो विसारि अतः किमेतत् स्यात् । प्रसिद्धशब्दोऽत्रोभयेनापि संबध्यते । गतमिति भावे क्तः । तिरश्चीनमिति "विभाषाञ्चेरदिक्स्त्रिया"मिति स्वार्थे खः । अविद्यमानावूरू यस्यासौ अनूरुररुणः । ईक्षितमिति निष्ठया कर्मण्यभिहितेऽपि पूर्वक्रियापेक्षा द्वितीया । अत्रापि चोदयन्ति—[1]ऊनमि[ति ? दं] वाक्यं साध्याहारत्वात् । अत्र हि संशये कविना निषेधविकल्पौ न निबद्धावतश्चैवं वक्तव्यम् "द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः ।[2]"गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वं ज्वलनं हविर्भुजः । पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनै"रिति पादद्वयसाध्याहारोऽयं श्लोक इति । युज्यत एतत् । केवले संशयालंकारे सति संकरालंकारत्वे न कश्चिद्दोषो यतः कश्चिदत्रोत्तरालंकारभागः कश्चित्तु संशयांशः । उत्तरवचनात्पूर्ववचनोन्नयनं यत्रेत्युत्तरलक्षणम् ॥ अधो धामेति द्वे पदे ॥ २ ॥

किं जनैर्यथा संशयितमेवं भगवतापीत्याह—

चयस्त्विषामित्यवधारितं पुर-
स्ततः शरीरीति विभाविताकृतिम् ।
विभुर्विभक्तावयवं पुमानिति
क्रमादमुं नारद इत्यबोधि सः ॥ ३ ॥

स विभुः सर्वव्यापी हरिरमुं मुनिं क्रमान्नारद इत्यबोधि नारदत्वेन निश्चिकाय । तामेव परिपाटीं विशेषणमुखेनाह--कीदृशममुं पुरः पूर्वं त्विषांचयो दीप्तिपुञ्ज[3] इत्यवधारितं लक्षितं ज्ञातमीक्षितं, ततः किंचित्सामीप्याद्विभाविताकृतिं लक्षिताकारं । केन रूपेण दृष्टसंस्थानमित्याह—शरीरीति, शरीरी देहवानयं पतति नतु तेज एवेत्यनेन प्रकारेण ज्ञातस्वरूपमित्यर्थः । ततोऽपि समीप्याद्विभक्तावयवं मुनिं, विभक्ता विभागेनोपलभ्यमाना अवयवा मुखादयो यस्य तम् । केन रूपेण विभक्तावयवमित्याह—पुमानिति, शरीरी पुमानयं पत-

---

१ 'न्यूनं' ख. पाठः । २ 'राकाशशाङ्कः किमकालगोचरो रात्रिं विना सोऽपि विराजते कथम्' इति अधिकः ख. पाठः । ३ 'ज्ञमि' ख. पाठः ।

तीति ननु पक्ष्यादिजातीय[1] इति बुद्धवानित्यर्थः । ततोऽप्यतिनैकट्यादमुं नारद इत्यबोधि । इतिशब्दः सर्वत्र प्रातिपदिकार्थमात्रेऽवस्थापनार्थः, यदि हि नारदमबोधि इत्युच्यते तदा [जन्मा? कर्मा]न्तरयोगे सति नारदस्य कर्माभावः प्रतीयते । नारदत्वेनाबुद्धेत्ययं त्वर्थो[2] न बुध्यतेऽत एव प्रातिपदिकार्थत्वे सति नारदाद्[3] द्वितीया न भवति । नारद इत्यतः पदसमुदायादसौ भवितुं नैवार्हति अप्रातिपदिकत्वात्, अर्थवत्समुदायानां हि समासग्रहणं नियमार्थमुक्तं प्रातिपदिकाच्च विभक्तयः उक्ताः । यत्तु कर्म प्रातिपदिकं च ततो भवन्त्येव, यथामुमिति, एवमन्यत्र । केचित्त्वनुभूतकर्मत्व एव नारद इति न स्वरूपनिरूपणाय प्रत्यवमृष्यत इति किलाहुः ।

अन्यच्च कीदृशममुमिति तद्वर्णनाया[4]ह—

नवानधोऽधो बृहतः पयोधरान्
समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना
स्फुटोपमं भूतिसितेन शंभुना ॥ ४ ॥

नवान् सजलान् बृहतः स्थूलान्पयोधरान् मेघानधोऽधो घनाघनानामधस्तात्समीपे भवन्तमित्यर्थः । तथा समूढं पक्वं शोधितं यत् कर्पूरं घनसारस्तस्य यः परागो रजस्तद्वत् पाण्डुरं सितं, शुक्लो हि नारद इत्यागमः । अत एव भस्मोद्धूलितेन शिवेन क्षणं स्फुटोपमं सु[5]सदृशम् । कीदृशेन क्षणे नृत्तोत्सवेऽभिनयवशादुत्क्षिप्ता ऊर्ध्वं भुजवनोपरि कृता गजेन्द्रकृत्तिः करिचर्म येन । भगवान् हि करिचर्मवसनः, । क्षणं स्वल्पकालं यावत्मेघप्रत्यासत्तिरित्यर्थः । अधोध इति समीपे "उपर्यध्यधसः सामीप्ये" इति द्वित्वम् । तद्योगे च पयोधरानिति "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" ॥ इति च षष्ठ्यपवादे द्वितीया । षष्ठ्या हि प्रोक्ता सा द्वितीया। एवं हि लक्ष्यदर्शनम् । केचित्तु प्रातिपदिकार्थमात्रतामाहुस्तेषामत्र षष्ठ्येव स्यात् । अभितो ग्राममुभयतो ग्राममित्यादीनि च वाक्यान्येतावन्त्येव प्रयोगभाञ्जि स्युः । शंभुनेति "तुल्यार्थै"रिति तृतीया । अतुलोपमेति प्रति-

१ 'तिरि' ख. पाठः । २ 'र्थं नु' ख. पाठः । ३ 'दे' ख. पाठः । ४ 'र्थमा' ख. पाठः ।
५ 'सम' ख. पाठः ।

षेधो न भवति समासे गुणीभूतत्वादुपमाशब्दस्य । यद्येवं तृतीयापि न स्यात् तुल्यार्थस्याप्रधानत्वात् "तेनैकदिगि"ति ज्ञापकाद्भविष्यति । तत्र हि एकशब्दः समासेऽन्तर्भूत इति कथं तृतीया समर्थविभक्तिरुपपद्यते, प्रतिषेधे तु ज्ञापकाभावः । अथवातुलोपमाशब्दयोग उपमेयात् तृतीया निषिध्यते न तूपमानात् । यथा तुला देवदत्तस्य नास्ति, उपमा कृष्णस्य न विद्यते । अत्र च शंभुरुपमानम् । केचित्तु शंभुना सह स्फुटोपममिति तृतीयां सहार्थेऽन्ये तु करणे तृतीयामाहुः ॥ ४ ॥

दधानमम्भोरुहकेसरद्युती-
जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो
धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥

अन्यच्च कीदृशममुं, पद्मकिञ्जल्कगौरीर्जटा बिभ्राणं धारयन्तं, तथा 'शरदिन्दुकिरणदीप्तिमतश्च व्रततिततीर्लतापंक्तीर्धारयन्तं धराधरेन्द्रमिव, हिमवत्सदृशमित्यर्थः । कीदृशीर्विपाकपिङ्गाः परिणामकपिशास्तथा तुहिनस्थलीरुहः, तुहिनेन युक्ता स्थली तुहिनस्थलीति शाकपार्थिवादित्वात्समासः । तत्र रोहन्ति जायन्ते इति तद्रुहः-क्विप् शस् । एवं द्युत इति पाठे च । हिमाधिष्ठितायां भुवि लताः पच्यन्त इति चिन्त्यम् । कर्मण उपमानं तद्विभक्त्यैव निर्दिश्यते इति धराधरेन्द्राद् द्वितीयोत्पत्तिः, नहि भिन्नविभक्तिकयोरौपम्यं घटते । केचित्तु दर्शनक्रियापेक्षामेव तामाहुः । यथा कश्चिदेवंविधं नगेन्द्रं पश्यत्येवमसौ तं ददर्शेत्यर्थः । एवं सर्वत्र योज्यम् ॥ ५ ॥

पिशङ्गमौञ्जीयुजमर्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥

अन्यच्च कीदृशं, पिशङ्गी कपिला हरिद्रारुणा या मौञ्जी मेखला तां युनक्ति धारयतीति पिशङ्गमौञ्जीयुक्तम् । अर्जुनच्छविं शुक्लवर्णं तथाञ्जनद्युति कज्जलकृष्णमे-

१ 'शारदे' ख. पाठः ।

णाजिनं हारिणं चर्म वसानं परिदधतमतश्च शितिवाससो नीलाम्बरस्य सीरपाणेर्देहं विडम्बयन्तमनुकुर्वन्तम् । तथा सुवर्णसूत्रेण तपनीयडोरकेणाकलितं ग्रथितमधराम्बरं कटीशाटकं यस्यास्तां तनुम् । मौञ्ज्या डोरकमुपमानं, कृष्णाजिनस्य नीलं वासस्तद्धि नाम्नैवाक्षिप्तं, मुनेर्हली । पूर्वमवगतेऽपि नारदस्य शौक्ल्ये प्रतिश्लोकं कल्पितोपमालंकारसिद्धये तदुपादीयते । नचेह सूत्राणि व्याख्यायन्ते येन गुरुलाघवं विचिन्त्यते उतरत्र वानुवृत्तिर्भवति । मुञ्जस्य विकारो मेखला मौञ्जी "प्राणिरजतादिभ्योञ्" । शितिर्नीलो भवेद्वर्णः शिती धवलमेचकाविति ॥६॥

विहङ्गराजाङ्गरुहैरिवाततै-
र्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।
कृतोपवीतं हिमशुभ्रमुच्चकै-
र्घनं घनान्ते तडितां गुणैरिव ॥ ७ ॥

हिरण्मयोर्वीरुहवल्लितन्तुभिः सुवर्णवृक्षलतासूत्रैः कृतोपवीतं धृतयज्ञोपवीतं, तथा हिमशुभ्रं तुहिनधवलम् । कीदृशैस्तन्तुभिः, विहङ्गराजाङ्गरुहैरिवाततैर्गरुडपत्रैरिव दीर्घैः, तेऽपि सौवर्णाः । अतश्च घनान्ते वर्षात्यये घनमिवाभ्रमिव सितमेघसदृशमित्यर्थः । कीदृशं घनं, तडितां गुणैर्विद्युद्दामभिः कृतोपवीतमिव कृतोपवीतं संबद्धमित्यर्थः । यद्दिवा तडितां गुणैरुपलक्षितम् । उभयमपि उच्चकैरुन्नतम् । घनान्तः शरन्मुखं, तत्र च निर्जलानामपि मेघानां विद्युतो भवन्त्येव । हिरण्यस्य विकारो हिरण्मयः "दाण्डिनायने"ति निपातितः ॥ ७ ॥

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा
लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा
कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

चारु च तच्चमूरुचर्म, "चर्मप्रावरणा हि मुनयः" तेन चकासतं शोभमानं "समूराश्च चमूरुश्च मृगा अजिनयोनयः" इतिवचनात् । कीदृशेन, निसर्गचित्राणि स्वभावेनानेकवर्णान्युज्ज्वलानि मनोहराणि सूक्ष्माणि पक्ष्माणि[2] यस्य तेन ।

---

१ 'हरिणच' क. पाठः । 'रोमाणि यस्य' ख. पाठः ।

तेन लसन् स्फुरन् बिसच्छेदो मृणालभङ्गः स इव शुक्लं यदङ्गं शरीरं तत्र सङ्गः संपर्को विद्यते यस्य । छेदस्य सिततरत्वात्स उपमानं, भावानयने द्रव्यानयनमिति स्फुटवता बिसेनौपम्यमत्र नतु च्छेदमात्रेण । अतश्च कुथेन वर्णकम्बलेन शोभमानं नागेन्द्रमिव महेभमिव । कं नागेन्द्रमित्याह—इन्द्रवाहनमैरावणं, सोऽपि शुक्लः कुथोऽपि चित्रसूक्ष्मरोमा सिताङ्गसङ्गी च । यद्यपि "अक्षिरोमसु पक्ष्माख्या स्त्रीत्वाच्च कुथ"इति वररुचिस्तथापि विपर्ययो महाकवीनां दृश्यते । यथा—"कामिनि कउपलपमपुरिता । कमिणि कपोलपहपरिणउणठ अबुद्धिर्विहवीति" उत्सृष्टध्वजकुथकङ्कटा इति च । चकासतमिति "जक्षित्यादयः षडि"त्यभ्यस्तसंज्ञा"नाभ्यस्ताच्छतु"रिति नुमभावः । वहतीति वाहनं "कृत्यल्युटो बहुलम्" । "वाहनमाहिता"दिति निर्देशाद्वृद्धिः ॥ ८ ॥

अजस्रमास्फालितवल्लकीगुण-
　　क्षतोज्ज्वलांगुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्द्धया
　　विभान्तमच्छस्फटिकाक्षमालया ॥ ९ ॥

अच्छा निर्मला या स्फटिकाक्षमाला तया विभान्तं चकासतम् । स्फटिका एवाक्षाः पद्मबीजानीव निर्मलत्वात्परिवर्तुलत्वाज्जपोपयोगित्वाच्च तेषां माला स्रक् तया । कीदृश्या, अजस्रं शश्वदास्फालिता वादनायाहता ये वल्लकीगुणा वीणाविशेषतन्त्र्यस्तैः क्षतस्ता[1]डितोऽतएव स्वभावाद्वोज्ज्वलो योऽङ्गुष्ठनखस्तस्यांशुभिः किरणैर्भिन्नयाच्छुरितया । अतश्चोत्प्रेक्ष्यते—पुरः पूर्वस्मिन् भागे प्रवालैर्विद्रुमैरिव पूरितार्द्धया, लोहितांशुसंपर्कवशात् ज्ञायतेऽर्धं प्रवालैरुम्भितमर्धं च स्फटिकैरित्यर्थः । अच्छग्रहणं लौहित्याधानस्यातिशयप्रदर्शनार्थम्, निर्मलं हि नितरां वर्णान्तरं गृह्णाति । आश्राविततेति पाठे वादितेत्यर्थः । जसेर्नञ्पूर्वस्य "नमिकम्पिस्म्यजसे"ति रप्रत्यये कृतेऽजस्रमिति भवति ॥ ९ ॥

रणद्भिराघट्टनया नभस्वतः
　　पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।

---

१ 'स्फो' ख. पाठः । २ 'पी' ख. पाठः ।

स्फुटीभवद्ग्रामविशेषमूर्च्छना-
मवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥

महतीं शततन्त्रीकां वीणां विस्मयवशात् पुनः पुनरीक्षमाणम् । कीदृशी-मिति विस्मयस्य निमित्तमाह—स्वरैः स्वरोद्भाविनीभिस्तन्त्रीभिः करणैः स्फुटी-भवन्त्येवानुभूयमाना ग्रामविशेषस्य गान्धारस्य षड्जस्य मध्यमस्य वा मूर्च्छ-ना सारणा यस्यास्तां स्फुटीभवद्ग्रामविशेषमूर्च्छनाम् । स्वरा अप्यनाहताः कथं रेणुरित्याह—नभस्वतो वायोराघट्टनया चालनया रणद्भिः शब्दायमानैः स्वरैः । अन्यच्च कीदृशैः, पृथग् ग्रामत्रयेण विभिन्नं विभागेनावस्थितं श्रुतिम-ण्डलं ध्वनिविशेषचक्रं येषां तैः । स्वरा हि[१] श्रुतिभिरारब्धाः । दत्तसारणाया वीणाया वा तत्स्पर्शवशाद्वादिताया इव ग्रामव्यक्त्या विस्मयमानमिति श्लोकार्थः । अन्ये तु वैदग्ध्याख्यापनाय । तत्र श्रुतयो द्वाविंशतिः स्वराः षड्जर्षभगान्धार–मध्यम-पञ्चम–धैवत–निषादाः सप्त । षड्जमध्यमौ द्वौ ग्रामौ गान्धारश्च । अस्य तु स्वरूपं स्व[२]वर्गादेव ज्ञातुं शक्यं तत्स्थत्वात् । "उत्तरमन्द्रा रजनी तृतीया भूत्त-रायता । चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरीकृता ॥ अश्वक्रान्ता तु षष्ठी स्यात्सप्तमी चाभिरुद्गता । स्वरक्रमगता विद्या[३]त्सप्तैताः षड्जमूर्च्छनाः ॥ सौवी-रा[४] मध्यमग्रामे हरिणाश्वा तथैव च । स्यात्का[५]लोपरता चैव चतुर्थी शुद्धम-ध्यमा ॥ मार्गी च पौरवी चैव ह्यष्टका च यथाक्रमम् । सर्वास्तु पञ्च षट् सप्त-साधारणकृताः स्मृताः ॥" श्रुतीनां त्वयं विभागः—"षड्जत्वेन गृहीतो यः षड्जो ग्रामध्वनिर्भवेत् । ततश्चोर्ध्वं तृतीयः स्यादृषभो नात्र संशयः ॥ ततो[६] द्वितीयो गान्धारश्चतुर्थो मध्यमस्ततः ॥ पञ्चमात्पञ्चमस्तद्वत् तृतीयो धैवतस्त-तः । निषादतो द्वितीयस्तु ततः षड्जश्चतुर्थकः ॥ पञ्चमो मध्यमे ग्रामे मध्य-माद्यस्तृतीयकः । एवं[७] ध्वनिविशेषान्यः सर्वान् षड्जादिसंज्ञितान् ॥ व्यवस्थि-तान्तरान्वेत्ति स वेत्ति स्वरमण्डलम् ॥" इति ॥ १० ॥

निवर्त्य सोऽनुव्रजतः कृतानती-
नतीन्द्रियज्ञाननिधिर्नभःसदः ।

---

१ 'स्वराहित' ख. पाठः । २ 'स्वर्गात्' ख. पाठः । ३ 'विद्याः' ख. पाठः । ४ 'सौवीर' ख. पाठः । ५ 'कौलोपनता' ख. पाठः । ६ 'यतो' ख. पाठः । ७ 'एषां' ख. पाठः ।

समासदत् सादितदैत्यसम्पदः
पदं महेन्द्रालयचारु चक्रिणः ॥ ११ ॥

स नारदोऽनुव्रजतः पश्चादागच्छतो देवान् विसृज्य स्वर्गाद्रमणीयं चक्रिणो विष्णोः पदमालयं समासदत्प्राप । कृतानतिरर्धप्रणामो यैस्तान् कृतानतीन् । अनुज्ञातो हि शिरो नमयतीत्याचारः । ननु नभःसदो देवाः सन्तः कस्मादेवंविधं गौरवं कुर्वन्तीत्याह—अतीन्द्रियस्याज्ञातिक्रान्तस्य परोक्षस्य ज्ञानस्य सर्ववित्त्वलक्षणस्य यस्मात् सन्निधिः स्थानम् । कीदृशस्य चक्रिणः, सादिता नाशिता दैत्यसंपद्दानवलक्ष्मीर्येन तस्यैतेन भङ्ग्या गमनसाफल्यकथनम् । नभसि सीदन्तीति नभःसदो देवाः । समासददिति पदसंस्कारपक्षाश्रयणेन[1] भूतसामान्ये लुङ् । लृदित्वादङादेशः च्लेः ॥ ११ ॥

पतन् पतङ्गप्रतिमस्तपोनिधिः
पुरोऽस्य यावन्न भुवि व्यलीयत ।
गिरेस्तडित्वानिव तावदुच्चकै-
र्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥

स तपस्वी पतन् आकाशादवतरन् अस्य हरेः पुरोऽग्रे भूमौ यावन्न व्यलीयत नोपाविशत् तावदेवाच्युतो जवेन संभ्रमेण पीठादासनादुदतिष्ठत् प्रत्युत्थानं[2] चकारेत्यादरातिशयः । यावत्तावच्छब्दौ निपातितौ क्रिययोस्तुल्यकालतामाहतुः । कीदृक् मुनिः, पतङ्गेन सूर्येण तेजस्वित्वात्प्रतिमोपमा यस्य स पतङ्गप्रतिमः, यदि वा पतङ्गेन प्रतिमः सदृशः सूर्याभः । को यथा कुत उदतिष्ठदित्याह—गिरे[3]र्नगाद्यथा तडित्वान्मेघ उत्तिष्ठति, इत्येतावत्यत्रोपमा । उच्चकैरुन्नतात्पीठाद्विशेषरूपेणोच्चत्वस्याज्ञानादकजुत्पत्तिः । व्यलीयतेति, लीङो दैवादिकस्य कर्तरि लङ् । तडित्वानिति "तसौ मत्वर्थे" इति भसंज्ञा तेन पदाश्रयं दत्वं न भवति ॥ १२ ॥

अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथंचित्फणिनां गणैरधः ।
न्यधायिषातामभिदेवकीसुतं
सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥

---

१ 'येण' ख. पाठः । २ 'त्युद्गमनं' क. पाठः । ३ 'पर्वतात्' ख. पाठः ।

अथानन्तरं प्रजापतिसुतेन नारदेनाभिदेवकीसुतं कृष्णाभिमुखं भूमिपृष्ठे चरणौ न्यधायिषातां निक्षिप्तौ । कीदृशे भूतले, प्रयत्नेनोन्नमिता ऊर्ध्वीकृताः सन्तो गौरववशात् पुनरानमन्तः कुटिलीभवन्तः फणाः शिरांसि येषां तैः फणिनां गणैरनन्तादिनागवृन्दैः कथंचित् क्लेशेन धृते ऊढे । एतेनोभयोर्महापुरुषलक्षणं गौरवातिशयश्च प्रतिपाद्यते । उन्नमितेति ण्यन्तान्नमेर्निष्ठा अमन्तत्वात् मित्संज्ञा । न्यधायिषातामिति निपूर्वाद्धातेः कर्मणि लुङ् च्लेः सिच् "स्यसिच्सीयुट्तासिषु" इत्यादिना "स्थाघ्वोरिच्चे"ति विधिं परत्वाद्बाधित्वा चिण्वद्भावः इट्च, युक् । अभिदेवकीसुतमिति "लक्षणेनाभिप्रती आभिमुख्ये" इति द्वितीया ॥१३॥

तमर्घ्यमर्घ्या[१]दिकयादिपूरुषः
सपर्यया साधु स पर्य्यपूपुजत् ।
गृहानुपैतुं प्रणयादभीप्सवो
भवन्ति नापुण्यकृतां मनीषिणः ॥ १४ ॥

तं मुनिं नारदं स पुराणो मुनिः सपर्यया पूजया साधु विधिवत् पर्य्यपूपुजदार्चिचत् । यतोऽर्घ्यं पूजार्हम् । कीदृश्या पूजया अर्घ्य[२]मादिर्यस्यास्तयार्घ्या[३]दिकया, आदिग्रहणं गोमधुपर्काद्यर्थम् । सामान्यविशेषभावश्च कारकाणां दृश्यते यथोष्ट्रासिकामास्ते, इति पूजया पर्य्यपूपुजदिति वचनं न विरुध्यते । आदिपुरुषेणापि सता यद्ब्राह्मणोऽर्चित इति, एतन्नायुक्तमित्यर्थान्तरन्यासेनाह–मनीषिणो विदितवेद्या अपुण्यकृतां निराचाराणां पापानां प्रणयात्प्रीत्या गृहानुपैतुं गेहमागन्तुमभीप्सवोऽभिलाषुका न भवन्ति, भगवांश्च पुण्यवान् नारदश्च प्रीत्या तद्गेहमागत इति युक्तमेव तस्यार्चनम् । यदि हि हरिरातिथेयोऽतिथेः सपर्यां न कुर्यात् मुनिर्नागच्छेत् । अर्घशब्दोऽर्हतेरचि न्यङ्क्वादित्वात्[४] कुत्वम् । अर्घमर्हतीति अर्घ्यः "दण्डादिभ्यो यः" । पुरुष एव पूरुषः "अन्येषामपि दृश्यते इति दीर्घः । सपर्येति कण्ड्वादिषु सपरशब्दपाठाद्यक् "अ प्रत्ययात्" । पर्यपूपुजदिति पूजेर्ण्यन्ताल्लुङ् "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" । णिलोपः "णौ चङ्युपधाया ह्रस्वः" । चङीति द्वित्वं "दीर्घो लघोः । हलादिः शेषः" । एवमभिन्यवीविशदिति । उपैतुमिति "इच्छार्थेषु लिङ्लोटौ । समानकर्तृकेषु तुमुन्" । मनीषा बुद्धिः सा विद्यते येषामिति प्रशंसायां "व्रीह्यादिभ्यश्चे"ति इनिः ॥ १४ ॥

---

१ 'र्घा' ख. पाठः । २ 'र्घं' ख. पाठः । ३ 'र्घा' ख. पाठः । ४ 'दिपाठात्' ख. पाठः ।

न यावदेतावुदपश्यदुत्थितौ
जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनि-
श्चिरंतनस्तावदभिन्यवीविशत् ॥ १५ ॥

एतौ मुनी नारदनारायणौ यावज्जन उत्थितौ नोदपश्यत् नैक्षत, तावच्चिरंतनो मुनिर्नारायणो नारदं मुनिमात्मीयकरढौकिते विष्टरेऽभिन्यवीविशत् संमुखमुपवेशितवान्। एतेन संभ्रमः कथ्यते। कीदृशौ तुषारपर्वतो हिमवांस्तत्सदृशो मुनिरञ्जनपर्वतोऽञ्जनगिरिस्तदाभः श्रीकृष्णः। उदपश्यदित्यत्र दर्शनमात्रं धात्वर्थो नतूत्प्रेक्षा। यदिवोत्थितौ तुषाराञ्जनपर्वतसदृशावुभावपि याव[1]न्नोदपश्यदूहां च न चकारेत्युत्प्रेक्षैव धात्वर्थः। अभिन्यवीविशदिति कर्त्रभिप्रायक्रियाफलविवक्षायां "णिचश्चे"ति तङभावः। "नेर्विश"इत्येतत् तु प्रकृत्यन्तात् ॥ १५ ॥

महामहानीलशिलारुचः पुरो
निषेदिवान् कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकै-
रचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥

स मुनिः कंसकृषः श्रीकृष्णस्य पुरोऽग्रे आसने निषेदिवान्निषण्णः सन् सितरश्मेरभिरामतां शोभामचूचुरदनुचकार। अनुकार एवात्र चौर्यम्। कीदृशस्य कंसारेर्महती या महानीलशिला[2] इन्द्रनीलदृषत्तस्या इव रुक् कान्तिर्यस्य कृष्णस्येत्यर्थः। शशिनः कीदृशस्याभिसायं दिनान्ताभिमुखं श्रितोऽधिष्ठित उदयपर्वतो येन तस्य श्रितोदयाद्रेरुच्चकैरुच्चैर्विष्टरे। दिनान्तः कालत्वात् कृष्णस्योपमानं, मुनेश्च शशी, विष्टरस्योदयाद्रिः। कंसं कृष्टवानिति कंसकृट् तस्य। अचूचुरदिति पूर्ववत्। अभिरमन्तेऽस्मिंश्चक्षुर्मनांसीत्यभिरामः "हलश्चे"ति घञ्। निषेदिवानिति सदेः "भाषायां सदवसश्रुव"इति क्वसुः ॥ १६ ॥

विधाय तस्यापचितिं प्रसेदुषः
प्रकाममप्रीयत यज्वनां प्रियः ।

---

१ 'एताविति याव' ख. पाठः। २ 'दृषत्' ख. पाठः।

**ग्रहीतुमार्यान् परिचर्यया मुहु-**
**र्महानुभावा हि नितान्तमर्थिनः ॥ १७ ॥**

यज्वानो यायजूकास्तेषां प्रियः श्रीकृष्णो याज्यत्वात् स प्रसेदुषः प्रसन्नस्य मुनेरपचितिमर्चां विधाय कृत्वा प्रकाममत्यर्थमप्रीयत तुतुषे[१] । किमिति पूजया कृतया तुष्ट[२] इत्याह—यस्मात् ये महानुभावा उन्नतचित्तास्त आर्यान् गुणिनः परिचर्यया सेवया ग्रहीतुमाराधयितुं नितान्तं[३] सुतरामर्थिन इच्छवः, यतो महान्तो गुणवदाराराधयिषव इत्यर्थः । चायेः क्तिनि चिभावेऽपचिति शब्दः । अप्रीयतेति प्रीङो दैवादिकस्य कर्त्तरि लङ् । यज्वेति "सुयजोः ङ्वनिप्" । ग्रहीतुमिति "समानकर्तृकेषु तुमन् । ग्रहो लिटि दीर्घः" । अर्थिरिच्छार्थोऽर्थयन्तेऽभीक्ष्णमर्थिनः । परिचरणं परिचर्या । "परिचर्ये"ति निपातितः ॥ १७ ॥

**अशेषतीर्थोपहृताः कमण्डलो-**
**र्निधाय पाणावृषिणाभ्युदीरिताः ।**
**अघौघविध्वंसविधौ पटीयसी-**
**र्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ १८ ॥**

हरिः प्रणतो भूत्वापो[४] जलान्यग्रहीत् । कीदृशीः निखिलपुण्यजलाशयेभ्यो गृहीतास्तथा मुनिना कमण्डलुतः करे निक्षिप्य क्षिप्तास्तथा पापनिकुरुम्बशमने पटीयसीर्दक्षतराः । सुष्ठु पटवः[५] पटीयस्यः । ईयसुनि "उगितश्चे"ति ङीप्[६] टिलोपः ॥ १८ ॥

**स काञ्चने यत्र मुनेरनुज्ञया**
**नवाम्बुदश्यामवपुर्न्यविक्षत ।**
**जिघाय जम्बूजनितश्रियः श्रियं**
**सुमेरुशृङ्गस्य तदा तदासनम् ॥ १९ ॥**

स घनाघननीलदेहः श्रीकृष्णो यत्र सौवर्णविष्टरे नारदादेशेन न्यविक्षतोपविष्टस्तदासनं तदा सुमेरुशृङ्गस्य कनकाद्रिशिखरस्य श्रियं शोभां जिघायानु-

---

१ 'तुतोष' ख. पाठः । २ 'अप्रीयत' क. पाठः । ३ 'अतितराम्' क. पाठः । ४ 'अपोऽग्रहीदाददे' क. पाठः । ५ 'पट्व्यः' क. पाठः । ६ 'तुरिष्ठेमेयःसु टेरीति टिलोपः' क. पाठः ।

चकार । विशेषान्तरस्यानिर्देशादनुकारोऽत्र जयः । कीदृशस्य शृङ्गस्य जम्बूर-सितवृक्षभेदस्तया जनितोत्पादिता श्रीः कान्तिर्यस्य । हेमपीठस्य कनकाद्रि-शृङ्गमुपमानं, कृष्णस्य जम्बूः । काञ्चनस्य विकारः काञ्चनमासनम् "अनुदा-त्तादेश्च"त्यञ्, रजतादित्वाद्वा । न्यविक्षतेति "नेर्विश" इत्यात्मनेपदम् । "शल इगुपधादनिटः क्सः" । जिघायेति "सन् लिटोर्जे"रिति कुत्वम् ॥ १६ ॥

स तप्तकार्तस्वरभास्वराम्बरः
कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः
शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥ २० ॥

स कृष्णो विदिद्युते बभौ । कीदृक्, तप्तं विलीनं यत् कार्तस्वरं महार-जतं तदिव भास्वरे पीतेऽम्बरे वसने[1] यस्य । अग्निपतितं हि सुवर्णमुज्ज्वल-तरं भवति, इति तप्तग्रहणम् । तथा कठोरो जरठः परिपूर्णो यस्ताराधिपः शशी तस्य यल्लाञ्छनं शशाख्यं मलं तस्येव च्छविः कान्तिर्यस्य कृष्णस्येत्य-र्थः । एवंविधं चोपमानमप्रसिद्धत्वादलंकारविद्भिर्नेष्यते । क्षीणस्य शशिनो मलं दुर्लक्ष्यं भवतीति कठोरग्रहणम् । अतश्च यदा पीतवासाः कृष्णश्च तदोप-मीयते । वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिर्वाडवाग्नि[2]ज्वाला-लिङ्गितसमुद्रतुल्यः । विदिद्युत इति "द्युतिस्वाप्योः संप्रसारणम्" । वडवेव वाडवः स चासौ जातवेदा वाडवजातवेदाः ॥ २० ॥

रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरो-
स्तुषारमूर्तेरिव नक्तमंशवः ॥ २१ ॥

कृष्णदीप्तिपुञ्जमिश्रिताः सितमुनिभासश्चकाशिरे व्यद्युतन् । नक्तं दोषा सितांशोर्मयूखा इव । कीदृशा मयूखाः, वृक्षस्य च चलन्ति यानि पत्राणि तेषामन्तरं विवरं गोचरो विषयो येषां ते । अंशवो वायुधुततरुपर्णमध्ये

१ 'वाससी' क. पाठः । २ 'और्वाग्नि' क. पाठः ।

प्रविष्टा इत्यर्थः । रथाङ्गं चक्रं पाणौ यस्य स रथाङ्गपाणिः "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति पाणेः परनिपातः । तुषारा शीतला मूर्तिर्देहः[1] यस्य स तुषारमूर्तिः । नक्तमित्यधिकरणप्रधानो रात्रिपर्यायोऽव्ययम् ॥ २१ ॥

प्रफुल्लतापिच्छनिभैरभीशुभिः
शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी
तदैकवर्णाविव तौ बभूवतुः ॥ २२ ॥

तौ देवमुनी तदा सदृशवर्णाविवाभूतां, यतोऽभीशुभिर्नीलसितैरंशुभिरन्योन्यं छुरिता विशेषितामलोज्ज्वला च्छविर्दीप्तिर्ययोः । कीदृशैरभीशुभिः, प्रफुल्लं विकसितं यत्तापिच्छं कालाञ्जनिकं तमालं वा तन्निभैस्तत्तुल्यैः कृष्णैरित्यर्थः । कार्ष्ण्यं हि च्छविरसिता । तथा सप्तच्छदं सप्तपर्णपुष्पं तस्य पांसुर्धूलिस्तद्वत् सितैः । मुनेरंशवो हि सिताः । शुभैरनुपहतैः पापक्षयकरैर्वा उभयैरपि ॥ २२ ॥

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसंभवा मुदः ॥ २३ ॥

नारदागमनोद्भूताः प्रीतयः श्रीकृष्णस्य तनौ वपुषि न ममुर्नावर्तन्तातिबहलत्वात्[2] । कदाचिदणीयस्त्वात् तत्र किंचिन्न माति तत् न चित्रमित्याह— कल्पान्तसमये संकोचितमूर्तेरपि कैटभारेर्यस्यां तनौ जगन्ति चतुर्दश भुवनानि सविकासं सविस्तारमसंबाधमासतासितानि वृत्तानीत्यधिको नामाऽयमलंकारः । ममुरिति मातेर्लिट् । आसतेति आसेः कर्त्तरि लङ् । "आत्मनेपदेष्वनत" इत्यत् ॥ २३ ॥

निदाघधामानमिवाधिदीधितिं
मुदा विकासं यतिमभ्युपेयुषी ।

---

१ 'शरीरं' ख. पाठः । २ 'हुत्वात्' ख. पाठः ।

**विलोचने बिभ्रदधिश्रितश्रिणी**
**स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥ २४ ॥**

स तदा भगवान् पुण्डरीकाक्ष इति नाम्ना स्फुटः प्रकटोऽभवदन्वर्थतया सत्यो बभूवेत्यर्थः । आदौ किलास्माभिरज्ञायि डित्थवत्तस्य पुण्डरीकाक्ष इत्यवयवार्थरहिता संज्ञा, अद्य तु सार्थका सा बुद्धेति यावत् । यतः पुण्डरीके[1]वदक्षिणी यस्य स पुण्डरीकाक्ष इत्ययमप्यस्मिन्न[2]वयवार्थः स च भगवति विद्यते । तथाहि कीदृशोऽसौ विलोचने बिभ्रत् अक्षिणी दधानः । कीदृशे अधिश्रिता धृता श्रीः शोभा याभ्यां ते अधिश्रितश्रिणी धृतलक्ष्मीके, तथा यतिमभि मुनेः संमुखं मुदा तुष्ट्या विकासं विस्तारमुपेयुषी प्राप्ते, नारददर्शनात् प्रसृते इत्यर्थः । कीदृशं मुनिमधिदीधितिम् अधिका दीधितिर्दीप्तिर्यस्य, अथवाधिगता दीधितिर्दीप्तिर्येन तमधिदीधितिं तेजस्विनम् । कमिव, निदाघमुष्णं धाम तेजो यस्य तं निदाघधामानं सूर्यमिव अधिदीधितित्वेनोष्णरश्मितुल्यमित्यर्थः । पद्मस्य चायमेव स्वभावो यदादित्यदर्शनात् सविकासं भवति, लक्ष्म्या चाधिश्रितम् । उपेयुषी इत्युपपूर्वादिणः क्वसौ द्वित्वे च कृतेऽभ्यासदीर्घ इट् च निपात्यते, धातोर्यणादेशः "नपुंसकाच्च"त्यौङः शी "वसोः संप्रसारणम्" । अधिश्रितश्रिणीति "इकोऽचि नुम्विभक्ता"विति नुम्भावः । बिभ्रदिति "नाभ्यस्ताच्छतु"रिति नुमभावः । पुण्डरीकाक्ष इति "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" ॥ २४ ॥

**सितं सितिम्ना सुतरां मुनेर्वपु-**
**र्विसारिभिः सौधमिवाथ[3] लम्भयन् ।**
**द्विजावलिव्याजनिशाकरांशुभिः**
**शुचिस्मितां वाचमवोचदच्युतः ॥ २५ ॥**

अथानन्तरमच्युतो विष्णुर्वाचमवोचत् गिरं जगाद, विशेषणयोगार्थं वाग्ग्रहणम् । शुचि धवलमदुष्टं वा स्मितमीषद्धसितं यस्यास्तां शुचिस्मिताम्, महात्मानो हि स्मितपूर्वाभिभाषिणः । कीदृग् भगवान्, सौधमिव धवलगृहवत्सितमपि नारदशरीरमत्यर्थं सितिम्ना लम्भयन् धवलिमानं प्रापयन् । केन

---

१ 'कतुल्ये पुण्डरीकमिव वाक्षिणी' क. पाठः । २ 'न्नाम्नि अ' क. पाठः । ३ 'व' ख. पाठः ।

द्विजावलिव्याजो दन्तपङ्क्तिच्छद्मा यो निशाकरश्चन्द्रस्तस्यांशुभिः किरणैः । भगवतो हि दशना न तत्त्वतो दन्ता अपितु तद्व्याजेन निशाकरो ऽसावित्युत्प्रेक्षाभाग एषः । चन्द्रेण हि सितमपि हर्म्यतलमंशुभिः सिततरीक्रियते । कीदृशैः विसारिभिः प्रसृतैः । सितिम्नेति कर्तरि तृतीया । सितिमा वपुर्लभते तं विष्णुर्लम्भयतीति, लभेश्चागत्यर्थत्वात् गतिबुद्धीत्यादिना कर्मसंज्ञाभावः, गतिफलं हि प्राप्तिः । यस्तु कश्चिद्भेदो दृ[१]श्यते स विवक्षाधीनः, तेन सितिम्ना कर्त्रा अंशुभिः करणैर्वपुः प्रापयन्नित्ययमर्थो जायते । विसरन्त्यभीक्ष्णमिति विसारिणः "बहुलमाभीक्ष्ण्ये" । द्विजावलिर्व्याजो यस्य स चासौ निशाकरः । अवोचदिति लुङ् । अस्यतिवक्तिख्यातिभ्योऽङ् । वच उम्" ॥ २५ ॥

हरत्ययं संप्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ २६ ॥

किमवो[२]चदित्याह—प्राणिनां भवदीयदर्शनं भाव[३]त्कालोकनं भवद्भाविभूतसमयेषु योग्यतां भव्यतां व्यनक्ति प्रकटयति । यतः संप्रति वर्तमानं पापं धुनोति, आगमिष्यतश्च श्रेयसः कारणमतीतजन्मविहितैश्च पुण्यैः संपादितं, नहि पुण्यैर्विना त्वं दृश्यसे, नापि पापिनं त्वं पश्यसि । महात्मानः प्रकृत्या पेशलभाषिणः सर्वस्य, विशेषतो गृहमागतस्येति नानुचितं भगवतो वचनम् । एवमुत्तरत्र । योगाय प्रभवतीति योग्यः "योगाद्यच्च" । भवे तूपचारात् ॥ २६ ॥

जगत्यपर्याप्तसहस्रभानुना
न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसंख्यतां गतै-
रदस्त्वया नुन्न[४]मनुत्तमं तमः ॥ २७ ॥

अद एतत् तमो ध्वान्तं त्वया प्रसह्य झगित्येव बलाद्वा तेजोभिरसंख्यैर्नुत्तं निरस्तम्, किं तद्यद्भानुना रविणापि नियन्तुं निवर्तयितुं न समभावि

१ 'भेदोद्यते' ख. पाठः। २ 'मब्रवीदि' क. पाठः। ३ 'भवदा' ख. पाठः। ४ 'न्न' क. पाठः।

न संभावितं न शकितं तदाभ्यन्तरमज्ञानरूपमित्यर्थः । अतएव चानुत्तममत्युत्कृष्टम् । अविद्यमानमुत्तममस्मादित्यनुत्तमम् । तमसश्चोत्तमत्वं स्वकार्यसंपत्तिसंपादनम् । कथं भानुना निरसितुं न संभावितमित्याह—जगत्येवापर्याप्तमशक्तमूनं सहस्रं भानवो रश्मयो यस्य तेनापर्य्याप्तसहस्रभानुना । एतदुक्तं भवति–या रविकिरणदशशती सा बाह्यमेव रूपादिस्थं तमो निरसितुं न समर्था कुत आभ्यन्तरं, त्वया त्वतितेजस्वित्वात् प्रसह्यैतत्प्रेरितं, त्वद्दर्शनेन हि वयं तमोरहिताः संपन्नाः । समभावीति कर्मणि लुङ् । प्रसह्येति बलात्कारार्थो निपातितः[1], नत्वत्र प्रकृतिप्रत्ययार्थोऽस्ति । नुत्तमिति नुदविदेति नत्वं विभाषितम् ।२७।

कृतः प्रजाक्षेमकृता प्रजासृजा
सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षति-
र्निधिः श्रुतीनां धनसंपदामिव ॥ २८ ॥

त्वं प्रजासृजा ब्रह्मणा श्रुतीनां वेदानां निधिः कृत आश्रयो विहितः । निधीयन्तेऽस्मिन्निति निधिः । कीदृशेन प्रजासृजा, प्रजाक्षेमकृता भूतहितविधात्रा, भूतानां हि वेदैः[2]श्रेयो भवति तत्र हिताहितयोर्विचारात् । तथा सुपात्रे योग्ये निक्षेपेण न्यासेन निराकुलः स्वस्थ आत्मा चेतो यस्य । त्वयि वेदानां हि न्यासे सति ब्रह्मा "मया शोभनस्थाने न्यासः कृत" इति मनसि कृत्वा सुखमास्ते । त्वं कीदृशः इति विशेषणद्वारेण सुपात्रत्वमाह—शिष्यप्रशिष्यप्रबन्धेन सदाजस्रमुपयोगेऽप्यक्षतिरविद्यमाना वेदानां क्षतिरस्येत्यक्षतिरनपचयः, वेदानामुपयोगः शिष्यप्रतिपादनं तस्मिन् सत्यप्यक्षयः । यतो गुरुर्महानाचार्यः । यो हि स्वल्पवित्तः स्यात्तस्यातिव्ययात् क्षतिरुत्पद्यते । कीदृशीनां श्रुतीनां, धनसंपदामिवाभिलषितावाप्त्यार्थराशितुल्यानाम् । यो हि राष्ट्रहितकृत् प्रजासृट् राजा स धनसंपदां निधिं करोति, अलुब्धे च तन्निक्षिप्य निश्चिन्तो भवति । सोऽपि च निधिर्गुरुत्वान्नित्योपयोगेऽप्यक्षयो भवति ॥ २८ ॥

विलोकनेनैव तवामुना मुने
कृतः कृतार्थोऽस्मि निबृंहितांहसा ।

---

१ 'पातः' ख. पाठः । २ 'दात्' ख. पाठः ।

तथापि शुश्रूषुरहं गरीयसी-
गिरोऽथवा श्रेयसि केन तृप्यते ॥ २९ ॥

मुनेर्वचनावकाशप्रदानायाह—हे देवर्षे अमुनोन्मूलिताशुभेन त्वद्दर्शनेनैव कृतार्थः कृतकृत्योऽहं संपादितस्तथापि भवद्भारतीर्गरीयसीर्महतीर्महार्थत्वात् शुश्रूषुः श्रोतुकामोऽस्मि । किमेतच्चित्रम्, यतः श्रेयस्यात्महिते केन तृप्यते न कश्चित् तृप्तिमुपैति, तेनैतत्पिष्टपेषणमिति भावः । तवेति कर्तरि षष्ठी, एवं केनेति तृतीया । तृप्यते इति भावे लकारः । अतिशयेन गुर्व्यो गरीयस्यो महार्थाः । "प्रियस्थिरस्फिरे"ति गरादेशः ॥ २९ ॥

गतस्पृहोऽप्यागमनप्रयोजनं
वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो
गुरुस्तवैवागम एष धृष्टताम् ॥ ३० ॥

आगमनप्रयोजनकारणं पिपृच्छिषुराह–तां धृष्टतां वैयात्यं नोऽस्माकं तवैष आगम एव त्वदीयागमनमेवैतत्तनोति वर्धयते । कामित्याह—यया धृष्टतया गतस्पृहो निरभिलाषोऽप्यागमनप्रयोजनं वदेति वक्तुं व्यवसीयतेऽस्माभिरुद्यम्यते, त्वं वा वक्तुं व्यवसीयसे प्रेर्यसे इत्यर्थः । अर्थिनां हि राजभिः प्रयोजनं त्वं च तपोधनोऽथच किमर्थमागतोऽसीति यदुच्यसे एष त्वदीयागमनोपरोध इत्यर्थः । उदितं कथितमात्मगौरवं येन स उदितात्मगौरव आगमः । भवदागमनेन हि अस्माकमात्मनि बहुमान उत्पन्नः । कीदृशा वयं पुण्यभाजनं यद्भस्यो नारदोऽप्यागतो, यतो गुरुर्महान् सुदुर्लभः । अथच गुरोः पण्डिताद्यस्यागमः श्रुतं तदवश्यं धृष्टतां प्रतिभां तनोतीति उक्तिश्लेषः । वक्तुमिति "शकधृषे"ति तुमन् । व्यवसीयते इति भावे लकारः । व्यवसीयसे इति तु पाठे कर्मणि "घुमास्थे" तीत्वम् । तवेति कर्तरि शेषलक्षणा षष्ठी । आगतिरागमः "ग्रहवृदृनिश्चिगमश्चे"ति अप् ॥ ३० ॥

इति ब्रुवन्तं तमुवाच स व्रती
न वाच्यमित्थं पुरुषोत्तम त्वया ।

त्वमेव साक्षात्करणीय इत्यतः
किमस्ति कार्यं गुरु योगिनामपि ॥ ३१ ॥

तं हरिमित्येवं ब्रुवन्तं स व्रती यतिः प्रत्यूचे। हे पुरुषोत्तम नारायण इत्थं गतस्पृहोऽपीत्यादि न वक्तव्यं, यतो योगिभिः सनकसनन्दनसनातनसनत्कुमारकपिलादिभिरपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकार्यो द्रष्टव्य इत्यतोऽन्यद्गुरु कार्यं किं विद्यते यद्वक्षि "गतस्पृहोऽपि" इति । त्वद्दर्शनमेवास्माकमागमनप्रयोजनमित्यर्थः । अन्यशब्दोऽन्यवाक्यार्थबलादध्याह्रियते । तद्योगे चात इति पञ्चमी । इतिर्हेतौ । यतस्त्वं प्रत्यक्षीकार्य इत्यतस्त्वत्प्रत्यक्षीकरणादन्यत् किं कार्यं तावदि'त्यर्थः । योगिनां "कृत्यानां कर्तरी"ति षष्ठी ॥ ३१ ॥

उदीर्णरागप्रतिरोधकं जनै-
रभीक्ष्णमक्षुण्णतयातिदुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विन-
स्त्वमग्रभूमिर्निरपायसंश्रया ॥ ३२ ॥

त्वमेव साक्षात्करणीय इत्येतत्साधयितुमाह—मनस्विनो योगिनो मोक्षपथमपवर्गमार्गमुपेयुषः प्राप्तुकामस्य त्वमग्रभूमिः प्रान्तभूमिस्त्वमेव तेषां प्राप्य इत्यर्थः । भगवत्सायुज्यं हि मोक्षः । कीदृशं तम्, उदीर्ण उद्रिक्तो यो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धकस्तस्करो यत्र, रागे हि सति कुतो मोक्षः । तथा जनैः सामान्यैर्जन्तुभिरतिदुर्गमं नितरां दुष्प्रापम्, कुतः अभीक्ष्णमतिशयेनाक्षुण्णतयाधृष्टत्वेन, नहि सर्वः परां भूमिमवाप्नोति । अग्रभूमिः कीदृशी, निरपायो निर्बाधः संश्रयः परिग्रहो यत्र, यां[2] प्राप्य प्रच्युतिर्न भवतीत्यर्थः[1], संसारदुःखं भूयो नानुभूयत इति यावत् । यो हि दुष्प्रापं पन्थानं प्रस्थितः सोऽग्रभूमिं दूरां भूमिं प्राप्य विश्रान्तो भवति, तत्रापि पथि उदीर्णो रागतुल्यः प्रतिरोधकश्चौरादिर्भवति जनैश्चाप्रतिहतत्वात् सोऽतिदुर्गमः । "प्रतिरोधकतस्करचौरैकागारिकमलिम्लुचस्तेनाः" ॥ उदीर्ण इति ॠ गताविल्यस्योत्पूर्वस्य क्तप्रत्यये रूपम् । क्षुद्यतीति क्षुण्णः । अतिदुःखेन गम्यते इति दुर्गमम् "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" । मोक्षस्य पन्था मोक्षपथः ।

१ 'भवतीत्यर्थः' क. ख. पाठः । २ 'यं' क. पाठः ।

मोक्षश्चासौ पन्था इति वा "ऋक्पूरब्धूःपथामानक्षे" ॥ ३२ ॥

उदासितारं निगृहीतमानसै-
गृहीतमध्यात्मदृशा कथंचन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः
पुरातनं त्वां पुरुषं पुराविदः ॥ ३३ ॥

इदानीं सांख्यदर्शनेन भगवतो निष्क्रियत्वमाह—त्वां पुराविदः सनत्कुमारप्रभृतयश्चिरंतनाः पुरातनं पुरुषं विदुः पुराणं देवं बुबुधिरे, क्षेत्रज्ञं त्वामामनन्तीत्यर्थः । कीदृशं पुरुषमुदासितारं निष्क्रियम्, सांख्या हि साक्षिमात्रं पुरुष[1]मेवाहुः। तथा निगृहीतमानसैर्वश्यात्मभिरध्यात्मदृशोपनिषद्दर्शनेन कथंचन कथमपि गृहीतं ज्ञातमिति, नहि पुरुषः सुज्ञानः । तथा विकारेभ्यो महदादिभ्यो बहिर्बाह्यम्, त्रयोविंशतिविकारविलक्षणमित्यर्थः । तथा प्रकृतेः प्रधानात् पृथगन्यत्, न त्वं प्रकृतिर्नापि विकृतिरित्यर्थः । तदुक्तम्—"न प्रकृतिर्न विकृतिः पुरुषः" इति । सत्त्वरजस्तमांस्यनुद्भूतपाटवानि स्वकार्यक्षमाणि प्रकृतिशब्देनोच्यन्ते । एतत्तु सर्वं योगशास्त्रादेव सु[2]ज्ञानमिह तु परमुक्तिमात्रम्। त्वमात्माकिंचनः प्रकृतिबाह्यो योगिज्ञेय इति तु वाक्यार्थः । मन एव मानसं "प्रज्ञादिभ्यश्चेति" अण् । आत्मन्यधि अध्यात्मं, विभक्त्यर्थेऽव्ययीभावः "अनश्चे"ति टच् । तत्र दृक् तदेव वा दृक् ज्ञानं, विकारेभ्यो बहिर्बहिर्विकारं। "अपपरिबहिरञ्चवः पञ्चम्या" इति पञ्चम्यव्ययीभावः । विदुरिति "विदेर्लटो वा" । पुराभवं पुरातनं पुराणं "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट्च" । अबाधकान्यपि निपातानि भवन्ति । पुरा पूर्वं कालं विदन्तीति पुराविदोऽतीतज्ञाः ॥ ३३ ॥

निवेशयामासिथ हेलयोद्धृतं
फणाभृतां छादनमेकमोकसः ।
जगत्त्रयैकस्थपतिस्त्वमुच्चकै-
रहीश्वरस्तम्भशिरःसु भूतलम् ॥ ३४ ॥

---

१ 'षमाहुः' क. पाठः । २ 'स्त्रात्सु' क. पाठः ।

सांख्यदर्शनेन निष्क्रियत्वं प्रतिपाद्याधुना पाञ्चरात्रदर्शनेन कर्तृत्वमाह— उद्धतं चलितमुर्वीतलमुन्नतेषु शेषस्थूणाफणेषु हेलयानास्थया त्वं निवेशयामासिथ नियोजितवान् । उद्धृतमिति च पाठान्तरम् । कीदृग् भूतलं, फणाभृतामोकसः पातालस्यैकं छादनं पटलम् । त्वं कीदृशः जगत्त्रये त्रिभुवने एकः केवलः स्थपतिः प्रधानः कर्ता, त्वद्वर्जमन्येन केनचित् त्रिभुवनं न निर्मितमित्यर्थः । अन्योऽपि स्थपतिस्तद्वा चलितं हर्म्यादिच्छादनं स्तम्भेषु हेलयावश्यमेव योजयतीत्युक्तिश्लेषः । निवेशयामासिथेति "कास्प्रत्ययादाममन्त्रे लिटि" इति आमस्तेर्लिट्परस्य च प्रयोगः । ओक इति ओमोरसुनि बाहुलकत्वात् कुत्वम् ॥ ३४ ॥

अनन्यगुर्व्यास्तव केन केवलः
पुराणमूर्तेर्महिमावगम्यते ।
मनुष्यजन्मापि सुरासुरान् गुणै-
र्भवान् भवच्छेदकरैः करोत्यधः ॥ ३५ ॥

यदा त्वं मनुष्य[1]भावमपि प्राप्य सुरासुरान् गुणैर्ज्ञानवैराग्यादिभिः संसारक्षयकारिभिरधः करोषि जयसि, तदा तव पुराणी सूक्ष्मा यासौ मूर्तिः रूपं तस्याः केन केवलः कृत्स्नो महिमाऽवगम्यते तत्त्वं ज्ञायते । दृश्यरूपस्य यस्य तत्त्वं न बुध्यते, ज्ञानदेहः[2] कथमिवासाववगम्यत इति वार्थः । यो हि भूमिष्ठः स कथं दिविष्ठान् अधो बुध्नीकरोति तस्यापि को महिमानं बुध्यते इत्येतदप्यत्रोक्त्याभिहितम् । कीदृश्याः मूर्तेः, अविद्यमानान्या गुरुर्गरीयसी मूर्तिर्यस्याः सानन्यगुर्वीस्तस्या अनन्यगुर्व्याः सर्वोत्कृष्टाया दुर्ज्ञानाया इत्यर्थः । "वोतोर्गुणवचना"दिति ङीष् विकल्पितः । समासार्थाश्रयस्त्वनुपसर्जनाधिकारात् न भवति । अथवा[3] नास्ति अन्यो गुरुर्यस्याः, सर्वथाख्याग्रहणान्नदीसंज्ञा दुर्लभा, यथा ग्रामण्ये स्त्रियै इति । अनन्यगुर्व्या इति त्वपपाठ एव कप्प्रसंगात् । यदि वा समासान्तविधिरनित्यः । तवेति पुराणमूर्तेरिति च व्यधिकरणे षष्ठ्यौ । सुरासुरानिति विरोधाविवक्षया नैकवद्भावः, शाश्वतिकाभावादिति तु उपाध्यायः प्रकाशवर्षः । कार्य्यकृतो हि देवासुराणां विरोधो न जात्या ।

---

१ 'ष्यजन्मभवैरपि' ख. पाठः । २ 'रूपः' क. पाठः । ३ 'यथा' ख. पाठः ।

यद्वा सुरसहिता असुराः सुरासुरा इति शाकपार्थिवादित्वात्तत्पुरुषः ॥ ३५ ॥

लघूकरिष्यन्नतिभारभङ्गुरा-
ममूं किल त्वं त्रिदिवादवातरः ।
उदूढलोकत्रितयेन सांप्रतं
गुरुर्धरित्री क्रियतेतरां त्वया ॥ ३६ ॥

मनुष्यजन्मेति[1] यदुक्तं तत्र किमर्थमसौ देवत्वं हित्वा मानुष्यं[2] गत इत्याह–अमूं भुवं भाराक्रान्तत्वात् लघूकर्तुं किल त्वं स्वर्गादवातरोऽवतीर्णः । किलेत्यागमे । सेदानीं धरित्री जगन्निवासेन सता त्वया गुरुः क्रियतेतरां गौरवास्पदत्वं नितरां नीयते । यत्र हि भगवान् साक्षात्तिष्ठति सावश्यमेव श्लाघ्या भवति । अथचोपहसनं—यो भारं भूमेर्निरसितुमागतस्तेन भाराक्रान्ततरा सा क्रियते । किलशब्दोऽत्रोल्लुण्ठनायाम् । एष चार्थो गुरुशब्दस्योभयार्थत्वात् । एतच्चार्थान्तरं प्रस्तुतार्थपरिपोषकं, सति ह्येतस्मिन्वाक्यमेतत् सुतरां सालङ्कारम् । एवमन्यत्र । लघूकरिष्यन्निति "लृट् शेषे चे"ति क्रियायां क्रियार्थायामुपपदे लृट् । अतिभारेण करणेन स्वयमेव भज्यते इत्यतिभारभङ्गुरा । "भञ्जभासमिदो घुरच्" । अवातर इति लिङ् सिप् । क्रियतेतरामिति "तिङश्चेति" तरप् "किमेत्तिङि" त्वामुप्रत्ययः ॥ ३६ ॥

निजौजसोज्जासयितुं जगद्द्रुहा-
मुपाजिहीथा न महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः
पदं दृशः स्याः कथमीश मादृशाम् ॥ ३७ ॥

हे ईश जगत्प्रभो त्वं यदि मनुष्यलोकं नोपाजिहीथा नागच्छेस्तत्कथं मादृशां स्वल्पधियां दृशः पदं स्याश्चक्षुर्गोचरो भवेः, यतः समाहितैर्योगनिष्णातैरप्यनिरूपितो न दृश्यसे । आत्मसंज्ञं हि ज्योतिर्दुर्दर्शम् । किमर्थं भूतलमागत इत्याह–जगद्द्रुहां भुवनोपतापिनां निजौजसा स्वाभाविकेन तेजसोज्जासयितुं हिंसितुमिति भंग्यागमनप्रयोजनसूचनम् । जसु ताडन इत्यस्य[3] रूपम् । जगद्भ्यो

---

१ 'न्मापीत्युक्तं' क. ख. पाठः । २ 'षं' क. पाठः । ३ 'स्यैतत् रूपं' क. ख. पाठः ।

द्रुह्यन्ति इति जगद्द्रुहः । "जासिनिप्रहणेति" कर्मणि षष्ठी । पेष्टुं भुवनद्विषामिति । उपाजिहीथा इत्योहाङ् गताविल्यस्य लिङ् थास्[1] "श्नाभ्यस्तयो" रित्याकारलोपः, क्रियातिपत्तिर्न विद्यते तेन लृङभावः । मादृशामिति अहमिव दृश्यन्ते "त्यदादिषु दृश "इति क्विप् "प्रत्ययोत्तरपदयोश्चेति" मादेशः "आ सर्वनाम्नः" इत्यात्वम् । अनौद्धत्यख्यापनार्थं चैतत् नतु यतिरसमाहितः ॥ ३७ ॥

उपप्लुतं पातुमदो मदोद्धतै-
स्त्वमेव विश्वंभर विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः
क्षपातमस्काण्डमलीमसं नभः ॥ ३८ ॥

नच शिशुपालवधे भवानसमर्थ इति स्तुतिमुखेन सूचयितुमाह—हे विश्वंभर जगन्निवास मदोद्धतैर्दर्पोत्सिक्तैरसुरादिभिरुपप्लुतं बाधितमद एतत् विश्वं त्रिभुवनं त्वमेव पातुं निष्कण्टकीकर्तुमीशिषे प्रभवसि नान्यः । एतदेव दृष्टान्तेन द्रढयति—नैशान्धतमसमलिनं[2] नभ आकाशं भास्करवर्जमन्यो निर्मलीकर्तुं क ईश्वरः । भूमिवद्भगवतोऽपि विश्वंभर इति संज्ञा । ईशिषे इति "ईशः से" इतीट् । रवेरिति "अन्यारादितरे"ति पञ्चमी । क्षालयितुमिति "पर्यायवचनेष्वलमर्थेष्वि"ति तुमुन् । कृष्णं तमस्तमस्काण्डं "प्रशंसावचनैश्चे"ति समासः, कस्कादित्वात् सकारः । मलमस्यास्तीति मलीमसम् । ईमसच् निपात्यते ॥ ३८ ॥

करोति कंसादिमहीभृतां वधा-
ज्जनो मृगाणामिव यत्तव स्तवम् ।
हरेर्हिरण्याक्षपुरःसरासुर-
द्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥ ३९ ॥

नचायं तव भर इति दर्शयति—कंसकालनेमिप्रभृतीनां राज्ञां मृगाणामिव हरिणकातराणां वधाद्यल्लोको भवतो नुतिं विधत्ते, प्रत्युत सा तव हरेस्तिरस्क्रिया निन्दा । यतो हिरण्याक्ष-हिरण्यकशिपुप्रधानासुरकुञ्जरारिपुस्त्वम् ।

---

१ 'सीयुट्' क. पाठः । २ 'लिनतरं' क. पाठः ।

यश्च मातङ्गयूथदारिणो हरेः सिंहस्य हरिणवधात् पौरुषमाह तेन तस्यैव सा-पूजा कृता भवति । अधिकं हि वचनं स्तवो भवति नतु ऊनम् । अविवक्षितो लोको जनः । यदिति वाक्यार्थनिर्देशः । यमिति पाठान्तरम् । हरिः शौरिः सिंहश्च । द्वेष्टीति द्विट् शत्रुः । सेति विधीयमाना तिरस्क्रिया निन्दोच्यते । सर्वनामानि हि कदाचिदनूद्यमानस्य लिङ्गं गृह्णते कदाचिद्विधीयमानस्य ॥ ३९ ॥

प्रवृत्त एव स्वयमुज्झितश्रमः
क्रमेण पेष्टुं भुवनद्विषामसि ।
तथापि वाचालतया युनक्ति मां
मिथस्त्वदाभाषणलोलुभं मनः ॥ ४० ॥

इदानीं प्रकटमेव प्रकृतं कार्यं विवक्षुराह—जगद्द्रुहां वि[1]प्रकर्तुं भवान् परित्यक्तसमरखेदः सन् क्रमेणात्मनैव प्रस्तुत[2] एव, तेन चैद्यवधं न याच्योऽसीति भावः । यद्येवं तन्मूक इवास्स्वेत्याह—तथापीत्यादि । यद्यप्येवं तदपि मनः कर्तृ मां वाचालतया बहुरटत्वेन युनक्ति योजयति, यतस्त्वया सहाभाषणे वाङ्मेलापने लोलुभमत्यर्थं साभिलाषं, धाष्टर्येनाहं वच्मीति भावः । मिथो रहसि परस्परं वा । लोलुभ्यते तदिति लोलुभम् । असंबद्धं बहु वक्तीति वाचालः । "आलजाटचौ बहुभाषिणि" ॥ ४० ॥

तदिन्द्रसंदिष्टमुपेन्द्र यद्वचः
क्षणं मया विश्वजनीनमुच्यते ।
समस्तकार्येषु गतेन धुर्यता-
महिद्विषस्तद्भवता निशम्यताम् ॥ ४१ ॥

एतदेवोपसंहरति—हे उपेन्द्र शक्रानुज तत्तस्माद्यन्मया शक्रसंदेशात् सर्वजनीनं वचनं कथ्यते तत् त्वया निशम्यतां श्रूयतामनुष्ठीयतामित्यर्थः । न च तव तदननुष्ठेयं, यतोऽहिद्विषो वृत्रारेस्त्वं सर्वप्रयोजनेषु धुर्यतां सहायत्वं[3] प्रपन्नः । विश्वे च ते जना विश्वजनास्तेभ्यो हितं विश्वजनीनम् । "आत्मन्विश्वज-

---

१ 'निप्रकर्तुं' क. पाठः । २ 'प्रवृत्त' इति ख. पाठः । ३ 'साहायकं' क. पाठः ।

नभोगोत्तरपदात् खः" । धुरं कार्यभारं वहतीति धुर्यः "धुरो यड्ढकौ" । अहिर्दानवविशेषस्तं द्वेष्टीत्यहिद्विडिन्द्रः । निशम्यतामिति प्रार्थनायां लोट् ॥ ४१ ॥

अभूदभूमिः प्रतिपक्षजन्मनां
भियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिसूदनं हरे-
र्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ४२ ॥

तदेव वक्तुमाह—शात्रवसमुत्थानां भीतीनामविषयः सूर्यवत्तेजस्वी दितेस्तनूजो दैत्योऽभवत् । बहुत्वात्तेषामनिश्चये सत्याह—यं हिरण्यकशिपुमाहुः । हरेः शक्रस्य य इन्द्रशब्दार्थः पारमैश्वर्यलक्षणस्तस्य निसूदनं नाशकम् । शक्रस्येन्द्र इति क्रियाद्वारेण संज्ञा इन्दनादिन्द्रः, तच्च तेना[1]स्यापास्तम्, हरेर्येन राज्यं हृतमित्यर्थः । "हिरण्यपूर्वं कशिपुं प्रचक्षते, धनुरुपपदमस्मै वेदमभ्यादिदेश, देवपूर्वं गिरि" मित्यादिकमविचारितरमणीयं, न त्वलंकारविदामभिमतम् । हिरण्यादीनां शब्दपरत्वेऽर्थपरत्वे वा विवक्षितस्यार्थस्य कष्टकल्पनया प्रतीतेः । हिरण्यशब्द औणादिकः । निसूदयतीति निसूदनः "कृत्यल्युटो बहुलम्" । अत्र च त्वया शिशुपालो हन्तव्य इत्येतावद्वक्तव्यम् । यत्तु हिरण्यकशिपुदेवरणवर्णनं तत्तस्यैव महत्ताख्यापनाय, जन्मान्तरेऽपि त्वमेव तस्य वधको नान्य इत्येतत्प्रतिपादनार्थं च ॥ ४२ ॥

समत्सरेणासुर इत्युपेयुषा
चिराय नाम्नः प्रथमाभिधेयताम् ।
भयस्य पूर्वावतरस्तरस्विना
मनःसु येन द्युसदां न्यधीयत ॥ ४३ ॥

येन हिरण्यकशिपुना द्युसदां देवानां चित्तेषु भयस्य भीतेः पूर्वावतरः प्रथमः प्रादुर्भावो न्यधीयत कृतः । प्रथमं तस्मादेव[2] देवा बिभ्युरित्यर्थः । कीदृशेन तेन, समत्सरेण सक्रोधेना[3]सोढपरोन्नतिनेत्यर्थः । तथा असुर इत्यस्य नाम्नः प्रथमाभिधेयतां पूर्ववाच्यत्वं चिराय चिरेण कालेन बहुकालस्य वो-

---

१ 'नाख्यास्या' क. पाठः । २ 'तत एव' क. पाठः । ३ 'सरोषेण' क. पाठः ।

पेयुषा प्राप्तेन । सत्सु हि सुरशत्रुषु असुर इति नाम न भवति, स्वभावान्नञ-स्तत्प्रतिपक्षे वृत्तिरधर्मानृतवत् । नहि कश्चिदासृष्टेः स कालो यावद्देवारिर्बभूव तदा तु स एव संपन्न इत्यर्थः । तथा तरस्विना बलवता । चिरायेति चतुर्थ्यन्तप्रतिरूपको निपातितः । प्रथममभिधेयतां, पूर्वमवतर इति "सुप्सुपे" ति समासः । अवतरणमवतरः "ऋदोरप्" । तरस्विनेति भूम्नि प्रशंसायां वा विनिः । दिवि सीदन्तीति द्युसदः "सत्सूद्विषे"ति क्विप् । व्यधीयतेति कर्मणि लङ् । तेनैव च कर्मणोऽभिहितत्वादवतराद् द्वितीयाभावः ॥ ४३ ॥

दिशामधीशांश्चतुरो यतः सुरा-
नपास्य तं रागहृताः सिषेविरे ।
अवापुरारभ्य ततश्चला इति
प्रवादमुच्चैरयशस्करं श्रियः ॥ ४४ ॥

ततो हिरण्यकशिपुकालादारभ्य श्रियः संपदो लोकेऽचला अस्थिरा इति प्रवादमकीर्तिजनकमुच्चैः सर्वव्यापिनमवापुर्लेभिरे । किमिति तत्सत्तयैव तासां प्रवाद इत्याह—यतो यस्माच्चतुरो देवानिन्द्रयमवरुणवैश्रवणान् त्यक्त्वा तमेवैकमसुरं सिषेविरे भेजुः । कदाचित्ते दरिद्राः स्युर्नेत्याह—दिशामधीशान् दिक्पालान् । कदाचिद्दैववशात्तं शिश्रियुर्नेत्याह—रागहृताः, अयं वीरो रम्य इति तत्प्रेम्णा हृतचित्ता अतएव प्रवादः । या किल नारी आढ्यतममपि पतिं परित्यज्य रागहृता सती पुरुषान्तरं सेवते सावश्यमेव महान्तं प्रवादं प्राप्नोति । प्रवादो गर्हा । अधीशते इत्यधीशाः । आरभ्येति प्रभृतिशब्दसमानार्थो निपातः, न त्वर्थस्फुटो ल्यबर्थो दृश्यते । यशस्करमिति हेतौ टच् "अतः कृकमिकंसे"ति सत्वम् ॥ ४४ ॥

पुराणि दुर्गाणि निशातमायुधं
बलानि शूराणि घनाश्च कञ्चुकाः ।
स्वरूपशोभैकगुणानि नाकिनां
गणैस्तमाशङ्क्य तदादि चक्रिरे ॥ ४५ ॥

नाकिनां गणैर्देवव्रातैस्तमसुरमाशङ्क्य तदादि तत्प्रथममिदमिदं कृतम् ।

किं किमित्याह—पुराणि नगराणि तदास्कन्दभयात् दुर्गाणि दुर्गरूपाणि च चक्रिरे कृतानि । तथा पूर्वं सपत्नाभावात्कश्चिदपि न निशातमायुधं दध्रे, अद्य तु तीक्ष्णमायुधं सर्वैः कृतम् । तथादौ भयाभावात्सर्व एवैकाकी अचेष्टत, तदा तु तेजोयुक्तानि सैन्यानि कृतानि । तथा पूर्वतरं सन्नाहस्य नामापि न कश्चिदमंस्त, तदा तु घनाः प्रहारक्षमाः कञ्चुकाः कवचाः कृताः । कामं ध्रियतां सर्वमेतद्यदि[1]गुणाय भवति, नच केनचिदपि किंचित् कृतं, यतः स्वरूपशोभैवैको गुणो येषां तानि स्वरूपशोभैकगुणानीति नपुंसकैकशेषः । चित्रवत्स्वरूपशोभां मुक्त्वा स्वकार्यक्षमो न कश्चिदित्यर्थः । तेऽपि परिभूता इति यावत् । दुःखेन गम्यन्त इति दुर्गाणि "सुदुरोरधिकरणे" । चक्रिरे इति लिट् । तद्विशेषणं तदादीति ॥ ४५ ॥

स संचरिष्णुर्भुवनान्तराणि यां
　　यदृच्छयाशिश्रियदाश्रयः श्रियः ।
अकारि तस्यै मुकुटोपलस्खल-
　　त्करैस्त्रिसंध्यं त्रिदशैर्दिशे नमः ॥ ४६ ॥

सोऽसुरो जगत्सु जगन्ति वा चंक्रमितुकामः सन् यां दिशं यदृच्छया यथाकथंचिदेवाशिश्रियद्भेजे, तस्यै ककुभे देवैस्त्रिसंध्यं तिस्रः संध्या नमोऽकारि प्रणामो विहितः । उक्तं च—हिरण्यकशिपू राजा यां यां दिशमवैक्षत । तस्यै तस्यै नमश्चक्रुर्देवा ऋषिगणैः सह ॥ इति, श्रिय आश्रय आधारः। मुकुटोपलेषु मौलिमणिषु स्खलन्तः संभ्रमवशाल्लुठन्तो हस्ता येषां तैः शिरसा रचिताञ्जलिभिरित्यर्थः । संचरिष्णुरिति साधुकारिणि ताच्छील्ये इति इष्णुच् । अन्यानि भुवनानि भुवनान्तराणि "सुप्सुपा"इति समासः । यदृच्छाशब्दस्तु स्वेच्छार्थो व्युत्पत्तिरहितः, नह्यत्रावयवार्थानुसारिणी व्युत्पत्तिर्विद्यते । अशिश्रियदिति "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्"इति च्लेश्चङ्, इयङ् । अकारीति कर्मणि लुङ् । तिसृणां संध्यानां समाहारस्त्रिसंध्यं "तद्धितार्थोत्तरपदसमाहारे च । संख्यापूर्वो द्विगुः । द्विगुरेकवचनं । स नपुंसकम्" आबन्तः । "ह्रस्वो नपुंसके प्रातिपदिकस्य । कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । त्रिदशैरिति

---

१ 'दतिगु' ख. पाठः ।

त्रिर्दशेति विगृह्यत "संख्याव्ययासन्ने"ति समासः । "बहुव्रीहौ संख्येये डच्" । नमः पूजायामुद्वेगे च । "नमः स्वस्ती"ति चतुर्थी ॥ ४६ ॥

सटच्छटाभिन्नघनेन बिभ्रता
नृसिंह सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरै-
रुरोविदारं प्रतिचस्करे नखैः ॥ ४७ ॥

हे नृसिंह पुरुषोत्तम स एवंविधो दैत्यस्त्वया सिंहशरीरं महदुद्वहता करजैरुरोविदारं प्रतिचस्करे वक्षो विदार्य क्षिप्तो मारित इत्यर्थः। कीदृशेन त्वया, सटच्छटाभिः केसरप्रान्तैर्भिन्ना विशीर्णा घना अभ्राणि येनेत्यतिशयोक्तिः । अत एवातनुस्तनुः । नखैः कीदृशैः, मुग्धा मनोज्ञा अभिनवा ये कान्तास्तनास्तत्संगमेन भङ्गुरैस्त्रोटनपरैरित्ययत्नो दृश्यते । सटाशब्दः पुंस्यपि वर्तते । तेषां छटा प्रान्तो विच्छित्तिर्वा, प्रहारोऽपीति तु केचित् । श्रेष्ठो ना नृसिंहः "प्रशंसावचनैश्चे"ति समासः। विशेषणसमासात् तत्पूर्वावस्थाविवक्षयामन्त्रणम् । उरोविदारमिति "द्वितीयायां च"ति स्वाङ्गेऽध्रुवे । "परिक्लिश्यमाने च"ति णमुल् । प्रतिचस्करे कर्मणि लकारः । "हिंसायां प्रतेश्चे"ति सुडागमः ॥ ४७ ॥

विनोदमिच्छन्नथ दर्पजन्मनो
रणेन कण्ड्वास्त्रिदशैः समं पुनः ।
स रावणो नाम निकामभीषणं
बभूव रक्षः क्षतरक्षणं दिवः ॥ ४८ ॥

अथानन्तरं कदाचित् काले प्रसरति स एव दैत्येन्द्रो भूयो रावणो नाम राक्षसो बभूव । किमिति जन्मान्तरमाश्रयदित्याह—देवैः सह यो रणः संग्रामस्तेन करणेन दर्पजन्मनो मदसमुत्थायाः कण्ड्वा अहंकारस्य विनोदमिच्छन्विनाशमभिलषन् । पूर्वं तु तस्य युद्धश्रद्धा न निवृत्तासीत्, संप्रति तु रक्षोरूपेण तामपासितुकाम इत्यर्थः । कीदृग्रक्षः, निकामभीषणमत्यन्तभयानकं दशमुखादिरूपत्वात्, तथा दिवो नाकस्य क्षता रक्षणा रक्षितारो रक्षणं वा येन, सर्वस्यायत्तप्राप्यस्तदा स्वर्गोऽभवदित्यर्थः । रावणरक्षःशब्दयोराविष्टलिङ्गत्वा-

द्भिन्नलिङ्गत्वेऽपि सामानाधिकरण्यम् । नामशब्दोऽयं प्रसिद्धिद्योतको निपातः । भीषयतीति भीषणं "नन्द्यादिभ्यो ल्युः । कृत्यल्युटो बहुल"मिति वा ॥ ४८ ॥

प्रभुर्बुभूषुर्भुवनत्रयस्य यः
शिरोऽतिरागाद्दशमं चिकर्तिषुः ।
अतर्कयद्विघ्नमिवेष्टसाहसः
प्रसादमिच्छासदृशं पिनाकिनः ॥ ४९ ॥

अन्यच्च कीदृशोऽसावितीदानीं[1] वर्ण्यते—यो विभुस्त्रिभुवनैश्वर्येच्छया नव शिरांसि छित्त्वातिरागाद्दशममपि चिच्छित्सुः सन् प्रियसाहसत्वान्मनोरथानुरूपं शिवस्य प्रसादं वरदानलक्षणं विघ्नमिवातर्कयदन्तरायतुल्यं विवेद । कर्तितुमिच्छुश्चिकर्तिषुः "सनाशंसभिक्ष उः" । "हिताहितानपेक्षं यत्तत्साहसमुदाहृत"मिति[2] ॥ ४९ ॥

समुत्क्षिपन् यः पृथिवीभृतां वरं
वरप्रदानस्य चकार शूलिनः ।
त्रसत्तुषाराद्रिसुतासंभ्रम-
स्वयंग्रहाश्लेषमुखेन निष्क्रयाम् ॥ ५० ॥

यः कैलासं नगश्रेष्ठमुन्मूलयन् पिनाकिसंबन्धिनः प्रसादस्य निष्क्रयां निष्कृतिं संशु[3]द्धिमिव विदधे । पर्वतोच्चालनात्प्रत्युपकारः कथं कृतो भवतीत्याह—त्रसन्ती नगकम्पाद्बिभ्यती यासौ पार्वती तया ससंभ्रमं सचकितं स्वयंग्रहेणाप्रार्थनयाश्लेषः परिष्वङ्गः स एव मुखं द्वारं तेन, नहि नित्याभिमानभवानीस्वयंग्रहं वर्जयित्वान्य ईश्वरस्य प्रत्युपकृतिप्रकारो विद्यते । ग्रहणं ग्रहः, अच् । स्वयंग्रहः इति "सुप्सुपे"ति समासः । निष्क्रयामिति क्रीणातेः एरच् । इगुपधस्य चाप्रत्ययस्य" ॥ ५० ॥

पुरीमवस्कन्द लुनीहि नन्दनं
मुषाण रत्नानि हरामराङ्गनाः ।

---

१ 'तद्वर्णनम्' ख. पाठः । २ 'कर्मतत्साहसं स्मृतम्' ख. पाठः । ३ 'संसिद्धिं' ख. पाठः ।

विगृह्य चक्रे नमुचिद्विषा वशी
य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ ५१ ॥

यो नमुचिद्विषा शक्रेण सह विगृह्य वैरं विधाय दिवः स्वर्गस्य स्वर्वासिनामहर्निशमहर्दिवमनुदिनमित्थमस्वास्थ्यमुपद्रवं चक्रे व्यधत्त । तमेव प्रकारमाह—पुरीममरावतीमवस्कन्द अभिषेणयामास, नन्दनं देवोद्यानं लुनीहि लुलाव चिच्छेद, रत्नानि पुष्पकप्रभृतीन्युत्कृष्टवस्तूनि मुषाण मुमोष, अमराङ्गनाः सुरसुन्दरीर्हर जहार । सत्यप्यप्सरसां रत्नत्वे प्राधान्यख्यापनाय पृथगुपादानम् । कथमेवं तस्य घटते इत्याह—यतो वशी समर्थः । अवस्कन्देत्यादौ "कालादिसामान्ये समुच्चयेऽन्यतरस्या"मिति लोट् । कालकारकविभक्तिवचनविशेषावगमस्त्वनुप्रयोगवशात्, अनुप्रयोगस्तु चक्रे इति "समुच्चये सामान्यवचनस्ये"त्यनेन । ये तु प्रैष एव लोटमाहुस्ते न विशेषलक्षणविदो दुरुत्तरा[1] एव । मुषाणेति "हलः श्नः शानच् हौ" वशि अभीक्ष्णं वशी । अहर्दिवमिति वीप्सायां निपातितः, अहन्यहनीत्यर्थः ॥ ५१ ॥

सलीलयातानि न भर्तुरभ्रमो-
र्न चित्रमुच्चैःश्रवसः पदक्रमम् ।
अनुद्रुतः संयति येन केवलं
बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ ५२ ॥

बलासुरस्य शत्रुरिन्द्रो येन रावणेन संयति युद्धेऽनुद्रुत उत्तब्धः सन् अभ्रमोर्भर्तुरैरावणस्य केवलं पलायनाय शीघ्रतामाशुगामित्वं प्रशशंसैच्छत् न सलीलयातानि सविलासं गमनानि । उच्चैःश्रवसश्चाश्वरत्नस्य परं वेगवाहित्वमभिललाष न चित्रं नानाविधं पदक्रमम् । पादन्यासोऽश्वानां गतिविशेषः, पदक्रम इति त्वन्ये । अभ्रमुरैरावणसहचरी आदिजा करेणुः । यातशब्दो भावसाधनः ॥ ५२ ॥

अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ।

---

१ 'अनुत्तरान्धा' ख. पाटः ।

प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद् दिवसानि कौशिकः ॥ ५३ ॥

आदित्यतुल्यस्य यस्य दर्शनं कातरनयनत्वादसहमानः सन् कौशिक इन्द्रो मेरुदरीगृहविवरं प्रविश्य सभयत्वाद्दिवसानि निनायातिवाहयामास । कौशिक उलूकोऽप्यमङ्गल्यपक्षी पटुनयनत्वाद्भास्करालोकनमसहमानो गुहान्तर एव दिवसान्नयति । सोढुमिति "शकधृषे"ति तुमुन् । सहस्रं रश्मयो यस्य स सहस्ररश्मिरादित्यः । बिभ्यदिति "नाभ्यस्ताच्छतु"रिति नुमभावः । दिवसशब्दः पुंसि वा । कौशिक इन्द्र उलूकश्च ॥ ५३ ॥

बृहच्छिलानिष्ठुरकण्ठघट्टना-
विकीर्णलोलाग्निकणं सुरद्विषाम् ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं
न चक्रमस्याक्रमताधिकन्धरम् ॥ ५४ ॥

अस्य सुरद्विषां प्रभोः राक्षसेन्द्रस्याधिकन्धरं ग्रीवायां वैष्णवं चक्रं सुदर्शनं नाक्रमत [1]प्रतिहतं बभूव, नष्टशक्ति कण्ठेऽभूदित्यर्थः । कदाचिन्नित्यमेवासमर्थं स्यान्नेत्याह—जगदप्रसहिष्णु भुवनान्यभिभावकं, क्रुद्धं सत् जगन्त्यपि भस्मीकर्तुं क्षममित्यर्थः । एवमस्यां व्याख्यायां न वस्तुनि दोषो नापि शब्दे । कीदृशं तर्हि ग्रीवासंस्पर्शादभूदित्याह—बृहच्छिलेव गण्डपाषाणवन्निष्ठुरः कठिनो यो रावणीयः कण्ठस्तस्य तत्र वा घट्टना संपेषः प्रतिघातस्तया विकीर्णा उद्भ्रान्ता लोलाः प्रसारिणोऽग्निकणा वह्निस्फुलिङ्गा येन तत्तथोक्तम् । आक्रमतेति "वृत्तिसर्गतायनेषु क्रम" इति वृत्तावात्मनेपदम् । वृत्तिरप्रतिबन्धः । कन्धरायामधि अधिकन्धरमिति विभक्त्यर्थेऽव्ययीभावः । "अव्ययीभावाच्चे"ति नपुंसकत्वं ह्रस्वश्च ॥५४॥

विभिन्नशङ्खः कलुषीभवन्मुहु-
र्मदेन दन्तीव मनुष्यधर्मणः ।
निरस्तगाम्भीर्यमपास्तपुष्पकः
प्रकम्पयामास न मानसं न सः ॥ ५५ ॥

---

१ 'नाग्र' ख. पाठः ।

स रावणो मनुष्यधर्मणो वैश्रवणस्य मानसं मनो न न प्रकम्पयामास अपितु धैर्यादचालयदेवाभीषयतेत्यर्थः । दन्तीव यथा हस्ती ऐरावणो मानसाख्यं सरः क्षोभयति । अधुना श्लेषः । कीदृशः सः, विभिन्नो भिद्यमानस्ताडितः शंखो निधिर्येन, अपास्तमपहृतं पुष्पकं धनदविमानं येन । गजोऽपि शङ्खाख्यान् प्राणिनो मानसे चूर्णयति । अथवा विभिन्नौ मदवशात् स्फुटितौ शङ्खौ कपोलौ यस्य स विभिन्नशङ्खः स्रुतगण्डः, तथापास्तानीतस्ततः क्षिप्तानि पुष्पाणि येनासावपास्तपुष्पकः । कप् समासान्तः । मानसं कीदृक्, मदेन दर्पेण रावणीयेन मुहुः कलुषीभवत् क्षुभ्यत् । बलीयसा हि बलवानाक्षिप्त आकुलीभवति । तथा निरस्तं त्यक्तं गाम्भीर्यं चेतोगुणो येन । "यस्य प्रसादादाकारे क्रोधहर्षभयादयः । भावस्था नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् इति । सरोऽपि मदेन दानाम्बुना कलुषमाबिलं भवति । निरस्तं च गाम्भीर्यं निश्चलत्वमगाधत्वं वा येन तन्निरस्तगाम्भीर्यमुत्सृष्टागाधत्वम् । अगाधे हि सरसि नैरावणो ब्रुडति । तटादिलुठनाद्वा गाधताभावः ॥ ५५ ॥

रणेषु तस्य प्रहिताः प्रचेतसा
सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्तुरेवोरगराजरज्जवो
जवेन कण्ठं सभयं प्रपेदिरे ॥ ५६ ॥

तस्य रावणस्य युद्धेषु प्रचेतसा वरुणेनोरगराजरज्जवो नागपाशाः प्रहिताः क्षिप्ताः सन्तः प्रहर्तुरेव वरुणस्यैव वेगेन कण्ठं गलं सभयं प्रपेदिरे प्राप्ताः, वरुणमेव बबन्धुरित्यर्थः । भयकारणमाह—सरोषं[2] सक्रोधं यो हुंकारो हुमिति शब्दस्तेन पराङ्मुखीकृताः प्रतिनिवर्तिताः । प्रपेदिर इति कर्तरि लकारः । "अत एकहल्मध्येऽनादेशादे" रिति एत्वाभ्यासलोपौ ॥ ५६ ॥

परेतभर्तुर्महिषोऽमुना धनु-
र्विधातुमुत्खातविषाणमण्डलः ।
हृतेऽपि भारे महतस्त्रपाभरा-
दुवाह दुःखेन भृशानतं शिरः ॥ ५७ ॥

---

१ 'पा' ख. पाठः । २ 'षं बहुहुं' ख. पाठः ।

परेतभर्तुः प्रेतपतेर्यमस्य सम्बन्धी महिषो वाहनं दुःखेन कृच्छ्रेण शिर उवाह दध्रे । यतो भृशानतमत्यर्थमधोगतम् । कदाचिद्भाराक्रान्तं स्यान्नेत्याह—हृतेऽपि भारे इति । कथमपहृत[1]भार इत्याह—अमुना रावणेनोत्पुातविषाणमण्डल उद्धृतवलयाकारशृङ्गः, किमर्थं धनुर्विधातुं शार्ङ्गं कर्तुम् । कथं तर्हि भृशानतमित्याह–महतो लज्जाभरात् । यद्यपि हि महीयान्विषाणभारोऽपास्तस्तथापि तदपासनाद् दुःसहो व्रीडाभारोऽपि आरोपितस्तद्वशाद् भृशानतं शिरः कथमपि उवाह, लज्जानतं कथमिदानीमेवैतन्न पततीत्यर्थः । अत्र च त्रपाभरादिवेत्युत्प्रेक्षावगन्तव्या[2] । योऽप्यवमन्यते सोऽप्यवश्यमेव परिभूतत्वाल्लज्जयाधोमुखो भवति । एतेन चत्वारो लोकपालास्तेनोपद्रुता इत्युक्तं भवति । भृञो भारः । भृणातेर्भरः ॥ ४७ ॥

स्पृशन् सशङ्कः समये शुचावपि
स्थितः कराग्रैरसमग्रपातिभिः ।
अघर्मघर्मोदकबिन्दुमौक्तिकै-
रलंचकारास्य वधूरहस्करः ॥ ४८ ॥

अस्य रावणस्य वधूर्नायिका अहस्करो दिवाकरोऽलंचकाराभूषयत् । केन, अघर्मं शीतलं यद्घर्मोदकं स्वेदवारि तस्य ये बिन्दवः कणास्त एव मौक्तिकानि मुक्तानिकुरम्बानि तैः । एतेन तावन्मात्रं रविस्तपति, येन स्वेदजलं मौक्तिकमिवोदपद्यतेत्युक्तं भवति । कदाचित्तुषारकाल:[3] स्यात्तन्न चित्रमित्याह–शुचावपि समय आषाढमासे स्थितो ग्रीष्मकालेऽपीत्यर्थः । कीदृशोऽहस्करः, असमग्रपातिभिरसकलपतितैः कराग्रैर्मयूखपर्यन्तैः स्पृशन् आमृशन्, यतः स सशङ्कस्तीक्ष्णातपे सति रावणाद्भयमाशङ्कते । अन्योऽपि शुचावपि समये शुद्धेऽप्याचारे स्थितोऽन्तःपुरचरः[4] कञ्चुकी वधूर्मौक्तिकैरलंकुर्वन् असमग्रपातिभिः कराग्रैः पाणिप्रान्तैरङ्गुलिभिः स्पृशति सशङ्कत्वादीश्वरभयात् । न हि सेर्ष्या गुणिनमगुणिनं वा विचारयन्ति । मुक्तानां समूहः मौक्तिकम् "अचित्तहस्तिधेनोष्ठक्" । स्वार्थे वा "विनयादिभ्यष्ठक्" । अहः करोतीत्यहस्करः "दिवाविभानिशे"ति टच् । "रोः सुपी"ति विसर्गः । "अतः कृकमिकंसे" त्यादिना सकारः ॥ ४८ ॥

---

१ 'नीत' ख. पाठः । २ 'बोद्धव्या' ख. पाठः । ३ 'खे' ख. पाठः । ४ 'निशान्तपतिः' ख. पाठः ।

कलासमग्रेण गृहानमुञ्चता
मनस्विनीरुत्कयितुं पटीयसा ।
विलासिनस्तस्य वितन्वता रतिं
न नर्मसाचिव्यमकारि नेन्दुना ॥ ५९ ॥

तस्य विलासिनः शृङ्गारिणः शशिना नर्मसाचिव्यं कौट्टन्यं न नाकारि अपितु कृतम् । पीठमर्द-विट-विदूषकास्त्रयो नायकस्य क्रीडासहाया उक्ताः, अत्र तु पीठमर्दः कवेर्विवक्षितस्तस्यैवोक्तगुणयोगात् । कीदृशेनेन्दुना, कलाभिः समग्रेणान्यूनेनाखण्डमण्डलेनेत्यर्थः, तथा गृहानमुञ्चता तत्रैव सदा वसता, मनस्विनीर्मानिनीरुत्कयितुमुन्मनीकर्तुमुत्कण्ठयितुं पटीयसा चतुरेण । चन्द्रोदये हि मानः शैथिल्यमुपैति । अत एव रतिं वितन्वता रावणस्य प्रीतिमुत्पादयता । एतेन सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते इत्युक्तं भवति[1] । अथच कलाभिर्गेयविद्याभिः समग्रः परिपूर्णः सर्वकलाभिज्ञ इत्यर्थः । गृहे च नायकस्य नित्यसंनिहितः कुपितकामिनीप्रसादनोपायचतुरश्चात एव विलासिनो रतिजनकः । उत्काः करोति उत्कयति । विलसनशीलो विलासी "वौ कषलसे" त्यादिना घिणुन् । अकारीति कर्मणि लुङ् ॥ ५९ ॥

विदग्धलीलोचितदन्तपत्रिका-
चिकीर्षया नूनमनेन मानिना ।
न जातु वैनायकमेकमुद्धृतं
विषाणमद्यापि पुनः प्ररोहति ॥ ६० ॥

इह गणपतेर्दंष्ट्रा केनचित्कारणान्तरेण तेनैवोत्खाताद्यापि न प्ररोहति जायते, इत्येतत्[2] तु नारदमुखेन कविरुत्प्रेक्षांचक्रे । वैनायकं तत्संबन्ध्येकं विषाणं दन्तो नूनं निश्चितमनेन मानिना रावणेन साहङ्कारेण न त्वन्येनोत्पाटितं सदद्यापि न जातु कदाचिदपि पुनः प्ररोहति जायते, पुनरुत्खननभयात् समूलोद्धरणाद्वेति भावः । किमर्थं तेनोत्खातमित्याह—विदग्धाग्राम्या यासौ लीला विलासः, अथवा विदग्धानां नागरिकाणां लीला विलासस्तत्रोचिता

---

१ 'स एवंविधो भवति' ख. पाठः । २ 'अयं तु' ख. पाठः ।

योग्या या दन्तपत्रिका पत्रलता कर्णाभरणविशेषो वा तस्याश्चिकीर्षया विधातुमिच्छया, शोभनो दन्तः क विद्यते येन दन्तपत्रिकां करोमीति चिन्तयित्वा अनेन नूनमस्य समूलं विषाणमुत्खातमित्यर्थत्वाद्विनायकस्यैकदन्तता भवति ॥ ६० ॥

निशान्तनारीपरिधानधूनन-
स्फुटागसाप्यूरुषु लोलचक्षुषः।
प्रियेण तस्यानपराधबाधिताः
प्रकम्पनेनानुचकम्पिरे सुराः ॥ ६१ ॥

प्रकम्पनेन वायुना देवा अनुचकम्पिरे दयया दृष्टाः। यतोऽनपराधा अपि तेन रावणेन बाधिताः, वायुना तु स्फुटागसा प्रकटापराधेनापि रावणस्य प्रियेण वल्लभेन। परिभूताश्चापरिभूतेन सब्रह्मचारिणावश्यमेवानुकम्पया दृश्यन्ते। केचित्त्वनुकम्पयांचक्रिरे इत्यएयर्थमाहुः। कीदृशेन वायुनेति सापराधत्वमाह—निशान्तनार्यो राजस्त्रियः[1]तासां परिधानधूननेन वासश्चालनेन स्फुट[2]मागोऽपराधो यस्य तेन। कथं तर्हि तस्य प्रिय इत्याह—ऊरुषु लोलानि दर्शनलम्पटानि चक्षूंषि यस्येति रावणविशेषणम्। यदि ह्यसौ महर्षीणां वासांसि न धुनुयात् तत्कथं हाटकशिलासदृशपीवरोरुदर्शनं तस्य घटेत, अत एव च तस्य प्रियः। तदेतेन तस्यासत्प्रभुत्वं ख्याप्यते, ये सापराधास्ते न बाधिता निरागसस्तु पीडिता इति। निशान्तग्रहणेनात्रापराधमहत्त्वं सूच्यते, निशान्ते नार्यो नतु यत्र तत्रस्थाः। केचित्तु रात्र्यवसानं निशान्तमाहुः। धूननमिति "धूञ्प्रीञोर्नुग्वक्तव्य"इति णिचि नुकि ततो भावे ल्युट्। परिधीयत आच्छाद्यते इति परिधानम्। अनुचकम्पिरे इति कर्मणि लकारः ॥ ६१ ॥

तिरस्कृतस्तस्य जनाभिभाविना
मुहुर्महिम्ना महसां महीयसाम्।
बभार वाष्पैर्द्विगुणीकृतं तनु-
स्तनूनपाद्धूमवितानमाधिजैः ॥ ६२ ॥

---

१ 'शुद्धान्तवध्वः' क. पाठः। २ 'स्फुटं प्रकट' क. पाठः।

तनूनपादग्निर्धूमस्य वितानं पुञ्जं बभार । कीदृशम्, आधिजैः शोकोत्थैर्वाष्पैरस्रुभिरुच्छ्वासवातैर्द्विगुणीकृतं घनत्वमापादितं, जलेन हि बहुलतरो धूमो भवति । अतएव तनुरल्पोऽग्निः । कीदृशोऽग्निरिति शोककारणमाह—स तस्य रावणस्य संबन्धिनां महीयसामुत्कटानां महसां तेजसां महिम्ना बाहुल्येन यतस्तिरस्कृतस्तिरोहितोऽभिभूतः । अग्निर्नित्यमेव तीक्ष्णस्तेजस्वी चास्ति, अद्य तु यदा तेन तेजसा निष्प्रभीकृतस्तदा रोदित्यत एव तनुः । यः किल नरः परिभूतः सोऽवश्यमेव धूमायमानो रोदिति दुर्बलश्च भवति । तिरस्कृत इति "तिरोऽन्तर्धौ । विभाषा कृञी"ति गतिसंज्ञा, तेन "तिरसोऽन्यतरस्या"मिति सकारः । जनानभिभवतीति जनाभिभावी, ग्रहादित्वात् णिनिः । महतो भावो महिमा । अतिशयेन महान् महीयान् "तुरिष्ठेमेयःसु टे"रिति टेर्लोपः । विरलोऽस्य पाठः ॥ ६२ ॥

**तदीयमातङ्गघटाविघट्टितैः**
**कटस्थलप्रोषितदानवारिभिः ।**
**गृहीतदिक्कैरपुनर्निवर्तिभि-**
**श्चिरस्य याथार्थ्यमलम्भि दिग्गजैः ॥ ६३ ॥**

दिग्गजैराशाद्विरदैश्चिरस्य चिरेण कल्पान्तं वा यावद्याथार्थ्यं सार्थत्वमलम्भि लब्धं, यतो गृहीतदिक्कैः । किमित्याश्रितककुप्कैरित्याह—रावणीयकुञ्जरपङ्क्तिप्रेरितैरत एव गण्डतटान्निवृत्तमदाम्बुभिरपुनर्निवर्तिभिर्भिया[3] दिक्ष्वेव व्यवस्थितैः, अतएव दिग्गजा इति चिरस्य सार्थकं नाम । प्रोषितं व्यपगतं दानं बाहुल्याद्वार्येव दानवारि । पुनर्निवर्तन्तेऽभीक्ष्णमिति पुनर्निवर्तिनस्ततो नञ्समासः । अर्थमनुगतो यथार्थ इत्यस्वपदेन विग्रहः । "सुप्सुपे"ति समासः, तद्भावो याथार्थ्यम् । अलम्भीति लुङि "विभाषा चिण्णमुलो"रिति नुम् ॥ ६३ ॥

**परस्य मर्माविधमुज्झतां निजं**
**द्विजिह्वतादोषमजिह्मगामिभिः ।**
**तमिद्धमाराधयितुं सकर्णकैः**
**कुलैर्न भेजे फणिनां भुजङ्गता ॥ ६४ ॥**

१ 'हु' ख. पाठः । २ 'अन्वर्थत्वं' क. पाठः । ३ 'भयात्' क. पाठः ।

फणिनां कुलैः सर्पव्रातैस्तं रावणमाराधयितुं भुजङ्गता न भेजे सर्पधर्मो नाश्रितः यतस्तमिद्धमुग्रदण्डं, ते च सकर्णकाः सेवाविदः । कीदृशां फणिनामिति भुजङ्गधर्माभावं दर्शयति–निजं स्वाभाविकं द्विजिह्वतादोषं दंशनात्मकमुज्झतां त्यजताम् । द्विजिह्वताया दोषो द्विजिह्वतैव वा दोषः । कीदृशं तं, परस्यान्यस्य मर्माविधमरुन्तुदम्, अजिह्मगामिभिर्नित्यमेव तत्रस्थैः कुशलैः । गमनं ह्यत्र प्राधान्येन निषिध्यते, तस्मिंश्च निषिद्धे कुटिलगामित्वमेव निषिद्धं भवति । अथवा अकुसृतिव्यवहारैस्तथा सकर्णकैर्विदग्धैरुपदेशग्रहणावहितैरित्यर्थः । अत एव सर्पत्वं निरस्तम् । चक्षुःश्रवसो हि एतद्विलक्षणा भवन्ति । तथा चोक्तम्—यः किल सकर्णकः प्राज्ञः स इद्धं राजानं तोषयितुं भुजङ्गतां सहेलकत्वं न सेवते । मर्माणि विध्यतीति मर्मावित् "नहिवृती"ति दीर्घः । भेजे इति कर्मणि लिट् ॥ ६४ ॥

तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तं ददतः सदर्त्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां दधुः ॥ ६५ ॥

अस्य रक्षसो नगरे ऋतवो वसन्तादयः सदा वास्तव्यकुटुम्बितां दधुः । वसन्तीति वास्तव्याः "वसेस्तव्यत् कर्तरि णिच्च" । ते च ते कुटुम्बिनस्तद्भावं दधुः, कुटुम्बिरूपतां बिभ्रतो नित्यमूषुरित्यर्थः । कीदृशाः, प्रसूनं पुष्पफलं तदेव क्लृप्तं दायस्तं ददतो ददानाः[1] । किं कृत्वा, तपेन ग्रीष्मेण पुंसा वर्षाः स्त्रियः समेत्य संगत्य, तथा शरदा सहचर्या हिमागमो हेमन्तो वा समेत्य, वसन्तलक्ष्म्या च वध्वा शिशिरः पुमान्मिलित्वा । एतेन कुटुम्बिधर्म उक्तः । कुटुम्बिनो हि सकुटुम्बाः परावसथे वसन्तो भोगपतये क्लृप्तमोकोमूल्यं ददते । कुटुम्बं दाराः । षड्ऋतवः स्वस्वचिह्नान्विता अजस्रं तत्र सन्निहिता इति श्लोकार्थः । शिशिरे इति प्रायशः पाठेऽभियुक्तास्तु स्थितौ शिशिरस्येति स्मरन्ति । प्रसूयत इति प्रसूनं "उदितश्चे"ति निष्ठानत्वं । क्लृप्तशब्दे "कृपेरोलः" ॥ ६५ ॥

---

१ 'ददमानाः' क. पाठः ।

अभीक्ष्णमुष्णैरपि तस्य सोष्मणः
सुरेन्द्रबन्दीश्वसितानिलैर्यथा ।
सचन्दनाम्भःकणकोमलैस्तथा
वपुर्जलार्द्रापवनैर्न निर्ववौ ॥ ६६ ॥

तस्य यातु[1]धानस्य सुरेन्द्रबन्दीश्वसितानिलैः सुराधिपगृहिणीनिःश्वासवातैर्यथा वपुः निर्ववौ निर्वृतिं भेजे न तथा जलार्द्रापवनैर्जलक्नूतवसनमारुतैः । हठहृता नारी बन्दी भण्यते । सजलं च वासो जलार्द्रा । बाहुल्येना[2]सौ कविभिः स्त्रियां प्रयुज्यते, तस्याः पवनो जलार्द्रापवनः । कदाचिद्वदनमारुतः[3] शीतलः स्यान्नेत्याह—अभीक्ष्णमुष्णैरपि, दुःखितस्य ह्यवश्यमेवोच्छ्वासास्तप्ता भवन्ति । कदाचिन्मारुता उष्णा भवेयुर्नेत्याह—सचन्दना येऽम्भःकणा जलविप्रुषस्तैः कोमलैर्मृदुभिर्मनोज्ञैः । कथं तर्ह्येष विपर्यय इत्याह--सोष्मणः सदर्पस्य । मानिनश्चैतदेवाधिकं सुखं यच्छत्रुनार्यो बद्धा रुदन्ति, नतु पराभिभूतस्य विषयोपभोगैस्तादृशं सुखं भवति । निर्ववाविति वातेः कर्मणि लकारः, निस्पूर्वश्चोपशमे वर्तते ॥ ६६ ॥

अमानवं जातमजं कुले मनोः
प्रभाविनं भाविनमन्तमात्मनः ।
मुमोच जानन्नपि जानकीं न यः
सदाभिमानैकधना हि मानिनः ॥ ६७ ॥

अन्यच्च कीदृशोऽसावित्याह—योऽजं विष्णुमेवंविधं जानन्नपि सीतां न जहौ । किंविधमवगच्छन्, अमानवममनुष्यं देवरूपिणं, मनोः कुले कार्यार्थे जातं रामरूपेण जातम् । विरुद्धं चैतत् । यो हि जातः स कथमजो भवेत् यश्च मनोर्वंशे समुत्पन्नः स कथममानवः । तथा प्रभाविनं शक्तमत एवात्मनोऽन्तमवसानकारकं भाविनं भविष्यन्तम् । यश्च प्रभावी स कथं स्वस्यैवान्तो भवेत् । यदि तर्हि विष्णुरयमस्मद्वधार्थमेव भूमावुत्पन्न इत्यबुद्ध तत्कथं सीतां रामाय न ददावित्यर्थान्तरमाह--सदेत्यादि । ये हि मानिनः साहंकारास्ते

---

१ 'यातुनः' क. पाठः । २ 'न चासौ' क. पाठः । ३ 'ताः शीतलाः स्युः' क. पाठः ।

यस्मात्सदैवाभिमानधना अहङ्कारसर्वस्वाः, अभिमानं वर्जयित्वान्यत्र तेषामनास्थेत्यर्थः । प्रभवत्यभीक्ष्णं प्रभावी ॥ ६७ ॥

स्मरस्यदो दाशरथिर्भवन् भवा-
नमुं वनान्ताद्वनितापहारिणम् ।
पयोधिमाविद्धचलज्जलाविलं
विलङ्घ्य लङ्कां निकषा हनिष्यति ॥ ६८ ॥

भवान् रामो भवन्नमुं रावणं पयोधिमुल्लङ्घ्य लङ्कां निकषा लङ्कायाः समीपे हनिष्यति हतवान्, अद एतत्त्वं स्मरसि कच्चिदभिजानासि । स्मरसीति काक्वा प्रश्नमाह । कीदृशममुं, वनान्ताद्दण्डकारण्यसमीपात् वनितापहारिणं सीताचौरम् । पयोधिं कीदृशम्, आविद्धं पर्वतत्यागात् क्षुभितमत एव चलच्चत्तोयं तेनाविलं कलुषं भीषणमिति भङ्ग्या सेतुं स्मारयति । लङ्कां निकषेति "अभितः परितः समये"ति द्वितीया । हनिष्यतीति "अभिज्ञावचने लृडि"ति भूते लृट् । यच्छब्दयोजना चात्र न कार्या "न यदी"ति लृण्निषेधप्रसङ्गात् ॥ ६८ ॥

अथोपपत्तिं छलनापरोऽपरा-
मवाप्य शैलूष इवैष भूमिकाम् ।
तिरोहितात्मा शिशुपालसंज्ञया
प्रतीयते संप्रति सोऽप्यसः परैः ॥ ६९ ॥

अथानन्तरं संप्रति काले एष रावणोऽन्यामुपपत्तिं जन्मान्तरं प्राप्य संप्रतीदानीं सोऽपि सन्नसः प्रतीयतेऽन्यो ज्ञायते । यतः शिशुपालसंज्ञ[1]या स्थगितात्मरूपश्छलनापरो वञ्चनाप्रधानः, भूयोऽपि लोकं बाधितुं रावण एव शिशुपालरूपेणावतीर्ण इत्यर्थः । क इव किमवाप्य स एवान्यो बुध्यत इत्याह । यथा शैलूषो नटः परां भूमिकां पात्रान्तरं प्राप्य, सोऽप्यस इव बुध्यते । भीमसेनभूमिकातो ह्यर्जुनभूमिकां प्राप्तो नटोऽन्य एष इति प्रतिभाति । अथ च एक एवासौ सोऽपि च्छलनापरो भ्रान्ति[2]जनकः सामाजिकानामपरां

---

१ 'ज्ञाव' क. पाठः । २ 'कारजनकः' क. ख. पाठः ।

भूमिकां प्राप्य तिरोहित आत्मा येनेति योजनीयम् । प्रतीयत इति कर्मणि लकारः । अस इति "अनञ् समास" इति वचना"देतत्तदो"रिति सुलोपो न भवति, एष इत्यत्र तु भवत्येव ॥ ६९ ॥

स बाल आसीद्वपुषा चतुर्भुजो
मुखेन पूर्णेन्दुरुचिस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकै-
रसंशयं संप्रति तेजसा रविः ॥ ७० ॥

स शिशुपालो बालः सन् शरीरेण चतुर्बाहुर्बभूव, मुखेन च त्रिलोचनस्त्रिभिर्नयनैर्युक्तः, पूर्णेन्दुमुखोऽखण्डमण्डलशशितुल्यः, उच्चकैरत्युन्नतः, करैर्बलिभिराक्रान्ता आत्मवशं नीता महीभृतो राजानो येन । अथ चार्थान्तरप्रतीत्या तस्य सर्वदेवमयत्वमुक्तम् । चतुर्भुजो नारायणः, इन्दुः शशी, त्रिलोचनः शिवो, रविरादित्यः । रविः करैर्मयूखैर्महीधरान् आक्रामतेऽधितिष्ठति, इत्यवयवश्लेषोऽयम् । यत्रावयवे मुखस्थितसमुदायविशेषणंप्रधानार्थं पुष्यन् गम्येतान्यः सोऽयं स्यादवयवश्लेषः । यथा—'काली केशिचये तन्वी केशिनी खलु मूर्धनि । पृथ्वी नितम्बे सा व्यक्तमभूद्रुद्रपदा गतौ" इति ॥ ७० ॥

स्वयं विधाता सुरदैत्यरक्षसा-
मनुग्रहापग्रहयोर्यदृच्छया ।
दशाननादीनभिराद्धदेवता-
वितीर्णवीर्यातिशयान् हसत्यसौ ॥ ७१ ॥

असौ शिशुपालो रावणहिरण्याक्षादीन् सुररिपूनपि हसति [1]प्रतारयति, अशक्तान् मन्यत इत्यर्थः । यतः स्वयमात्मना यदृच्छया निर्निमित्तमेव सुरादीनामनुग्रहापग्रहयोः प्रसादावमानयोर्विधाता कर्ता । तांस्त्वभिराद्धाभिर्देवताभिस्तपसा तोषिताभिर्दत्तविक्रमसंपद इति महीयानेव विशेषः । यो हि देवानां प्रभुर्यस्य तु त ईश्वरास्तयोः कीदृगन्तरम् । देव एव देवता । वीरेषु साधु वीर्यम् । यदि वा वीरस्य कर्म वीर्यम् । "वीरवीर्यौ चे"ति निपातनाद्वृद्ध्य-

१ 'वितारयति' ख. पाठः ।

भावः । हसिरुपहासे सकर्मकः ॥ ७१ ॥

बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित् प्रकृतिः सुनिश्चिता[1]
पुमांसमन्वेति भवान्तरेष्वपि ॥ ७२ ॥

तेन चैद्येन जिगीषुणा मानिना सता पूर्ववदिदानीमपि बलावलेपात् पौरुषकृतयानास्थया त्रिभुवनमुपद्रूयते । बलं शक्तिसंपत् तेनावलेपः परेष्ववज्ञा । पूर्ववद्धिरण्यकशिपुरावणजन्मनीव जेतुमिच्छुर्जिगीषुः । "सन्लिटोर्जे"रिति कुत्वम् । पूर्ववदधुनापि बाध्यत इत्यत्रार्थान्तरन्यासः । सुनिश्चिता स्वभ्यस्ता प्रकृतिः स्वभावो जन्मान्तरेष्वपि पुरुषमन्वेत्यनुयाति, अन्यथा पूर्ववदिदानीमपि कथं जगद्बाध्यत इति भावः । यथा सती भर्तृशरणा नारी जन्मान्तरेऽपि तमेव भर्तारं लभते । सुदुस्त्यजेति पाठान्तरम् ॥ ७२ ॥

तदेनमुल्लङ्घितशासनं विधे-
र्विधेहि कीनाशनिवेशनातिथिम् ।
शुभेतराचारविपक्त्रिमापदो
विपादनीया हि सतामसाधवः ॥ ७३ ॥

अथोपसंहरन् सिद्धान्तमाह—तत्तस्मादेनं चैद्यं कीनाशनिवेशनातिथिं यमगृहगामिनं कुरु जहीत्यर्थः । यतो विधेर्धातुरुल्लङ्घितं प्रजाबाधनात्त्यक्तं शासनमाज्ञा मर्यादा येन, देवमगणयन्तमित्यर्थः । अथ यद्यसौ स्थितेश्चलित एतावता[2]हं किमर्थं व्यापादयामीत्याह—यस्मात् साधूनामसन्तो हन्तव्याः । शुभादितरः परो य आचारो व्यभिचारस्तस्य विपक्त्रिमा विपाकेन निवृत्ता आपदो येषां ते तथोक्ताः । यतस्तस्यायं पापोपभोगकालः, सद्भिश्च दुष्टा निग्रहणीयास्तेन भवांस्तं तृणेढीत्यर्थः । एनमिति "द्वितीयाटौस्स्वेनः" इत्येनादेशः । तमेवमिति पाठान्तरम् । तं चैद्यमेवं पूर्वोक्तेन प्रकारेण विधेस्त्यक्ताज्ञमिति योज्यम् विधेहीति "घसोरेद्धावभ्यासलोपश्च" । विपाकेन निवृत्ता विपक्त्रि-

१ 'सुदुस्त्यजा' क. ख. पाठः । २ 'मम किं व्यापा' क. पाठः ।

माः "ड्वितः क्त्रिः । क्त्रेर्मम् नित्य"मिति । विपादनीया इति पदेर्णिजन्तात्कृत्यः । सतामिति "कृत्यानां कर्तरि षष्ठी" । सर्गोऽयं वंशस्थवृत्तेन जगतीछन्दोभेदेन च ॥ ७३ ॥

हृदयमरिवधोदयादुपोढ-
द्रढिम दधातु पुनः पुरन्दरस्य ।
घनपुलकपुलोमजाकुचाग्र-
द्रुतपरिरम्भनिपीडनक्षमत्वम् ॥ ७४ ॥

एवं च सति यत्फलं संपद्यते तदिन्द्रस्याशीर्द्वारेण वाक्यसमाप्तावाह—शक्रस्य हृदयं वक्षः पुनरिदं बिभर्तु । प्रियतमसंस्पर्शवशात् घनपुलकौ महारोमाञ्चौ यौ पुलोमजाकुचौ शचीस्तनौ तयोर्यदग्रं प्रान्तं तस्य रभसाद्यः परिरम्भ आश्लेषस्तेन निपीडनमुपमर्दस्तत्सहनं धारयतु । यतोऽरिवधोदयादुपोढद्रढिम, अरेश्चैद्यस्य यो वधस्तस्य य उदय उत्पत्तिस्तेन वोदयोऽभ्युदयः स एव वा उदयस्तेनोपोढद्रढिम प्राप्तदार्ढ्यम् । अद्य हि चैद्येनोपद्रुतत्वात् तद्धृतसंपदं त्वं यदा तं हंसि तदा तत्प्रत्यापत्त्या विशल्यत्वमुपैति । दृढस्य भावो द्रढिमा "वर्णदृढादिभ्यः ष्यञ्च"ति इमनिच् । "र ऋतो हलादेर्लघो"रिति ऋतो रेफः। पुष्पिताग्रा वृत्तम् । "भवति जगति नौ ततः परौ यौ नजसहितैर्जरगैश्च पुष्पिताग्रा" इति तल्लक्षणात् । अत्र च मुनेः शृङ्गारवर्णनमनुचितमिति केचिद्दोषमुद्भावयन्ति, तमन्ये परिहरन्ति । स्वयंकरणं यतेरनुचितं, नतु[2] वर्णनं दोषाय ॥ ७४ ॥

ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति ।
शत्रूणामनिशं विनाशपिशुनः कर्तुर्मतिं संयति
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम् ॥ ७५ ॥

इति माघभट्टविरचिते शिशुपालवधकाव्ये कृष्णनारदसंभाषणं नाम
प्रथमः सर्गः ॥ १ ॥

---

१ 'त्वादु' क. पाठः । २ 'परस्यैव' ख. पाठः ।

अथ शार्ङ्गिणो हरेर्मुखे भ्रुकुटिच्छलेन भ्रूभङ्गव्याजेन केतुरुत्पात आस्पदं चकार प्रतिष्ठां बबन्धेत्युत्प्रेक्षा । कीदृशस्य शार्ङ्गिणः, ओमित्युक्तवत एवमित्यभिहितवतः, चैद्यवधं प्रतिपन्नस्येत्यर्थः । तथा संयति समरे मतिं कर्तुरिच्छां विधातुः । कदा केतुरुदियायेत्याह—तस्मिन् सुरमुनौ देवर्षौ नारदेऽभिमतनिष्पत्त्या इन्दोः श्रियं बिभ्रति चन्द्रमसस्तुल्ये, पुरोऽग्र इति पूर्वोक्तां भारतीमभिधाय खमुत्पतिते सति । केतुः कीदृशः, रिपूणामत्यर्थमभावसूचकः । नारदे गते सति हरेः शिशुपालं जिघांसोः कोपवशाद्या मुखे भ्रुकुटिरुदपादि सा ज्ञायते चैद्यस्य विनाशसूचक इति वाक्यार्थः । कीदृशे मुखे, व्योम्नीवाकाशतुल्ये कार्ष्ण्यान्महत्त्वाच्च । एवमन्यस्यापि केनचिद्वधे विधित्सितेऽवश्यमेवाकाशे केतुरभावसूचकस्थितिं करोति । बिभ्रतीति सप्तमी । कर्तुरिति तृन्नन्तः । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं तु—"म्सौ ज्सौ तौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडित"मिति । उत्प्रेक्षोपमासंकरोऽलंकारः । श्रीशब्दलक्ष्म चेदं काव्यमिति प्रतिसर्गान्तश्लोके श्रीशब्दप्रयोगः, इति भद्रम् ॥ ७५ ॥



इति श्रीमहामहोपाध्यायवर्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां कृष्णनारदसंभाषणं नाम प्रथमः सर्गः ॥ १ ॥



अथ

# शिशुपालवधकाव्ये ।



## द्वितीयः सर्गः ।

**यियक्षमाणेनाहूतः पार्थेनाथ मुरं द्विषन् ।**
**चैद्यं प्रति प्रतिष्ठासुरासीत् कार्यद्वयाकुलः ॥ १ ॥**

इह सर्गे मन्त्रविचारो[1] विधेयः, स च विरोध्यनेककृत्यसंनिपाते सति भवतीति तदेव कार्यद्वयं मन्त्रावत[2]रणार्थमाह—अथानन्तरं मुरं द्विषन् मुरारिः कार्यद्वयाकुलो विधेयकार्यद्वितयव्यग्रो बभूव । तदेव कार्यद्वयव्याकुलत्वमाह—यियक्षमाणेन यष्टुमिच्छता पार्थेन युधिष्ठिरेणाहूतो निमन्त्रितः शिशुपालवधोद्देशेन च प्रतिष्ठासुरभिषेणयिषुः । अतश्च यदि पार्थं व्रजति तच्चैद्य उपेक्षितो भवेत्, अथैन[3]मास्कन्दति ततः पार्थो रुष्यति, अत एवाकुल आसीत्, किमिदं करोम्युत नेदमिति संशिश्ये इत्यर्थः । यष्टुमिच्छति यियक्षते । आहूत इति ह्वयतेः संप्रसारणम् । पृथाया अपत्यं पार्थः "तस्येद" मित्यण् । द्विषन्निति "द्विषोऽमित्रे" इति शता । तद्योगे च मुरमिति "न लोकाव्यये"ति कर्मषष्ठीनिषेधः । चेदीनां जनपदानां राजा चैद्यः "वृद्धेत्कोसलाजादाञ्ञ्यङ्" तस्य राजन्यपत्यवत्, लक्षणे कर्मप्रवचनीयसंज्ञा । प्रस्थातुमिच्छुः प्रतिष्ठासुः । "शर्पूर्वाः खयः । इण् कोरादेशप्रत्यययो"रिति षत्वम् । "सनाशंसभिक्ष उः" । आसीदिति "अस्तिसिचोऽपृक्ते" लङीडभावः । कार्येति अर्हे कृत्यः । सर्गेऽस्मिन्ननुष्टुप्छन्दः श्लोकानां प्रायेण वृत्तम् ॥ १ ॥

**गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभः श्रियम् ।**
**सार्धमुद्धवसीरिभ्यामथासावासदत् सदः ॥ २ ॥**

अथानन्तरमसौ हरिर्निश्चयार्थं सार्धमुद्धवसीरिभ्यां पवनव्याधिहलधराभ्यां सह सदो मन्त्रमण्डपमासदत् प्राविक्षत् । अत एवाभिनभः खे या चान्द्री श्रीः

---

१ 'रविभिः' क. पाठः । २ 'ता' क. पाठः । ३ 'त' क. ग. पाठः ।

शशिलक्ष्मीस्तां बिभ्रदुद्वहन् । गुरुर्बृहस्पतिः, काव्य उशना, तावनुगच्छत्यनुयातीति गुरुकाव्यानुगां, जीवशुक्रयुक्तेन शशिना सदृश इत्यर्थः । हरेश्चन्द्र उपमानमुद्धवस्य गुरुर्हलिनः काव्यः सदसो महत्त्वाद्विविक्तत्वाच्च नभः । शून्ये हि मन्त्रः कार्यः । अभिनभ इति सप्तम्यर्थेऽव्ययीभावः । "लक्षणेनाभिप्रती आभिमुख्ये" इति वा । आसददिति लुङ् लृदित्त्वादङ् ॥ २ ॥

**जाज्वल्यमाना जगतः शान्तये समुपेयुषी ।**
**व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥ ३ ॥**

तेजस्वित्वान्नरा एवाग्नय[1]स्तेषां त्रयी त्रयोऽवयवा हरिहल्युद्धवाख्यासौ व्यद्योतिष्ट शुशुभे । क्व, सभैव वेदिरग्निस्थानं तत्र । कीदृशी, जाज्वल्यमाना परैरप्रतिहतौजस्त्वाद्देदीप्यमाना, तथा त्रिभुवनरक्षार्थं समुपेयुषी संगच्छन्ती ढौकमाना । सा हि मन्त्रार्थे मिलिता मन्त्रेण च जगत्[2]त्राणं भवति । शिखिनो हि त्रयो दक्षिणाग्न्याहवनीयगार्हपत्या वेद्यां जगच्छान्तये जाज्वल्यमानाः संगताः सन्तोऽत्यर्थं द्योतन्ते । व्यद्योतिष्टेति लुङ् । अनुदात्तेत्त्वादात्मनेपदं, च्लेः सिचीडागमः ॥ ३ ॥

**रत्नस्तम्भेषु संक्रान्तप्रतिमास्ते चकाशिरे ।**
**एकाकिनोऽपि परितः पौरुषेयवृता इव ॥ ४ ॥**

ते त्रयो मणिस्तम्भेषु प्रतिफलितशरीराः सन्तः शुशुभिरे । अतश्चैकापेक्षयैकाकिनोऽप्यसहाया अपि समन्तात् पौरुषेयवृता इव नरवृन्दसं[3]वृता इवेत्युत्प्रेक्षा । चकाशिरे इति काशेर्लिट् । एक एवैकाकी "एकादाकिनिच्चासहाये" । परित इति "पर्यभिभ्यां च" इति तसिल् । पुरुषाणां समूहः पौरुषेयम् "पुरुषाद् वधविकारसमूहतेनकृतेष्वि"ति वक्तव्यात् ढक् ॥ ४ ॥

**अध्यासामासुरुत्तुङ्गहेमपीठानि यान्यमी ।**
**तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥ ५ ॥**

अमी कृष्णादयो यान्युच्चकनकासनान्यध्यासामासुरधितस्थुस्तैर्विष्टरैः सिंहाधिष्ठितसुवेल[4]शृङ्गसादृश्यमूहे धृतम् । आसनानां त्रित्वाद्य[5]र्थत्वात् त्रि-

1 'वह्नयः' ग. पाठः । 2 'रक्षा' ख. । 3 'ह' क. । 4 'मेरु' ख. ग. । 5 'र्थानां चित्रकू' क. ख. पाठः ।

कूट उपमानम् । अध्यासामासुरिति "दयायासश्च" । यानीति "अधिशीङ्स्थासां कर्म" । ऊहे इति वहेः कर्मणि लकारः ॥ ५ ॥

**गुरूभयस्मै गुरुणोरुभयोरथ कार्ययोः ।**
**हरिर्विप्रतिषेधं तमाचचक्षे विचक्षणः ॥ ६ ॥**

अथानन्तरं कृष्णस्तयोः पूर्वोक्तयोर्गुरुणोरनुष्ठेयत्वान्महतोर्द्वयोः कार्ययोस्तं विप्रतिषेधं गुरूभयस्मै गुरुद्वयायोद्धवाय हलिने चाचचक्ष ऊचे । युगपदनुष्ठातुमशक्यत्वात्सहानवस्थानलक्षणोऽत्र विरोधः । विचक्षण आचारज्ञः, गुरवः प्रष्टव्या इति न त्वज्ञतयेत्यर्थः । अन्योऽपि विचक्षणो वैयाकरणो गुरवे द्वयोगुरुणोः कार्ययोः 'वृक्षेभ्य' इत्यत्रैत्वदीर्घत्वयोर्विरोधविधिमवश्यमेव कथयति । गुरोरुभयं गुरूभयं तस्मै गुरूभयस्मै "क्रियाग्रहणमपि कर्तव्य"मिति कर्मणः संप्रदानसंज्ञा, सर्वादित्वात् सर्वनामत्वम्, इष्यते हि तत्र तदन्तविधिः "सर्वनाम्नः स्मैः" । गुरुणोरिति "इकोऽचि विभक्ता"विति नुम् । आचचक्ष इति "वा लिटि" इति ख्याञ् विभाषितः । विचक्षण इत्यत्र तु "असनयोः" प्रतिषेधः ॥ ६ ॥

**द्योतितान्तःसभैः कुन्दकुड्मलाग्रदतः स्मितैः ।**
**स्नपितेवाभवत् तस्य शुद्धवर्णा सरस्वती ॥ ७ ॥**

तस्य हरेर्ब्रुवतः सरस्वती वाक् शुद्धवर्णा बभूव । शुद्धानि विविक्तान्यम्बूकृतादिदोषरहितानि वर्णानि[1] यस्याः सा शुद्धवर्णा । कीदृशस्य हरेः, कुन्दपुष्पस्य कुड्मलं मुकुलं तस्याग्रं प्रान्तस्तदिव शौक्ल्यात्तीक्ष्णाग्रत्वाच्च दन्ता यस्य तस्य कुड्मलाग्रदतः । "अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चे"ति ददादेशः । शुद्धवर्णत्वे उत्प्रेक्षा–स्मितैरनुल्बणहसितैः स्नपितेव क्षालिता यथा । महात्मानो हि स्मितपूर्वाभिभाषिणः । यच्च वस्तु क्षाल्यते तच्छुद्धवर्णं धवलगुणं भवति । कीदृग्भिः स्मितैर्द्योतिता प्रकाशीकृतान्तर्मध्ये सभा सदो यैरिति त्रिपदोऽयं बहुव्रीहिः ॥ ७ ॥

**भवद्गिरामवसरप्रदानाय वचांसि नः ।**
**पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः ॥ ८ ॥**

किमुवाच, प्रथमं तावद् गुरूणामग्रतः पूर्वाभिभाषित्वदोषजिहीर्षयेदमाह–नोऽस्माकं वचनानि भवद्वाचां प्रसङ्गदानार्थं, युवां वाचयितुमहं वच्मीत्यर्थः ।

१ 'नि अजहलो' ग. अधिकः ।

एतदेव दृष्टान्तेन द्रढयति—नाटकभवस्यार्थस्यावसरार्थं पूर्वरङ्गो नतु तत्र स एव साध्यः । पूर्वे रङ्गे गेयवाद्यनृत्तान्विता देवस्तुतिः, पूर्वरङ्गः प्रत्याहारमार्जनागीतविधिताण्डवयोगब्रह्मचारिमहाचारिप्ररोचनानान्द्याख्यैरङ्गैर्युक्तः । उक्तं च—"पर्वसन्धिचतुर्वृत्तिचतुःषष्ट्यङ्गसंयुतम् । षट्त्रिंशल्लक्षणोपेतं नाटकं कवयो विदुः" ॥ इति ॥ ८ ॥

**करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।**
**विनाप्यस्मदलंभूष्णुरिज्यायै तपसः सुतः ॥ ९ ॥**

इदानीं कार्यद्वयं कथयन्नात्मीयं मतमुपन्यस्यति—तपसः सुतो धर्मात्मजो युधिष्ठिरोऽस्मद्विनास्मानन्तरेणापि इज्याया अलंभूष्णुर्यागाय समर्थो भविता । यतो भ्रातृभिर्भीमार्जुनयमैः ककुभां जयनशीलैर्हेतुभिः करदीकृता वशं नीता भूपाला राजानो येन,[1] तस्मात् तत्र न व्रजामीति । केचित्तु इज्याया अलं समर्थो यतो भूष्णुः साधुर्भवति सुप्रभावयुक्त इति व्याचक्षते । जित्वरैरिति "इण्नशिजिसर्तिभ्यः क्वरप्" । अस्मदिति पञ्चमीबहुवचनम् । भूष्णुरिति "ग्लाजिस्थश्च ग्स्नुः" । इज्यायै इति "व्रजयजोर्भावे क्यप् । नमःस्वस्तिस्वाहे"त्यलंयोगे चतुर्थी । तपो धर्मस्तस्य सुतः ॥ ९ ॥

**उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।**
**समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ १० ॥**

अतश्चैद्य एव यातव्य इत्येतदाह—शत्रुः पुनरुत्तिष्ठमानः सोद्योगो नोपेक्ष्यो न न प्रतिविधेयः पथ्यमिच्छता, हितमभिलषता । यस्मादामयो व्याधिः, रिपुः शत्रुरेतौ वर्त्स्यन्तौ वर्द्धिष्यमाणौ शिष्टैश्चरकबृहस्पत्यादिभिः पण्डितैश्च समावाम्नातावुभौ तुल्यौ कथितौ । व्याधिरिव शत्रुर्वृद्धोऽजय्य इत्यर्थः । उक्तं च—"अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकारा हि रिपोर्विवृद्धिः" इति । यो हि पथ्यमिच्छति स वर्द्धमानं व्याधिं नोपेक्षते । उत्तिष्ठमान इति "उदोऽनूर्ध्वकर्मणि" उद ईहाया"मित्यात्मनेपदम् । वर्त्स्यन्ताविति "वृद्भ्यः स्यसनो"रित्यात्मनेपदं विभाषितम् । "न वृद्भ्यश्चतुर्भ्यः" इतीडभावः । आमयत इत्यामयः । तुः

[1] 'यत्र' ख. पाठः । [2] 'कस्नुः' क. पाठः ।

पूर्वस्माद्विशेषे । पार्थपुरगमनमयुक्तमिदं त्वनुपेत्यमित्यर्थः ॥ १० ॥

**न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ।**
**यत्तु दंदह्यते लोकमतो दुःखाकरोति माम् ॥ ११ ॥**

नच स्वकार्यवैरायमाणस्य ममैष यत्नः, इति दर्शयितुमाह—यदसौ चैद्यो मयि सापराधोऽतो[1] न दूये न खिद्ये । कुतस्तर्हीत्याह—यत् पुनर्निरागसं जनं दंदह्यते गर्हितं दहति निर्निमित्तमुपतापयति, इत्यतोऽसौ मां दुःखाकरोति पीडयति, प्रातिलोम्येन दुःखयतीत्यर्थः । "दुःखात्प्रातिलोम्ये" इति डाच् । दूये इति दूङः कर्तरि लकारः । इट् श्यन् । सत्वतोऽपत्यं स्त्री सात्वती, श्रुतश्रुवानाम्नी क्षत्रिया भगवतः पितृष्वसा । "उत्सादिभ्योऽञ्" । तस्याः सूनुः शिशुपालः । मह्यमिति क्रुधद्रुहेर्ष्यासूयार्थानां"मिति संप्रदानत्वम् । गर्हितं दहति दंदह्यते "लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्"त्यादिना यङ् । "जपजभदहदशभञ्जपशां च" ति नुम्, ततः कर्तरि लट् ॥ ११ ॥

**मम तावन्मतमदः श्रूयतामङ्ग वामपि ।**
**ज्ञातसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि ॥ १२ ॥**

अथोपसंहरन्नाह—अङ्गेति प्रियाह्वाने । अत एतत्तावन्मम मतमेतदहमभिलषामीत्यर्थः । वां युवयोरपि तत् श्रूयतामिदानीं युवां ब्रूतमित्यर्थः । यस्मात्कार्यवस्तुनि कृत्यशरीरे करणार्हेऽर्थे ज्ञातसारेऽप्यवगतपरमार्थेऽपि एकोऽसहायः संदिग्धे संशेते इति क्रियागोपितकोऽयम् । तस्मात्किं कर्तव्यमेतन्नवेति कथ्यताम् । उक्तं च—"सुविमृष्टे स्वयं सम्यक् सुहृद्भिः सुपरीक्षिते । नैवारम्भे विपन्नेऽपि वाच्यतां यान्ति साधवः,[2]" । इति । तथा च—"कार्यमालोचतापायं मतिमद्भिर्विवेचितम् । न केवलं हि संपत्तौ विपत्तावपि शोभते" । इति । अद इति सर्वनाम । श्रूयतामिति कर्मणि लकारः । वामिति "युष्मदस्मदोः षष्ठी"त्यादिनौसन्तस्य[3] युष्मदस्मदोर्वामादेशः । संदिग्धे इति दिहेः स्वरितेत्त्वात्तङ् । कार्यं च तद्वस्तु कार्यवस्तु ॥ १२ ॥

---

१ 'तोऽहं' ग. पाठः । २ 'बुद्धयः' क. ख. पाठः । ३ 'षष्ठीद्विवचनान्तस्य' क. पाठः ।

**यावदर्थपदां वाचमेवमादाय माधवः ।**
**विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ १३ ॥**

एवं पूर्वोक्तां गिरं माधवो विष्णुरादायोक्त्वा विरराम तूष्णीं बभूव । "व्याङ्परिभ्यो रमः" । कीदृशीं वाचं, यावदर्थपदां यावानर्थो यावदर्थम् "यावदवधारणे" । यावदर्थं पदानि यस्यां तां यावदर्थपदां वाच्यसमवचनां, छन्दःपूरणार्थमप्रकृतं यस्यां न किंचिदुक्तमित्यर्थः । स्वल्पैरेवाक्षरैस्तेन वाच्यमुक्तं नहि बहु रटितमित्यर्थान्तरन्यासमाह—महीयांस उत्तमाः स्वभावेनैव मितभाषिणोऽल्पाभिधायिनो, निरर्थकं न कदाचिदपि जल्पन्तीति भावः ॥ १३ ॥

**ततः सपत्नापनयस्मरणानुशयस्फुरा ।**
**ओष्ठेन रामो रामौष्ठबिम्बचुम्बनचुञ्चुना ॥ १४ ॥**

अष्टभिः कुलकमाह—ततो भगवद्वचनानन्तरं रामो हलधरो जगाद बभाषे । कीदृशोऽसाविति तद्वर्णनम्—ओष्ठेनोपलक्षितः । कीदृशेन, सपत्नोऽरिश्चैद्यस्तस्यापनयोऽपराधो लोकबाधा तस्याः स्मरणमनुध्यानं तेनानुशयः क्रोधस्तेन[1] स्फुरति कम्पते यः तेन सपत्नापनयस्मरणानुशयस्फुरा । तथा रामा कान्ता रेवती तस्या ओष्ठबिम्बे यच्चुम्बनं तेन वित्तः प्रतीतो यस्तेन रामौष्ठबिम्बचुम्बनचुञ्चुना "तेन वित्तश्चुञ्चुप्चणपौ" । ओष्ठो लौहित्याद्बिम्बं फलमिवौष्ठबिम्बम् । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति समासः ॥ १४ ॥

**विवक्षितामर्थविदस्तत्क्षणं प्रतिसंहृताम् ।**
**प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम् ॥ १५ ॥**

अन्यच्च कीदृगसौ, पवनव्याधेरुद्धवस्यार्थविदो वाचमुत्तरपक्षतां प्रापयन् सिद्धान्ततां नयन्, यतस्तेन तां वक्तुमिष्टाम्, अनन्तरं तं विवक्षुं बुद्ध्वा अर्थवित्त्वात्कार्यज्ञत्वात् प्रतिसंहृतां तत्कालमेव निवर्तितां, यतः स पवनो व्याधिर्यस्य स पवनव्याधिः । अपदीयट्टकां[2] (?) वाग्भिश्च पश्चात्कुर्वन् । उत्तरपक्ष एव पूर्वपक्षस्य बलीयानिति भङ्ग्या विवक्षिताम् । अयं कोपनस्तावत् वक्तुं शृणुमस्तावत्पश्चाद्वयं वक्ष्याम इति हृदि कृत्वा ॥ १५ ॥

---

१ 'कोपः' क. ग. पाठः । २ 'अपादीयटीकां' ग. पाठः ।

घूर्णयन् मदिरास्वादमदपाटलितद्युती ।
रेवतीदशनोच्छिष्टपरिपूतपुटे दृशौ ॥ १६ ॥

तथा दृशौ चक्षुषी भ्रमयन्। कीदृश्यौ, वारुणीपानक्षीवतयारुणीकृतकान्ती, तथा रेवतीसंबन्धि यद्दशनोच्छिष्टं दन्तपदं तेन परिपूतौ मनोज्ञौ पवित्रीकृतौ पुटौ कवाटौ ययोस्ते तथोक्ते, दन्तपदैर्हि ते नितरां शोभते । उच्छिष्टशब्दः पदपर्यायः ॥ १६ ॥

आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम् ।
म्लापयन्नभिमानोष्णैर्वनमालां मुखानिलैः ॥ १७ ॥

तथाभिमानोष्णैरहंकारतप्तैर्मुखानिलैराननवातैर्वनमालां पुष्पपल्लविनीं स्रजं म्लापयन् शोषयन्। कीदृशीं वनमालाम्, आश्लेषे परिष्वङ्गे लोलुपा[1]ऽत्यर्थं साभिलाषा वधूः रेवती तस्याः कुचकार्कश्यस्य साक्षिणीं साक्षाद्द्रष्ट्रीम्, तद्वर्जमन्येन केनचित् कुचकार्कश्यस्याननुभूतत्वात् ॥ १७ ॥

दधत् संध्यारुणव्योमस्फुरत्तारानुकारिणीः ।
द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः ॥ १८ ॥

तथा रिपुकोपाल्लोहितशरीरश्लिष्टान् घर्मबिन्दून् बिभ्रत्, अतश्च संध्यारक्ताकाशचकासत्तारकसदृशान् ॥ १८ ॥

प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचिं विदधच्चूतपल्लवीम् ॥ १९ ॥

तथा प्रोल्लसन् स्फुरन् कुण्डले प्रोतो योजितो यः पद्मरागखण्डस्तस्य भासा कृष्णोत्तरासङ्गस्य कृष्णवर्णोत्तरीयस्य कान्तिं चूतपल्लवीं पीतां कुर्वन् । आभीरदेशे नीलपीतं वासश्चूतपल्लवीति भण्यते। अत्र च तद्गतायां रुचौ वर्तते । केचित्तु चूतपल्लवस्य चूतवृक्षपल्लवस्येयं चूतपल्लवीत्याहुः । एतच्चास्य कवेर्न विवक्षितम् ॥ १९ ॥

---

१ 'भा' ख. ग. पाठः ।

**ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया ।**
**मुखामोदं मदिरया कृतानुव्याधमुद्वमन् ॥ २० ॥**

तथा मुखामोदं वदनसौरभमुद्वमन्नुद्गिरन् । कीदृशं, सुरया कृतोऽनुव्याधः संपर्कजोऽतिशयो यस्य । कीदृश्या, ककुद्मिकन्यावक्त्रान्तर्वासेन रेवतीमुखमध्यावस्थित्या लब्धोऽधिवासो भावना यया । उक्तं च "माल्यैर्गन्धैश्च संस्कारै[1]रधिवासं विदुर्बुधाः" । इति । एवं प्रकृतिसुरभिरेवतीवदनातिशयसुरभितरीकृतमुखवाताधिवासितमन्त्रमण्डपमवोचदिति वाक्यार्थः ॥ २० ॥

**जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।**
**नयन् मधुलिहः श्वैत्यमुदंशुदशनांशुभिः ॥ २१ ॥**

तथा वदनच्छद्मा मुखरूपो यः पद्मस्तत्पर्यन्तपातिन उपशयमागतान् मधुपान् श्वैत्यं सि[2]तिमानं नयन् प्रापयन् । "नीवह्यो"रिति कर्मसंज्ञा । केन, उदंशव उन्नताभीशवो ये दशनास्तेषामंशुभिर्मयूखैः, पुण्डरीकभ्रान्त्यागतानलीन् सितदशनकिरणैः शुक्लान् विदधदित्यर्थः । उत्प्रेक्षासंशयजातिगुणविरोधानां सांकर्यात् संकरालंकारोऽयम् ॥ २१ ॥

**यद्वासुदेवेनादीनमनादीनवमीरितम् ।**
**वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥ २२ ॥**

किमुवाचेत्याह—सिद्धान्तसूत्रमेतत् । यत् शौरिणा वच ईरितमुक्तं तस्य वचनस्य केवलं सपदीदानीं सैव क्रिया करणमुत्तरं नतु विचारः, अनुष्ठेयमित्यर्थः । यस्माददीनमूर्जस्वि, अनादीनवं च निर्दोषं, नहि तल्लज्जावहमहितं वेत्यर्थः। स्यादेतत् स्वल्पमेतेनोक्तं द्वित्रैः श्लोकैरतो वाक्प्रपञ्चेन जय्यत्वात् ॥२२॥

**नैतल्लघ्वपि भूयस्या वचो वाचातिशय्यते ।**
**इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २३ ॥**

कथमेतदनुष्ठेयमित्याह—एतद्वचः संक्षिप्तमपि भूयस्या सप्रपञ्चया वाचा नातिशय्यते न जेतुं शक्यते । "अयङ् यि क्ङिति" । वाचस्पतेरप्येतदनु-

---

१ 'रम' ग. पाठः । २ 'श्वे' ख. ग. पाठः ।

कम्प्यमित्यर्थः । अत्र साधकं दृष्टान्तमाह—इन्धनौघधग् दारुनिचयदाहकोऽपि वह्निर्भासा पूषणमर्यमणं[1] नात्येति नातिक्रामति । अग्निना न कदाचिदपि रविरपह्नूयते इत्यर्थः । दहतीति धक् "क्विप् । दादेर्धातोर्घः । एकाचो बशो भष् झषन्तस्य स्ध्वो"रिति धः । "झलां जशोऽन्ते । खरि च" । पूषणमिति "शावि"ति नियमाद्दीर्घत्वाभावः ॥ २३ ॥

**विरोधिवचसो मूकान् वागीशानपि कुर्वते ।**
**जडानप्यनुलोमार्थप्रवाचः कृतिनां गिरः ॥ २४ ॥**
**संक्षिप्तस्याप्यतोऽस्यैव वाक्यस्यार्थगरीयसः ।**
**सुविस्तरतरा वाचो भाष्यभूता भवन्तु मे ॥ २५ ॥**
(संदानितकम्) ।

उद्धवमुद्दिश्यात्मनो वाग्विभवस्यावसरदानाय संदानितकमाह—यतः कृतिनां प्रवीणानां वाच इदमिदं कुर्वते, अतोऽस्यैव कृष्णोक्तस्य वाक्यस्यातिविस्तृतत्वान्मदीया वाचः परेषामविघट्टनार्थं भाष्यभूता भवन्तु विवरणरूपाः संपद्यन्ताम् । अविवृतं हि शास्त्रमबुद्ध्वा सर्वो दूषयति । कीदृशस्य वाक्यस्य, संक्षिप्तस्य लघुनोऽप्यर्थगरीयसो महार्थस्यापि । अपिर्विस्मये । संक्षिप्तं हि न तथा महार्थं भवति । अन्यस्यापि कात्यायनादिकृतस्य महार्थस्यालघुनो वाक्यस्यावश्यमेव भाष्यं पतञ्जलिप्रभृतिकृतं भवति । किं किं कृतिनां गिरः कुर्वन्तीत्याह—वागीशान् सर्वशास्त्रज्ञानपि मूकान्निर्वचनान् कुर्वन्ति । यतो विरोधिवचसो विरुद्धवचनान्, प्रकृतार्थविरोधोद्भावनयेत्यर्थः । कृतित्वाद्धि [2]तावदुद्ग्राहयन्ति यावत् पण्डितवचनं युक्तमपि विरुद्धरूपं विपरिणमति । याश्च जडान् मूर्खानसंबद्धभाषिणोऽप्यनुलोमार्थवचनान्विदधति । अनुलोमार्था युक्ताभिधेया, अत एव प्रकृष्टाभिधेया वाग्येषां तेऽनुलोमार्थप्रवाचः । अथवा अनुलोममर्थं प्रवचन्तीत्यनुलोमार्थप्रवाचः सम्बद्धाभिधातॄन् । "अन्येभ्योऽपि दृश्यते" इति क्विप्, दीर्घः । प्रतिवादिनस्ते तावदुद्ग्राहयन्ति यावद्विरुद्धमपि पक्षवचनं न्यायत उद्भावनेनानुलोमार्थं कुर्वन्तीत्यर्थः । तदेतेनैतदुक्तं भवति—यदि हि अहं हरिवाक्यस्यानुष्ठेयस्य भाष्यं न करोमि, ततोऽयमुद्धवः कृतित्वाद्युक्तमप्येतद्वचनं विघटयते । विवरणे तु कृते प्रत्युतैतन्मतमेवास्माभिर्दूष्यते, तस्मान्मम वचनस्यावसरः । शास्त्रेण विवर्धिता धीर्येषां ते कृतिनः ॥ २४ । २५ ॥

१ 'सूर्यं' ख. पाठः । २ 'भावमु' ग. पाठः ।

**सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।**
**सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥ २६ ॥**

ननु नीतिशास्त्रविद उपदिशन्ति–विचार्य राज्ञा व्यवहर्तव्यम्, तन्मन्त्र्यतां तावत् कृष्णेन युक्तमुक्तमुतान्यथेति । तत्कथमुच्यते वचसस्तस्य सपदि क्रिया केवलमुत्तरमित्याशङ्क्याह—सकलेषु कार्यशरीरेषु कृत्यसारेषु अङ्गान्येव स्कन्धास्तेषां पञ्चकं मुक्त्वा वर्जयित्वा राज्ञां मन्त्रान्तरं न विद्यते । कर्मणामारम्भोपायो–द्रव्यसम्पत्–देशकालविभागो–विनिपातप्रतीकारः–कार्यसिद्धिश्चेति पञ्चाङ्गानि, तद्वर्जमन्यो मन्त्रो नास्ति, तत्किमत्र मन्त्र्यते । केषां यथा किं वर्जयित्वा किमन्यन्नास्तीत्याह—सौगतानां बौद्धानां रूप–वेदना–संज्ञा–संस्कार–विज्ञानलक्षणं स्कन्धपञ्चकं वर्जयित्वा यथा सर्वशरीरेष्वात्मान्यो न विद्यते । बौद्धा हि रूपादिव्यतिरिक्तमात्मानं नेच्छन्ति । अङ्गमित्यर्थशास्त्रज्ञानां भणितिः, स्कन्ध इति तु सौगतानाम् । सुगते बुद्धे भक्तिरेषामिति सौगता बौद्धाः ॥ २६ ॥

**षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।**
**ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ २७ ॥**

नन्वन्योऽपि षड्गुणादिको मन्त्रोऽस्ति । तद्यथा—संधि–विग्रह–यानासन–द्वैधीभाव–संश्रयाख्याः षड्गुणाः । प्रभु–मन्त्रोत्साहपूर्वास्तिस्रः शक्तयः । कोशदण्डसंपत् प्रभुशक्तिः । कोशो गञ्जः । दण्डश्चतुरङ्गं बलम् । विज्ञानसंपन्मन्त्रशक्तिः । पराक्रम उत्साहशक्तिः । शक्तित्रयजनितानि त्रीणि सुखानि । तिस्रः सिद्धयो भूमिहिरण्यमित्रकृता वा । स्थानक्षयवृद्धिलक्षणास्त्रय उदयाः । कालान्तरे चयापचयरहितावस्था स्थानम्, चयरहिता सा क्षयः, अनपचया वृद्धिः । आत्म-मित्र–मित्रमित्राणामिति तु केचित् । तदेवं यदेतन्मन्त्रयितव्यमस्ति तदा कथं भवानाह मन्त्रान्तरं नास्तीत्याह–ग्रन्थानर्थशास्त्राण्यधीत्य षड्गुणादीन् व्याकर्तुं वक्तुं दुर्मेधसो जडधियोऽप्यलं समर्थाः । तस्मान्नात्र भरः । षड्गुणादिविज्ञानं तत्कर्मवत् संभारमात्रफलं न तूपादेयम् । मन्त्रस्त्वङ्गपञ्चकमेवेत्यर्थः । षड्गुणादिभ्यो नारदवद् द्वितीया न भवति । दुष्टा मेधा येषां ते दुर्मेधसः । "नित्यमसिच् प्रजामेधयोः" ॥२७॥

**अनिर्लोठितकार्य्यस्य वाग्जालं वाग्मिनो वृथा ।**
**निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २८ ॥**

बहुना च रटितेन न किञ्चित्प्रयोजनं सर्व्वथा कार्य्यतत्वमेवावगन्तव्यमिति दर्शयितुमाह—अनिर्लोठितमनिष्टङ्कितमनिर्णीतं कार्यं येन तस्य वाग्मिनोऽपि सतो वाग्जालं भारतीप्रपञ्चो वृथा निरर्थकम् । अज्ञाते कार्यसारे मन्त्रः प्रलाप इत्यर्थः । कस्येव किं वृथेत्याह—निमित्तात्लक्ष्यादपराद्धेषोर्भ्रष्टसायकस्य धानुष्कस्य यथा वल्गितं वल्गनिका वृथा शरव्यमभङ्क्त्वा अङ्गभङ्गादिकं खलूपहासायैव। उक्तं च "इष्यते नापराद्धेषोर्लक्ष्यं यस्य न हीयते" । इति । धनुः प्रहरणमस्य धानुष्कः । "प्रहरण"मिति ठक् । "इसुसुक्तान्तात् कः" ॥ २८ ॥

**मन्त्रो योध इवाधीरः सर्वाङ्गैः कल्पितैरपि ।**
**चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ २९ ॥**

किंच मन्त्रशक्तिर्दोषायैवेति दर्शयितुमाह—सर्वाङ्गैः कर्मारम्भोपायादिभिः पञ्चभिः कल्पितै रचितैरपि मन्त्रो दीर्घं कालं स्थातुं न क्षमते । यतोऽधीरो बहुकालावस्थानासहः । कुतः, परेभ्यः शत्रुभ्यो भेदशङ्कया । चिरकालं हि मन्त्रणात् कदाचिन्मन्त्रभेदो भवेत् । भेद ऊहश्रुतिः । योध इवेति—यथाह्यधीरः कातरो योधः सर्वावयवैः कल्पितैः सन्नद्धैरपि प्रतियोधप्रहाराशङ्कया चिरं न तिष्ठति, तस्मान्मुहूर्तमात्रं मन्त्रो विधेयः । युध्यत इति योधः । "पचादित्वादच्" । स्थातुमिति "शकधृषे"ति तुमुन् ॥ २९ ॥

**आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती ।**
**तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते ॥ ३० ॥**

ननु मन्त्रकरणं नीतिरिति बुद्धैर्व्यवस्थापितं तत्कथं भवता तन्निषिध्यते इत्याह—इयती नीतिरियान्नय इति । यत् द्वयं तदेवेतिशब्दनिर्दिष्टं द्वितयं स्वरूपेणाह—आत्मोदयः स्ववृद्धिः, परज्यानिः शत्रुक्षयस्तस्मादेतद्व्यतिरिक्तान्या नीतिर्नाम न काचिद् विद्यते, एष एव मन्तव्य इत्यर्थः । तदाह—तद् द्वयमूरीकृत्याङ्गीकृत्य कृतिभिः शास्त्रज्ञैर्वाचस्पत्यं प्रतायते वागीश्वरत्वं विस्तार्यते । द्वयमेतद् बीजभूतं गृहीत्वात्रैवोपर्यन्यदुच्यत इत्यर्थः । एतच्चास्माकं विद्यते, इति दर्शयिष्यते । तस्मात्कालक्षेपेण न किञ्चित् प्रयोजनमिति भावः । ज्यानिशब्द औणादिकः। इदं परिमाणमस्या इयती । "किमिदंभ्यां वो घः" । ऊरीकृत्येति च्विः "डाचश्चे"ति

१ 'कला' ग. पाठः ।

गतिसंज्ञा । प्रतायत इति कर्मणि लकारः, । "तनोतेर्यकी"त्यात्वम् ॥ ३० ॥

**तृप्तियोगः परेणापि न महिम्ना महात्मनाम् ।**
**पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ ३१ ॥**

स्यादेतत्, उदयः पराभिसंधानस्य प्रधानं प्रयोजनं स चास्माकं विद्यते, परज्यानिर्नाम माभूदिति किं यात्रयेत्याशङ्क्याह—विपुलहृदयानां महीयस्यापि समृद्ध्या न तृप्तियोगो न वैतृष्ण्येन संम्बन्धः, तव तु[1] कियानुदयो येन संतुष्यसि । किमत्र निदर्शनमिति चैतदाह—अत्रोक्तेऽर्थे पूर्णोऽप्यधिकवृद्धये मृगाङ्कोदयमभिलाषुको महाजलधिरुपमानम् । यदि हि वृद्धिमात्रेण संतोषः स्यात् तन्महान् पूर्णश्च समुद्रो नैव शश्युद्गमं प्रार्थयेत । अर्णो जलं विद्यते यस्य सो[2]ऽर्णवः । "अर्णसो लोपो वश्चे"ति वः । दृष्टोऽन्तः प्रकृतार्थनिश्चयोऽस्मिन्निति दृष्टान्तो निदर्शनम् ॥ ३१ ॥

**संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः ।**
**कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ३२ ॥**

किंच संतुष्टस्योदय एव न भवतीति निदर्शयितुमाह—ऊनयापि संपदा यः सुस्थितंमन्यो भवति सुखितमात्मानं मन्यते, तस्य जाने दैवं कृतकृत्यत्वान्नैव संपदं बहुलीकरोति । कृतकृत्यो विहितकर्तव्यः । विधिना हि सर्वस्येच्छा परिपूर्या । यश्च संतोषेणाधिकं न कामयते तस्याधिकदाने नासौ क्लेशमनुभवत्युपकाराभावात् । वाक्यस्याकर्मकत्वाद् द्वितीयाभावः । यथा पश्य मृगो धावतीति । सुस्थितमात्मानं मन्यते सुस्थितंमन्यः । "आत्ममाने खश्च । अरुर्द्विषदजन्तस्य मुम्" ॥ ३२ ॥

**समूलघातमघ्नन्तः परान् नोद्यन्ति मानिनः ।**
**प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ३३ ॥**

यच्च भवानाह—आत्मोदयश्चेत्तत्परोऽभिसंधेय इति तन्न, यतः परज्यानिनिमित्तक एवात्मोदय इति दर्शयितुमाह—रिपुं समूलघातमामूलादघ्नन्तोऽनाशयन्तो मानिनो नैवोद्यन्त्युदयं न कुर्वन्ति । शत्रुक्षयः संपदः[3] कारणमित्यर्थः । अत्र च

---
1 'भवतु' ख. पाठः । २ 'असाव' ग. पाठः । ३ 'दी' ग. पाठः ।

त्तपिततमस्काण्डो भानुर्निदर्शनम् । स हि भगवांस्तमश्छेदपूर्वमुदेति नान्यथा । यदुक्तम्—"अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते" । इति । समूलघातमिति "समूलाकृतजीवेषु हनकृञ्ग्रह"इति णमुल् । "कषादिषु यथाविध्यनुप्रयोगः" । घातशब्दार्थश्चात्र न संबध्यते, समूलमघ्नन्त इत्ययमेव हि अत्रार्थः । अघ्नन्त इति शतुः । उद्यन्तीति इणो यण् । अन्धयतीत्यन्धमन्धं च तत्तमोऽन्धतमसम् । "अवसमन्धेभ्यस्तमसः" । उदाह्रियतेऽनेनार्थयोः साध्यसाधकभाव इत्युदाहरणं दृष्टान्त इत्यर्थः ॥ ३३ ॥

**विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।**
**अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ ३४ ॥**

अलब्धोदयेन सपत्नोच्छेदमन्तरेणावस्थानमेव दुर्लभमिति दर्शयन्नाह—रिपुमनुन्मूल्यावस्थानमेव दुर्लभम् । खलुः पूर्वोक्ताक्षेपं कुर्वन्नवधारणे । आस्तामुदयः पदबन्ध एव दुरासद इत्यर्थः । अत्र दृष्टान्तमाह—उदकं कर्तृ धूलिं कर्दमरूपत्वमप्रापय्य नावतिष्ठतेऽवस्थितिं न लभते । "समवप्रविभ्यः स्थः" । "व्यवस्थायामसंज्ञाया"मिति ज्ञापकात्प्रतिष्ठाशब्दे "स्थागापापचो भावे" इत्यङपवादः क्तिन् न भवति, सामान्यापेक्षं चैतत् ज्ञापकम् ॥ ३४ ॥

**म्रियते यावदेकोऽपि रिपुस्तावत् कुतः शिवम् ।**
**पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम्[1] ॥ ३५ ॥**

स्यादेतत्, शिशुपालवर्जमस्माकं न केचिच्छत्रवः सन्तीति रिपुशेषमप्यनिच्छुराह—आस्तां शत्रुसंपत्, एकोऽपि यावद्विपक्षो म्रियते जीवति तावत्कुतः श्रेयः इति । लब्धोदयस्याप्यरिलेशः संतापदुःखायैवेति दशर्यति—तथा चासुरद्रुहां देवानां पुरोऽग्रतः एव सैंहिकेयो राहुश्चन्द्रं ग्रसत एव । सोमग्रहणमुपलक्षणं रविमप्यस्त्येव । तस्माच्चैद्यं याम इति भावः ॥ ३५ ॥

**सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्य्यतः ।**
**स्याताममित्रौ मित्रे च सहजप्राकृतावपि ॥ ३६ ॥**

स्यादेतत्, न चैद्योऽस्माकं रिपुः स्वाभाविकोऽपितु कृत्रिमो लघुस्तत् कोऽस्य

---

१ 'द्विषाम्' ख. पाठः ।

पितृष्वस्रीयस्योपरि स्तोभ[1] इत्याशंक्य गरीयस्त्वमेवास्य प्रतिपादयितुमाह—त्रिविधौ शास्त्रे मित्रामित्रावुक्तौ, सहजौ प्राकृतौ कृत्रिमौ चेति । तत्र सहजं मित्रं कुल्यं मातुलमातृष्वस्रीयादिकं, प्राकृतमत्र विषयानन्तरं, कृत्रिमं दानमाना[2]र्जितम् । शत्रुरपि सहजः कुल्यः पितृव्यतत्सुतादिः, प्राकृतो विषयानन्तरः, कृत्रिमोऽपराद्धोऽपराद्धा च । एवं स्थिते य एष सखा शत्रुश्च कृत्रिमः कार्यनिवृत्तः स एव गरीयान् प्रियहितकारी अप्रियहितकारी च । कुत इत्याह—यस्मात्तावपि सहजप्राकृतौ मित्रामित्रौ कार्यतः प्रयोजनबलाद्यथाक्रमममित्रौ मित्रे च भवेताम् । उक्तं च—"नास्ति जात्या रिपुर्नाम मित्रं जात्या न विद्यत । सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये । शत्रुश्च मित्रतां याति स्वार्थो हि बलवत्तरः ॥"इति । …हि सदागतिरिति कृत्रिमश्चैवं प्रधानमतश्च कृत्रिमौ मित्रामित्रौ लोकेपि…(?) चैतदन्वक्षमेव दृश्यते । शत्रुरप्युपकारयोगान्मित्रीभवति मित्रमप्यपकारसंबन्धादमित्रीस्यात् । तदेतेन मित्रामित्रयोस्त्रिधात्वं बलाबलत्वं चोक्तम्, अनित्यत्वाच्च रागद्वेषयोः । अपिशब्दोऽत्र भिन्नक्रमो विसये तावित्यस्यानन्तरं बोद्धव्यः । हिशब्दो हेतौ । अन्ये त्वेवं व्याचक्षते—कृत्रिमौ मित्रामित्रौ गरीयांसौ, यतस्तौ कार्यतः शत्रुमित्रे च स्यातां, न केवलं तौ यावत् सहजप्राकृतावपि कार्यतो मित्रामित्रौ भवेतामिति ॥ ३६ ॥

**उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ३७ ॥**

इदानीमेतयोरपि ग्राह्यत्याज्यत्वमाह—अरिरपि यावदुपकुरुते तत्तेन सह संधिः संधातव्यो[3] नतु मित्रेणापकारिणा, यस्मादेतयोर्मित्रामित्रयोरुपकारापकारौ लक्षणं लक्ष्यं ज्ञातव्यं नत्वन्यत् । उक्तं च—"यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यति । अर्थयुक्तिं समालोच्य स महद्भिन्दते फलम्"इति । अरिमित्रे इति परप्रसिद्ध्योक्तं, यथा वर्णेषु ये वर्णैकदेशास्ते वर्णग्रहणेन गृह्यन्ते । अपकर्तृणा—इति पाठे "इकोऽचि विभक्तावि"ति नुम ॥ ३७ ॥

---

१ 'तोभः' ख. पाठः । २ 'नावर्जि' ख. पाठः । ३ 'व्यम्' ग. पाठः ।

**त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।**
**बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ ३८ ॥**

एवं सामान्येनेतदभिधाय प्रकृतस्य चैद्यस्य कृत्रिमतां दर्शयितुमाह—हे हरे रुक्मिणीं पित्रा दत्तां तस्मै त्वया हरता शिशुपालो विप्रकृतो बाधितः । अथ नाम यदि कन्या हृता तत्कियानेष दोष इत्याह—बद्धमूलस्य दृढप्रतिष्ठस्यानपायिनो यस्माद्वैरतरोर्विरोधपादपस्य स्त्रियो महन्मूलं दृढं कारणं, स्त्रीभिर्मूलभूताभिर्बद्धमूलं महद्वैरं भवतीत्यर्थः । बद्धमूलस्य कारणान्तरेण लब्धप्रतिष्ठस्य वैरतरोः स्त्रियो महन्मूलं प्रधानं कारणमिति त्वन्ये । वैरं समूलत्वात्तरुरिव "उपमितं" इति समासः ॥ ३८ ॥

**त्वयि भौमं गते जेतुमरौत्सीत् स पुरीमिमाम् ।**
**प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव ॥ ३९ ॥**

तदेतेन स त्वया बाधित इत्युक्तमिदानीमनेनापि त्वमुपद्रुत इति दर्शयन्नाह—भौमं नरकासुरं भवति जेतुं हन्तुं याते सति, चैद्यो लब्धावसर इमां पुरीमरौत्सीत् द्वारवतीमवेष्टयत् । क इव किमित्याह—प्रोषितार्यमणं निवृत्तसूर्यां मेरुतटीं यथा ध्वान्तं रुणद्धि व्याप्नोति । शौरेः सूर्य उपमानं, चैद्यस्य ध्वान्तं, पुर्याः[1] उत्कृष्टत्वान्मेरुतटी । प्रोषितोऽर्यमा यस्यां सा प्रोषितार्यमा "अनो बहुव्रीहे"रिति ङीबभावः । "शावेवे"ति नियमाद् दीर्घाभावः ॥ ३९ ॥

**आलप्यालमिदं बभ्रोर्यत् स दारानपाहरत् ।**
**कथापि खलु पापानामलमश्रेयसे यतः ॥ ४० ॥**

क्रोधोद्दीपनार्थमपराधान् स्मारयन्नाह—स चैद्यो यदा[2] वृष्णिवंशस्य यत् कलत्रं जहार एतदालप्यालं, खलु उक्त्वा, न वक्तव्यम् । "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इति क्त्वा । यत्पापिनां दर्शनसहवासादिकमास्तां, संकीर्तनमप्यलमश्रेयसे उपद्रवाय समर्थम् । "नमःस्वस्ती"ति चतुर्थी । खलुर्वाक्यालंकारे ॥ ४० ॥

---

१ 'पुर' ग. पाठः । २ 'तदा' ख. पाठः ।

**विराद्ध एवं भवता विराद्धा बहुधा च नः ।**
**निर्वर्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः ॥ ४१ ॥**

कृत्रिमत्वमथोपसंहरन्नाह—एवं पूर्वोक्तेन प्रकारेण स सात्वतीसूनुस्त्वया विराद्ध उपद्रुतः, सोऽपि नोऽस्माकं विराद्धा द्रोग्धा सापराधोऽतश्चारिः क्रियया निर्वर्त्यते कृत्रिमः शत्रुः संपाद्यते न सहजः प्राकृतो वा, तेनावस्कन्द्यते इति भावः । विराद्ध इति क्तान्तः । विराद्धेति तृजन्तः । श्रुतश्रवा दमघोषभार्या ॥ ४१ ॥

**विधाय वैरं सामर्षे नरोऽरौ य उदासते ।**
**प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ४२ ॥**

एवमपि तुल्येऽपराधे तस्य वा[1] नास्माकमपि नोद्यमो युक्त इत्याशङ्क्याह—ये नरः पुरुषाः सानुशयेऽरौ रिपौ वैरं कृत्वोदासते निष्क्रिया भवन्ति, ते नूनमभिमारुतं वाताभिमुखमुदर्चिषमग्निं तृणेषु प्रक्षिप्य शेरते । कक्षेऽग्निं ज्वलयित्वा यथा स्वपनं स्वविनाशायैवं निष्क्रियस्य बलवद्विरोध इत्यर्थः । नर इति नृशब्दस्य जस् । ये एवमुदासते इति बहुवचनम् । "आत्मनेपदेष्वनतः" ॥ ४२ ॥

**मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।**
**क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ ४३ ॥**

स्यादेतत्, क्षमैवात्र प्रतिक्रिया, यतो यस्य परां भूतिमिच्छेत्तस्य क्षमेति सुनय इत्याह—यः क्षमी क्षमाशीलः स सकृदपि मनाक् स्तोकमपराध्यन्तं नरं कामं क्षाम्यतु, अनुज्ञातमेतन्नः[2] । यो वा भृशमनभ्यावृत्त्याऽनाभीक्ष्ण्येनापराध्यति यद्यप्यसौ सह्यतां, यः क्रियासमभिहारेण भृशमसकृदपराध्यति तं कः सहेत । न च कल्पयाम्येवं, न तस्यासौ क्षमाविषय इत्यर्थः । तव चासौ क्रियासमभिहारेणापराध्यति तस्मात् दण्ड्य इति भावः । पौनःपुन्यं भृशार्थता च क्रियासमभिहारः । काममित्यनुमतौ । क्षमीति "शमित्यष्टाभ्यो घिनुन्" । क्रियाग्रहणमाधिकप्रायम् ॥ ४३ ॥

---

१ 'स्यैव' ख. पाठः । २ 'मतमेतदस्माकम्' ग. पाठः ।

**अन्यदा भूषणं पुंसः शमो लज्जेव योषितः ।**
**पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ४४ ॥**

स्यादेतत्, यद्यप्येवं तथापि सापराधा एव क्षमास्थानमित्याह--पुरुषस्यान्यदा परिभवाभावे सति क्षमा भूषणं, यथा स्त्रिया गुरुजनसन्निधौ लज्जा । परिभवे तु सति पराक्रमः पौरुषं भूषणं, यथा नार्या एव सुरतकाले वैयात्यं धृष्टता । तादृशस्य क्षन्तव्यं येनापराधोऽपि कृतो न परिभव इत्यर्थः । भूषणशब्द आविष्टलिङ्गः । सामान्यशब्दाभेदाच्च नात्र लिङ्गानामौपम्यं दोषायेति रुद्रटः ॥ ४४ ॥

**मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।**
**तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ४५ ॥**

एतमेवार्थं पोषयितुमाह—परावज्ञा रिपुपरिभवः स एव दुःखं तेन दग्धः संतप्तो यो जीवति स मा जीवन् म्रियताम् । "माङ्याक्रोशे" इति शतृ[1] । असद्याभिहितं मा जीवन्निति, तस्याजननिरजन्मैव भवतु, मैवासावुत्पादीत्यर्थः । "आक्रोशे नञ्यनिः" । यतोऽसौ जननीक्लेशकारी, मातृप्रसवदुःखं वर्जयित्वा न किंचित्तस्योत्पत्तौ फलमित्यर्थः । उक्तं च—"दाने तपसि शौर्ये वा [2]यस्य न प्रथितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः" इति ॥ ४५ ॥

**पादाहतं यदुत्थाय मूर्धानमधिरोहति ।**
**स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥ ४६ ॥**

परिभवेऽपि यत् पुरुषः स्वस्थो निश्चिन्तस्तस्मात् तथाविधाद् धूलिरेव वरं श्रेष्ठं, यच्चरणाक्रान्तं समुत्थाय मूर्धानमाक्रमति, यत उत्तमाङ्गाक्रान्त्या शतगुणस्तेन परिभवः शुद्धः । निश्चेतना[3] अपि पराभवं न सहन्ते इति तात्पर्यार्थः । एवकारो भिन्नक्रमो रम्यतरः । रज एव वरमिति ॥ ४६ ॥

---

१ 'तृप्रत्ययः' ख. पाठः । २ 'विज्ञाने विनये नये । यस्य न प्रथिता कीर्तिः' ख. पाठः । ३ 'हीनाः' ख. पाठः ।

**असंपादयतः कश्चिदर्थं जातिक्रियागुणैः ।**
**यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम् ॥ ४७ ॥**

यो नरो जात्या ब्राह्मणादिकया क्रिययाध्ययनादिकया गुणेन शौर्यादिकेन न किंचित्प्रयोजनं विधत्ते, तस्य जन्मोत्पत्तिः केवलं संज्ञायै देवदत्तादिनामकरणार्थमेव निरर्थकमित्यर्थः । नाममात्रेणासौ पुरुष उच्यते इति यावत् । कस्येव यदृच्छाशब्दस्य रूढिशब्दस्येव डित्थादेः । सोऽपि जातिक्रियागुणैर्गोपपाचकशौक्ल्यवन्न कश्चिदर्थं साधयति, संज्ञा तस्य केवलं प्रवृत्तिनिमित्तम् । "चतुष्टयी शब्दानां प्रवृत्तिः" । तदेतेन निरीहत्वं निरस्तम् ॥ ४७ ॥

**तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।**
**अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ ४८ ॥**

अधुना तेजस्वित्वस्तुतिः—तद्द्वयं तुङ्गतागाधत्वं चापरिभवकारणं मनस्विनि गुरुकार्योद्वहनसमर्थमनस्के, तेजस्विन्येव तदुभयं विद्यत इत्यर्थः । स्यादेतत्, स्थावररूपेषु गिर्युदधिप्रभृतिष्वप्येतदस्तीत्याह—अद्रौ तुङ्गत्वमुच्चत्वमनाक्रमणीयताहेतुर्विद्यते[1] नेतरागाधता । तथा सिन्धौ समुद्रेऽगाधता गाम्भीर्यमलङ्घनीयताहेतुरस्ति नत्विदं तुङ्गत्वं, मनस्विनि तूभयमपि औन्नत्यं गाम्भीर्यं च । तेजःसमाश्रयणेन सर्वथानाक्रमणीयेन भूयत इति वाक्यार्थः ॥ ४८ ॥

**तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।**
**हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ४९ ॥**

भूयोऽप्यन्वयव्यतिरेकद्वारेण तेजस्विताया गुणवत्तामाह—समानेऽप्यागसि यद्राहुरादित्यं बहुना कालेन कवलयति शशिनं त्वसकृत्, तन्निश्चितं मार्दवस्य फलं विपाकः । यदि हि शीतरश्मिस्तीक्ष्णोऽभविष्यत् तद्रविमिव तमपि चिरेणाभ्रपिशाचो[2] न्यगरिष्यत् । अमृतविभागकाले देवरूपी राहुरर्केन्दुभ्यामसुरमथनाय विष्णवे कथितस्ततस्तेन तस्यानिगीर्णामृतस्यैव शिरः कृत्तमिति तयोस्तुल्योऽपराधः । तदादि चासौ वैरेण[3] तौ निजेगिल्यत इत्यागमः ॥ ४९ ॥

---

१ 'रस्ति न त्वितरा' ख. पाठः । २ 'राहुः' ख. पाठः । ३ 'वरेण' ख. पाठः ।

**स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि ।**
**निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥ ५० ॥**

स्यादेतत्, एवमपि संधिर्वरं युद्धस्य संशयव्यायामादिदोषदुष्टत्वादित्याह—यदि तत्प्रार्थनयैव विना संदधासि तद्भयेन प्रणतो[1] भवसि। यश्च नरस्तनावपि परवायौ शत्रुप्रभञ्जने उपेयुष्यागते सति प्रणमते प्रह्वो भवति, सोऽसाराणां भीरूणां तुच्छतया निदर्शनं दृष्टान्तः । यतोऽसौ नरो लघुरन्तस्तुच्छोऽत एव बहुतृणम् ईषदसमाप्तं तृणमिति बहुच्प्रकृतिलिङ्गकः, प्रायशस्तृणतुल्य इत्यर्थः। तृणं हि लघुत्वात्तनावपि वायावागते प्रणमति, असाराणामकठिनानां निदर्शनम् । पर एव वायुरुपर्यागमनात् । प्रणमते इति कर्मवद्भावेनात्मनेपदम् । यकृ तु "न दुहस्नुनमा"मिति निषिद्धः ॥ ५० ॥

**तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते ।**
**पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥ ५१ ॥**

भूयोऽपि तेजोमहिमानमाह—दवीयान् दूरतरोऽपि तेजस्वी गणनायां प्रस्तुतायां तेजस्विमध्ये गण्यते संख्यायते, दूरस्थादपि हि ततो भीयते इत्यर्थः। तथा च पञ्चतपसो मुनिविशेषस्य चतुर्णां जातवेदसां तेजसां मध्ये यथा पञ्चमोऽग्निस्तपनो रविः, पञ्चाग्निकं नाम तपो विद्यते यत्र, ग्रीष्मकाले चतुर्ष्वग्निषु मध्य आस्यते उपरि चादित्यश्चरति स पञ्चतपा उच्यते। यदि च दूरस्थस्तेजस्वी तन्मध्ये न गण्यते तत्पञ्चानामग्नीनां मध्ये रविर्न संख्यायेतातिविप्रकृष्टत्वात्, तस्मात् तेज आश्रयतव्यं न मार्दवम् । दवीयानिति--दूरादिमनि "स्थूलदूरे"ति रलोपो गुणश्च ॥ ५१ ॥

**अकृत्वा हेलया पादमुच्चैर्मूर्धसु[2] विद्विषाम् ।**
**कथंकारमनालम्बा कीर्तिर्द्यामधिरोहति ॥ ५२ ॥**

किंच यो यशोऽर्थी तस्य मार्दवाश्रयणेन यश एव न भवतीति दर्शयितुमाह—यावदरीणामुच्चेषूत्तमाङ्गेषु आधारभूतेषु पादो लीलया न न्यस्तस्तावत्कथंकारं कथमिव कीर्तिर्दिवमुत्पतते, यतो निरालम्बा निराश्रया । यो ह्यधिरोहति

1 'तोसि' ख. पाठः । २ 'नि' ख. पाठः ।

स आलम्बभूतेषु सोपानेषु पदं विधत्ते[1]। शत्रवोऽपि यदि बलान्नाभिभूयन्ते तद् दुर्लभं यश इति वाक्यार्थः। अत्र च कीर्तिकीर्तिमतोरभेदविवक्षया कीर्तेर्वा पुरुषव्यापारारोपणात् समानकर्तृत्वसद्भावः। कथंकारमिति "अन्यथैवंकथमित्थंस्वि"ति णमुल्। दिवासमानार्थो द्यो शब्दोऽपि विद्यते, तस्य "औतोऽम्शसो"रित्याकारादेशे कृते द्यामिति भवति ॥ ५२ ॥

**अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः।**
**केसरी निष्ठुरक्षुण्णमृगपूगो मृगाधिपः ॥ ५३ ॥**

किंच शत्रूणां यथा बलादाक्रमणं श्रेयो न तथा संधिरिति दर्शयितुमाह—शरीरनिहितहरिणः सन् शशी मृगलाच्छनोऽभिधीयते। संपर्काच्छश एव तस्य मलं संपन्नमित्यर्थः। यस्त्वयं सिंहः स मृगपतिरुच्यते, यतः सक्रोधो मृगयूथान् क्षिपति क्षणोति वा। तदेतेनैतदुक्तं भवति—यदि त्वं चैद्येन संधत्से तत्ते कीर्तिर्नश्यति यतः स मलभूतः, अथ चेत्तं क्षिपसि तत् सुप्रभुरुच्यसे। अत्र च शशिमृगराजौ[2] निदर्शनम् ॥ ५३ ॥

**चतुर्थोपायसाध्येऽपि रिपौ[3] सान्त्वमपक्रिया।**
**स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ ५४ ॥**

आस्तां तर्हि संधिस्तथापि पूर्वं पूर्वोपायसंप्रयोगो युक्त इत्याशङ्क्यासहमान आह—दण्डसाध्ये रिपौ सामापक्रियानुपायः। एतदेव दृष्टान्तेन द्रढयति-स्वेद्यं स्वेदार्हमुष्णोपचारसाध्यमामज्वरं नवज्वरं को धीमानुदकेन परिषिञ्चति, शीतोपचारस्तस्यापक्रिया इत्यर्थः। स्वेद्यमिति "अर्हे कृत्यतृचश्च"। आमेत्यमरोगे इत्यस्य णिचि वृद्धिः। मित्त्वं च "नान्ये मितोऽहेतावि"ति वचनान्न भवति। पचाद्यच् ॥ ५४ ॥

**सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः।**
**प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५५ ॥**

क्रियते वा सान्त्वं यदि स बहु मन्यते नच तद् गृह्णातीति तद्दर्शयितुमाह—तस्य चैद्यस्य दण्ड्यस्य वा शत्रुसामान्यस्य सकोपस्य चतुर्थोपायसाध्यस्य

---

१ 'ते तावदनाश्रयंयशः स्वर्गं न प्राप्नोति, इत्यधिकः ख. पाठः। २ 'राजो' ख.। ३ 'शत्रौ क. पाठः।

सकोपत्वात् सामवचनानि न शान्तये । यथा क्वथितस्य घृतस्य सहसा पाकानन्तरं जलविप्रुषः शीता अपि दीपकाः ॥ ५५ ॥

**गुणानामायथातथ्यादर्थं विस्रावयन्ति ये ।**
**अमात्यव्यञ्जना राज्ञां दूष्यास्ते शत्रुसंहिताः ॥ ५६ ॥**

ये वात्र संधिं मन्यन्ते ते मूर्खाः परिहर्तव्या एवेत्युद्धवोद्देशेनाह—गुणानां संधिविग्रहादीनामायथातथ्याद्विपर्ययेण प्रयोगात् ये सचिवाः प्रभूणामर्थं प्रयोजनं विस्रावयन्ति,[1] तेऽमात्यव्यञ्जना भृत्यापसदा दूष्यास्त्यक्तव्याः, यतस्ते शत्रुसंहिता रिपुतुल्याः । विपक्षो ह्यर्थनाशं चिकीर्षति । अन्ये त्वमात्यव्यञ्जनमुभयवेतनमाहुः, शत्रुसंहितं शत्रूणामैकार्थ्यमापन्नम् । अतश्चैवं व्याख्यायते—गुणानामायथातथ्यात् येऽर्थं[2] नाशयन्ति तेऽमात्यव्यञ्जना उभयवेतना दूष्याः, इत्युभयवेतनलक्षणं दोषं ग्राहयितव्या भेद्या इत्यर्थः । यतस्ते शत्रूणां संहिता मिलितास्तत्त्वतः शत्रुहितास्तस्य तु कार्यार्थे सेवका इत्यर्थः । आयथातथ्यादिति "यथातथायथापुरयोः पर्यायेण"ति वा नञ्पूर्वपदवृद्धिः ॥ ५६ ॥

**स्वशक्त्युपचये केचित् परस्य व्यसनेऽपरे ।**
**यात्रामाहुरुदासीनं त्वामुत्थापयति द्वयम् ॥ ५७ ॥**

स्यादेतत्, यथा संधिरयुक्तस्तथा यात्रापीति तद्भवता न युक्तमुक्तमित्याह—अथ केचिदर्थशास्त्रज्ञा मन्यन्ते—यदा स्वशक्तेः कोशदण्डलक्षणाया उपचयो वृद्धिः परस्य त्वापद्भवतु मा वा भूदिति तदा यात्रा देया अन्ये त्वाहुः—शत्रोश्चेत् व्यसनं शक्तिक्षयस्तदा स्वशक्त्यनपेक्षमसाववस्कन्द्यः । एतच्च मतद्वयमपि त्वामुदासीनं निरुद्योगमुत्थापयत्युद्यमयति, उदयस्यापि संभवादिति भावः । आसीनमिति "ईदासः[3]" । द्वयमिति "द्वित्रिभ्यां तयस्यायज्वा" ॥ ५७ ॥

**लिलङ्घयिषतो लोकानलङ्घ्यानलघीयसः ।**
**यादवाम्भोनिधीन् रुन्धे वेलेव भवतः क्षमा ॥ ५८ ॥**

तत्र स्वशक्त्युपचयं तावदाह—यादवा एवाम्भोनिधयस्तान् भावत्की तितिक्षा वेलातुल्या रुन्धे पराक्रमान्निवर्तयति । कीदृशान्, लोकाञ्जगन्ति लिलङ्घयिषतः

---

१ 'न्ति विघ्नयन्ति' ख. पाठः । २ 'र्थं विस्रावयन्ति' ख. पाठः । ३ 'दागमः ख. पाठः ।

आक्रमितुकामान् अलङ्घ्यानन्यैरजय्यान् अलघीयसो बहून्, त्वं चेदनुजानासि तदधुनैवारयो जिता इत्यर्थः । समुद्रानप्येवंविधान् वेला रुन्धे । वेला मर्यादा प्रजापतिविहिता ॥ ५८ ॥

विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवात्मनि ॥ ५९ ॥

नच [1]याने कश्चित्तवायासो येन क्लेशभयान्नानुजानासीति दर्शयितुमाह—सेनायाः संबन्धी यो विजयः स त्वय्यपदिश्यतामुद्घोष्यतां, कृष्णो जयतीति । कीदृशे त्वयि[2] साक्षिमात्रे उदासीने, तथा फलभाजि फलमाधिपत्यलक्षणं भजतीति फलभाक् तस्मिन् । एतदुक्तं भवति—त्वं केवलं वीक्षस्व यत्तु कर्तव्यं तदखिलं पृतनैव करोति विजयश्च लोके तवैव नतु सेनायाः, तत्फलं च त्वमेव सेवसे नतु चमूः । क्व यथा साक्षिमात्रे किमीयं[3] किमपदिश्यते इत्याह—समीक्ष्योक्ते सांख्यशास्त्रनिर्दिष्टे यथात्मनि साक्षिमात्रे बुद्धेः संबन्धी भोगानुभवः संसारापवर्गलक्षणोऽपदिश्यते । तत्र हीदं दर्शनम्—आत्मा दर्शयिता बुद्धिर्वैद्या, बुद्धिर्बध्यते मुच्यते न किंचिदुपभुङ्क्ते । अथोच्यते—पुरुषो बद्धः पुरुषो मुक्त आत्मनः सुखमात्मनो दुःखमिति । एवं यथा बुद्धिभोगो [4]द्रष्टृमात्रे क्षेत्रज्ञे कथ्यते, एवं सेनाविजयस्त्वय्युदासीनेऽपि घोष्यतामिति न कश्चित्तवायासः ॥ ५९ ॥

हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥ ६० ॥

अथ परव्यसन[5]माह—हिडिम्बरिपुणा भीमसेनेन द्वैमातुरे जरासंधे राज्ञि संयति मथिते सति दमघोषजः शिशुपालः सुदमः सुखेन दम्यते जीयते। यतः सदैव मित्रव्यसनी, जरासंधवधदुःखं तस्य विद्यते । द्वयोर्मात्रोरपत्यं द्वैमातुरो जरासंधः । "मातुरुत्संख्यासंभद्रपूर्वायाः" । चिरस्येत्यनेन दर्शयति—अद्यापि न तस्य तादृशं मित्रमस्ति ॥ ६० ॥

---

१ 'वा तव' क. पाठः । २ 'भवति' ख. पाठः । ३ 'त्रे उदासीने तथा फलभाजि किमिव' ख. ग. पाठः । ४ 'गद्र' ख. पाठः । ५ 'नमर्थान्तरमाह' ख. पाठः ।

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ।
विधुर्विधुंतुदस्येव पूर्णस्तस्योत्सवाय सः ॥ ६१ ॥

एवं नीत्या परमतेन यानं प्रतिपाद्य विक्रमैकरसिकतयात्ममतेन प्रतिपादयितुमाह—व्यसने रिपुरवस्कन्द्य इति यन्नीतिस्तत् तेजस्विनस्त्रपाकरं, यस्मान्मानिनः परः पूर्णः[1]शक्तिसमृद्धः सन् प्रीत्यै राहोरिव चन्द्रः । पूर्णं हि विधुं[2] सुर्भानुर्ग्रसते न खण्डम् । पूर्वार्धे च वाक्यार्थपरामर्शसंबन्धापादनायेतिशब्दोऽध्याहार्यः, अन्यथा ह्यद्वयमेव वाक्यमुच्यते । आपदि परो गम्य इति यन्नीतिरित्यर्थः । विधुं तुदतीति विधुन्तुदः "विध्वरुषोस्तुदः । अरुर्द्विषदजन्तस्य मुम् । स्कोः संयोगाद्योरन्ते चे"ति सलोपः ॥ ६१ ॥

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ ६२ ॥

यद्येवं तत् शास्त्रोल्लङ्घनं कृतं स्याद्भवत्वित्याह—उच्छृङ्खलं स्वतन्त्रं यत् सत्त्वं प्राणी पुरुषगुणो वा यदन्यच्च शास्त्रेण नियन्त्रितमस्वतन्त्रीकृतं तदन्यदेव, रुचिभेदात् कश्चिन्नीतिमपेक्षते कश्चित्तु नेत्यर्थः । अथ किमिति ते अन्ये भवतः, उभे अपि कथमेकस्मिन् शास्त्रे न तिष्ठतः, इति दृढीकरणायार्थान्तरन्यासः । प्रकाशतमसोः कुतः सामानाधिकरण्यं सहभावः । यथा तेजस्तिमिरे वैलक्षण्यादेकस्मिन्नाधारे नावतिष्ठेते तथा सत्त्वे इत्यर्थः । तस्माद्वयं तेजोरूपा नीतिशास्त्रं नापेक्षामहे, इति तात्पर्यम् ॥ ६२ ॥

इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः ।
आस्माकदन्तिसांनिध्यवामनीभूतभूरुहः ॥ ६३ ॥

एतदेवोपसंहरन् प्रकृतं वक्तुमाह—यत एवमत इन्द्रप्रस्थगमो युधिष्ठिरपुरगमनं मा कारि मा विधायि । कर्मणि लुङ् । किं तर्हि क्रियतामित्याह—चेदयो जनपदविशेषाः शिशुपालगमनादीदृशाः सन्तु, इति प्रार्थने लोट् । अस्माकमिमे आस्माकाः "तस्मिन्नणि च युष्माकास्माकौ" । अस्मदीया ये दन्तिनस्तन्नैकट्येन वामनीभूता ह्रस्वत्वं प्राप्ता भूरुहो वृक्षा येषु तथोक्ताः । एतेन नगरीरोधो विधीयतामित्युक्तं भवति ॥ ६३ ॥

---

१ 'स्वश' ख. पाठः । २ 'चन्द्रं' ग. पाठः ।

**निरुद्धवीवधासारप्रसारां गा इव व्रजम्।**
**उपरुन्धन्तु दाशार्हाः पुरीं माहिष्मतीं द्विषः॥ ६४॥**

तद्रोधावसरे हि वृष्णिमहेभास्तरुषु बध्यन्ते इत्येतदाह—दाशार्हा वृष्णयः पुरीं माहिष्मतीं द्विष उपरुन्धन्तु, माहिष्मत्याख्यायां पुर्यां शत्रून् वेष्टयन्त्विवित्यर्थः। गा इव व्रजं, यथा कश्चिद् व्रजं घोषं गा उपरुणद्धीत्यनायासः प्रतिपाद्यते। रुधिर्द्विकर्मकः। "अकथितं चे"ति पुर्या व्रजस्य च कर्मसंज्ञा। केचित्तु त इवेति पठन्ति। ते चेद्यो व्रजमस्मद्घोषं यथोपरुरुधुरेवं द्विषः संबन्धिनीं पुरीं यादवा रुन्धन्तु, इति व्याचक्षते। युज्यत एतत्, किन्तु विशेषलक्षणं त्यक्तं स्यात्। अयं च कविः प्रायशस्तच्छीलः। कीदृशीं पुरीं, वीवधशब्दः पथि पाथेये च वर्तते, आसारो मित्रबलं, प्रसारो वनाजीवः घासकाष्ठादिकः, एते निरुद्धा वेष्टवशान्निवृत्ता यस्यास्तां निरुद्धवीवधासारप्रसाराम्॥ ६४॥

**यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः।**
**वयं हनाम द्विषतः सर्वः स्वार्थं प्रतीहते[1]॥ ६५॥**

नन्वेवं सति युधिष्ठिर उपेक्षितो भवेत्, एवं भवत्वित्याह—पार्थो यजतां, शक्रो दिवं रक्षतु, रविरुदेतु, वयं शत्रून् हनाम। यस्मात् सर्वः कश्चित्, स्वार्थं प्रत्यात्मोद्देशेनेहते चेष्टते, स्वार्थं वा "प्रतीयते" (इति पाठे) प्रतिपद्यतेऽनुतिष्ठति। ईङ् गतावित्यस्य दैवादिकस्य लकारः। तदेतेनैतदुक्तं भवति—यथार्केन्द्रपार्थाः स्वकार्याण्यनुतिष्ठमानाः परार्थं नापेक्षन्ते तथा वयमपि। अर्केन्द्रतुल्यो युधिष्ठिरोऽस्माकमित्यर्थः। तद्यदि मित्रकार्यं[2]मवेक्षामहे तत् तद्वदर्केन्द्रयोरपि साहायकं नयामः। हनामेति प्राप्तकाले लोट्, यजतामित्यादावतिसर्गे। कामचारानुज्ञानमतिसर्गः। यागादिकं कुर्वन्तु यथेष्टं वा, यतो न तेषामास्माकीना चिन्ता नाप्यस्माकं तदीयेत्यर्थः॥ ६५॥

**प्राप्यतां विद्युतः संपत् संपर्कादर्करोचिषाम्।**
**शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः॥ ६६॥**

अधुना वचनसमाप्तावाशिषं प्रयुङ्क्ते प्रार्थयते वा—आयुधैः रिपुरुधिररक्तै रविकिरणनिकरसंपर्कात् तडिच्छोभा प्राप्यताम्। रुधिररक्तं हि शस्त्रं तेजःसंपर्का-

---

१ 'समीहते' क. ख. पाठः। २ 'कार्यार्थम्' ख. पाठः।

त्सौदामिनीसदृशं भवति । कीदृशैः शस्त्रैः, द्विषतां यानि शिरांसि तेषां यश्छेदस्तेन प्रोल्लसत्तिर्यगूर्ध्वं वा प्रसरद्यच्छोणितं तेनोक्षितैः स्नपितैः । प्राप्यतामिति कर्मण्याशिषि लोट् प्रार्थनायां वा प्राप्तकाले वा ॥ ६६ ॥

इति संरम्भिणो वाणीर्बलस्यालेख्यदेवताः ।
सभाभित्तिप्रतिध्वानैर्भयादन्ववदन्निव ॥ ६७ ॥

इति हलधरस्य वाचो वेगोक्त्या मन्त्रमण्डपकुड्येषु प्रतिफलिताः, तत्र कविरुत्प्रेक्षां चक्रे-इति[1] रामस्य वाचः सदःकुड्यप्रतिश्रुत्काभिश्चित्रदेवता भयेनान्ववदन्निव अङ्गीकरणार्थमेवमेतदिति प्रत्यूचिरे । यतोऽसौ संरम्भी क्रुद्धः, यदि ता नाङ्गीकुर्वते तत्ताश्चूर्णयति । संरम्भीति "रभेरशब्लिटोरि"ति नुम् ॥ ६७ ॥

निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद् दृशा ॥ ६८ ॥

ताः शेषगवीर्बलभारतीराकर्ण्यानन्तरमधोक्षजो विष्णुर्बृहतां पत्युर्बृहस्पतेः शिष्यायोद्धवाय वक्तुं चक्षुषा प्रसङ्गमदात् । भणेत्यक्षिनिकोचेन हलिगौरवार्थमेवावोचदित्यर्थः । शेषगव्यः शेषस्य गावो रामवाचः । "गोरतद्धितलुकी"ति टच् ॥६८॥

भारतीमाहितभरामथानुद्धतमुद्धवः ।
तथ्यामुतथ्यानुजवज्जगादाग्रे गदाग्रजम् ॥ ६९ ॥

अथ भ्रूक्षेपादनन्तरमुद्धवो गदाग्रजं विष्णुं भारतीमवोचत् । गदिरुभयकर्मकः । अग्रे पुरो विष्णोरेव । वागुपादानं विशेषणयोगार्थम्, तदाह—आहितभरामर्पितार्थगौरवाम् । अभिधेयसंपदत्र भरः । तथा तथ्यां सत्यां नीतिशास्त्रानुगताम् । कथं जगाद, अनुद्धतं सप्रश्रयं नतु हलधरवत् क्षोभेण । उतथ्यानुजवत् बृहस्पतिरिव । एतेन मन्त्रप्रावीण्यमुक्तम् । उतथ्यो वाचस्पतेर्ज्येष्ठो भ्राता, गदस्तु हरेः कनीयान् ६९

संप्रत्यसांप्रतं वक्तुमुक्ते मुसलपाणिना ।
निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् ॥ ७० ॥

अनुद्धतं जगादेत्युक्तं तदाह-हलिनोक्ते ममाधुनाभिधातुमसांप्रतम्, एतेनैव

---

१ 'ति पूर्वोक्ताः' ख. पाठः ।

सर्वमुक्तमित्यर्थः। एतदेव दृष्टान्तेन द्रढयति—यस्माल्लेखेन निर्धारितेऽर्थे निश्चिते सति वाचिकं संदेशवाचं खलूक्त्वा न वक्तव्यं, लेखहारकेण लेखादेवार्थावगतेः। यो वा वक्ति तत् पिष्टपेषणम्। अथच मुसलपाणिनेति साभिप्रायमत्र नाम। मुसलमस्यैव हननयोग्यं पाणौ नतु मन्त्रक्षमोऽयमतश्च यदैवैतेनाट्टपट्टमुक्तं तदैव किं मया वक्तव्यमिति न किंचित् प्रयोजनमित्यर्थः। संप्रत्येव सांप्रतम्। "प्रज्ञादिभ्यश्चे"त्यण्। स्वभावाच्चायं युक्तार्थः क्रियाभिधायी, तेन वक्तुमिति तुमन्न विरुध्यते। लिख्यतेऽस्मिन्निति लेखः, "हलश्चे"ति घञ्। खलूक्त्वा "अलंखल्वो"रिति क्त्वा। वाचिकमिति "वाचो व्याहृतायाम्" इति स्वार्थे ढक्॥ ७०॥

**तथापि यन्मय्यपि ते गुरुरित्येव गौरवम्।**
**तत् प्रयोजककर्तृत्वमुपैति मम जल्पतः॥ ७१॥**

यदि खलूक्त्वा तन्मूक इवास्व किमारटितेनेति वचनावकाशं दित्सुराह—यद्यप्यवचनं न्याय्यं तथापि यन्मय्यपि स्वल्पबुद्धौ गुरुरित्येव गौरवमादरातिशयस्तन्मम भणतः प्रयोजककर्तृत्वमुपैति, तन्मां जल्पयतीत्यर्थः। प्रयोजकश्चासौ कर्ता। द्विविधो हि कर्ता स्वतन्त्रः प्रेरकश्च। अपिशब्देनात्मनो हीनत्वं ब्रुवन्नौद्धत्यं प्रकाशयतीति स्वरूपनिर्देशः। एवशब्दोऽवधारणे। गुरुत्वेनैव नतु सचिवत्वादिनेत्यर्थः॥ ७१॥

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।**
**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता॥ ८२॥**

नच मम भणितव्यं विद्यते, इति वाङ्मयविस्मयद्वारेण प्रतिपादयितुमाह—वाङ्मयस्य वक्तव्यस्य गेयतुल्यस्याहो अनन्ता विचित्रतानेकरूपत्वम्। कदाचित्कारणबाहुल्यं स्यात् तन्न चित्रमित्याह—वर्णैरज्झलिभिः स्वरैरिव कतिपयैर्ग्रथितस्य दृब्धस्य। यदि परं त्रिःषष्टिश्चतुःषष्टिर्वा वर्णाः, अथ च वेदादिभेदेनापारं वाङ्मयं न क्वचिदपि सदृशं, स्वरा अपि सप्त तदपि गेयं समुद्रवदनन्तं, तस्माद्यद्यपि हलिनोक्तं तथाप्यहमन्यदेव विचित्रतरं वच्मीति तात्पर्यार्थः। उक्तं च—"णअढताणगढ इति ओहीन अते दीमन्तिकहवि पुणरुत्तणे विट्ठपापियणं अक्कुवामु कविवाणीब"॥ वाचो विकारो वाङ्मयमिति एकाचो नित्यं मयटमिच्छन्ति। गीयत इति गेयम्। "अचो यत्"। उपमानोपमेययोश्च द्वित्वादिव-

शब्दावपि द्वावेव न्याय्यौ, यत्र त्वेवंविधे विषये एक एवासौ प्रयुज्यते तत्र वाक्यार्थस्यौपम्यं बोद्धव्यम् । एवमन्यत्र ॥ ७२ ॥

**बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते ।**
**अनुज्झिताभिसंबन्धः प्रबन्धो दुरुदाहरः ॥ ७३ ॥**

अथ हलधरवचनाधिक्षेपद्वारेणात्मवचनस्य ग्राह्यत्वमाह—आत्ममनीषया प्रकीर्णमसमञ्जसं बह्वपि विशिष्टमपि कामं सत्यमुच्यते । यस्तु परस्परसव्यपेक्षः प्रबन्धो वाक्प्रपञ्चः स दुरुदाहरो वक्तुं कृच्छ्रेण शक्यते । यदुक्तम्—"वाक्संयोगो हि नृपतेः स दुष्करतमो मतः । अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम्" ॥ इति । तदेतेन सीरिणा लागुडिकन्यायेनोक्तं, मया तु नीतिशास्त्रान्वितमभिधीयते, इत्युक्तं भवति ॥ ७३ ॥

**म्रदीयसीमपि घनामनल्पगुणकल्पिताम् ।**
**प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव ॥ ७४ ॥**

सामान्यद्वारेणात्मवचननतिमाह—ये कुशला वाग्मिनस्ते वाचमेवंविधां प्रसारयन्ति विस्तारयन्ति, अभिदधते इत्यर्थः । कीदृशीं, म्रदीयसीं कोमलां, सुबोधामपि घनां महार्थां । यच्च घनं दार्वादि तन्न मृदु भवति, इति विरोधच्छायाप्रतिपादनार्थोऽपिशब्दः । तथानल्पैर्गुणैरक्लिष्टत्वमाधुर्यौदार्यादिभिः कल्पितां योजितां चित्रां नानारूपामनेकशास्त्रानुगतत्वात् अतश्च चित्रां पटीमिव चित्रपटीतुल्याम् । यथा केचित् कुशला एव तन्तुवायकाश्चित्रां पटीं प्रसारयन्ति वानाय वितानयन्ति तथा वाचं केचिदेवेत्यर्थः । सा च घनापि म्रदीयसी भवति । बहुभिर्गुणैस्तन्तुभिश्च कल्पिता चित्रपटी, हैमनो वासोविशेषः ॥ ७४ ॥

**विशेषविदुषः शास्त्रं यत् तवोद्ग्राह्यते पुरः ।**
**हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा ॥ ७५ ॥**

इदानीं भगवतो नतिद्वारेणात्मनोऽनौद्धत्यमाह—तव विशेषविदुषो विशेषज्ञस्याग्रतो यच्छास्त्रमुद्ग्राह्यते पर्यालोच्यते स वक्तुरुद्ग्राहयितुर्गुणनिकैवाभ्यास एव । विद्याभ्यासो गुणनिका । कीदृशी, परिचयस्थैर्ये प्रकृष्टदृढत्वे हेतुर्निमित्तम् । गुणनिकया हि शास्त्रस्याविस्मरणं भवति, अधीतस्य शास्त्रस्या-

विस्मरणार्थमभ्यासं कुर्मः, त्वमेतन्न जानासीति तात्पर्यार्थः । विशेषं विद्वान् बोद्धा विशेषज्ञः। "द्वितीये"ति विभागात्समासः । विशेषेणातिशयेन विद्वान् पण्डित इति केचित् । तस्य विशेषविदुषः "वसोः संप्रसारणम्" । हेतुराविष्टलिङ्गः । परिचयो बोधप्रकर्षस्तस्य स्थैर्यमविस्मृतिः । गुणनमेव गुणनिकाभ्यासः । "संज्ञायां कन्" ॥ ७५ ॥

**प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि ।**
**तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसंपदः ॥ ७६ ॥**

एवं वचनावकाशं दत्त्वाधुना प्रकृतमर्थं विवक्षुराह—अतोऽस्मात् कारणात् राजा प्रज्ञोत्साहौ मन्त्रोत्साहशक्ती आत्मन्याधातुमुपपादयितुं यतेत यत्नं कुर्यात् । यतस्तौ बुद्ध्युद्योगौ जिगीषोर्जेतुमिच्छोरुदेष्यन्त्या वर्धिष्यमाणाया आत्मसंपदः प्रभुशक्तेर्मूलं कारणम् । यतो मन्त्रशक्त्युत्साहशक्तिभ्यां प्रभुशक्तिर्भवत्यतस्ते अर्जनीये इत्यर्थः । जिगीषुर्नयज्ञो भुवं जेतुमुद्यतो राजन्यकप्रधानमुच्यते ॥ ७६ ॥

**सोपधानां धियं धीराः स्थेयसीं खट्वयन्ति ये ।**
**तत्रानिशं निषण्णास्ते जानते जातु न श्रमम् ॥ ७७ ॥**

प्रज्ञोत्साहावित्युक्तं तत्र तावत् प्रज्ञाया नुतिद्वारेण मूलत्वं दर्शयितुमुपक्रमते श्लोकचतुष्टयेन—ये धीरा अव्याकुलाः सोपधानां युक्तियुक्तां धियं स्थेयसीं स्थिरतरामनपायिनीं खट्वयन्ति खट्वां कुर्वतेऽधिरोहन्ति वा, ते तत्र खट्वायामानिशं रात्रिन्दिनं निषण्णाः सुप्ताः सन्तः श्रममङ्गपीडां नैव जानते न कदाचिल्लभन्ते । कीदृशीं खट्वां, सोपधानां सगण्डकां स्थेयसीं दृढमस्फुटिताम् । यद्यपि चात्र खट्वोपसर्जनभूता तथापि बुद्ध्या विभज्य विशेषणयोगो बोद्धव्यः । अतिशयेन स्थिरा स्थेयसी । "प्रियस्थिरे"ति ईयसुनि स्थिरस्य स्थादेशः । खट्वां कुर्वन्तीति खट्वयन्ति । "तत्करोती"ति णिच् । आ निशाया आनिशम् । "आङ् मर्यादाभिविध्यो"रिति समासः ॥ ७७ ॥

**स्पृशन्ति शरवत् तीक्ष्णाः स्तोकमन्तर्विशन्ति च ।**
**बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत् ॥ ७८ ॥**

ये तीक्ष्णाः कुशाग्रेयधियः सूक्ष्मबुद्धयः प्राज्ञास्ते स्तोकं स्पृशन्ति मितमालोचयन्ति, अथ चान्तर्विशन्ति कार्यतत्त्वस्यान्तरं प्रविशन्ति । स्वल्पं ब्रुवन्तः

सकलं कार्यशरीरं जानन्तीत्यर्थः । शरा इव, यथा सायका मनाक् स्पृशन्ति व्रणं कुर्वन्ति, अथ च द्वितीयं पार्श्वं यावन्निःसरन्ति । ये पुनः स्थूला जडधियो हस्तिमूर्खास्तैर्बहु स्पृश्यते रभ्यते कार्यशरीरस्य बहिः स्थीयते । अशेषमपि कार्यमालोचयन्तो नैव तस्य हृदयं बुध्यन्त इत्यर्थः। अश्मवत्, यथा यन्त्रपाषाणो बहु शरीरं स्पृशति नचान्तरं प्रविशति । तदेवं[१] प्राज्ञाप्राज्ञविशेष उक्तः ॥ ७८ ॥

**आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।**
**महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ७९ ॥**

ये मूर्खास्ते मनागेवारम्भं कुर्वते नितरां चाकुला भवन्ति दीपवत् । ये पुनः कृतधियः शास्त्रज्ञास्ते महारम्भं महोदयं कार्यमारभन्तेऽथच निराकुला निर्व्यग्रास्तिष्ठन्ति सूर्यवत् । शास्त्रेण कृता वर्धिता धीर्येषां ते कृतधियः शास्त्रपरिणतबुद्धय उच्यन्ते । जानातीति ज्ञः "इगुपधज्ञाप्रीकिरः कः" ॥ ७९ ॥

**उपायमास्थितस्यापि नश्यत्यर्थः प्रमाद्यतः ।**
**हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥ ८० ॥**

नचापि बुद्धिमदात्प्राज्ञेन प्रमदितव्यमिति दर्शयितुमाह—प्रमाद्यतोऽवलिप्तस्य नीतिमाश्रयतोऽपि प्रयोजनं न घटते । तथाच हरिणनिकटस्थोऽपि लुब्धको यावदजागरूकस्तावन्मृगानपि न हिनस्ति । तस्माज्जिगीषुणा प्रमादो न विधेयः । एतेन यदुक्तम्—नीतिरापदि यद्गम्यः (२ । ६१ श्लोके) तदपास्तम् । शीते तच्छीलश्चेति शयालुः, इत्यालुचि शीङ्ग्रहणम् ॥ ८० ॥

**उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ।**
**जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ ८१ ॥**

एवं प्रज्ञां प्रदर्श्य सांप्रतमुत्साहं प्रतुष्टूषुराह—अर्यमादिषु द्वादशसु राजसु मध्यात् स एवैको जिगीषुः प्रधानं संपद्यते, य उदेतुमुदयाय ईहामुद्योगमुत्साहमत्यजन् न त्यजति, नान्यः । जेतुमिच्छुर्जिगीषुः, निरीहश्च कथं जयतीति भावः। यद् द्वादशस्वादित्येष्वदितिसुतेषु धात्रादिषु मध्यात्स एवैको दिनकृदहस्करः कल्पते य उदेति, अन्ये त्वदिनकृत एव । यतो यो दिनं करोति स दिनकृदुच्यते। तत्रेमे द्वादशादित्याः—धातार्यमा मित्रो वरुणोंऽशुर्भग इन्द्रो विवस्वान् पूषा

१ 'वं प्रज्ञाविशेषः' ख. पाठः ।

पर्जन्यस्त्वष्टा विष्णुरिति । इमे तु राजानः—अरिर्मित्रमरिमित्रं मित्रमित्रमरिमित्रमित्रं विजिगीषुः पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासाराख्य आक्रन्दासाराख्यो मध्यम उदासीनश्चेति संक्षेपः । भवन्ति चात्र श्लोकाः—"अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथारिमित्रामित्रं च विजिगीषुः परः स्मृतः ॥ पार्ष्णिग्राहः स्थितः[1] पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः" इति । जिगीषुर्नाभिस्थानीयो[2]ऽत्र राजचक्रस्य पार्ष्णिमिव यो गृह्णाति स पार्ष्णिग्राहः । ए[3]तन्निरोद्धा विजिगीषुसहाय आक्रन्दः । आक्रन्दनिरोद्धा च पार्ष्णिग्राहासारः । एतन्निरोद्धा चाक्रन्दसहाय आक्रन्दासार इति ॥८१॥

**तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता ।**
**सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ ८२ ॥**

कथमसावेको जिगीषुः कल्पत इति तस्य मण्डलचिन्तामाह—एवंविधेन नरेन्द्रेण नृपेण रिपवः सुनिग्रहाः सुखेन दमयितुं शक्याः । कीदृशेन, तन्त्रावापविदा । स्वप्रकृत्युत्पत्तिविधानं तन्त्रं, परशङ्कीनामात्मन्यारोप आवापः, तौ वेत्ति जानातीति यस्तेन । तथा योगैः प्रच्छन्नप्रणिधिभिर्मण्डलानि परराष्ट्राण्यधितिष्ठताक्रमता । एवंविधेनोत्साहेनासौ विजिगीषुः संपद्यत इत्यर्थः । के यथा केन सुनिग्रहा इत्याह-फणीन्द्रा इवेति । यथा नरेन्द्रेण गारुडिकेन सर्पश्रेष्ठा अकृच्छ्रेण दमयितुं शक्यन्ते । सोऽपि तन्त्रं गारुडशास्त्रमावापः सर्षपादिक्षेप[4]स्तौ वेत्ति, योगैश्च ध्यानैर्मण्डलानि वायव्यादीन्यधितिष्ठति ॥ ८२ ॥

**करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम् ।**
**प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ ८३ ॥**

यदुक्तं'तौ हि मूलमुदेष्यन्त्या' (७६ श्लोके) इति तत् दर्शयति—उत्साह एव [5]वृक्षः स प्रभुशक्तिं कोशं चतुरङ्गं च फलं फलति जनयति । कीदृशीं, करैर्बलिभिः प्रचेयां वर्धनीयां तथा प्रथीयसीमतिमहतीम् । उत्साहः कीदृश उत्तुङ्गोऽतनुः,

१ 'स्मृतः' गः पाठः । २ 'यो यत्र' ख. पाठः । ३ 'ए' नास्ति ग. पाठः । ४ 'सर्पादि विक्षेपः, क. ख. पाठः
५ 'स वृक्षः' ग. पाठः ।

तथा प्रज्ञाबलं मन्त्रशक्तिस्तदेव महन्मूलं कारणं यस्य । मन्त्रशक्तिजनितेनोद्यमेन प्रभुशक्तिर्जन्यते इति वाक्यार्थः । योऽप्युन्नतो बृहन्मूलश्च स करप्रचेयां हस्तप्राप्यां शक्तिं फलदानलक्षणां फलति ॥ ८३ ॥

**बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।**
**चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ ८४ ॥**

शक्तित्रययोगे सति राजशब्दः प्राप्यते नान्यथेति दर्शयितुमाह—एवंविधः कोऽपि पुरुषो राजन्यः, पुरुषविशेषः कोऽपि राजोच्यत इत्यर्थः । बुद्ध्यादियोगे सति राज्ञा भूयत इति यावत् । अतश्च षड्गुणा इत्यादीनां शक्तीनां संग्राह्यत्वमिति भावः । अथच एवंविधो यः पार्थिवः स कोऽपि पुरुषः पुरुषविलक्षणोऽसौ बोद्धव्य इति वक्रोक्तिः। तमेव विशेषमाह—बुद्धिः प्रज्ञा शस्त्रं प्रहरणं यस्य स बुद्धिशस्त्रः । अन्यो ह्यायुधेन जिघांसति स तु बुद्ध्यैवेति विशेषः। उक्तं च—"एकं हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमतोत्सृष्टा हन्ति राष्ट्रं सराजकम्" इति । तथा प्रकृतय एवाङ्गानि यस्य स प्रकृत्यङ्गः । अन्यस्य हि पाणिपादादीन्यङ्गानि भवन्ति, स तु तत्कर्म प्रकृतिभिरेव कुरुते—"स्वामी जनपदोऽमात्यः कोशो दुर्गं बलं सुहृत् । राज्यं सप्तप्रकृत्यङ्गं नीतिज्ञाः संप्रचक्षते" इति ॥ तथा घनातिशयवती संवृतिर्मन्त्रगुप्तिरेव कञ्चुकं कवचो यस्य। अन्यस्य हि सन्नाहः शस्त्रमयो भवति स तु मन्त्ररक्षयैवात्मानं रक्षति । चाराः प्रणिधय एवेक्षणे चक्षुषी यस्य स चारेक्षणः । अन्यस्य हि स्वमुख एव चक्षुषी भवतः स तु चारैरेवाखिलमवलोकयति । उक्तं च "गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः[2] । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" इति । तथा दूता एव मुखं यस्य स दूतमुखः । अन्यस्य हि शरीरे मुखं लग्नं भवति स तु भाषणादिकं मुखकार्यं दूतैरेव कुरुते, अत एव पुरुषः कोऽपि पार्थिवो नान्य इति । तदेतेन यो मन्त्रशक्त्युत्साहशक्तिप्रभुशक्तियुक्तः स राजोच्यते नान्य इत्युक्तं भवति८४

**तेजः क्षमा वा नैकान्तः कालज्ञस्य महीपतेः ।**
**नैकमोजः प्रसादो वा रसभागविदः कवेः ॥ ८५ ॥**

इदानीं केवलं तेजःसमाश्रयणेन यदभिहितं 'मा जीवन्यः परे'त्यादि

१ 'क्षय' ख. पाठः । २ 'ब्राह्मणा वेदचक्षुषा' ख. पाठः ।

(४५ श्लोके) तद् दूषयितुमुपक्रमते–अवसरज्ञस्य राज्ञो न तैक्ष्ण्यमेकान्तो निश्चयो न मार्दवमपितु यद्यद्युपयुज्यते। तदेव दृष्टान्तेन द्रढयति–कवेः काव्यकर्तुः रसभागज्ञस्य न केवलमोजः पक्षे नापि प्रसादः । रसाः—"शृङ्गारहास्यकरुणा वीररौद्रभयानकाः । बीभत्साद्भुतशान्ताख्या नवैते निश्चिता बुधैः" इति। तेषां विभागो विषयविभागः । बहुसमासवती वृत्तिरोजोऽसमासा तु प्रसादः । यश्च रसविभागं कविर्जानाति तेनैकान्तत एव गुणो नैवौजः प्रसादो वाश्रयणीयः । यतः शृङ्गारकरुणयोः प्रसाद एव शोभामावहति रौद्रे त्वोज एव। केचित् तु रसभावविद् इति पठन्ति। तच्चु नोपयुज्यते रसभावयोरेकयोगक्षेमत्वात्, भाव एव हि रसो भवति, किंच रसेष्वेव हि रीतयो विभक्ता न भावेषु इति ॥ ८५ ॥

कृतापचारोऽपि परैरनाविष्कृतविक्रियः ।
असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ ८६ ॥

न चाप्यकाले तेजस्विता फलवतीति दर्शयितुमाह—यः परैर्विहितापराधः स काले प्राप्ते कोपं करोति[1] लब्धबलः सन् तेजस्वितामाश्रयति, यतस्तदासावसाध्योऽजय्यः । पूर्वमुपद्रुतोऽप्यशक्तत्वाददर्शितकोपः, तेन यदा शक्तिसंपत्तिमान् भवति तदापराधिषु तैक्ष्ण्यमाश्रयणीयं न सर्वदेत्युक्तं भवति । उक्तं च–"वहेदमित्रं स्कन्धेन यावत्कालवि[2]पर्ययः। अथैनमागते काले भिन्द्याद् घटमिवाश्मनि"॥ इति । यथा गदो व्याधिर्जनैः कृतापथ्योऽपि सन् अपटुत्वाद्विकारं न प्रकटयत्यनन्तरं प्राप्ते काले सत्य[3]च्छेद्यत्वात्कोपं स्वकार्यं कुरुते, तथा मानी ॥ ८६ ॥

मृदुव्यवहितं तेजो भोक्तुमर्थान् प्रकल्पते ।
प्रदीपः स्नेहमादत्ते दशया ह्यन्तरस्थया ॥ ८७ ॥

नचाप्यकालेऽप्येकान्तदारुणेन भवितव्यमिति दर्शयितुमाह—तेजः शौर्यं[4] मार्दवमिश्रितं सदर्थान् भूम्यादिकान् भोक्तुं प्रकल्पते[5] समर्थं भवति न केवलम् । तथा च प्रदीपस्तेजःस्वभावोऽपि दशया मृद्व्या मध्यस्थया समेत्य तैलं पिबति न केवलम् । उक्तं च "मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः । एतद् बुद्ध्वा महाराज मा तीक्ष्णो मा मृदुर्भव" इति ॥ ८७ ॥

१ 'कुरुते' ग. पाठः । २ 'स्य' ग. पाठः । ३ 'अनु' ग. पाठः । ४ 'क्रौर्यं' ख. ग. पाठः । ५ 'गलभते' ग. पाठः ।

नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ ८८ ॥

नापि दैवमुल्लङ्घ्य तेज आदातव्यमिति दर्शयितुमाह—यः शास्त्रज्ञः स द्वितयमाश्रयते । तदेव स्वरूपेण दर्शयति–दैष्टिकतां दैवपरतां शास्त्रैकविषयत्वं केवलं नाश्रयति, नापि केवले पुरुषकारे निषीदत्यवतिष्ठते । यथा सत्कविर्बाण-प्रभृतिर्द्वौ शब्दार्थौ काव्येष्वपेक्षते । नहि स केवलान् शब्दालंकारानुपादत्ते नापि केवलानर्थालंकारान्, अपितु निरवद्यं सुकाव्यं कर्तुं द्वयमेव । उक्तं च— "शब्दार्थौ काव्य"मिति । तस्मात्केवलं पौरुषाश्रयणेन चैद्यो न जेय इत्युक्तं भवति । दिष्टमस्तीति मतिर्यस्य स दैष्टिको दैवशरणोऽत्र विवक्षितः । "अस्ति नास्ति दिष्टं मति"रिति ठक् । पुरुषाणां कर्म पौरुषम्, "युवादि-त्वादण् ॥ ८८ ॥

स्थायिनोऽर्थे प्रवर्त्तन्ते भावाः संचारिणो यथा ।
रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥ ८९ ॥

जिगीषुरेकः कल्पते इत्युक्तं, तत्रैतत्स्यात् किं नाम जिगीषुत्वमुच्यते यस्यो-परि भर इति, तद्गुणानाह–नेता नायकोऽपि जिगीषुर्यो महीभृन्नृपः स्थायी स्थिर एकदेशस्थो वा तस्यार्थे प्रयोजनेऽन्ये संचारिणो [1]अटनशीला राजानस्तथा प्रव-र्तन्ते[2] यथा स्थायिनो रसस्यैकस्यान्ये संचारिणो भावाः, रसाः शृङ्गारादयः । अत्र तु रसहेतुत्वात् स्थायी भाव एव रत्यादिको विवक्षितः । "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः" ॥ इति, व्यभिचारिणो भावा निर्वेदादयस्त्रयस्त्रिंशत्, ते च स्थायिनं भावं रसीभवन्तं पोषयितुं प्रवर्तन्ते । उक्तं च "दीपयन्तः प्रवर्तन्ते ये पुनः स्थायिनं रसम् । ते तु संचारिणो ज्ञेया न ते स्थायित्वमागताः" ॥ इति, अथवा शृङ्गारादिवचनमेव रस-शब्दः स्थायिभावहेतुत्वाच्च स्थायित्वम् । तथाचात्र श्लोके स्थायिन इति षष्ठ्ये-कवचनम् । ये तु जसन्तमाहुः ते स्थायिनो भावाः संचारिणश्चेति व्याचक्षते, त-दयुक्तम् । यत एकस्य रसस्य स्थायीभाव एक एवार्थे प्रवर्तते न बहवः, स्थायी एव रसो भवेदिति विरुद्धं स्यात् उपमेयसाम्यं च न स्यात्, तत्र स्थायिश-

१ 'घट' ख. पाठः । २ 'प्रयतन्ते' ग. पाठः ।

ब्दस्यैकवचनान्तत्वात् । तदेतेन विजिगीषुमहिमा कथितः इति ॥ ८९ ॥

अनल्पत्वात् प्रधानत्वादंशस्येवेतरे स्वराः ।
विजिगीषोर्नृपतयः प्रयान्ति परिवारताम् ॥ ९० ॥

अथच कथं नेतुरर्थे ते प्रवर्तन्ते इत्याह—विजिगीषोर्नृपचक्रनाभितुल्यस्य राज्ञोऽन्ये राजानः परिच्छदत्वं व्रजन्ति, कर्मकराः संपद्यन्ते इत्यर्थः । कुतोऽनल्पत्वादखिलशक्तियोगादत एव प्रधानत्वाच्च, राजगुणयोगाच्च प्रधानत्वम् । कस्येव के कुत इत्याह—यथांशस्य स्वरस्यान्ये स्वरा उपकरणतां यान्ति । सोऽप्यसकृदुच्चारणादनल्पो भवति । उक्तं च—"योऽत्यन्तबहुलो यत्र वादीवांशश्च तत्र सः" । इति, अत एव च प्रधानत्वमितरस्वरपरिभावकत्वेन वा ॥ ९० ॥

अप्यनारभमाणस्य विभोरुत्पादिताः परैः ।
व्रजन्ति गुणतामर्थाः शब्दा इव विहायसः ॥ ९१ ॥

एतदेवोपोद्बलयति—[1]विभोर्विजिगीषोरपि अनारभमाणस्य निष्क्रियस्यापि नृपान्तरैरर्जिता अर्था भूम्यादयो गुणतां व्रजन्ति, उपकारकतां यान्ति तदीयाः संपद्यन्ते इत्यर्थः । विहायस आकाशस्य शब्दा ध्वनयो यथा । अन्यैर्हि पटहादिभिः शब्द उत्पाद्यते विभोः सर्वव्यापिनो निष्क्रियस्य चाकाशस्य शब्दो गुण इति कथ्यते । तदेतेन प्रभुशक्तेर्महिमानं दर्शयताश्रयणीयत्वमुक्तम् । विभुः प्रभुशक्तियुक्तः सर्वव्यापी च । अपिशब्दो विस्मयार्थः ॥ ९१ ॥

यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः ।
एकार्थतन्तुप्रोतायां नायको नायकायते ॥ ९२ ॥

इदानीं तेजस्वितामाह—यो नायकः प्रभुरधिकद्युतिस्तेजस्वी स यातव्यपार्ष्णिग्राहादिमालायां नायकायते तरलतुल्यो भवति, तेजोयुक्तो राजा सर्वेषां प्रधानं भवतीत्यर्थः । यातव्यः प्राकृतोऽरिः, पार्ष्णिग्राहः पाश्चात्यो राजा, आदिग्रहणमाक्रन्दाद्यर्थम् । तेषां माला पङ्क्तिः सैव माला स्रक् तस्यां नायकायते, नायको मध्यमणिस्तरलः स इवाचरति "कर्तुः क्यङ्" । रत्नकण्ठिकायां हि तरलस्तेजोयुक्तः प्रधानम् । कीदृश्यां मालायाम्, एकार्थतन्तुप्रोतायां

१ 'प्र' ग. पाठः ।

एकश्चासावर्थ एकार्थः पृथिवीलक्षणः । सर्वो हि राजा भुवं साधयितुं यतते । एकार्थ एव तन्तुसादृश्यात्तन्तुस्तत्र प्रोतायां लग्नायां संबद्धायाम् । मालापि तन्तौ सीव्यते । तदेतेन पृथिव्यर्थिनां[1] राज्ञां स एव सार्वभौमो भवति, यस्तेजस्वितयाधिकद्युतिर्भवतीति तेजसोऽप्याश्रयणीयत्वमुक्तम् ॥ ९२ ॥

**षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षं रसायनम् ।**
**भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च ॥ ९३ ॥**

यत्पूर्वमुक्तं, षड्गुणाः (२७ शे श्लो०) इत्यादि तद्दूषयितुमाह—षडेव गुणाः संध्यादयः षाड्गुण्यमु[2]पयुञ्जीत व्यवहरेत्। कथं शक्त्यपेक्षं यथाशक्ति न राभसिकतया दर्पेण वा। आत्मसामर्थ्यं बुद्ध्वा य एव गुणो हितः संधिर्वा विग्रहादिर्वा स एव विधेय इत्यर्थः । कीदृशं षाड्गुण्यं, रसायनं [3]रसा अय्यते प्राप्यतेऽनेन[4] पृथिवीप्रापकमित्यर्थः । षाड्गुण्येन हि विचार्य प्रयुक्तेन पृथिवी प्राप्यते। केचित् तु रसायनमिव रसायनमित्याहुः । किमेवं सति सिद्ध्यतीत्याह—एवं यथाबलं षाड्गुण्योपयोगे सति, अस्य राज्ञोऽङ्गानि प्रकृतयः स्थास्नून्यविचलानि बलवन्ति समर्थानि च भवन्ति, अन्यथा तु तानि त्रुट्येयुः, शास्त्रपूर्वको व्यवहार उदयायेति तात्पर्यार्थः । उक्तं च "मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्। सुकृतः परिशुद्ध आगमः[5] कुरुते दीप इवार्थदर्शनम्" ॥ इति, अथ चोक्तिः— यः किल षाड्गुण्ययुक्तं रसायनमौषधं शरीरशक्ति[6]मपेक्ष्योपयुङ्क्ते तस्याङ्गानि पाणिपादादीनि दृढानि सबलानि च भवन्ति ॥ ९३ ॥

**स्थाने शमवतां शक्त्या व्यायामे वृद्धिरङ्गिनाम् ।**
**अयथाबलमारम्भो निदानं क्षयसंपदः ॥ ९४ ॥**

अथ शक्त्यनपेक्षे आरम्भे किं भवतीति स्थानवृद्धिक्षयाख्यास्त्रय [7]उपायास्तान्निरूपयितुमाह—स्थाने चयापचयरहितायामवस्थायां ये शमवन्तः श्रितशान्तिगुणास्तेषां तथाभूतानामङ्गिनां राज्ञां शक्त्या व्यायामे विग्रहे सति वृद्धिरुपचयो भवति । यदा स्थानावस्था तदा शम आश्रयणीयः । यदा तु शक्तीः पश्येत्तदोदयाय पौरुषमाश्रयणीयमित्यर्थः । यः पुनरयथाबलं शक्त्यतिक्रमेणारम्भो यत्नः

---

१ 'वीवर्तिनां' ख. पाठः । २ 'तदु' ख. ग. पाठः । ३ 'नमय्य' ग. पाठः । ४ 'नेनेत्ययनं रसाया भुवोऽयनं रसायनं' ग. पाठः । ५ 'मे' ख. पाठः । ६ युक्ति' ग. पाठः । ७ 'उदया विद्यन्ते' ग. पाठः ।

स क्षयसंपदो महत्या आपदो निदानं कारणम्, अशक्त्या विग्रहे सति नाशः प्राप्यत इत्यर्थः। अथचोक्तिः—यः किलाङ्गी शरीरपोषकः स स्थाने स्त्रीमद्यादौ[1] शमी भवति, स्त्र्यादि न सेवत इत्यर्थः। शक्त्या च व्यायामे श्रमे सति तस्य वृद्धिः कायस्थौल्यं भवति। यस्तु देहबलमनपेक्ष्यातिव्यायामस्तेनासौ क्षयं धात्वपचयं प्राप्नोति॥ ६४॥

**तदीशितारं चेदीनां भवांस्तमवमंस्त मा।**
**निहन्त्यरीनेकपदे स उदात्तः स्वरानिव॥ ६५॥**

एवं सामान्यरूपेण नीतिशास्त्रमभिधाय प्रकृते योजयितुमाह—यतः "अयथाबलमारम्भो निदानं क्षयसंपदः" तत्तस्मात् चेदीनामीशितारं चैद्यं भवान् मावमंस्त मावज्ञासीत्, अशक्त एष इत्यवलेपं तं प्रति मा[2] कृथा इत्यर्थः। यतः स चैद्य उदात्त उन्नतो महाबलः सन्नरीनेकपदे युगपदेव निहन्ति हिनस्ति, स्वरानिव यथोदात्तः स्वरविशेषः एकस्मिन् एव पदे स्वरानचो निहन्ति अनुदात्तयति। "अनुदात्तं पदमेकवर्ज"मिति। तस्मादृाभसिकतया चैद्यो नावस्कन्द्यते इति भावः। अवमंस्तेति "माङि लुङ्"॥ ६५॥

**मा वेदि यदसावेको जेतव्यश्चेदिराडिति।**
**राजयक्ष्मेव रोगाणां समूहः स महीभृताम्॥ ६६॥**

नचासौ सहजेनैव बलेन युक्तो यावद् बाह्येनापीति दर्शयितुमाह—असौ चैद्यो एकत्वाज्जय्य इति त्वया मा वेदि मा ज्ञायि मा[3] ज्ञातव्यम्। यस्मात् स राज्ञां समूहो राशिः स्थानम्। यथा राजयक्ष्मा क्षयव्याधी रोगाणां व्याधीनां निचयः। क्षये हि सर्वव्याधयोऽरोचकालस्यातीसारादयः संनिहिताः। वेदीति कर्मणि लकारः। कर्म तु वाक्यार्थः। च्लेः चिण् "चिणो लुगि"ति तस्य लुक्। चेदिषु राजत इति चेदिराट्, क्विप्। इतिशब्दो वाक्यार्थपरामर्शकः क्रियान्तरसंबन्धो[4] यथा स्यात्, अन्यथा जेतव्यश्चेदिराट् भवता मा वेदीत्यात्मीयार्थ[5]परतन्त्रयो[6]र्वाक्ययोर्दशदाडिमादिवाक्यवदसंबद्धार्थता स्यात्॥ ६६॥

---

१ 'दि दोषं शमयति' क. ख. पाठः। २ 'मा त्वं' ग. पाठः। ३ 'न' ग. पाठः। ४ 'बद्धो' ख. पाठः। ५ 'र्थः' ख. पाठः। ६ 'न्त्रवाक्य' ख. पाठः।

संपादितफलस्तेन सपक्षः परभेदतः ।
कार्मुकेणेव गुणिना बाणः संधानमेष्यति ॥ ९७ ॥

तामेव सहायसंपदं स्वरूपेण दर्शयितुमुपक्रमते—तेन चे[1]दिराजेन गुणिना शौर्यादिगुणैर्युक्तेन बाणोऽसुरः सपक्षः सबलः संधानमेष्यत्यैक्यं प्राप्स्य[2]ति । यतः परभेदतस्त्वद्भेदेनैव संपादितं फलं प्रयोजनं यस्य । बाणस्यापि त्वं शत्रुरेवातो यदासौ जानीते चैद्यस्य तव च भेद उत्पन्न इति तदैव चैद्येनोपकृतमिति मन्वानस्तेन सह संधिं कार्मुकेणेव करिष्यते । यथा योजितफलकः सवाजश्च बाणः शरः सज्जेन धनुषा परभेदतो लक्ष्यभेदार्थं संधानमेति[3] । परभेदन इति पाठान्तरम् ९७

ये चान्ये कालयवनसाल्वरुक्मिद्रुमादयः ।
तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः ॥ ९८ ॥

भूयोऽप्याह—येऽप्यन्ये कालयवनादयो राजानस्तेऽप्येनं चैद्यमनुयायिनः पश्चादागमिष्यन्ति, यतः प्रदोषं प्रकृष्टदोषम् । तेऽपि तमःस्वभावास्तामसाः क्रोधप्रकृतयः, सदृशाश्च[4] सदृशैर्युज्यन्ते । अथच प्रदोषं रात्रिमुखं तमांस्यवश्यमेवानुयान्तीत्युक्तिश्लेषः ॥ ९८ ॥

उपजापः कृतस्तेन तानाकोपवतस्त्वयि ।
आशु दीपयिताल्पोऽपि साग्नीनेधानिवानिलः ॥९९॥

नचैते राजानस्त्वय्यनुकूला येन तं न यास्यन्ति, नच तस्य तानात्मीकर्तुं कश्चित् क्लेश इति दर्शयितुमाह[5]—तेन चैद्येन भवता सह तेषां य उपजापो भेदः कृतः सोऽल्पोऽपि तान् नृपानाशु झगित्येव दीपयिता क्षोभयिष्यति, यतस्त्वयि तानाकोपवतः सक्रोधान् । यथा सानलानीध्मानि तनुरपि वायुर्ज्वलयति ॥ ९९ ॥

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥ १०० ॥

एवंच स्वयं दुर्बलत्वेऽपि ससहायत्वादसावजय्य इति दर्शयितुमाह—क्षोदी

---

१ 'चैद्य' ख. पाठः । २ 'यास्य' ख. ग. पाठः । ३ 'मेष्यति' ख. पाठः । ४ 'कृभूयः शब्दाश्च' क. ख. पाठः । ५ 'यति' ग. पाठः ।

यांस्तनुरपि यो बृहत्सहायः स कार्यान्तं प्रयोजनपारं याति । तथा च नगापगा पर्वतनदी स्वल्पापि महानद्या वितस्तादिकया मिलित्वा समुद्रं प्राप्नोत्येव[1] । अतिशयेन क्षुद्रोऽसमर्थः क्षोदीयान्, ईयसुनि "स्थूलदूरे"त्यादिना गुणो रेफलोपश्च ॥ १०० ॥

**तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः ।**
**अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे ॥ १०१ ॥**

स्यादेतत् दानमानादिभिरावर्जितत्वात् गौरवेण च ममैव सर्वे पार्थिवास्तिष्ठन्ति तस्य तु कतिपय, इति कीदृशी सहायसंपदित्याह—एनं चैद्यं भवताभियुक्तमुत्तब्धममी राजानो गन्तारो गमिष्यन्ति[2] । ये तस्य मित्राणि तव तु न केचित्, ये तवामित्रा रिपवस्तस्य तु न केचित् । ये चोभये द्विरूपास्तस्यापि मित्राणि तव चामित्राः तस्य चा[3]मित्रमित्राणि इत्ययं वोभयार्थः, एभ्योऽन्ये राजानस्ते त्वामनुयास्यन्ति । ये तव मित्राणि तस्य तु न केचित्, ये वा तस्यामित्रास्तव तु न केचित्, ये च तवापि मित्राणि तस्य चामित्राः । अथवा तवा[4]मित्रमित्राणि तस्य च [5]मित्रमित्राणि । तस्मान्न तवाधिका सहायसंपदिति भावः । पूर्वं बाणादीनामुपन्यासः प्राधान्यख्यापनार्थः । गन्तार इति तृनन्तः ॥ १०१ ॥

**मखविघ्नाय सकलमित्थमुत्थाप्य राजकम् ।**
**हन्त जातमजातारेः प्रथमेन त्वयारिणा ॥ १०२ ॥**

एवं सत्यपरोऽनर्थ आयातीति दर्शयितुमाह—एवं पूर्वोक्तेन प्रकारेण यज्ञविघ्नाय नतु कार्यान्तरार्थं समग्रं राजकं नृपसमूहमुत्थाप्य क्षोभयित्वा कष्टमजातारेर्युधिष्ठिरस्याद्येन शत्रुणा भवता संपन्नम् । तस्याजातशत्रुरिति सार्थकं नाम, त्वं यदा राजन्यकक्षोभद्वारेण यज्ञं विघ्नयसि तदा तस्य त्वमेव प्रथमः शत्रुस्तत्कार्यकरणात् । राज्ञां समूहो राजकम् । "गोत्रोक्षोष्ट्रोरभ्रराजे"ति वुञ् । जातमिति भावे क्तः । हन्तेति खेदे ॥ १०२ ॥

---

१ 'याति' ख. पाठः । २ 'न्ति सहायकं करिष्यन्ति' इत्यधिकः ख. पाठः । ३ 'च मि' ख. पाठः । ४ 'वा' ख. पाठः । ५ 'चा' ख. ग. पाठः ।

**संभाव्य त्वामतिभरक्षमस्कन्धं सुबान्धवः ।**
**सहायमध्वरधुरां धर्मराजो विवक्षते ॥ १०३ ॥**

नच तव तत्सांप्रतमिति तद् दर्शयितुमाह—भवन्तं सहायं निरूप्य [1]धर्मराजो यज्ञभारं विवक्षते वोढुमिच्छति, यतस्त्वमतिभरक्षमस्कन्धो महाभरसहांसः । त्वया सहाय[2] उत्साहो वा यस्य । अन्योऽपि विपुलांसः साहायकेन भारं वहति । कीदृशो युधिष्ठिरः, सुबान्धवः शोभना बान्धवास्त्वादृशा यस्य । तदेतेन 'विनाप्यस्मदलंभूष्णु'रिति 'यजतां पाण्डव' इति च प्रतिक्षिप्तम् । अध्वर एव धूर्भारोऽध्वरधुरा । "ऋक्पूरब्धूःपथामनक्षे" । वोढुमिच्छति विवक्षते । वहेः सन् । "हो ढः । षढोः कः से" इति षत्वम्, स्वरितेत्वादात्मनेपदम् ॥ १०३ ॥

**महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि ।**
**सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १०४ ॥**

आस्तां वा धर्मराजोऽरिरपि प्रपन्नोऽनुग्राह्य इति दर्शयन्नाह—विपुलचित्ता रिपूनपि भ्रातृव्यान्[3]प्याश्रिताननुगृह्णन्ति, अङ्गीकुर्वन्ति । तथाच सिन्धवो महानद्यः कर्त्र्यः सपत्नीरपि नगनदीराश्रितत्वादुदधिं प्रापयन्ति, नच नदीपतिरब्धिः । समानः पतिर्यासां ताः सपत्न्यः । "नित्यं सपत्न्यादिष्वि"ति ङीब्नकारौ । आपो धीयन्तेऽस्मिन्नित्यब्धिः । निम्नं गच्छन्तीति निम्नगाः "अन्यत्रापि दृश्यते" इति डः ॥ १०४ ॥

**चिरादपि बलात्कारो बलिनः सिद्धयेऽरिषु ।**
**छन्दानुवृत्तिदुःसाधाः सुहृदो विमनीकृताः ॥ १०५ ॥**

एवम् 'अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकारा हि रिपोर्विवृद्धि' रिति चैद्यगमनमेवानुष्ठेयमिति चेन्नेत्याह—यो बली तस्य कालान्तरेणापि रिपुषु बलात्कारः पौरुषं सिद्धयेऽभिमतनिष्पत्तये, कालान्तरेणाऽपि बली शत्रूनुत्साहेन वशीकरोतीत्यर्थः । ये पुनः सुहृदः पूर्वं विमनीकृता रोषितास्ते चरमं छन्दानुवृत्त्या चित्ताराधनया[4] दुःसाधा दुराराधाः । कोपयित्वा मतानुवर्तनेनाराधयितुं कृच्छ्रेण शक्यन्त इत्यर्थः । तदेतेन 'उत्तिष्ठमानस्तु पर' इत्यादि

---

१ 'पार्थों' क. ग. पाठः । २ 'साहाय्यं' क. ग. पाठः । ३ 'शात्रवान्' ख. पाठः । ४ 'त्तानुवृत्त्या' ख. पाठः ।

परिहृतम् । पौरुषपर्यायोऽयं बलात्कारशब्दः पृषोदरादित्वात्साधुः । चिरादिति पञ्चम्यन्तप्रतिरूपको निपातः । अविमनसो विमनसः कृता विमनीकृताः । "अरुर्मनश्चक्षुश्चेतोरहोरजसां सलोपश्च । अस्य च्वावि"तीत्वम् ॥ १०५ ॥

**मन्यसेऽरिवधः श्रेयान् प्रीतये नाकिनामिति ।**
**पुरोडाशभुजामिष्टमिष्टं कर्तुमलन्तराम् ॥ १०६ ॥**

यच्च पूर्वोक्तं "न दूये" इत्यादि ( ११ शे श्लो० ) तदुत्तरं दित्सुराह—चैद्यनाशस्त्रिदशेभ्यो हिताय, अतश्च पार्थगमना[1]च्छ्रेयानिति मन्यसे इति काकुप्रयोगः, असज्ज्ञानासीत्यर्थः । यतः[2] पुरोडाशभुजां देवानामिष्टं कर्तुं यज्ञं विधातुमलंतरामतिशयेन हितम्[3] । ते च[4] पिष्टपिण्डाशिनः, यागे च तैर्भवितव्यमतो यज्ञकरणमेव तेषामिष्टम् । बुभुक्षितो हि[5] किं शत्रुनाशेन कुरुते इति भावः । इति[6]वाक्यार्थपरामर्शः[7] । द्वितीयाभावः पूर्ववत् । एकोऽत्रेष्टशब्दो यागपर्यायो यजेर्भावसाधनोऽपरोऽभिमतार्थे इषेः कर्मसाधनः । कर्तुमिति "समानकर्तृकेष्वि"त तुमुन् ॥ १०६ ॥

**अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति ।**
**शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना ॥ १०७ ॥**

नचोदधेरुत्पन्नेनामृतेन देवास्तृप्ता इति वक्तुं युज्यत इति प्रतिपाद[8]यन्नाह—यत् मन्त्रजिह्वेष्वग्निषु सन्तः षट्कर्माणो जुह्वति हविर्ददति तन्नामामृतम् । नामशब्दोऽवधारणेऽभ्युपगमे वा । तदेवामृतं तद्वामृतमभ्युपगतमित्यर्थः । ननु समुद्रादुत्पन्नममृतं नत्वन्यदित्याह—मन्दरक्षुब्धेन मन्दराचलमन्थेन क्षुभितस्य विलोडितस्याम्बुधेर्या वर्णना सा शोभैव, काव्यमेतदित्यर्थः । मन्दर एव क्षुब्धो वैशाखः । क्षुभ्यते मथ्यतेऽनेनेति कृत्वा "क्षुब्धस्वान्तध्वान्ते"ति इडभावः । क्षुभित इत्यत्र तु भवत्येवार्थान्तरत्वात् । क्षुब्धीति पाठे क्षोभः क्षुब्धिः ॥ १०७ ॥

---

१ 'मात्' ख. पाठः । २ 'अतः' क. ग. पाठः । ३ 'अभिमतम्' ख. पाठः । ४ 'हि' ख. पाठः । ५ 'हि शत्रुनाशं' ख. पाठः । ६ 'ति शब्दो' ख. पाठः । ७ 'शंकः' क. ग. पाठः । ८ 'यितुमाह' क. ग. पाठः ।

**प्रतीक्ष्यं च प्रतीक्ष्यायै पितृष्वस्रे सुतस्य ते ।**
**सहिष्ये शतमागांसि प्रत्यश्रौषीः किलेति यत् ॥ १०८ ॥**

आस्तां वा नीतिशास्त्रं, कारणान्तरेणापि चैद्यगमनमयुक्तमिति दर्शयितुमाह—तव पुत्रस्यापराधशतं क्षमिष्ये[1] इति किल यत् त्वं पूज्यायै[2] पितृष्वस्रे प्रत्यश्रौषीरङ्गीकृतवान्, तत् त्वया प्रतीक्ष्यं प्रतिपालनीयं पूज्यत्वादिति भावः । च-शब्दो हेत्वन्तरसमुच्चयेऽवधारणे वा । "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ते"ति पितृष्वसुः संप्रदानसंज्ञा । विंशत्यादीनां गुणमात्र गुणिनि च वृत्तिरात्मीयलिङ्गानुगमनं च स्वाभाविकमित्यागांसि शतमिति समानाधिकरण्यं न विरुध्यते । प्रत्यश्रौषीरिति लुङ् । प्रतिश्रवोऽभ्युपगमः । किलेति सत्ये । इतिः क्रियान्तरसंबन्धाय वाक्यार्थपरामर्शकः ॥ १०८ ॥

**तीक्ष्णा नारुन्तुदा बुद्धिः कर्म शान्तं प्रतापवत् ।**
**नोपतापि मनः सोष्म वागेका वाग्मिनः सतः ॥ १०९ ॥**

नचैतद्वचनं नानुपालयिष्ये इति वक्तुं तव युज्यते, इति दर्शयितुमाह—सतः साधोर्वाग्मिनोऽप्येकाद्वितीया वाक्[3], सत्यभाषिणो हि गिर एकत्वम् । विरुद्धं चैतत्, यो हि वाग्मी विशृङ्खलवाक् तस्य कथमेकसंख्याका वाग्भवेत्, अविरोधस्त्वर्थान्तराश्रये[4]णोक्त एव । साधवः सत्यवादिन इत्येतावदत्र प्रकृतोपयोगि । तीक्ष्णेत्यादि[5] प्रसङ्गादौपम्यविधित्सया चोक्तम् । तथा सतो बुद्धिस्तीक्ष्णापि नारुन्तुदा । तीक्ष्णा कुशाग्रीया सूक्ष्मार्थदर्शिनी, अरुन्तुदा मर्मस्पृक् । यच्च तीक्ष्णं शस्त्रादि तद्[6]मर्मविद्धवतीति विरोधः । यथा सतोऽपि बुद्धिस्तीक्ष्णापि नारुन्तुदा एवं वाग्विशृङ्खलाप्येकेत्यौपम्यम्, एवमन्यत्र । तथा सतः कर्म प्रतापवदपि शान्तं, प्रतापवद्विपक्षोद्वेजकं, शान्तं हिंसादिरहितम् । यश्च प्रकृष्टतापयुक्तोऽग्न्यादिः स कथं शान्तस्तापरहितः स्यादिति विरोधः । तथा सतः सोष्म साभिमानमपि मनो नोपतापि अपीडाकरम् । यच्च सोष्म उष्णं सूर्यादि तत्कथं संतापकरं न भवतीति विरोधः । औपम्यं पूर्ववत् ॥ १०९ ॥

---

१ 'सहिष्ये' ख. पाठः । २ 'प्रतिज्ञायै' ख. पाठः । ३ 'सत्यावाक्' ख. पाठः । ४ 'यणेन' क. ग. पाठः । ५ 'दि तु' क. ग. पाठः । ६ 'तत् कथं न मर्म' ख. पाठः ।

**स्वयंकृतप्रसादस्य तस्याह्नो भानुमानिव ।**
**समयावधिमप्राप्य नान्तायालं भवानपि ॥ ११० ॥**

अतश्च सत्यवाक्त्वाद्यावदागःशतं न पूर्णं तावन्नासौ वधार्हः, इति दर्शयितुमाह—तस्य शिशुपालस्य त्वयैव विहितानुग्रहस्य त्वमेवावसानाय नालमसमर्थत्वान्न समर्थः, समयावधिं वचनसीमानमप्राप्य, यावदागःशतं न पूर्णमित्यर्थः । अह्नो रविरिव, यथा दिवसस्य भास्करः[1] संध्यामप्राप्य दिवसस्यान्ताय न प्रभवति । तेनापि तस्य स्वयमेव प्रसादः प्रसन्नत्वं क्रियते । यदि ह्यसौ नोद्गच्छेत् कथं निस्तमो भवेत् । समयो वचनं कालश्च ॥ ११० ॥

**कृत्वा कृत्यविदस्तीर्थैरतः प्रणिधयः पदम् ।**
**विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः ॥ १११ ॥**

एवं चैद्ययात्रां निषिध्यानुपेक्षामपि तस्याह—यतोऽसौ ना[2]वस्कन्द्योऽतोऽस्मात्कारणात् अतोऽनन्तरं वा विद्विषदम्भसो रिपुह्रदस्य प्रणिधयश्चरास्तलं विदांकुर्वन्तु प्रतिष्ठां कुर्वन्तु कीदृश्यः कियत्योऽस्य शक्तय इति, अन्तं गवेषयन्त्वित्यर्थः । कथं तीर्थैश्छद्मभिः श्रमणादिवेशैरष्टादशभिः पदमवस्थानं विधाय । कीदृशाश्चराः, कृत्यविदः कार्यज्ञाः, अथवा कृत्याः क्रुद्धलुब्धभीतावमानितास्तान्विदन्ति ये, केऽस्य क्रुद्धाः, के लुब्धाः, के भीताः, केऽवमानिता इति ये जानत इत्यर्थः । तद्भेदनेन हि सान्त्वादिभिरात्मीयीकर्तुं शक्यन्ते । क्रुद्धान् साम्ना, लुब्धान् दानेन, भीतांस्त्राणेनावमानितान् संमानेन स्वीकुर्यात् । विद्वि[3]षेवागाधत्वादम्भः । तीर्थैः सोपानैः पदं कृत्वा तलमन्त[4]र्जानाति । तथा त्वं चरैर्जानीहीत्यर्थः ॥ १११ ॥

**अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।**
**शब्दविद्येव नाभाति राजनीतिरपस्पशा ॥ ११२ ॥**

प्रणिधयश्चावश्यं राज्ञा[5] विधेया इति तत्प्रशंसामुखेनाह—राजनीतिः पार्थिवस्थितिरेवं गुणयुक्ताप्यपस्पशा चररहिता न शोभते । अपगताः स्पशाश्चरा यस्याः सापस्पशा । कीदृशी अनुत्सूत्रपदन्यासा, सूत्रं नीतिशास्त्रं तदुत्क्रान्त

---

१ 'अर्के' ग. पाठः । २ 'नास्क' ग. पाठः । ३ 'द्विषदे' ख. पाठः । ४ 'न्तं' ग. पाठः । ५ 'ज्ञां' ख. पाठः ।

उत्सूत्रो न उत्सूत्रोऽनुत्सूत्रः । पदेषु स्थानेषु न्यासः पदन्यासः । अनुत्सूत्रः सूत्रानुवर्ती पदन्यासो यस्याः सा तथोक्ता । यद्यस्य पुरुषस्य स्थानादेर्वा[1] स्थानमर्थशास्त्रे निर्दिष्टं तत्त्वत्रैव[2] यस्यां न्यस्तमित्यर्थः । तद्यथा "धार्मिकान् धर्मकार्येषु अर्थकार्येषु पण्डितान् । क्लीवान् स्त्रीषु नियुञ्जीत नीचान्नीचेषु कर्मसु" ॥ इति, किंच—"तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च । दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः । दण्डः स्तब्धेष्वनार्येषु[3] नित्यकालं दुरात्मसु" ॥ इति, तथा सती रम्या वृत्तिर्व्यवहारो यस्या सा सद्वृत्तिः । अथवा सती परिपूर्णा वृत्तिर्जीवनोपायो यस्याः । तथा सन्ति रम्याणि निबन्धनानि शासनपट्टकादीनि यस्याः सा सन्निबन्धना । निबध्यते निश्चलीक्रियते स्थितिरेभिरिति निबन्धनानि । एवंविधाप्यपस्पशा राजनीतिः शब्दविद्येव नाद्रियते । यथा शब्दविद्या व्याकरणविद्या[4] सद्गुणाप्यपस्पशा अनुक्तप्रयोजना न शोभते । अविद्यमानः पस्पशः प्रयोजनग्रन्थो यस्याः सा अपस्पशा । यावत् ह्येतन्नोक्तं "रक्षोहागमलघ्वसंदेहाः प्रयोजन"मिति तावन्न तत्र गौरवं स्यात् । सापि कीदृशी, वर्तमानं तावत् सूत्रं पाणिनिप्रणीतमष्टकं, पदं शेषाहिरचितं भाष्यं, न्यासो जिनेन्द्रकृतः । अनुत्सूत्रौ सूत्रानुगतौ पदन्यासौ यस्याः सती शोभना वृत्तिः काशिकादिर्यस्याः, शोभनानि निबन्धनानि धातुपाठो[5]णादिकाशिक्षापरिभाषाष्टधातुकादीनि यस्याः । केचित्तु पदं वाक्यमाहुः निबन्धनं च भाष्यम् । एवंविधापि शब्दविद्यानुक्तपस्पशा नाभाति । उक्तं च "सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" ॥ इति ॥ ११२ ॥

**अज्ञातदोषैर्दोषज्ञैरुद्दूष्योभयवेतनैः ।**
**भेद्याः शत्रोरभिव्यक्तशासनैः सामवायिकाः ॥ ११३ ॥**

एवं शत्रुशक्तिं बुद्ध्वा ततस्त्वया भेदोऽनेन विधिना प्रयोक्तव्यः, इति वक्तुमाह–समवायं समूहमवयन्ति प्रविशन्तीति सामवायिकाः प्रधानामात्यास्ते जिगीषुणा शत्रोर्भेद्याश्चालनीयाः । कथमिति तदुपदेशमाह–उद्दूष्य दोषमुद्भाव्य दोषाद्यारोपणं तेषां विधायेत्यर्थः । केनोद्दूष्य, उभयवेतनैः, ये तत्त्वतो जिगीषुसंबन्धिनस्त-

---

१ 'सामादेर्वा' ग. पाठः । २ 'त्तत्रैव' ग. पाठः । ३ 'ष्वमात्यश्च' क. 'षुपात्यश्च' ग. पाठः । ४ 'णाख्या' ग. पाठः । ५ 'ठौ' ग. पाठः ।

त्कार्यसिद्धये त्वरेः[1] सेवका इव त उभयवेतना [2]उच्यन्ते । उभयस्माद्वेतनमिति कृत्वा तैर्हेतुभिरज्ञातदोषैरज्ञातोऽविदितो दोष उभयवेतनत्वलक्षणो येषां तैरज्ञातदोषैः । खलीकृतास्तेन वयमतो भवन्तं शरणार्थिन आगता इत्याद्यपदिश्य, तथा तैर्विधेयं यथा तं दोषं तेषामरिर्न लक्षयतीत्यर्थः । तथा दोषज्ञैः परदोषावहितैः, तेऽपि कथं दूषयन्तीत्याह—अभिव्यक्तशासनैरिति, अभिव्यक्ताः केनचित्कारणेन वध्या उच्यन्ते तेषां शासनैः पत्तलादिव्यवस्थापत्रकैः करणैः । एतदुक्तं भवति—जिगीषुरुभयवेतनैः सह संप्रधार्य वध्यहस्ते रिपुसचिवानां पत्तलाः प्रेषयेदिमानि वो जीवनानि, इयं च प्रतिपत्तिरिति, ताश्च तैरङ्गीकृता अनभ्युपगता वा उभयवेतनो रिपोर्दर्शयेदेवंविधास्तवैव ते सामवायिका इति । तत्क्षणं चासौ तान् परित्यजति बन्धयति वा, तं चाभिव्यक्तं घातयति । एवं च विजिगीषोर्भेदः सिद्धो वध्यश्च हतो लोके चापराग इति । अभिव्यक्त[3]शासनैरितीदानीन्तनः पाठः । एतेन चरैः शत्रुशक्तिमवगम्येत्थं भेदो भवता विधेय इति प्रकृतमुक्तं भवति ॥ ११३ ॥

**उपेयिवांसि कर्तारः पुरीमाजातशात्रवीम् ।**
**राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव ॥ ११४ ॥**

युधिष्ठिरपुरगमने च चरविधाने च गुणान्तरमाह—तव चरैः प्रणिधिभी राजन्यसमूहा एककृत्या कर्तारः करिष्यन्ते । कानि राजन्यकानि, आजातशात्रवीं यौधिष्ठिरीं नगरीं उपेयिवांस्यागतानि, तत्र यज्ञे यानि मिलितानीत्यर्थः । चराः कथमेकार्थानि कुर्वन्तीति विशेषणद्वारेण कारणमाह—उपायज्ञैर्नयविद्भिः[4] सामादिप्रयोगकुशलैः, क्रुद्धोऽयं साम्ना वश्यो लुब्धोऽयं तु दानेनेत्यादि ये जानते इत्यर्थः । एवं च ते तत्रैव भवतो मिलिष्यन्तीति सहायसंपद् दर्शितेति । उपेयिवांसीति क्वसन्तो, "जसः शिः" । कर्तार इति कर्मणि लुट्र चिण्वद्भावो विकल्पितः । अजातशत्रोरियमाजातशात्रवी । "अनुशतिकादीनां च"त्युभयपदवृद्धिः । राजन्याः[5] "राजश्वशुराद्यत्" ततः समूहे वुञ् ॥ ११४ ॥

---

१ 'रेर' ख. पाठः । २ 'इत्यु' ख. पाठः । ३ 'त्यक्त' इति पुरातनः ग. पाठः । ४ 'वेदिभिः' ग. पाठः । ५ 'न्याः' क्षत्रियाः' क. ग. पाठः ।

**सविशेषं सुते पाण्डोर्भक्तिं भवति तन्वति ।**
**वैरायितारस्तरलाः स्वयं मत्सरिणः परे ॥ ११५ ॥**

एवंच यदस्माभिरनुष्ठेयं तच्छत्रव[1]एवाचरिष्यन्तीति दर्शयितुमाह—पाण्डोः सुते युधिष्ठिरे त्वयि भक्तिं पूजां सविशेषं सातिशयं तन्वति विदधति, [2]परे शत्रवः स्वयमेव वैरायितारो वैरं करिष्यन्ते, यतो मत्सरिणो द्वेष्टारस्तरलाश्चपलाः । अन्यथा यदि युधिष्ठिरस्त्वामुप[3]तिष्ठते तत्तेषां किं नष्टं यत्कलहायन्ते । सविशेषग्रहणं तेषामपि मान्यत्वं गमयति, सविशेषत्वाच्चाक्षमाः । सुते इति सत्सप्तमी तद्विशेषणं तन्वतीति । भवतीति, विषयसप्तमी । वैरं करोतीति वैरायते "शब्दवैरकलहे"ति क्यङ्, ततो लुडात्मनेपदतासिटः ॥ ११५ ॥

**य इहात्मविदो विपक्षमध्ये**
**सहसंवृद्धियुजोऽपि भूभुजः स्युः ।**
**बलिपुष्टकुलादिवान्यपुष्टैः**
**पृथगस्मादचिरेण भाविता तैः ॥ ११६ ॥**

एवं च तवैव स्वार्थसिद्धिरित्याह—इहात्रैवंविधे वैरे सति ये शत्रुमध्ये आत्मविदः प्राज्ञा भूभुजः पार्थिवास्ते यदि सहसंवृद्धियुजः सह संवृद्धा अपि भवेयुस्तत्तैर्नृपैरस्माच्चैद्यादचिरेणाचिरादेव पृथग्भाविता भविष्यते, आत्मवित्त्वात् ते तं हास्यन्तीति भावः । यथा बलिपुष्टकुलात् काकपूगादन्यपुष्टैः कोकिलैः सहवृद्धैरपि आत्मवित्त्वात् स्वजातिपरिज्ञानात् पृथग्भूयते । शिशून् खलु पिकान् ध्वाङ्क्षा[4] धारयन्तीति विधिनियोगः अतएव ते परपुष्टाः । सहसंवृद्धिः "सुप् सुपे"ति समासः । तां युञ्जन्तीति सहसंवृद्धियुजः । क्विप् जस् । भावितेति भावे भवतेर्लुट्, चिण्वद्भावः । तैरिति कर्तरि तृतीया । औपच्छन्दसिकं वृत्तम् । "यावन्ते शेषं पूर्वसाम्यादौपच्छन्दसिकं वदन्ति सन्तः" इति लक्षणात् ॥ ११६ ॥

---

१ 'इ' ख. पाठः । २ 'सति परे' क. ग. पाठः । ३ 'मव' क. ख. पाठः । ४ 'काका' ख. पाठः ।

सहजचापलदोषसमुद्धत-
श्चलितदुर्बलपक्षपरिग्रहः ।
तव दुरासदवीर्यविभावसौ
शलभतां लभतामसुहृद्गणः ॥ ११७ ॥

एवं च सति यत्फलमुत्पद्यते तदाशीर्द्वारेण दर्शयितुमाह--तव संबन्धी यो दुरासदो दुरभिभवो वीर्यविभावसुः पौरुषदहनः, तत्र शत्रुसङ्घः शलभतां नाशं तावत्प्राप्नोतु दह्यतामित्यर्थः । शलभा ह्यग्नौ पतन्ति । कीदृशः, सहजः स्वाभाविको यश्चापलाख्यो दोषस्तेन समुद्धतश्चोदितः प्रेरितोऽवलिप्तो वा, तथा चलितो दुर्बलत्वात् पक्षपरिग्रहः सहायसंश्रयो यस्य स तथोक्तः । पक्षस्य परिग्रह इति कर्तृषष्ठीसमासः । अशक्तत्वात्सहायात् सहायकत्वाद्यस्य चलित इत्यर्थः । योऽपि शलभपूगोऽग्नौ पतति स निजचापलदोषेण प्रेरितो भवति । अग्निपाताच्च दुर्बलानां पक्षाणां परिग्रहः संश्लेषस्तस्य चलो भवति । चपलस्य भावः कर्म वा चापलम्, युवादित्वादण् । दुःखेनासाद्यतेऽभिभूयत इति दुरासदः । लभतामिति "आशिषि लोट्" । द्रुतविलम्बितमाह नभौ भरौ ॥ ११७ ॥

इति विशकलितार्थामौद्धवीं वाचमेना-
मनुगतनयमार्गामर्गलां दुर्नयस्य ।
जनितमुदमुदस्थादुच्चकैरुच्छ्रितोरः-
स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः ॥ ११८ ॥

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये मन्त्रवर्णनं
नाम द्वितीयः सर्गः ॥ २ ॥

स भगवानेनामुद्धवोक्तां पूर्वोक्तां गिरं शुश्रुवान् शृण्वन्नङ्गीकुर्वन् उदस्थादुत्थितः । अनुष्ठानमत्र शृणोत्यर्थः । तस्याश्च विशेषणद्वारेण कारणमाह—कीदृशीं वाचमिति पूर्वोक्तेन प्रकारेण विशकलितो निर्लोठितः पर्यालोचितोऽर्थो यस्यास्तां, तथानुगतोऽनुसृतो नयमार्गो नीतिपथो यया तां नीतिशास्त्रानुसारिणीमित्यर्थः । अतश्च दुर्नयस्यानयचेष्टितस्यार्गलामिवार्गलां निवारिणीम् । यथा कस्यचिदर्गला प्रवेशं रोधयति, एवं या दुर्नयस्येत्यर्थः । अतएव जनितमुदं

हर्षजननीम्, तथोच्छ्रितमुन्नतं यद्वक्षस्तटं तत्र नियतं निषण्णा या लक्ष्मीस्तया श्रुतामिति मन्त्रगुप्तिरुक्ता, सदा सन्निहितत्वात्परं लक्ष्म्यैव श्रुतां न त्वन्येनेत्यर्थः। उच्चकैरुच्चां महार्थाम्। भगवान् वा उच्चकैः सर्वोन्नतोऽपरिमेयः। नयमार्गामिति— नयशब्दे "एरजि"त्यजेव भवति, नतु "श्रिणीभुव" इति घञ् "कृत्यल्युटोर्बहुल"मिति वचनात्। दुर्नयस्येत्युपसर्गप्रतिरूपको निपातो दुःशब्दस्तेन णत्वाभावः। उदस्थादिति लुङ् ऊर्ध्वक्रियत्वात्तङभावः। "गास्थे"ति सिचो लुक्। विशेषरूपस्योच्चैस्त्वस्याज्ञानादुच्चकैरिति "अज्ञाते" इत्यकच्। शुश्रुवानिति "भाषायां सदवसश्रुवः" इति लिटः क्वसुः। मालिनी वृत्तम्। "वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः" इति। सर्वगुणयुक्तत्वादुद्धवगुरुनिरूपितं हरिरूरीकृत्य युधिष्ठिरपुरगमनायोदचलदिति श्लोकार्थः ॥ ११८ ॥ इति भद्रम् ॥

इति श्रीमहामहोपाध्यायवर्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां मन्त्रवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

---

१ 'र्वैचोन्नतिप' ख. पाठः। २ 'उदोऽनूर्ध्वकर्मणीत्यूर्ध्वं' ख. पाठः। ३ 'उद्धवपुर' क. पाठः।

अथ

# शिशुपालवधकाव्ये ।



## तृतीयः सर्गः ।

कौबीरदिग्भागमपास्य मार्ग-
मागस्त्यमुष्णांशुरिवावतीर्णः ।
अपेतयुद्धाभिनिवेशसौम्यो
हरिर्हरिप्रस्थमथ प्रतस्थे ॥ १ ॥

अथ मन्त्रसमाप्तेरनन्तरं हरिर्विष्णुरिन्द्रप्रस्थं युधिष्ठिरपुरं प्रतस्थे गन्तुमा[1]रेभे । कीदृशः, अपेतो निवृत्तो युद्धाभिनिवेशो रणरसिकत्वं तेन सौम्यो निराकुलः । पूर्वं ह्युक्तम् "आसीत् कार्यद्वयाकुलः" इति । क इव सौम्य इत्याह—उष्णांशुः सूर्यः कौबीरदिग्भागमपास्योत्तराशां त्यक्त्वागस्त्यसेवितं मार्गं दक्षिणाशां प्राप्य यथा सौम्योऽतीक्ष्णत्वाद् दृश्यो भवति । युद्धाभिनिवेशस्य कौबेरो दिग्भाग उपमानं हरिप्रस्थस्य त्वागस्त्यो हरेः सूर्यः । सोम इव सौम्यः "शाखादिभ्यो यत्" । प्रतस्थे इति "समवप्रविभ्यः स्थः" । सर्गेऽत्र वृत्तमुपजातयः ॥ १ ॥

जगत्पवित्रैरपि तं न पादैः
स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः ।
यतो बृहत्पार्वणचन्द्रचारु
तस्यातपत्रं बिभरांबभूवे ॥ २ ॥

इदानीं प्रयाणमेव वर्ण्यते । अत्रातपनिवारणार्थं भगवता छत्रं धृतमिति कश्चिन्मा ज्ञासीदिति कविर्भक्त्यतिशयप्रदर्शनायाह—यतस्तं देवं रविः पादैः स्प्रष्टुमाश्लेष्टुं नायुज्यत न युक्तो योग्यो नाभूत् । तेन तस्य [2]छत्रं बिभरांबभूवे

---

१ 'प्रा' क. ग. पाठः । २ 'छौप्तुमा' क. ग. पाठः ।

धृतं न त्वातपासहत्वेन । यत इति पूर्वार्धेन योज्यं, यत्तदोर्नित्यमभिसंबन्धाच्च तेनेत्यध्याहार्यम् । यद्वा तस्यातपत्रं भृतं यतोऽर्कः पादैः स्प्रष्टुं न युक्त इति योजनार्थे न किंचिदध्याहार्यम् । यथा त्वन्ये व्याचक्षते—यमर्कः पादैः स्प्रष्टुं नायुज्यत योगं न ययौ यतस्तस्य च्छत्रं [1]धृतमिति, तथा न किंचिदुक्तं भवेत् । यस्य हि च्छत्रं ध्रियते[2] तस्यावश्यं रविकिरणयोगो न भवति । एतस्य चार्थस्यास्मद्व्याख्या [3]परिपोषकत्वेन व्याख्येया । कदाचित् सूर्यकिरणा अपावनाः स्युर्नेत्याह—जगत्प[4]वित्रैरिति । कथं तर्हि न योग्य इत्याह—जगत्पूज्यमिति । यो हि गुणैः सर्ववन्द्यस्तं कथमन्यः पवित्रमपि पादस्पर्शं कर्तुं शक्त[5] इति कविरतिभक्त[6]त्वाच्छब्ददुष्टं पादस्पर्शनं न सेहे । कीदृशमातपत्रं, बृहदखण्डमण्डलो यः पार्वणेन्दुः प्रतिपच्चन्द्रस्तद्वच्चारु मनोहारि श्वैत्यशौक्ल्यादियोगात् । बृहदिति वा पृथक् पदम् । पर्वशब्देनात्र पौर्णमासी लक्ष्यते तदैव शशिनश्चारुत्वयोगात् । अयुज्यतेति कर्तरि लङ् श्यन् । पर्वणि दृश्यते पार्वणः । "शेषे" इति लक्षणवाक्येनाण्, भावार्थे तु कालात् ठञ् स्यात्, नच संधिवेलादेषु पार्वणः पाठः[7] । आतपात् त्रायते इत्यातपत्रम् । बिभरांबभूवे इति कर्मणि लिट् "भीह्रीभृहुवां श्लुवच्चे"त्याम् । कर्तर्येव "भवतेर" इति सर्वमतम् । बभूवेति मूलपाठो ज्ञातव्यः । एवमन्यत्र ॥ २ ॥

मृणालसूत्रामलमन्तरेण
स्थितश्चलच्चामरयोर्द्वयं सः ।
भेजेऽभितः पातुकसिद्धसिन्धो-
रभूतपूर्वां श्रियमम्बुराशेः ॥ ३ ॥

स देवो बिसतन्तुनिभशुभ्रस्य प्रकीर्णकद्वयस्य मध्ये स्थितः सन् पार्श्वद्वयप्रविशत्त्रिपथगस्योदधेः शोभामाप । ननु प्रवाहद्वयेन न कदाचिदपि गङ्गा समुद्रं पतति तत्कथमसदुपमानं दीयते इत्याह—अभूतपूर्वामिति । पूर्वं भूता भूतपूर्वा न भूतपूर्वाभूतपूर्वा तामुत्पाद्यामित्यर्थः । यद्युभयतः पातुका गङ्गाब्धेर्भवेत् ततस्तेन चामरद्वय[8]मध्यस्थः कृष्ण उपमीयते इति वक्यार्थः । द्वयमिति

---

१ 'भृतं' ग. पाठः २ 'ध्रि' ग. पाठः ३ 'हरिमहिमपोष' ख. पाठः ४ 'तां पवित्रैः पावनैः' ख. पाठः ५ 'युक्तः' ख. पाठः । ६ 'रक्त' ग. पाठः । ७ 'ण्यः' ख. पाठः । ८ 'यस्य' ग.

"अन्तरान्तरेण युक्ते" इति द्वितीया । अन्तरायुक्तयोः पृथग्विभक्तिनिर्दिष्टयोर्द्वितीयेति न सर्वमतं सूत्रे वाक्येना[1]निर्देशात् । अथ चामरयोर्द्वयमिति कथं भेदनिर्देशः । तदस्येत्यनुवृत्त्या हि तयान्तस्यावयविनः सामानाधिकरण्यं न्याय्यम्, यथा द्वयी गतिः, चतुष्टयी शब्दानां प्रवृत्तिरिति । अत्रोच्यते–अत्रापि समुदाय एव धर्मी वाच्यः । द्वाववयवौ यत्र[2]तद् द्वयं द्व्यात्मक इति समुदाय इत्यर्थः । कयोश्चासौ समुदाय इ[3]त्यपेक्षायां बुद्धिकृतं भेदमाश्रित्य चामरयोरिति विशेष निर्देशः । यदा च साक्षादवयवी निर्दिश्यते तदा तयान्तस्य ध[4]र्मिलिङ्गत्वम्, यथा द्वयी गतिरुभये देवमनुष्या इति । यदा धर्ममात्रस्यैव तयान्तस्य निर्देशादवयविसामान्यं प्रातीतिकं तदा स्त्री लिङ्गत्वमेव, यथा भुवनानां त्रयी वेदानां चतुष्टयीति । साधु पततीति पातुकः "लषपते"त्युकञ् । सिद्धसिन्धुर्देवनदी गङ्गा ॥ ३ ॥

चित्राभिरस्योपरि मौलिभाजां
भाभिर्मणीनामनणीयसीभिः ।
अनेकधातुच्छुरिताश्मराशे-
र्गोवर्धनस्याकृतिरन्वकारि ॥ ४ ॥

अस्य हरेर्मौलिभाजां मुकुटबद्धानां रत्नानां नानारूपाभिर्भाभिर्दीप्तिभिरनणीयसीभिः सान्द्राभिरुपरिलग्नाभिर्गोवर्द्धनस्याचलस्याकृतिरन्वकारि, रूपमनुकृतम् । अनेकैर्बहुजातीयैर्धातुभिर्मनःशिलादिभिश्छुरिताः संभिन्ना अश्मराशयः शिलासंघा यस्य गोवर्द्धनस्य । कृष्णस्यासावुपमानम्, भासां तु धातवः । यद्येवं भासां धातव एवानुकर्तुं न्याय्या नतु गोवर्द्धनः सोऽपि कृष्णेनैवानुक्रियते अतश्चैवं वक्तुं न्याय्यं, मौलिमणिमरीचिभिरस्योपरि लग्नाभिश्छुरितगोवर्द्धननानाधातवोऽन्वकारिषत । यदि वासौ मौलिमणिमरीचि[6]विभूषितेन कृष्णेनानेकधातुच्छुरिताश्मराशेर्गोवर्द्धनस्याकृतिरन्वकारीति । सत्यमेतत् किंतु विचित्राः कविसूक्तयः, वस्तु सर्वथा[7] ग्राह्यं सर्वासां चासामुक्तीनां वस्तु न भिद्यते । अति-

---

१ 'न चा' ख. पाठः २ 'यस्य' ख. पाठः ३ 'त्याकाङ्क्षायां' ग. पाठः । ४ 'र्मित्वं' ग. पाठः ५ 'स्त्रीति' लि' ख. पाठः ६ 'चिभिः' ख. पाठः । ७ 'दा' क. पाठः ।

शयविशिष्टादणुशब्दादीयसुनि टिलोपे नञ्समासे च कृते अनणीयसीति रूपम्। अन्वकारीति कर्मणि लुङ् ॥ ४ ॥

तस्योल्लसत्काञ्चनकुण्डलाग्र-
प्रत्युप्तगारुत्मतरत्नभासा ।
अवाप बाल्योचितनीलकण्ठ-
पिञ्छावचूडाकलनामिवोरः ॥ ५ ॥

शौरेर्वक्ष इन्द्रनीलरुचा मयूरपक्षसंपर्कमिव लेभे । उल्लसन्ती देदीप्यमाने ये कांचनकुण्डले सुवर्णकुण्डले तयोर्यदग्रं प्रान्तं तत्र प्रत्युप्ते स्यूते ये गारुत्मतरत्ने मरकतमणी तयोर्भासा दीप्त्या बाल्ये शैशवे उचितं योग्यं यन्नीलकण्ठपिञ्छं चन्द्रकिचन्द्रकं तदेवावचूलं चिह्नं तेना[1]कलना योजना तामिव प्राप्तवत्। अनेकदीप्तियोगाद् बुध्यते मयूरपत्रं धृतमनेनेत्यर्थः । गारुत्मतं मरकतम् । बालशब्दो ब्राह्मणादिः ॥ ५ ॥

तमङ्गदे मन्दरकूटकोटि-
व्याघट्टनोत्तेजनया मणीनाम् ।
बंहीयसा दीप्तिवितानकेन
चकासयामासतुरुल्लसन्ती ॥ ६ ॥

तं शौरिमङ्गदे केयूरे चकासयामासतुः अदिदीपताम् । केन मणीनां बंहीयसा घनेन दीप्तिवितानकेन रुक्पुञ्जेन । बंहीयस्त्वस्य कारणमाह—मन्दराचलशृङ्गाग्रेण या व्याघट्टनाहननं तेन या उत्तेजना नैर्मल्यं तेन हेतुना बहुलतरेण । अमृतमथनकाले हि मन्दरसंदानशृङ्गाग्रसंपेषवशादुज्ज्वले ते संपन्ने । उत्तेजना तेजःप्रादुर्भावः । उल्लसन्ती कचकचायमाने अङ्गदे । "चकासृ दीप्तौ"विति ण्यन्तादाम् । अतिशयेन बहुर्बंहीयान् । "प्रियस्थिरे"ति बंहादेशः ॥ ६ ॥

---

१ 'न' ख. पाठः ।

निसर्गरक्तैर्वलयावबद्ध-
ताम्राश्मरश्मिच्छुरितैर्नखाग्रैः ।
व्यद्योतताद्यापि सुरारिवक्षो-
विक्षोभजासृक्स्नपितैरिवासौ ॥ ७ ॥

असौ देवः स्वभावलोहितैः कटकप्रोतपद्मरागकिरणभूषितैश्च करजप्रान्तैर्बभौ । उत्प्रेक्ष्यते—इदानीमपि हिरण्यकशिपुरिपूरोदारणोत्पन्नरुधिरसंसिक्तैरिव । अपिर्विस्मये । व्यद्योततेति लङ् ॥ ७ ॥

उभौ यदि व्योम्नि पृथक् प्रवाहा-
वाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥ ८ ॥

पृथगमिश्रौ लक्ष्यरूपौ खे गङ्गाप्रवाहौ यदि वहेतां तत्तेनेदृशेन नभसा कृष्णस्य तमालतरुश्यामं बद्धमुक्तासूत्रमुर उपमीयेत सदृशीक्रियेतेति । तुष्टूषया उत्पाद्या नामोपमेयम् । कृष्णवपुषः खमुपमानं, मुक्तावल्या गङ्गाप्रवाहः ॥ ८ ॥

तेनाम्भसां सारमयः पयोधे-
र्दध्रे मणिर्दीधितिदीपिताशः ।
अन्तर्वसन् बिम्बगतस्तदङ्गे
साक्षादिवालक्ष्यत[1] यत्र लोकः ॥ ९ ॥

तेन हरिणा वक्षसि मणिर्दध्रे [2]धृतम् । को मणिः, उदधेरम्भसां सारमयः प्रधानभूतः[3] कौस्तुभ इत्यर्थः । शुद्धे सत्त्वे मयडत्र वाचकः स च दुर्लभः । कीदृशः, दीधितिदीपिताशः किरणनिकरनिर्भरभासितदिक्कः । तथा यत्र

---

१ 'अदृश्यत' क. पाठः । २ 'रत्नं धृ' गं. पाठः । ३ 'प्राणभूतः' ख. पाठः ।

बाह्यो लोको बिम्बगतः प्रतिबिम्बितः सन्नदृश्यत दृष्टः । उत्प्रेक्ष्यते—तदङ्गे देवशरीरे योऽन्तर्वसन्नन्तरेव वसति लोकः स एव तत्र वसन् साक्षादेव दृश्यते स्म । बिम्बं गतो बिम्बगतो मणिदेहं प्रविष्ट इत्यर्थः । दध्रे इति कर्मणि लिट्, एवमदृश्यतेति च ॥ ९ ॥

मुक्तामयं सारसनावलम्बि
भाति स्म दामाप्रपदीनमस्य ।
अङ्गुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चै-
स्त्रिस्रोतसः सन्ततधारमम्भः ॥ १० ॥

अस्याच्युतस्य मुक्तामयं दाम मुक्ताकलापो भाति स्म व्यद्युतत् । मुक्ताः प्रकृताः प्राचुर्येण प्रस्तुता यत्र तन्मुक्तामयम् "प्रकृतवचने मयट्" । कीदृग् दाम, सारसनं कटिसूत्रं तदवलम्बते भजते इति सारसनावलम्बि, डोरेण ग्रथितमित्यर्थः । आप्रपदं प्राप्नोति । उत्प्रेक्ष्यते-त्रिस्रोतसो गङ्गाया अङ्गुष्ठादूर्ध्वं निष्ठ्यूतं प्रसृतमविच्छिन्नप्रवाहमम्भ इव । उत्प्रेक्षैषा नोपमा, तेनोर्ध्वगमनमम्भसो न संभवतीति न चोद्यम् । त्रीणि स्रोतांसि प्रवाहा यस्याः सा त्रिस्रोताः त्रिपथगा विष्णुपदी । उच्चैर्दाम पयो वा भगवतो वा ॥ १० ॥

स इन्द्रनीलस्थलनीलमूर्ती
रराज कर्पूरपिशङ्गवासाः ।
विसृत्वरैरम्बुरुहां रजोभि-
र्यमस्वसुश्चित्र इवोद्भारः ॥ ११ ॥

स कृष्णो यमुनोदकपुञ्ज इवाभात् इत्युपमा । कस्मादित्याह—इन्द्रनीलस्थलमसितमणिकुट्टिमं तद्वन्नीला श्यामला मूर्तिर्यस्येति साधारणं विशेषणम् । हरिः कीदृशः, कर्पूरं काञ्चनं गन्धद्रव्यविशेषो वा तदिव पिशङ्गे पीते वाससी यस्य, स तथोक्तः । उदभारस्तु विसृत्वरैः प्रसारिभिः पद्मकिञ्जल्कैः पिशङ्गः । यमस्वसा कालिन्दी । मूर्ती रराजेति "रो री"ति "ढ्रलोपे पूर्वस्य दीर्घोऽणः" । उदकस्य भार उदभारः "मन्थौदनसक्तुबिन्दुवज्रहारभारे"ति उदादेशः ॥ ११ ॥

**प्रसाधितस्याथ मुरद्विषोऽभू-**
**दन्यैव लक्ष्मीरिति युक्तमेतत् ।**
**वपुष्यशेषेऽखिललोककान्ता**
**सानन्यकाम्या ह्युरसीतरा तु[1] ॥ १२ ॥**

मधुसूदनस्येत्थं प्रसाधितस्यालंकृतस्य सतोऽनन्तरमन्यैव लक्ष्मीरपूर्वैव शोभावर्णनीयैव कान्तिर्यदभूत्, एतद्युक्तं उचितमेव भूषितत्वादिति भावः । अथवान्यैव लक्ष्मीर्द्वितीया श्रीरिति शब्दच्छलेनार्थान्तरप्रतीतिः । तदेवान्यत्वं युक्तं चाह—वपुषीत्यादिना । सान्या लक्ष्मीः शोभात्मिका यस्मादशेषे वपुष्यखिलदेहव्यापिनी समग्राणां च लोकानामिष्टाऽभवत् । भगवच्छोभा हि सर्वस्य हृदयहारिणी, सर्व एव देहभूषां कामयते । इतरा पुनर्लक्ष्मीर्देवस्योरसि स्थिता नाखिले वपुषि अन्यैश्चाकाम्या, नहि भगवद्दारान् कश्चित् कामयते । तस्माद्युक्तमेवेतदालीढम् । कवाटेत्यादि श्लोकान्तरं विद्यते, एतदेतेनैव व्याख्यातप्रायम् । ललना कान्ता ॥ १२ ॥

**दैत्याधिपप्राणमुषां नखाना-**
**मुपेयुषां भूषणतां क्षतेन ।**
**प्रकाशकार्कश्यगुणौ दधानाः**
**स्तनौ तरुण्यः परिवव्रुरेनम् ॥ १३ ॥**

एनं[2] माधवं युवतयो महिष्यः परिवव्रुरवेष्टयन् स्तनौ धारयन्त्यः, प्रकाशः प्रकटो लोकविज्ञातः काठिन्यातिशयो ययोः । किमनुभवेन प्रकाशेनेत्याह—भूषणत्वं प्राप्तैर्नखगणैः । किञ्चित् कोमलाः करजाः स्युर्नेत्याह—हिरण्यकशिपुविदारणात्, एवं यैर्दैत्येन्द्रो विदारितस्तेषां नखानां क्षतं यतः शोभाकारि तौ कठिनावित्यवश्यमेव सुज्ञातम्[3] । स्तनाविति प्रत्येकसंबन्धविवक्षया द्विवचनम् ॥ १३ ॥

---

१ अतोऽनन्तरं "कवाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य । आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥" इत्यधिकः ग. पाठः । २ 'वं' ख. पाठः । ३ 'नं' ख. पाठः ।

**आकर्षतेवोर्ध्वमपि कशीया-**
**नत्युन्नतत्वात् कुचमण्डलेन ।**
**ननाम मध्योऽतिगुरुत्वभाजा**
**नितान्तमाक्रान्त इवाङ्गनानाम् ॥ १४ ॥**

याभिरसौ परिवृतस्तासामङ्गनानां कशीयान् कृशतरो मध्य उदरं ननाम, कृशत्वान्नम्रोऽभवदित्यर्थः । अत्र हि निमित्तान्तरारोपरूपेयमुत्प्रेक्षा । गरीयसा कुचमण्डलेन स्तनाभोगेनात्यन्तमाक्रान्तो विवशीकृतः सन्निव ननाम । यः किलातिकृशः स भाराक्रान्तोऽवश्यमेव नमति । कीदृशा कुचमण्डलेन, अत्युन्नतत्वादत्युच्चमुखत्वादूर्ध्वमाकर्षतेवोत्प्लावयतेव मध्यमित्युत्प्रेक्षान्तरम् । अपिशब्दो विरोधप्रतिपादनार्थः । ऊर्ध्वमप्याकृष्ट इव तत्रापि मध्यो ननाम, यो ह्युत्प्लाव्यते तेवोन्नतेन भवितव्यम् । अन्योऽपि कशीयान् दरिद्रः केनचिदत्युन्नतत्वात् महाप्रभावत्वादूर्ध्वमाकृष्टो महास्पदं प्रापितो नमतीत्युक्तिश्लेषः[1] । कशीयानिति "र ऋतो हलादेर्लघोः" । अतिकशीयानितीदानीन्तनानां पाठः ॥ १४ ॥

**यां यां प्रियः प्रैक्षत कातराक्षीं**
**सा सा ह्रिया नम्रमुखी बभूव ।**
**निःशङ्कमन्याः सममाहितेर्ष्यै-**
**स्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ १५ ॥**

प्रियः कृष्णस्तासामङ्गनानां मध्यात् यां यां कातराक्षीं सारङ्गलोचनामद्राक्षीत् सा सा लज्जयाधोमुखी जाता । स्वभाव एवायं कान्तानां य[2]त्कान्तावलोकनेनावनतवदनत्वम् । अन्यः पुनर्या भगवता नेक्षितास्तास्तत्रावसरेऽमुं हरिं युगपदेवाहितेर्ष्यैः समत्सरैः कटाक्षैरपाङ्गविलोकितैर्निर्भयं जघ्नुरताडयन्, एताः किलेक्षते नास्मानिति । कातरक्षीत्यन्वर्थमङ्गना नाम । प्रैक्षतेति लुङ् ॥ १५ ॥

---

१ 'वशात्' ग. पाठः । २ 'यद्वराङ्गनानां' ख. पाठः ।

तस्यातसीसूनसमानभासो
भ्राम्यन्मयूखावलिमण्डलेन ।
चक्रेण रेजे यमुनाजलौघः
स्फुरन्महावर्त इवैकबाहुः ॥ १६ ॥

तस्य हरेरतसीपुष्पसंकाशस्य स्फुरत्किरणचक्रवालेन चक्रेण सुदर्शनेनैको भुजो[1] बभौ । एकश्चासौ बाहुश्चेति "पूर्वकालैक"इति समासः । अतश्च भ्राम्यत्कल्लोलकालिन्दीनीरनिकरनिभः । हरेर्यमुनोपमानं, बाह्वोर्जलौघः, चक्रस्यावर्तः । यथा स्फुरद्भिर्महावर्तैर्यमुना चकास्ति एवं तस्य सुदर्शनेन बाहुर्बभावित्यर्थः । अत्रावलिशब्दमलंकारविदः प्रायेणाधिकं मन्यन्ते, मण्डलशब्देनैव तदर्थस्योक्तत्वात् ॥ १६ ॥

विरोधिनां विग्रहभेददक्षा
मूर्तेव शक्तिः क्वचिदस्खलन्ती ।
नित्यं हरेः सन्निहिता निकामं
कौमोदकी मोदयति स्म चेतः ॥ १७ ॥

हरेः कौमोदकी गदा चेतोऽत्यर्थं तोषयति स्म अतूतुषत् अपिप्रीणत्[2] । कीदृशी, विरोधिनां विग्रहभेददक्षा वैरिणां शरीरमथनसमर्था, न क्वचित्तु स्खलन्ती अप्रतिहता सदैव च हरेः करस्था, अतश्च ज्ञायते मूर्तेव शक्तिः सशरीरं भगवतः सामर्थ्यमिव । सा रिपुविरोधविनाशचतुरा अस्खलिता च सदा संनिहिता च । विग्रहः शरीरं वैरं च । अस्खलन्तीति असमर्थसमासो नञः क्वचिच्छब्देन संबन्धात् यथा "असूर्यपश्याः राजदाराः" इति । क्वचिदस्खलन्ती न क्वचिदपि स्खलन्तीत्यर्थः । अन्यथा तु क्वचिदस्खलन्ती न सर्वत्रेत्युक्तं स्यात् । अथ चेदपिशब्दोऽध्याहारः, क्वचिदप्यस्खलन्तीति ततः सर्वं सु[3]स्थम् । कुमोदको विष्णुस्तस्येयं कौमोदकी ॥ १७ ॥

न केवलं यः स्वतया मुरारे-
रनन्यसाधारणतां दधानः ।

१ 'बाहुरभात्' ग. पाठः । २ 'अपिप्रणत्' ग. पाठः । ३ 'स्व' क. ख. पाठः ।

**अत्यर्थमुद्वेजयिता परेषां**
**नाम्नापि तस्यैव स नन्दकोऽभूत् ॥ १८ ॥**

स नन्दकः खड्गोऽनन्यसाधारणतां भगवदेक[1]विषयतां दधानः सन् न केवलं स्वतयात्मीयत्वेन मुरारेः संबन्धी यावन्नाम्नापि तस्यैवाभूत्, तमेवानन्द[2]यदित्यर्थः । यतः परेषामन्येषां शत्रूणामत्यर्थमुद्वेजयिता खेदजनकः, परनन्दकशब्दयोरुभयार्थत्वादेषात्रोक्तिः । नन्दकस्य हि उभयरूपताऽस्ति विष्णोः संबन्धित्वं नन्दकत्वं च, यतो नन्दयतीति नन्दकः इति व्युत्पत्तिः । तत्र कश्चिद्बुध्यते केवलं मुरारेरयम्, केवलमात्मीयत्वेन संबन्धी, नन्दकस्तु सर्वस्यैव, अतः कविराह—न केवलमित्यादि । हरेर्नन्दक इत्यत्र न केवलं शेषलक्षणैव षष्ठी भगवदपेक्षया यावत् कृत्षष्ठ्यपीति तात्पर्यार्थः। दधान इति—शानजन्तः । ये तु दधारेति पठन्ति तैस्तङभावे शुक्तिर्वक्तव्या, धृङ आत्मनेपदित्वात् दध्रे इति भवितव्यम् । तुदादावपि 'धि धारणे' इतीकारान्तस्य पाठः, धियतीति रूपं यथा स्यात् । यथा धियतीति क्षियतीति ॥ १८ ॥

**न नीतमन्येन नतिं कदाचित्**
**कर्णान्तिकप्राप्तगुणं क्रियासु ।**
**विधेयमस्याभवदन्तिकस्थं**
**शार्ङ्गं धनुर्मित्रमिव द्रढीयः ॥ १९ ॥**

तस्य हरेः शार्ङ्गाख्यं धनुरन्तिकस्थमभवत् समीपवर्ति जातं रथस्योपरि स्थापितम् । कीदृशं, विष्णुवर्जमन्येनासामर्थ्यान्न केनचिन्नमितं सज्जीकृतं, तथाकर्षणवशात् कर्णान्तिकमपाङ्गप्रदेशं प्राप्तो गुणो ज्या यस्य तत्, क्रियासु परताडनादिकासु विधेयमाकष्टुं भगवता शक्यम्, द्रढीयोऽभङ्गुरम्, अत एव मित्रमिव सुहृत्तुल्यमित्यर्थः । यथा मित्रं मित्रस्य निकटे भवति एवमस्य तद्भूदित्यर्थः । तदप्यनेन मित्रद्विष्टेन न कदाचिदपि नतिं नीयते । गुणाश्च तदीया अद्रोहशौर्यादयः कर्णान्तिकमागच्छन्ति श्रूयन्ते, क्रियासु गतागतादिकासु विधेयं वश्यं भवति, द्रढीयोऽविचलम् । "रऋतो हलादेर्लघोः" ॥ १९ ॥

---

१ 'तदेक' ख. पाठः । २ 'न्दत्' ग. पाठः ।

प्रवृद्धमन्द्राम्बुदनादधीरं
कृष्णार्णवाभ्यर्णचरैकहंसः ।
मन्दानिलापूरकृतं दधानो
निध्वानमश्रूयत पाञ्चजन्यः ॥ २० ॥

प्रतिध्वानं शब्दं दधानः पाञ्चजन्यो हरिशङ्खोऽश्रूयताकर्णितः । पाञ्चजन्यशब्दश्रवणादुपचारेण स एव श्रुत इत्युक्तम् । कीदृशं, प्रवृद्धो दीर्घो मन्द्रो यो मेघघोषस्तद्वद्धीरं गम्भीरं, तथा स्वल्पनिःश्वासाध्मानजनितम् । समरसमये हि जवेन शङ्खो ध्मायते । कीदृशः शङ्खः, कृष्ण एव महत्त्वात् कृष्णत्वाच्चार्णवस्तस्याभ्यर्णचरः समीपवर्ती स चासावेकहंसश्चेति विशेषणसमासः । यथा कश्चिदब्धिनिकटस्थस्य राजहंसस्य मेघनादमिश्रितं रवं शृणोत्येवमसौ श्रुत इत्यर्थः । अभ्यर्ण इत्यर्देः क्तः "अभेश्चाविदूरे" इतीडभावः । "रदाभ्यां निष्ठातो नः पूर्वस्य च" नत्वम् । अश्रूयतेति कर्मणि लङ् । पञ्चजने भवः पाञ्चजन्यः "बहिर्देवपञ्चजनेभ्यश्चे"ति ञ्यः ॥ २० ॥

रराज संपादकमिष्टसिद्धेः
सर्वासु दिक्ष्वप्रतिषिद्धमार्गम् ।
महारथः पुष्यरथं स शार्ङ्गी
क्षिप्रं क्षपानाथ इवाधिरूढः ॥ २१ ॥

स शार्ङ्गी हरिः पुष्यरथं क्रीडास्यन्दनमारूढः सन् चन्द्रवद्बभौ । असांग्रामिको मङ्गलरथः पुष्यरथः । अत एवाभिलषितनिष्पत्तेः साधकम्, तथा क्षिप्रमाशुगामि, अत एवाशेषास्वाशास्वनिषिद्धगतिम् । महारथः शार्ङ्गी । सर्वं युद्धव्यवहारं यो वेत्ति स शूरो महारथः । चन्द्रोऽपि पुष्यमेव रथमारूढः संबद्धः शोभते । पुष्योऽपि सर्वार्थसाधकः, यद्वा पुष्यन्त्यस्मिन्नर्था इति पुष्यः । सर्वासु च दिक्षु अप्रतिषिद्धो मार्गो येन । यात्रिको ह्यसौ ॥ २१ ॥

ध्वजाग्रधामा ददृशेऽथ शौरेः
संक्रान्तमूर्तिर्मणिमेदिनीषु ।

**फणावतस्त्रासयितुं रसाया-**
**स्तलं विविक्षुरिव पन्नगारिः ॥ २२ ॥**

पन्नगारिर्गरुडो ददृशे दृष्टः । कीदृशः, हरेश्चिह्नकोटिवसतिः, तथा स्फाटिकोर्वीषु बिम्बगतः । अतश्चोत्प्रेक्ष्यते पन्नगान् भीषयितुं भूतलं प्रवेष्टुकाम इवासौ पन्नगारिः । ददृश इति कर्मणि लिट् । फणाशब्दः स्त्रीलिङ्गोऽपि ॥ २२ ॥

**यियासतस्तस्य महीध्ररन्ध्र-**
**भिदा पटीयान् पटहप्रणादः ।**
**जलान्तराणीव महार्णवौघः**
**शब्दान्तराण्यन्तरयांचकार ॥ २३ ॥**

हरेर्जिगमिषतो यो दुन्दुभिध्वनिः सोऽश्वह्रेषित-गजगर्जित-रथचीत्कारादीनि शब्दान्तराण्यपजुह्नुवे । कीदृक् प्रणादः, महीध्ररन्ध्राणि भूधरगुहास्तेषु भिद्भेदः प्रतिश्रुत्का तया पटीयान् घनतरः । भिदेति क्विबन्तात्तृतीया । यदि वा भङ्ग एव भिदेत्यजन्तः । महाशब्दो हि नगरन्ध्राणि विदारयति । क इव किं स्थगयतीत्याह—यथोदधिपूरो नदनदीतोयान्तराण्यन्तरयति सोऽपि पर्वतविवरविदारणसमर्थः । "ध्रै तृप्तौ" महीं ध्रायन्तीति महीध्राः "आतोऽनुपसर्गे कः" । अथवा महीं धारयन्तीति महीध्राः "मूलविभुजादित्वात्कः" । "बहुलमन्यत्रापि संज्ञाच्छन्दसो"रिति णिलुक् । "इको यणचि" । भिदेति "भिद विदारणे" इत्यजन्तः ॥ २३ ॥

**यतः स धर्ता जगतां जगाम**
**धर्त्रा धरित्र्याः फणिना ततोऽधः ।**
**महाभराभुग्नशिरःसहस्र-**
**साहायकव्यग्रभुजं प्रसस्रे ॥ २४ ॥**

स जगन्निवासो यतो येन ययौ, ततस्तेन देशेनाधस्तात्फणिना प्रसस्रे गतम् । केन सर्पेण, धरित्र्या धर्त्रा भूमेर्वोढ्रा शेषेणेत्यर्थः । कथं प्रसस्रे, बृहता गौरवेणाभुग्नं कुब्जीकृतं[1] यत्फणासहस्रं तत्साहाय्ये व्यग्रावाकुलौ बाहू यत्र । महा-

१ 'तं निःसहं' ग. पाठः ।

पुरुषलक्षणं हि गुरुत्वमाहुः । (अत्र[1] भुजद्वयधारणं महाभुजत्वे हेतुः) जगद्धारणं च महाभरत्वे हेतुः । प्रसस्रे इति भावे लिट् ॥ २४ ॥

अथोच्चकैस्तोरणसङ्गभङ्ग-
भयावनम्रीकृतकेतनानि ।
क्रियाफलानीव सुनीतिभाजं
सैन्यानि सोमान्वयमन्वयुस्तम् ॥ २५ ॥

सोमान्वयमिन्दुवंश्यं तं हरिं सैन्यान्यन्वयुः पश्चाज्जग्मुः । कीदृंशि, उच्चैर्यत्तोरणं तेन यः सङ्गः संपर्कस्ततो यो भङ्गो नाशस्ततो यद्भयं दरस्तेनावनम्रीकृतानि ह्रासितानि केतनानि चिह्नानि यैः । कं कान्यनुयान्तीत्याह—सुनीतिभाजं नयज्ञं क्रियाफलानि यथा सेवन्ते, हरिमेव वा सुनीतिभाजं यथा क्रियाफलानि अनुयान्तीति योज्यम् । सेनां समवयन्ति सैन्यानि "सेनाया वे"ति ण्यः । सामान्यविवक्षया च स्थितत्वम् । केचिद्वा स्थितिलिङ्गमेव सैन्यशब्दमाहुः । सामूहिकस्तत्र दुर्लभः । अन्वयः प्रबन्धः । अन्वयुरिति यातेर्लङ् । लङः शाकटायनस्यैवे"ति झेर्जुस् ॥ २५ ॥

श्यामारुणैर्वारणदानतोयै-
रालोडिताः काञ्चनभूपरागाः
आनेमिमग्नैः शितिकण्ठपक्ष-
क्षोदद्युतश्चुक्षुभिरे रथौघैः ॥ २६ ॥

आनेमिमग्नैश्चक्रपर्यन्तं यावद्ब्रुडितैः रथौघैः रथकट्यादिभिः काञ्चनभूपरागाः सुवर्णोर्वीरजांसि चुक्षुभिरे क्षोभिताः उत्प्लाविताः, यद्वा चुक्षुभिरे क्षुण्णाः पिष्टाः । कर्मणि लिट् । कीदृशाः, श्यामारुणैर्नीललोहितैः करिमदाम्बुभिरालोडिताः पङ्किता अत एव शितिकण्ठपक्षक्षोदद्युतो मयूरबर्हचूर्णरुचयः । श्यामानि च तान्यरुणानीति च "वर्णो वर्णेने"ति समासः । क्षुभिरत्रान्तर्नीतण्यर्थः सकर्मकः । यथा राजायुद्धेति युधिः । चुक्षुदिरे इति क्वचित्पाठः ॥ २६ ॥

---

१ 'भ्रुकुटिबन्धचिह्नान्तर्गतोऽयमधिकः ग. पाठः ।

न लङ्घयामास महाजनानां
शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः
खुराहतो यत्सदृशं गरिम्णः ॥ २७ ॥

अनन्तरं पादाहतोऽष्टापदभूमिरेणुः काञ्चनभूपरागस्तदचेष्टत चक्रे यद्गरिम्णो गुरुत्वस्योचितम्, उत्थित एव गौरवादधो जगामेत्यर्थः । तदाह—महाजनानां जनताया मस्तकानि नाधिरुरोह[1], उद्धतिमुत्प्लुतिं च न ययौ, अथ च गरिम्णो महत्त्वस्य यदनुरूपं तच्चकारेत्युक्तिः । यो हि महात्मा स कोपितोऽपि साधूनामवमानं न कुरुते, नाप्युद्धतिं क्षोभं याति ॥ २७ ॥

निरुध्यमाना यदुभिः कथंचि-
न्मुहुर्यदुच्चिक्षिपुरग्रपादौ ।
ध्रुवं गुरून् मार्गरुधः करीन्द्रा-
नुल्लङ्घ्य गन्तुं तुरगास्तदीषुः ॥ २८ ॥

अग्रे हस्तिनो नीयन्ते पश्चादश्वा इति प्रयाणस्थितिः । जात्याश्वानां स्वभावो यत्[2] खुरचलनम्, अतश्च कविरुत्प्रेक्षांचक्रे—वृष्णिभिः कथमपि संयम्यमाना यत्पुरश्चरणावुच्चिक्षिपुरूर्ध्वीचक्रुः तन्निश्चितं महाप्रमाणान् गजानाक्रम्य यातुम् ईषुरभिलेषुः, यतो मार्गरुधो गुरुत्वान्मार्गमावृत्य स्थितान्, गमनपरिपन्थिन इत्यर्थः । अग्रे पादावग्रौ च तौ पादौ इति वा । यत्तदौ हेत्वर्थे । ईषुरितीच्छतेः ॥ २८ ॥

अवेक्षितानायतवल्गमग्रे
तुरङ्गिभिर्यत्ननिरुद्धवाहैः ।
प्रक्रीडितान् रेणुभिरेत्य तूर्णं
निन्युर्जनन्यः पृथुकान् पथिभ्यः ॥ २९ ॥

---

१ 'ध्यरोहत्' ख. पाठः । २ 'च लक्षणम्' ख. पाठः ।

मातरस्त्वरितमागत्य मथनभयाद्रथ्याभ्यो डिम्बान्निन्युरपास्थन् । कीदृशा-न्, धूलिभिः प्रक्रीडितान् विहृतान्, तथा कथंचिद्धृततुरङ्गैरश्ववारैरग्रेऽवेक्षि-तान् निरूपितान् । कथम्, आयताकृष्टा वल्गा रश्मिर्यत्र वेक्षणे खञ्जयित्वाश्वान् रक्षितानित्यर्थः । वाह्यन्ते इति वाहा अश्वाः । वहेर्ण्यन्तात् घञ् । पत्येति आङ्पूर्वः । "आद्गुणः" । तूर्णमिति त्वरेः क्तः । "रुष्यमत्वरसंघुषास्वना"-मितीडभावः । पक्षे "ज्वरत्वरे"ति ऊडादेशः ॥ २९ ॥

दिदृक्षमाणाः प्रतिरथ्यमाययु-
र्मुरारिमारादनघं जनौघाः ।
अनेकशः संस्तुतमप्यनल्पा-
नवं नवं प्रीतिरहो करोति ॥ ३० ॥

लोकपूगाः पुण्यभाजं शौरिं द्रष्टुकामाः सन्तः प्रतिरथ्यं रथ्यायां रथ्यायामारात् दूरादपि आययुराजग्मुः । ननु सर्व एव नगरनिवासिनोऽहर्दिवं भगवन्तमीक्षन्ते तत्किमिति तदालोकनकुतूहलित्वमित्याशङ्क्यापूर्वार्थसाधकमर्थान्तरन्यास-माह—चित्रं महती प्रीतिरसकृत्संस्तुतं परिचितमपि अनवं नवं करोति प्रत्यग्रीकु-रुते, तेन तेषां हरिदर्शनं तथा युक्तमिति भावः । दिदृक्षमाणा इति "हलन्ताच्चे"ति सनि कित्त्वम् । "ज्ञाश्रुस्मृदृशां सन" इत्यात्मनेपदम् । प्रतिरथ्यमिति वीप्सा-विभक्त्यर्थत्वात् । रथमर्हतीति रथ्यः । "दण्डादिभ्य"इति यत् । आययुरिति आङ्पूर्वाद्यातेर्लिट् । अनल्पानवं नवमित्यकारः प्रश्लिष्टः, अन्यथा तु कर्मधा-रयत्वात् सोर्लुकि सति नवनवमिति स्यात् । अनित्यं वातिदेशिकम् ॥ ३० ॥

उपेयुषो वर्त्म निरन्तराभि-
रसौ निरुच्छ्वासमनीकिनीभिः ।
रथस्य तस्यां पुरि दत्तचक्षु-
र्विद्वान् विदामास शनैर्न यातम् ॥ ३१ ॥

असौ विद्वान् मुरारिः रथस्य यातं गमनं न विदामास नाबुद्ध, यतस्त-स्यां पुर्यां निहितलोचनो द्वारवतीगतहृदय इत्यर्थः । कीदृशस्य रथस्य, वर्त्म मार्गं शनैर्मन्दमुपेयुषो गच्छतः । यतोऽनीकिनीभिः सेनाभिर्निरुच्छ्वासं बहुलत्वात्

सङ्कटम् । सङ्कटे च जवेन यातं न युज्यते, एतदपि चावेदने कारणं बोद्धव्यम् । सङ्कटे हि शनैर्गच्छन्नहो याति नवेति न बुध्यते । रथस्य यातं किंचिदपि न विवेदेति योज्यम् । विद्वान्न विवेदेति विरोधलेशः । अविद्यमानमन्तरं विवरमासामिति निरन्तराः संहताः । निरुच्छ्वासं पूर्णम्, उच्छ्वासोऽपि यत्र न वर्तेत इति कृत्वा । विद्वानिति "विदेः शतुर्वसुः" । विदामासेति "उषविद्जागृभ्योऽन्यतरस्या"मित्याम् । यातमिति भावे क्तः ॥ ३१ ॥

मध्येसमुद्रं ककुभः पिशङ्गी-
र्या कुर्वती कांचनभूमिभासा ।
तुरङ्गकान्ताननहव्यवाह-
ज्वालेव भित्त्वा जलमुल्ललास ॥ ३२ ॥

तस्यां पुरीत्युक्तमथ कासावित्याह—या समुद्रमध्ये उल्ललास दिदीपे तस्यां पुरीति योज्यम्, द्वारवत्यामित्यर्थः । कीदृश्यसावितीदानीं तद्वर्णनमाह—या दिशः सुवर्णक्षोणीरुचा पीताः कुर्वती उल्ललासेति संबन्धः । अतश्चोत्प्रेक्ष्यते—जलं विदार्यौर्वाग्नेर्वाडवाग्नेः शिखेवोत्थिता । सापि दिशः स्वरुचि[1]भिः कपिशयत्येव । तुरङ्गोऽश्वस्तत्कान्ता वडवा तत्तुल्यं मुखं यस्य हव्यवाहस्याग्नेः स वडवानलो[2]......(?)... । मध्येसमुद्रमित्येक[3]पदं "पारे मध्ये षष्ठ्या वे"ति समासः । पिशङ्गीरिति "पिशङ्गादुपसंख्यान"मिति ङीष् । हूयत इति हव्यं हविस्तद्वहतीति हव्यवाहः ॥ ३२ ॥

कृतास्पदा भूमिभृतां सहस्रै-
रुदन्वदम्भःपरिवीतमूर्तिः ।
अनिर्विदा या विदधे विधात्रा
पृथ्वी पृथिव्याः प्रतियातनेव ॥ ३३ ॥

अन्यच्च कीदृश्यसाविति स्निग्धाञ्जनश्यामरुचिरिति यावत् त्रिंशतः श्लोकानां सैव वर्ण्यते—या अनिर्विदा अनिर्विण्णेन प्रजासृजा पृथ्वी विशाला वि-

१ 'चा' ग. पाठः । २ 'लकादितिच्छाघोवेमुक्तः' ग. 'अलंकारविदतिच्छयैवमुक्तः' ख. ग. पाठः । ३ 'कं' ग. पाठः ।

दधे कृता, या च भूमिभृतां राज्ञां सहस्रैः कृतास्पदा अधिष्ठिता, तथोदधिजलवेष्टिताभोगा, अतश्च पृथिव्याः प्रतियातनेव भुवः प्रतिबिम्बतुल्या । सापि महीधरैर्विहितप्रतिष्ठा समुद्रमालामेखला विस्तीर्णा च । न निर्विद्यते उद्विजते इत्यनिर्वित् खिन्नः । "सत्सु द्विषे"ति क्विप् । विदधे इति कर्मणि लकारः । प्रतियातना प्रतिच्छन्दः ॥ ३३ ॥

त्वष्टुः सदाभ्यासगृहीतशिल्प-
विज्ञानसंपत्प्रसरस्य सीमा ।
अदृश्यतादर्शतलामलेषु
च्छायेव या स्वर्जलधेर्जलेषु ॥ ३४ ॥

या पुरी[1] दर्पणपृष्ठस्वच्छेषूदधिनीरेषु अदृश्यत ईक्षिता, समुद्रमध्ये वा तिष्ठतीत्यर्थः । अतश्चोत्प्रेक्ष्यते—स्वश्छायेव स्वर्गस्य प्रतिबिम्बमिव, यतस्त्वष्टुर्विश्वकर्मणः संबन्धिनः सदाभ्यासेन गृहीतस्य शिल्पविज्ञानसंपत्प्रसरस्य क्रियाकौशल्यातिशयप्रयोगस्य सीमा मर्यादा, ततोऽन्यत् किंचिद्धात्रा भूतले सुन्दरं न निर्मितमित्यर्थः । यतश्चैवं जले च वस्तु प्रतिबिम्बीभवत्यतो ज्ञायते सुरपुरमेवात्र प्रतिच्छन्दितमिति । क्रियाविशेषः शिल्पम् । प्रसरः प्रवृत्तिः कार्येषु योजना । सीमेति "मन" इति ङीबभावः । अदृश्यतेति कर्मणि लुङ् । स्वःशब्दोऽव्ययम् ॥ ३४ ॥

रथाङ्गभर्त्रेऽभिनवं वराय
यस्याः पितेव प्रतिपादितायाः ।
प्रेम्णोपकण्ठं मुहुरङ्कभाजो
रत्नावलीरम्बुधिराबबन्ध ॥ ३५ ॥

यस्याः पुर्या उपकण्ठं समीपे नदीपतिः रत्नावलीर्मणिपङ्क्तीः प्रीत्या मुहुराबबन्ध व्यरचयत् । कीदृश्याः, अङ्कभाजो मध्यवर्तिन्याः, अत एकत्र वासात् प्रेम । तथा रथाङ्गभर्त्रे चक्रपाणये वराय सर्वश्रेष्ठायाभिनवं तत्काले प्रतिपादितायाः दत्तायाः । कीदृशोऽम्बुधिः, पितेव पितृतुल्यः । पिता दुहितुरुत्सङ्ग-

---

1 'पूः' ग. पाठः ।

वर्तिन्या वराय भर्त्रेऽभिनवं विसृष्टायाः स्नेहेन रत्नावलीरसकृत् उपकण्ठं कण्ठे [1]योजयति । उपकण्ठं समीपे कण्ठे च ॥ ३५ ॥

यस्याश्चलद्वारिधिवारिवीचि-
च्छटोच्छलच्छङ्खकुलाकुलेन ।
वप्रेण पर्यन्तचरोडुचक्रः
सुमेरुवप्रोऽन्वहमन्वकारि ॥ ३६ ॥

यस्या वप्रेण प्राकारेण सुमेरुवप्रो मेरुतटोऽन्वकार्यनुकृतः । कीदृशेन, चलत् क्षुभ्यद् यद्वारिधिवारि समुद्रार्णस्तस्य या वीचिच्छटाः कल्लोलविच्छित्तयस्ताभ्योऽन्वहमहर्दिवमुच्छलत् निर्यत् यत् शङ्खकुलं कम्बुसमूहस्तेनाकुलेन व्याप्तेन सशङ्केनेत्यर्थः । वप्रः कीदृशः, उच्चत्वात्पर्यन्तचरं निकटवर्ति उडुचक्रं तारा[2]निकुरुम्बं यस्य स तथोक्तः । शङ्खानामुडून्युपमानम् । अहन्यहनि अन्वहमित्यव्ययीभावः । "अनश्चे"ति टच् समासान्तः । अन्वकारीति कर्मणि लुङ् ॥ ३६ ॥

वणिक्पथे पूगकृतानि यत्र
भ्रमागतैरम्बुभिरम्बुराशिः ।
लोलैरलोलद्युतिभाञ्जि मुष्णन्
रत्नानि रत्नाकरतामवाप ॥ ३७ ॥

यस्यामब्धिर्मणीनपहरन् रत्नाकरत्वं प्राप मणिनिलयत्वं लेभे नतु स्वभावत इत्यतिशयोत्प्रेक्षा, विना[3]पीवेन प्रयुज्यते तदर्थस्तु सामर्थ्याद्गम्यते । कीदृ[4]शानि रत्नानि, वणिक्पथे हट्टे पूगकृतानि राशीकृतानि, तथा अलोलां स्थायिनीं द्युतिं प्रकाशं भजन्ते इत्यलोलद्युतिभाञ्जि । केन मुष्णन्, अम्बुभिः । कीदृशैर्भ्रमागतैर्जलनाटकप्रविष्टैस्तथा लोलैः प्रसारिभिः । यः किल लोलश्चपलः स मुष्णाति । वनिजां पन्था वणिक्पथः । "ऋक्पूरब्धूःपथामानक्षे" । अपूगाः पूगाः कृताः पूगकृताः । "श्रेण्यादयः कृतादिभि"रिति समासः, च्विर्विभाषितः । आकरः स्थानम् ॥ ३७ ॥

---

१ 'नियो' क. ख. पाठः । २ 'रका' क. ख. पाठः । ३ 'प्येवमपि न' क. ख. पाठः । ४ 'दृशि' ख. पाठः ।

अम्भश्च्युतः कोमलरत्नराशीन्
अपांपतिः[1] फेनपिनद्धभासः ।
यत्रातपं दातुमिवोपतल्पं
विसारयामास तरङ्गहस्तैः ॥ ३८ ॥

यत्रोदधिः कल्लोलकरैरुपतल्पमट्टसमीपे कोमलान् नूतनान् रत्नराशीन् विसारयामास चिक्षेप । उत्प्रेक्ष्यते—आतपं दातुं शोषयितुमिव चिक्षेप । यतोऽम्भश्च्युतः सलिलस्राविणः, तथा फेनपिनद्धभासो दिण्डीरस्थगितदीप्तीन् । क्नूतं च वस्त्ववश्यमेवातपे स्थाप्यते ॥ ३८ ॥

यत्सालमुत्तुङ्गतया विजेतुं
दूरादुदस्थीयत सागरस्य ।
महोर्मिभिर्व्याहतवाञ्छितार्थै-
र्व्रीडादिवाभ्याशगतैर्विलिल्ये ॥ ३९ ॥

यस्याः सालं प्राकारमुच्चत्वेन लघूकर्तुमिवाब्धेः कल्लोलैः दूरादुदस्थीयत उत्थितमित्युत्प्रेक्षा । अनन्तरं तदभ्याशगतैः सालोपशयस्थैः सद्भिस्तैर्विलिल्ये विलीनं नष्टमित्युभयत्रापि भावे लकारः । उत्प्रेक्ष्यते—असंपन्नमनोरथैः सद्भि-र्व्रीडयेव विलिल्ये । यः किल केनचिद् गुणेन किं[2]चिज्जिगीषति तं[3]न्न जयति सोऽवश्यमेव ह्रियादर्शनं याति । व्रीडशब्दः स्त्रीपुंसयोः ॥ ३९ ॥

कुतूहलेनेव जवादुपेत्य
प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद् भृशमम्बुवर्ष-
व्याजेन यस्यां बहिरम्बुवाहः ॥ ४० ॥

यस्यां बहिर्जलदो गर्जन् वारिधाराच्छलेनात्यर्थमरोदीत् अश्रु तत्याजेवे-त्युत्प्रेक्षैव । किमित्य[4]रुददित्याह—कौतुकेनेव वेगादागतः सन् यतः सालकुड्येन बलान्निराकृतः । यः किल कुतूहलादागतः प्रविशन्निषिध्येत सोऽवश्यमेव

१ 'निधिः' ख. पाठः । २ 'कं' क. ख. पाठः । ३ 'तं' क. ख. पाठः । ४ 'मर्थम' ख. पाठः ।

परिभवात् सशब्दं रोदनं करोति । जवादुपेत्यारोदीदिति पौर्वकाल्यमेवात्र । जव इति "ऋदोरप्" । अरोदीदिति लङ् । "रुदश्च पञ्चभ्य" इतीडागमः ॥ ४० ॥

> यदङ्गनारूपसरूपतायाः
> किंचिद्गुणं भेदकमिच्छतीभिः ।
> आराधितोऽद्धा मनुरप्सराभि-
> श्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः ॥ ४१ ॥

मानव्यः प्रजाः स्वभावतः सनिमेषास्तत्र कविर्निमित्तान्तरारोपरूपामुत्प्रेक्षामकरोत् । अद्धा निश्चितं मनुः प्रजापतिरप्सरोभिराराधितः सन्नात्मीयाः प्रजा मानुषीलक्षणाः सनिमेषचिह्ना नेत्रसंकोचविकासोपलक्षिता व्यधत्त । नन्वेवमेव किमर्थं स्वर्गस्त्रीभिस्तोषित इत्याह—यदङ्गनेत्यादि । यस्यां द्वारवत्यामङ्गनास्तासां यद्रूपं लावण्यातिशयो वपुर्वा तेन यत्सारूप्यं सादृश्यं ततः किंचिद्भेदकं विशेषकारिणं गुणं कामयमानाभिः । एतेन पुरस्त्रीभ्योऽप्सरसामनिमेषत्वमेव विशेषो नान्य इति रूपातिशयस्तासामुक्तः । कटाक्षेक्षणादियोगाच्च भङ्ग्या तासामेवाप्सरोभ्यो विशेषो ध्वनितः । निमेषणं निमेषः स्थगनं तदेव चिह्नं तेन सह वर्तन्त इति सनिमेषचिह्नाः ॥ ४१ ॥

> स्फुरत्तुषारांशुमरीचिजाल-
> विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
> आरुह्य नार्यः क्षणदासु यस्यां
> नभोगता देव्य इव व्यराजन् ॥ ४२ ॥

यत्र पुरि यामिनीषु स्फटिकोपलरचिताः प्रासादमाला वनिता अधिरुह्य खस्था देवता इव बभुरित्युत्प्रेक्षा । यतो हर्म्यावलय उल्लसच्छिशिरकरकिरणनिकरैर्विनिह्नुताः सारूप्यादलक्ष्यतां नीता इति तद्गुणालङ्कारः । अतश्च हर्म्याणि न दृश्यन्ते ताश्च संचरन्त्यो [1]दृश्यन्ते, अतो ज्ञायते आकाशस्था देवता इवैता इति ॥ ४२ ॥

---

१ 'लक्ष्यन्ते' ग. पाठः ।

कान्तेन्दुकान्तोपलकुट्टिमेषु
प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरधःपातिपयोमुचोऽपि
समूहमूहुः पयसां प्रणाल्यः ॥ ४३ ॥

यत्रानिशं सौधपृष्ठेषु प्रणाल्यो द्रोण्यो जलराशिमूहुर्बभ्रुः । कदाचिन्मेघपयः स्यादित्याह—अधःपातिपयोमुच इति । कथमधोबुध्ने प्रसरज्जलधरा इत्याह— उच्चैरुन्नतेषु हर्म्येषु । कथं तर्हि धारयन्तीत्याह—कान्तानां[1]मच्छानामिन्दु- कान्तोपलानां चन्द्रकान्तमणीनां कुट्टिमेषु कुट्टेन नि[2]र्मितेषु हर्म्यतलेषु, तत्र हि भूमिरिन्दुकान्तनिर्मिता रात्रौ चेन्दुकरव्यतिकरवशात् जलं स्यन्दते तच्च प्रणाल्यो बिभ्रति । अत्र शशिकरव्यतिकरः क्षपाग्रहणेनाक्षिप्तोऽन्यथान्यत् किं- चित् प्रतिक्षपमित्येतन्नोक्तं स्यात् । ऊहुरिति वहेर्लिट् ॥ ४३ ॥

रतौ ह्रिया यत्र निशम्य दीपान्
जालागताभ्योऽधिगृहं गृहिण्यः ।
बिभ्युर्बिडालेक्षणभीषणाभ्यो
वैदूर्यकुड्येषु शशिद्युतिभ्यः ॥ ४४ ॥

यत्र नगर्यामधिगृहं गृहेषु यानि वैदूर्यकुड्यानि वैदूर्यमणिभित्तयस्तत्र या गवाक्षप्रविष्टाश्चन्द्रभासस्ताभ्यः कामिन्यो बिभयांबभूवुः । ननु ज्योत्स्नातो भयं कीदृशमित्याह—बिडालेक्षणभीषणाभ्य इति । वैदूर्या हि शि[3]खिकण्ठ- हरितवर्णास्तत्संपर्कात् च ज्योत्स्ना काचर्यमागता, अतश्च मुग्धत्वात् जानते मार्जारनेत्राण्येतानि । अथ किं तत्र प्राकाश्यं नास्ति येन शङ्काकुलास्ता इत्याह—दीपान् नि[4]शम्य प्रशमय्य बिभ्युः । किमिति [5]प्रदीपकाः शमिता इत्याह—ह्रियेति । लज्जाया अपि किं कारणमित्याह—रताविति सुरतसमये, यतस्तदा रमणैर्वसनापहारात् लज्जिताः सत्यस्ता दीपान् प्रशमयन्ति, अतश्चालो- काभावान्न पदार्थानां सम्यग्ज्ञानम् । प्रशमय्येत्यस्मिन्नर्थे निश[6]म्येति न तथो-

---

१ 'सच्छायानां' ग. पाठः । २ 'निर्वृत्तेषु' ख. पाठः । ३ 'ति' ख. ग. पाठः । ४ 'शा' ग. पाठः । ५ 'प्रद्योत' ख. पाठः । ६ 'शा' ग. पाठः ।

पपद्यत इति शब्दार्थविदः । गृहेषु अधिगृहमित्यव्ययीभावः । "तृतीया-सप्तम्योर्बहुलम्" । बिभ्युरित्याम् विभाषितः । भीषयेति "भियो हेतुभये षुक्" । शशिद्युतिभ्य इति भीत्रार्थानां भयहेतु" रित्यपादानसंज्ञा ॥ ४४ ॥

**यस्यामतिश्लक्ष्णतया गृहेषु**
**विधातुमालेख्यमशक्नुवन्तः ।**
**चक्रुर्युवानः प्रतिबिम्बिताङ्गाः**
**सजीवचित्रा इव रत्नभित्तीः ॥ ४५ ॥**

यत्र वेश्मसु या रत्नभित्तयस्ता युवानः सप्राणालेख्या इव व्यधुः, यतः प्रतिबिम्बितमङ्गं शरीरं येषां यासु वा । अथ किं मणिकुड्येषु रागो न पतितो येन प्रतिफलितमङ्गमित्याह—चित्रं कर्तुमसमर्थाः, कुतः अतिमसृणतया रत्न-भित्तीनाम् । श्लक्ष्णे हि तूलिका पदं न बध्नाति, अतश्चालेख्यं कर्तुं न शक्यते । ते च प्रतिबिम्बिताः, अतश्च ज्ञायते सजीवं चित्रमेभिः कृतमिति ॥ ४५ ॥

**सावर्ण्यभाजः प्रतिमागतायाः**
**लक्ष्यैः स्मरापाण्डुतया तरुण्याः ।**
**यस्यां कपोलैः कलधौतधाम-**
**स्तम्भेषु भेजे मणिदर्पणश्रीः ॥ ४६ ॥**

यस्यां कलधौतधामस्तम्भेषु सुवर्णगृहस्थूणासु[1] प्रतिबिम्बितायाः युवत्याः गण्डतलैर्मणिदर्पणश्रीर्भेजे स्फटिकादर्शशोभा प्राप्ता । कीदृश्यास्तरुण्याः, साव-र्ण्यभाजः कलधौतेनैव सदृशवर्णायाः गौर्या इत्यर्थः । कथं तुल्यवर्णाः प्रतिफलिता इत्याह—स्मरापाण्डुतया लक्ष्यैरीक्षितुं शक्यैः । यद्यपि ता गौर्यस्तथापि कपोलाः कामवशादापाण्डुराः, अतो विवर्णत्वात् प्रतिफलिताः सन्तो रत्नादर्शाः काञ्चन-स्तम्भेषु ते कृता इति ज्ञायते इत्यर्थः । स्तम्भेषु हि सर्वत्र मणिमुकुराः क्रियन्ते । केवलो मणिशब्दः प्रायशः स्फटिके वर्तते । कपोलैरिति जातौ बहुवचनम् । भेजे इति कर्मणि लकारः । "तृफलभजत्रपश्च" त्येत्वाभ्यासलोपौ ॥ ४६ ॥

---

१ 'स्तम्भेपु' क. पाठः ।

**शुकाङ्गनीलोपलनिर्मितानां लिप्तेषु भासा गृहदेहलीनाम् ।**
**यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि ॥ ४७ ॥**

यस्यामलिन्देषु[१] मुग्धाङ्गना गोमयगोमुखानि गोपुरीषानुलेपनानि न विदधुर्यतो गृहदेहलीनां भासा लिप्तेषु च्छुरितेषु । देहली गृहस्थानविशेषः । गोमुखमुपलेपनम् । कीदृशीनां देहलीनां, शुकाङ्गमिव ये नीला उपला अश्मानो मरकताख्यास्तैर्निर्मितानां रचितानाम् । तत्र हि देहल्यो मरकतमय्यस्तासां नीलया रुचा अलिन्दाश्छुरिताः, अतश्चाप्रौढा नार्यो जानते—कृतमेवात्र गोमया[२]नुलेपनमन्यथा कुतो नीलिमेति श्लोकार्थः ॥ ४७ ॥

**गोपानसीषु क्षणमास्थितानामालम्बिभिश्चन्द्रकिणां कलापैः ।**
**हरिन्मणिश्यामतृणाभिरामैर्गृहाणि नीध्रैरिव यत्र रेजुः ॥ ४८ ॥**

यत्रालम्बिभिर्दीर्घैश्चन्द्रकिणां बर्हिणां[३] कलापैः पिञ्छैर्वेश्मानि रेजुर्बभुः नीध्रैरिव[४] च्छादनैर्यथा । कीदृशानां मयूराणां, गोपानसीषु चन्द्रशालिकासु[५] मनाक् स्थितानाम् । कलापैः कीदृग्भिः, हरिन्मणिर्मरकतं तद्वत् श्यामानि यानि तृणानि तद्वदभिरामै[६]र्मनोहरैः । नीध्राण्यपि नीलतृणैः रम्याणि भवन्ति । "वल्लभीच्छादनं दारु वक्रं गोपानसीं विदु"रिति । आस्थितानामिति कर्तरि "गत्यर्थाकर्मकश्लिषशीङ्स्थासे"ति क्तः । गृहशब्दोऽर्धर्चादिः ॥ ४८ ॥

**बृहत्तुलैरप्यतुलैर्वितानमालावनद्धैरपि चावितानैः ।**
**रेजे विचित्रैरपि या सचित्रैर्गृहैर्विशालैरपि भूरिशालैः ॥ ४९ ॥**

या पूर्वेश्मभिरशोभत । कीदृशैः, बृहत्तुलैर्महास्तम्भैः, तथातुलैरसदृशैः सर्वोत्कृष्टैरित्यर्थः । विरुद्धं चैतत्, यत्र हि बृहत्य[७]स्तुला विद्यन्ते तत्र कथं ता एव न स्युः, न सन्ति चेन्ननु[८] तर्हि बृहत्तुलैरिति सर्वत्रैकार्थोद्भावनेन विरोधो भिन्नाश्रयणे तु परिहारः । तथा वितानमालावनद्धैः करक[९]राजियुक्तैरवितानैरशून्यैर्धनजनपरिपूर्णैरित्यर्थः । यत्र च वितानाभावस्तत्र कथं तद्योगः । तथा विचित्रैरनेकविच्छित्तिरचितैः सचित्रैः सालेख्यैः, यत्र च चित्रं विगतं तत्र कथं तदेव भवेत् । तथा विशालैर्विस्तीर्णैः, भूरिणा सुवर्णेन शालन्ते

---

१ 'षु स्थलीषु' ख. पाठः । २ 'येना' ख. पाठः । ३ 'णानां' ग. पाठः । ४ 'वा' ग. पाठः । ५ 'लासु' ग. पाठः । ६ 'मोहनैः' ग. पाठः । ७ 'बृहत्तु' ख. पाठः । ८ 'चैतत् ननु' क. ख. पाठः । ९ 'कवस्त्र' क. ख. पाठः ।

श्लाघन्ते इति भूरिशालाः तैः, यद्वा भूरिशालैः प्रभूतगृहैः । यत्र च शाला न सन्ति तत्र कथं ता एव बह्वयः स्युरिति शाब्दो विरोधः । अपिशब्दो विरोधप्रतिपादनार्थः । रेजे "फणां च सप्ताना"मित्येत्वाभ्यासलोपौ ॥ ४९ ॥

**चिक्रंसया कृत्रिमपत्रिपंक्तेः कपोतपालीषु निकेतनानाम् ।**
**मार्जारमप्यानतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥ ५० ॥**

निकेतनानां गृहाणां कपोतपालीषु प्रदेशविशेषेषु यो मार्जारो बिडालस्तात्त्विकस्तमपि जनः कृत्रिममेवाहार्यमेव मेने अज्ञासीत् । छादनस्याधस्ताद्धारणार्थं कुटिलानि काष्ठानि क्रियन्ते येषु तीक्ष्णाः सिंहादयः पक्षिणश्चोत्पाद्यन्ते सा कपोतपाली भण्यते, यस्या लोके सिंहवाटिकेति प्रसिद्धिः । तात्त्विकं मार्जारं कस्माल्लोकः कृत्रिममबोधीत्याह—आनतं नम्रीभूतं निश्चलमकम्प्रमङ्गं कायो यस्य तमानतनिश्चलाङ्गम् । किमर्थमेवंविधमित्याह—कृत्रिमायाः पत्रिपंक्तेः पक्षिमालायाश्चिक्रंसया चिक्रमयिषया जिघृक्षया । कपोतपाल्यां कृत्रिमां पक्षिमालां तात्त्विकीं बुध्यमानेनौतुना जिघांसया जातिस्वभावाद्वक्रितं निश्चलीकृतं शरीरमतो जनो जानीते अयमपि कृत्रिम इति वाक्यार्थः । चिक्रंसयेति "स्नुक्रमो"रितीडभावश्चिन्त्यः । जिघांसयेति त्विदानीन्तनः पाठः । कारणेन निर्मितः कृत्रिमः । "ड्वितः क्त्रिः, क्त्रेर्मम् नित्यम्" ॥ ५० ॥

**क्षितिप्रतिष्ठोऽपि मुखारबिन्दैर्वधूजनश्चन्द्रमधश्चकार ।**
**अतीतनक्षत्रपथानि यत्र प्रासादशृङ्गाणि मुधाध्यरोहत् ॥ ५१ ॥**

यत्र कामिनीलोको भूमिष्ठोऽ[1]पि शशिनं वदनकमलैरधश्चकार व्यजेष्ट । विरुद्धं चैतत् । यो हि भूमिष्ठः[2] स कथं खस्थमधो बुध्ने कुर्यात् । प्रांशुप्रासादारोहणं तर्हि तासामनर्थकमित्याह—अतीत उल्लङ्घितो नक्षत्रपथो ज्योतिर्मार्गो नभो यैस्तानि हर्म्यशिखराणि असौ मुधा निरर्थकमध्यरोहदुदकसत्, भूस्थित्यैवेन्दोरधः कृतत्वात् । शब्दच्छलेन चैषोक्तिः नतु तत्त्वतः । नह्यसौ चन्द्राधश्चिकीर्षया सौधान्यारूढोऽपितु भोगेच्छयेति तात्पर्यार्थः ॥ ५१ ॥

**रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्द्धयन्तीः ।**
**यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥ ५२ ॥**

---

१ 'भूप्रतिष्ठो' ख. पाठः । २ 'भूस्थ' ख. पाठः ।

यस्यां तरुणा वधूभिः समं कान्तासहायाः वलभीरुपरिवसतीर्भेजिरे । कीदृशीः, रम्या इति रमणीयत्वात् पताका वैजयन्तीः प्राप्ताः, तथा विविक्ता इत्यनुपहतत्वाद्रागं कामं चित्रार्थं वा मनःशिलासिन्दूरादिकं वर्द्धयन्तीः । शोभने हि स्थानेऽसकृद् बहु च चित्रं क्रियते । तथा नमत् कुटिलं वलीकं छादनान्तो यासु । इतिशब्दावत्र हेत्वर्थौ । अथच वधूभिः समं वलभीर्भेजिरे, वधूरपि सिषेवे इत्यर्थान्तरप्रतीतिः । वध्वोऽपि रम्या इत्येवं पताकां कीर्तिं प्रापुवत्यः । इतिः स्वरूपनिर्देशे । तथा विविक्ता रूपवेशान्विता इति रागमुत्कण्ठां वर्द्धयन्तीः । तथा [1]नमन्त्यो निम्ना वल्यो मध्यरेखा यासां ता नमद्वलीकाः । "नद्यृतश्चे"ति कप् । अर्थवशाच्चात्र विभक्तिपरिणामः ॥ ५२ ॥

**सुगन्धितामप्रतियत्नपूर्वं बिभ्रन्ति यत्र प्रमदाय पुंसाम् ।**
**मधूनि वक्त्राणि च कामिनीनामामोदकर्मव्यतिहारमीयुः ॥ ५३ ॥**

यत्र मधूनि मद्यमैरेयादीनि युवतीनां च वदनानि आमोदकर्मणो विभावनक्रियाया व्यतिहारं विनिमयमीयुर्जग्मुः, वक्त्रैर्मधूनां मधुभिश्च वक्त्राणां सौगन्ध्यं यत्राधिकीकृतमित्यर्थः । कीदृंशि तानि, प्रियाणां प्रीत्यै अप्रतियत्नपूर्वं स्वभाविकं सौरभं बिभ्रन्ति वहमानानीत्युभयविशेषणम् । सतो गुणान्तरो[2]त्पादनं प्रतियत्नः । बिभ्रन्तीति शतुः । "जश्शसोः शि । वा नपुंसके" ति नुम् । ईयुरिति इणो लिट् ॥ ५३ ॥

**रतान्तरे यत्र गृहान्तरेषु वितर्दिनिर्यूहविटङ्कनीडः ।**
**रुतानि शृण्वन् वयसां गणोऽन्तेवासित्वमाप स्फुटमङ्गनानाम् ॥५४॥**

यत्र वयसां पक्षिणां शुकशारिकादीनां गणो वृन्दं स्फुटमखण्डं कामिनीनामन्तेवासित्वं शिष्यत्वमाप लेभे । यतो रतान्तरे निधुवनावसरे रुतानि सीत्कारादीन्याकर्णयन् । तथा गृहमध्ये या वितर्द्यो वेदिकास्तासां यो निर्यूहो निर्गतो दारुविशेषः, तस्य यो विटङ्क उन्नतो भागः स एव तत्र वा नीडमालयो यस्य, गृहे स्थितः इत्यर्थः । यो हि शिष्यः स उपाध्यायात् शृणोति, तद्गेहे च वसति । अन्ते वसत्यवश्यमन्तेवासी । "शयवासवासिष्वकालादि"ति ङेरलुक् ॥ ५४ ॥

---

१ 'विन' ग. पाठः । २ 'राधानं' ग. पाठः ।

**छन्नेष्वपि स्पष्टतरेषु यत्र स्वच्छानि नारीकुचमण्डलेषु ।**
**आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि ॥ ५५ ॥**

यत्राङ्गनानां स्तनभारेषु यान्यम्बराणि वासांसि तानि न केवलं नाम्ना गगनसादृश्यं दधिरे यावदर्थतोऽपि कार्येणापि, यतः स्वच्छानि सूक्ष्माणि अत एवा[1]च्छादितेष्वम्बरैः कुचेषु प्रकटतरेषु । आकाशेनाप्यावृतं वस्तु न पिधीयते शून्यरूपत्वात्तस्य । छन्नशब्दो "वा दान्तशान्ते"ति छदेर्ण्यन्तस्य निपातितः ॥ ५५ ॥

**यस्यामजिह्मा महतीमपङ्काः सीमानमत्यायतयोऽत्यजन्तः ।**
**जनैरजातस्खलनैर्न जातु द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥ ५६ ॥**

यस्यां[2] पुर्यां जनैर्वास्तव्यैरुभयेऽपि विनीतमार्गाः सदाचारराजपथाख्या न[3]जातु कदाचिदमुच्यन्त त्यक्ताः । इदानीं तयोः साम्यं—विनयमार्गाः तावत् कीदृशाः, अजिह्मा अवक्रचेष्टा धर्म्या[4] इत्यर्थः । हट्टमार्गा अपि अजिह्माः सरलाः । विनयमार्गा महतीं सीमानं स्थित्युन्नतिक्रममत्यजन्तोऽत एवापङ्का निर्वचनीयाः । राजमार्गा अपि बृहतीं सीमानं मर्यादां विस्तारं वा न जहति, अतएवापङ्का निष्कर्दमाः । सङ्कटे हि पथि पङ्कः पदं बध्नाति । सत्पथा अत्यायतयः शोभन आयतिरागामी कालो येषां ते अत्यायतयः । राजमार्गा अपि सुष्ठु आयतिरायामो येषामित्यत्यायतयः दीर्घदीर्घाः । जनैः कीदृशैः, अजातं स्खलनं निवृत्तिरुपघातश्च येषां तैरजातस्खलनैः, सदाचारात्यागादिभिरसंजातचरणादिक्षतिभिश्चेत्यर्थः । द्वावषयवौ येषां ते द्वये । बहुत्वे च राश्यपेक्षं द्वित्वम् । "द्वित्रिभ्यां तयस्यायज्वा" । अमुच्यन्तेति कर्मणि लङ् ॥ ५६ ॥

**परस्परस्पर्द्धिपरार्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः ।**
**श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज ॥ ५७ ॥**

यत्र रूपवतीर्नारीः कृत्वा प्रजापतिरेवं वाच्यताकलङ्कं ममार्जाक्षालयत् । परस्परस्पर्धि अन्योन्याभिभावि परार्ध्यमुत्तमं रूपं यासां ताः परस्परस्पर्धिपरार्ध्यरूपाः नगराङ्गना निष्पाद्य श्रीनिर्मित्या लक्ष्मीनिर्माणेन प्राप्ता या घुणक्षतैकवर्णोपमा, एकश्चासौ वर्णोऽक्षरमेकवर्णः, घुणेन प्राणिविशेषेण क्षतो घुणक्षतो घुणोल्लिखितः, घुणक्षतश्चासौ एकवर्णश्चासौ घुणक्षतैकवर्णस्तेनोपमा साम्यकरणं तदुपमा । श्रीनिर्मित्या प्राप्ता श्रीनिर्मितिप्राप्ता सा चासौ सा च श्रीनिर्मिति-

१ 'वोद्भासितेषु' क. पाठः । २ 'त्र' ग. पाठः । ३ 'जातु न' क. ख. पाठः । ४ 'वन्द्याः' ग. पाठः ।

प्राप्तघुणाक्षरैकवर्णोपमा, तया वाच्यमयशस्तदेव मलं कलङ्कस्तं ममार्ज अनीनशत् । घुणाक्षरैकवर्णोपमैव वाच्यं तद्लं सुष्ठु ममार्जेति तु केचित् । वेधसो हि नित्यमेव लोके वाच्यता । यथा—शोभनं वस्तु निर्मातुं नायं क्षमः । या तु श्रीः सा घुणाक्षरन्यायेन, दैवात् कथमप्यक्षरमुल्लिखति घुणोऽपि काष्ठेषु इत्येवंविधा श्रीनिर्माणेन प्राप्ता या घुणाक्षरोपमितिस्तां यत्र सर्वा नगरवनिता रूपिणीर्विधाय ममार्ज । तदा हि न कश्चिद् घुणाक्षरन्यायमुद्ग्राहयति सर्वासां सुरूपत्वात् । परार्ध्यं ब्रुवते श्रेष्ठम् । "अर्धाद्यत् । परावराधमोत्तमपूर्वाच्च" । निर्मितिरिति उपसर्गप्रतिरूपको निपातो निःशब्द इत्यङ्[1] न कृतः ॥ ५७ ॥

**क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ।**
**अध्यूषुषस्तामभवन् जनस्य याः संपदस्ता मनसोऽप्यभूमिः ॥ ५८ ॥**

तां पुरीं नागरिकस्याधिवसतस्ताः संपदो लक्ष्म्योऽभवन् या मनसोऽप्यभूमिः मनोरथानामप्यगोचरः । प्रार्थितादधिकं यत्र घटते । स्यादेतत्, कल्पवृक्षा अप्येवंविधा एव तत्किमेतच्चित्रमित्याह—कल्पपूर्वा वृक्षास्तदेव फलन्ति यदन्तःकरणेन क्षुण्णं मनसा पर्यालोचितं नत्वधिकम् । अध्यूषुष इति अधिवसतेः क्वसुः । तामिति "उपान्वध्याङ्वस" इत्याधारस्य कर्मत्वम् ॥ ५८ ॥

**कला दधानः सकलाः स्वभाभिरुद्भासयन् सौधसिताभिराशाः ।**
**यां रेवतीजानिरियेष हातुं न रौहिणेयो नच रोहिणीशः ॥ ५९ ॥**

यां द्वारिकां रौहिणेयो हलधरः रोहिणीशः शशी हातुं त्यक्तुं न इयेष न चकमे, सीरितारापिपौ नित्यमेव यत्रोषतुरित्यर्थः । तयोरधुना श्लेषः । सीरी कला गीतवाद्यादिकाः सकलाश्चतुःषष्टिसंख्या अपि बिभ्राणः, चन्द्रस्तु कला लेखाः सकलाः षोडशापि । सितत्वाच्चोभावपि धवलगृहधवला[2]भिरात्मीयरुचिभिर्दिशो दीपयन्तौ । रेवती ककुद्मिकन्या तारा च ते जाये ययोस्तौ रेवतीजानी । "जायायाः निङ् यलोपश्च" । रोहिण्या अपत्यं रौहिणेयो हलधरः । "स्त्रीभ्यो ढक्" । रोहिण्यास्ताराया ईशो भर्ता रोहिणीशो मृगाङ्कः ॥ ५९ ॥

**बाणाहवव्याहतशम्भुशक्तेरासत्तिमासाद्य जनार्दनस्य ।**
**शरीरिणा जैत्रशरेण यत्र निःशङ्कमूषे मकरध्वजेन ॥ ६० ॥**

---

१ 'ङाकृतः' ग. पाठः । २ 'लदीप्तिभि' क. ख. पाठः ।

यत्र मकरध्वजेन कामेन स'शरीरेण प्रद्युम्नाख्येन ऊषे उषितम् । भावे लकारः । जैत्रा जिष्णवो वशकारिणः शरा यस्य तेन, निःशङ्कं निर्भयम् । ननु स्मरारेर्भयेन तस्य भवितव्यमित्याह—बाणासुरसमरे निवर्तिता शम्भोः शक्तिर्बलं येन तस्य विष्णोः समीपं प्राप्य निःशङ्कमूषे । आहूयन्तेऽस्मिन्नित्याहवः । "आङि युद्धे" इत्यप् संप्रसारणम् । जैत्रमिति जयतेः ष्ट्रन्[2] ऊह्यः । जेतरि भव इति तु केचित् ॥ ६० ॥

**निषेव्यमाणेन शिवैर्मरुद्भिरध्यास्यमाना हरिणा चिराय ।**
**उदग्रश्मिरत्नाङ्कुरधाम्नि सिन्धावाह्वास्त मेरावमरावतीं या ॥ ६१ ॥**

या सिन्धौ समुद्रस्था पुरी मेरौ मेर्वाधाराममरावतीमाह्वास्त आह्वत । "स्पर्धायामाङः" इत्यात्मनेपदम् । च्लेः सिच् । "आत्मनेपदेष्वन्यतरस्यामि-त्यङ् विकल्पितः । इदानीं श्लेषः—द्वारवती तावच्छिवैरनुकूलैर्मरुद्भिर्वायुभिः से-व्यमानेन हरिणा वासुदेवेनाजस्रमध्यास्यमानोपभुज्यमाना, अमरावत्यपि शिवैरे-कादशभी रुद्रैर्मरुद्भिश्च देवैः सेव्यमानेन हरिणा शक्रेणाध्यासिता, उदग्रश्मयः ऊ-र्ध्वकिरणा ये रत्नांकुरा मणिशलाकास्तेषां धाम स्थानं सिन्धुर्मेरुश्च । अमरा विद्यन्ते यस्यामित्यमरावती । "मतौ बह्वचोऽनजिरादीनामि"ति दीर्घः ॥ ६१ ॥

**स्निग्धाञ्जनश्यामरुचिः सुवृत्तो वध्वा इवाध्वंसितवर्णकान्तेः ।**
**विशेषको वा विशिशेष यस्याः श्रियं त्रिलोकीतिलकः स एव ॥ ६२ ॥**

यस्याः पुर्याः स एव त्रिलोकीतिलको जगत्प्रधानं हरिः श्रियं लक्ष्मीं शोभां च विशिशेषातिशिश्येऽधिकीचकार । यतोऽसौ विशेषको वा तिलकतुल्यः । वा इवार्थे । तथा स्निग्धस्यारूक्षस्याञ्जनस्य कज्जलस्येव श्यामा[3] रुचिः कान्ति-र्यस्य स तथोक्तः । सुवृत्त इति सद्व्यवहारः । पुरः कीदृश्याः, अध्वंसिता असं-कीर्णा वर्णानां ब्राह्म[4]णक्षत्रियविट्शूद्राणां कान्तिः शोभा यस्याः, इति धर्मानयने द्रव्यक्षेपः । तथा वध्वा इव वधूतुल्यायाः । यथाहि युवत्या अनष्ट[5]शोभाया विशेषकः कालाञ्जनेन श्यामशोभः सुवृत्तः परिणाही भूषां विशेषयत्येवं तस्या विशिशेष । त्रिलोकीतिलक इति तिलकशब्दस्य प्रशंसार्थत्वान्नाधिक्यदोषः । यथा "तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः । दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव" इत्यत्रेन्दुशब्दस्य । यथा च "स्तनस्तबकपर्यन्तन्यस्तहस्तैक-

---

१ 'शरीरिणा' ख. पाठः । २ 'क्रन्तः' ग. पाठः । ३ 'कृष्णा' ख. पाठः । ४ 'ब्रह्म' ग. । ५ 'ष्टरूप' ख. ।

पल्लवा । लतेवाकृष्टमुक्तान्या चकम्पे प्रमदालता" इत्यत्र लताशब्दस्य । त्रयाणां लोकानां समाहारस्त्रिलोकी । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाषित[१] इति । "द्विगो"रिति ङीप् ॥ ६२ ॥

**तामीक्षमाणः स पुरीं पुरस्तात् प्रापत् प्रतोलीमतुलप्रतापः ।**
**वज्रप्रभाक्रान्तसुरायुधश्रीर्या देवसेनेव परैरलङ्घ्या ॥ ६३ ॥**

तामेवंविधां पुरीं द्वारवतीं स भगवानपरिमितवीर्यो विलोकयमानः पुरस्तादग्रे या प्रतोली [२]बाह्यद्वारपाली तां प्रापदाससाद । कीदृशी प्रतोली पूर्वा, वज्रं मणिभेदस्तत्प्रभयाक्रान्ता प्राप्ता सुरायुधस्येन्द्रधनुषः श्रीः शोभा यया । तथा शत्रुभिरलङ्घ्या, अतएव देवसेनेव सुरचमूतुल्या । तस्यामपि वज्रस्य पवेः प्रभया सुरायुधानां देवहेतीनां श्रीराक्रान्ताभिभूता भवति, सापि परैरलङ्घ्या ॥ ६३ ॥

**प्रजा इवाङ्गादरविन्दनाभेः शंभोर्जटाजूटतटादिवापः ।**
**मुखादिवाथ श्रुतयो विधातुः पुरान्निरीयुर्मुर[३]जिद्ध्वजिन्यः ॥६४॥**

अथ क्रमेण नगरात् माधवपृतना निरीयुर्नि[४]सस्रुः । का इव कुत इत्याह—पद्मनाभशरीराद् भूतानीवेति बाहुल्योक्तिः । हररूक्ष[५]केशतटाच्चापो गङ्गातोयानीवेति कलकलवत्त्वोक्तिः । विरिञ्चिवदनाच्चातुर्विद्यमिवेति अनश्वरोक्तिः । स्नानभस्मादिना रूक्षाः केशा जटास्तासां जूटो बन्धविशेषः स एव तटो रोधः । तटाद्धि जलप्रवाहा निष्क्रामन्ति ॥ ६४ ॥

**श्लिष्यद्भिरन्योन्यमुखाग्रसङ्गस्खलत्खलीनं हरिभिर्विलोलैः ।**
**परस्परोत्पीडितजानुभागा यत्नेन निश्चक्रमुरश्ववाराः ॥ ६५ ॥**

अश्ववारा यत्नेन निश्चक्रमुः । यतो हरिभिरश्वैर्विलोलैराकुलत्वादन्योन्यस्योत्पीडिता निश्चलीकृता जानुभागा येषाम् । विलोलत्वमेव कुत इत्याह—श्लिष्यद्भिर्ढौकितैः । कथम्, इतरेतरं मुखाग्रसङ्गस्तुण्डव्यतिकरस्तेन स्खलन्ति चलन्ति खलीनानि कविका यत्र श्लेषे, इति जातिबन्धः ॥ ६५ ॥

**निरन्तरालेऽपि विमुच्यमाने दूरं पथि प्राणभृतां गणेन ।**
**तेजोमहद्भिस्तमसेव दीपैर्द्विपैरसंबाधमयांबभूवे ॥ ६६ ॥**

---

१ 'ष्यते' ग. पाठः । २ 'मार्ग' क. ख. पाठः । ३ 'मंधु' क. ख. पाठः । ४ 'विं' ख. पाठः । ५ 'केशबन्धतटात्' ख. । 'तव्याः' ग. पाठः ।

करिभिः सङ्कटेऽपि मार्गेऽसंबाधमसंकटं सुखेनैवायांबभूवे अगामीति । भावे लकारः । "दयायासश्चे"त्याम् । निरुच्छ्वासे पथि कथं गम्यते इत्याह—प्राणिपूगेन दूरं दूरान्नितरां वा भयात् त्यज्यमाने पथि यतस्तेजोमहान्तो बलिनो द्विपाः षष्टिवर्षा इत्यर्थः । यथा तमसा निर्विवरे पथि तेजोमहद्भिर्महाज्वालैर्दीपैः सुखं गम्यते । तत्रापि दीपवशात्तमो मार्गं मुञ्चति । द्विपैरिति कर्तरि तृतीया, दीपैरिति करणे । एवंविधं चौपम्यं न तथाङ्गीकृतं तस्माद् दीपैरिति उपचारेण तद्वन्तः पुरुषा बोद्धव्याः । यथा यष्टीः[1] प्रवेशयेति । कर्तर्येव तृतीयेति वयं विद्मः ॥ ६६ ॥

**शनैरनीयन्त रयात् पतन्तो रथाः क्षितिं हस्तिनखादखेदैः ।**
**सयत्नसूतायतरश्मिभुग्नग्रीवान्त[2]संसक्तयुगैस्तुरङ्गैः ॥ ६७ ॥**

तुरङ्गैर्वाजिभिर्हस्तिनखात् पूर्द्वारसमीपोच्चप्रदेशाच्च स्वैरं रथा अनीयन्त समां भूमिं प्रापिताः । [3]यतो रयाद्वेगात् पतन्तः । श्लक्ष्णोन्नताद्धि प्रदेशाच्चक्रमाधिगतजवमधः पतति । कीदृशैरश्वैः, अखेदैरश्रान्तैस्तथा सयत्नोऽवहितो यः सूतः सारथिस्तेनायत आकृष्टो यो रश्मिर्हस्तवध्रस्तेन भुग्ना वक्रिता या ग्रीवा कण्ठस्तदन्तेन संसक्तः संलग्नो युगः काष्ठविशेषो येषां तैः । "पूर्द्वारोपरि कूटं तु सन्तो हस्तिनखं विदुरि"ति । अनीयन्तेति कर्मणि लकारः । यौतेः 'छापूखडिभ्य' इति बाहुलककत्वाद्युगशब्दः ॥ ६७ ॥

**बलोर्मिभिस्तत्क्षणहीयमानरथ्याभुजाया वलयैरिवास्याः ।**
**प्रायेण निष्क्रामति चक्रपाणौ नेष्टं पुरो द्वारवतीत्वमासीत् ॥ ६८ ॥**

भगवति बाहुल्येन निःस[4]रति सति तस्याः पुर्या द्वारवतीत्वं स्वं रूपं नाभिप्रेतं बभूव । स धन्यो देशो यत्र देवस्तिष्ठति[5], तन्मया शून्यया किं क्रियते इत्यबोधीत्यर्थः । अथच द्वारवतीत्वं बहुद्वारत्वं तस्या नष्टमभूत् । यदि हि मम बहूनि द्वाराणि नाभविष्यंस्तत्कथमेकवारमयमयास्यादिति द्वारभूयस्त्वं निनिन्देत्युक्त्याभिहितम् । कीदृशः पुरः, वलयैरिव कटकैर्यथा बलोमिर्भिः सेनावृन्दैस्तत्क्षणं हीयमानास्त्य[6]ज्यमाना रथ्या एव भुजा यस्याः । अन्यस्या अपि महे[7]लायाः पत्युर्देशान्तरं गच्छत आत्मा बहुमतो न भवति, खेदाच्च सा बाहु-

---

१ 'ष्टयः' ख. पाठः । २ 'ग्र' ख. पाठः । ३ 'त' ख. पाठः । ४ 'ष्क्रामति' ख. पाठः । ५ 'वसति' ख. पाठः । ६ 'त्या' ख. पाठः । ७ 'हि' ख. पाठः ।

भ्यां वलयानि त्यजति ॥ ६८ ॥

**पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ।**
**वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥ ६९ ॥**

उदधेर्जलस्य पारे हरिः काननराजीरैक्षत । कीदृशीः, आनीला ईषच्छ्यामाः पलाशराशयः पर्णनिचयाः यासु, अतएवोत्कलिकासहस्रैरूर्मिपूगैरनुक्षणं उत्कूलितं कूलं प्रापितं यच्छैवलं तदाभास्तत्सदृशीः । अथवा वनावलीः शैवलाभा अपश्यत् शेवालमिवेत्युत्प्रेक्षांचक्रे, इत्येवं योज्यमिति केचित् । "पारे मध्ये षष्ठ्या वे"ति समासः, एत्वं च । कूलमुत्प्लावयतीत्युत्कूलयति । "प्रातिपदिकाद्धात्वर्थे" इति णिच् ततः कर्मणि निष्ठा ॥ ६९ ॥

**लक्ष्मीभृतोऽम्भोधितटाधिवासान् द्रुमानसौ नीरदनीलभासः ।**
**लतावधूसंप्रयुजोऽधिवेलं बहूकृतान् स्वानिव पश्यति स्म ॥ ७० ॥**

असौ देवोऽधिवेलं वेलायां ये तरवस्तान् बहूकृताननेकत्वमापादितान् स्वानिव पश्यति स्म आत्मतुल्यान् मेने । बोधोऽत्र दृश्यर्थो नावलोकनमात्रम्, मदीया एवैते बहवो देहा इत्यबोधीत्यर्थः । 'यतो लक्ष्मीभृतः शोभाधारिणो वृक्षांस्तथा समुद्रसैकतवसतीन्, लता एव वध्वस्ताः संप्रयुञ्जते श्लिष्यन्तीति लतावधूसंप्रयुजः । क्विप् । वल्लीसंबद्धानित्यर्थः । येऽपि भगवदात्मानस्तेऽवश्यमेव वक्षसि श्रीभृतः समुद्रजलाश्रया मेघश्यामाश्च सत्यभामारुक्मिणीप्रभृतिवधूसंयुक्ताश्च । वेला अम्भोधेर्जलविकृत[2]मर्यादा ॥ ७० ॥

**आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।**
**फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ७१ ॥**

असौ हरिर्नदीपतिमपस्मारिणं भूताविष्टमाशशङ्केऽबुद्धेत्युत्प्रेक्षांचक्रे । यत आश्लिष्टभूमिमाश्रितध[4]रणिम्, उच्चै[3]र्वेगेन रसितारं शब्दायमानं, लोलन्तश्चञ्चला बाहुसदृशा महान्तस्तरङ्गाः कल्लोला यस्य तं, फेनायमानं दिण्डीरानुद्वमन्तम् । अपस्मार्यपि भूमिमालिङ्गति, उच्चैः रटति च, चपलभुजश्च भवति, फेनं श्लेष्माणं चोद्वमति । "फेनाच्चेति वक्तव्य"मिति क्यङ् ॥ ७१ ॥

**पीत्वा जलानां निधिनातिगर्धाद् वृद्धिं गतेऽप्यात्मनि नैव मान्तीः ।**
**क्षिप्ता इवेन्दोः सरुचोऽधिवेलं[5] मुक्तावलीराकलयांचकार ॥ ७२ ॥**

---

१ 'त' ख. पाठः । २ 'ति' ख. पाठः । ३ 'श्च' ख. ग. पाठः । ४ 'क्षिति' ग. पाठः । ५ 'तीरं' क. ग. पाठः ।

स हरिरधितीरं तटेषु मुक्तावलीमौक्तिकानि आकलयाञ्चकार ददर्श । उत्प्रेक्षते—समुद्रेणातिलाम्पट्याच्छशिभास इव पीत्वा क्षिप्ता उद्वान्ताः । यत आत्मनि वृद्धिं गत उल्लसितेऽपि नैव मान्तीर्वर्तमानाः । शशिकरव्यतिकरात् किलोदधिरुल्लसतीत्यागमः । अन्योऽपि बहु जग्ध्वा पीत्वा चोद्वमतीति ॥ ७२ ॥

**साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।**
**तान्येकदेशान्निभृतं पयोधौ सोऽम्भांसि मेघान् पिबतो ददर्श ॥७३॥**

स देवोऽब्धौ[1] जलदानैक्षत । कीदृशान्, तानि तोयानि नि[2]भृतमेकदेशान् गृह्णतः । कानीत्याह—यैरम्भोभिरमी मेघाः साटोपं साडम्बरं गर्जन्तः सन्तो भूमिं परितः प्लावयिष्यन्ति कल्पान्ते जलमग्नां करिष्यन्ति इति प्रथिमकथनमब्धेः । यैः किल जलैरुर्वी पूर्यते स तस्यैकदेशः । अन्योऽपि कश्चिन्महाधनः कस्मैचित् स्वल्प[3]मपि तावद्ददाति येन समग्रमेव पुरमदरिद्रं कुरुते । आटोपास्फोटाडम्बरक्षोभा इत्यनर्थान्तरम् ॥ ७३ ॥

**उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव संप्रणीताः ।**
**आलोकयामास हरिः पतन्तीर्नदीः स्मृतीर्वेदमिवाम्बुराशिम् ॥७४॥**

नारायणोऽर्णवं प्रविशन्तीर्निम्नगा द[4]दर्श । का इव [5]कं पतन्तीरित्याह—स्मृतीर्मन्वादिप्रणीतानि शास्त्राणि यथा वेदं पतन्त्यन्तर्भवन्ति तेन सहैकार्थ्यं यान्ति । अर्थसारूप्यमेव स्मृतीनां श्रुतिषु पातः । कीदृशीर्नदीः, मुनितुल्यैर्मेघैस्तत एव जलधेरेव जलं गृहीत्वा[6] रचिताः । मेघमुखेन समुद्रादेव हि नदीनामुत्पत्तिः । स्मृतयोऽपि मन्वादिभिः ऋषिश्रेष्ठैर्वेदाभिधेयं गृहीत्वा संप्रणीता निर्मिताः । यदा हि वेदान्न कश्चिद्बुध्यते, तदा हि लोकहिताय मुनिभिस्तदर्थ एव स्मृतिषु निबद्धः, अन्ते च तत्रैव ता लीयन्ते । मेघा मुनिभिरुपमीयन्ते, तोयमर्थेन, नद्यः स्मृतिभिरुदधिर्वेदेनेतीवादयोऽनेके एव न्याय्याः इत्यभियुक्ताः । यथा कालिदासस्य । "ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् । शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिवे"ति ॥ ७४ ॥

**विक्रीय दिश्यानि धनान्युरूणि द्वैप्यानसावुत्तमलाभभाजः ।**
**तरीषु तत्रत्यमफल्गु भाण्डं सांयात्रिकानावपतोऽभ्यनन्दत् ॥ ७५ ॥**

---

१ 'र्धै' क. पाठः । २ 'निः शब्द' क. ग. पाठः । ३ 'ल्पामपि श्रियं' क. पाठः । ४ 'अपश्यत्' ख. पाठः । ५ 'कथं' ख. पाठः । ६ 'त्वा संप्रणीताः' क. पाठः ।

असौ हरिः सांयात्रिकान् पोतवणिजोऽभ्यनन्दत् श्रद्दधे, तानग्रतः शकुनभूतानालोक्य तुतोषेत्यर्थः । कीदृशान्, द्वैप्यान् द्वीपान्तरजातान्, तथा तत्रत्यं सामुद्रमफल्गु उत्तमं भाण्डमर्थं तरीषु पोतेषु आवपतो निक्षिपतः, राशीकुर्वाणानित्यर्थः । किं कृत्वा आवपतः, दिश्यानि दिगन्तरभवानि उरूणि महा[1]मूल्यानि धनानि तत्रान्यत्र वा विक्रीय तथोत्तममन्यूनं लाभमधिकधनं भजन्त इति उत्तमलाभभाजः । मूल्यादतिरिक्तं द्रव्यं लाभः । अन्यतो भाण्डमानीय तत्र विक्रीणानास्तत्रत्यं चान्यतो नयन्त इत्यर्थः । दिशि भवं दिश्यम् । "दिगादिभ्यो यत्" । द्वीपे भवा द्वैप्याः । "द्वीपादनुसमुद्रं यञ्" । लघु यानपात्रं तरी । तत्रत्यमिति "अव्ययात्त्यप्" । संयात्य[2]नेनेति संयात्रं यानपात्रम् । ष्ट्रन् । तेन तरन्ति प्लवन्तीति सांयात्रिकाः पोतवणिजः । "तरती"ति ठक् । आवपत इति शत्रन्तः ॥ ७५ ॥

**उत्पित्सवोऽन्तर्नदभर्तुरुच्चैर्गरीयसा निःश्वसितानिलेन ।**
**पयांसि भक्त्या गरुडध्वजस्य ध्वजानिवोच्चिक्षिपिरे फणीन्द्राः ॥७६॥**

सर्पश्रेष्ठा बलवता शूत्का[3]रेण तोयान्युच्चिक्षिपिरे उपरि प्रैरयन् । यतो नदभर्तुः समुद्रस्यान्तर्मध्यादुत्पित्सव उत्पतितुकामाः । जातिस्वभाव एव तेषां यदुत्पित्सवः शूत्कृतैर्जलान्यूर्ध्वं प्रेरयन्तीति । उत्प्रेक्ष्यते—कृष्णस्य सेवया उच्चानि चिह्नानीवोच्चिक्षिपुः । यतोऽसौ गरुडध्वजः गरुडश्चाहिभक्षकोऽतएव सातङ्कत्वमस्मा[4]न्निवर्त्तयेदिति बुद्ध्या शौरिं ध्वजधारणेनासेवन्तेत्यर्थः । उत्पित्सव इति "सनि मीमाघुरभलभशकपतपदामच" इति इसि अभ्यासलोपश्च । उच्चिक्षिपिरे इति कर्त्तरि लकारः ॥ ७६ ॥

**तमागतं वीक्ष्य युगान्तबन्धुमुत्सङ्गशय्याशयमम्बुराशिः ।**
**प्रत्युज्जगामेव गुरुप्रमोदप्रसारितोत्तुङ्गतरङ्गबाहुः ॥ ७७ ॥**

सोल्लासत्वादुच्चवीचित्वाच्चाब्धेः कविरुत्प्रेक्षते—तं कृष्णमागतमालोक्य उदधिः प्रत्युज्जगामेवाग्र इव निर्ययौ यतो युगान्तबन्धुम् । कुतः कल्पान्तसुहृत्त्वं तस्येत्याह—उत्सङ्गशय्याशयमिति । कस्मादेवं भगवानुत्प्रेक्ष्यते इत्याह—गुरुणा प्रमोदेन हर्षेण प्रसारिता दीर्घीकृता उन्नतास्तरङ्गाः कल्लोला एव बाहवो येन स तथोक्तः । यो हि देशान्तरादागतस्य सुहृदः प्रत्युद्गच्छति स आ-

---

१ 'बहु' क. पाठः । २ 'त्यपोऽनेन' ख. पाठः । ३ 'कृतेन' क. ग. पाठः । ४ 'स्माकं' क. ग. पाठः ।

लिङ्गनाय हर्षेण बाहू प्रसारयति । शेरतेऽस्यामिति शय्या । "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इति क्यप् । "अधिकरणे शेते"रित्यच् ॥७७॥

**उत्सर्जिताम्भःकणिको नभस्वानौदन्वतः स्वेदलवान् ममार्ज ।**
**तस्यानुवेलं व्रजतोऽतिवेलमैलालतास्फालनलब्धगन्धः ॥ ७८ ॥**

तस्य हरेर्वेलासमीपे[3] व्रजत औदन्वतः सामुद्रो नभस्वान् मारुतः स्वेदलवान् घर्मकणिका अतिवेलमतिशयेन ममार्ज निरास । कीदृग्वायुः, उत्सर्जिता ऊर्ध्वीकृता इतस्ततः प्रेरिताः, अथवा उत्सङ्गिताः मध्ये गृहीता अम्भःकणिका जलविप्रुषो येन, तथा ऐलालतानामास्फालनेन भङ्गेन लब्धो गन्धः सौरभं येन । अनुवेलमिति सामीप्ये विभक्त्यर्थेऽव्ययीभावः । वेलामतिक्रान्तमतिवेलमिति क्रियाविशेषणम् ॥ ७८ ॥

**उत्तालतालीवनसंप्रवृत्तसमीरसीमन्तितकेतकीकाः ।**
**आसेदिरे लावणसैन्धवीनां चमूचरैः कच्छभुवां प्रदेशाः ॥ ७९ ॥**

सैनिकैः क्षारोदधिसम्बन्धिनीनां तटभूमीनां भागा आसेदिरे प्राप्ताः । कीदृशाः, उत्तालमुन्नतं यत् तालीवनं वृक्षविशेषकाननं ततः संप्रवृत्तो निःसृतो यः समीरः सदागतिस्तेन सीमन्तिता द्विधाकृताः केतक्यो लताभेदास्तत्कुसुमानि वा यत्र ते तथोक्ताः इति सौगन्ध्योक्तिः । "नद्यृतश्चे"ति कप् । सीमन्तशब्दोऽत्रौपचारिकः । केतक्य इति पुष्पविवक्षायां "पुष्पमूलेषु बहुल"मिति विकाराणो लुक् । आसेदिरे कर्मणि लकारः । लवणसिन्धुरपरसमुद्रः तस्येमा लावणसैन्धव्यः "हृद्भगसिन्ध्वन्तपूर्वपदस्ये"ति उभयपदवृद्धिः । कच्छः तटं तटनिकटे वा विषमो भागः ॥ ७९ ॥

**लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः ।**
**आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमापुः ॥ ८० ॥**

ते चमूचरा अब्धिसकाशादभ्यागतस्यातिथेः संबन्धिनीं प्रतिपत्तिं पूजामापुर्लेभिरे । यथा आगन्तुकाः पूज्यन्ते तथा समुद्रेण तेऽर्चिता इत्यर्थः । तथा लवङ्गमालाभिः सुगन्धिवृक्षस्रग्भिराकलिता ग्रथिता अवतंसाः शेखरा यैः । तथा नारिकेलस्य सुरभिफलविशेषस्याभ्यन्तरे या आपो रसास्ताः पिबन्तः,

---

१ 'ञ्जि' ग. पाठः । २ 'फला' ग. पाठः । ३ 'पेन' क. ग. पाठः । ४ 'ञ्जि' ग. पाठः । ५ 'फलानां' ग. पाठः ।

तथा आस्वादितान्यार्द्राणि सरसानि क्रमुकाणि पूगफलानि यैस्ते तथोक्ताः । योऽप्यभ्यागतस्तस्मै पुष्पाणि ताम्बूलं च दीयते । नारिकेलान्तरपः इति पृथक् पदे अन्तःशब्दोऽधिकरणप्रधानम् । सर्गेऽत्र वृत्तमुपजातयः ॥ ८० ॥

**तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः**
**प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।**
**परिचलतो[1] बलानुजबलस्य पुरः सततं धृतश्रिय-**
**श्चिरविगतश्रियो जलनिधेश्च[2] तदाभवदन्तरं महत् ॥८१॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये यात्रावर्णनं नाम
तृतीयः सर्गः ॥ ३ ॥

बलो हलधरस्तस्यानुजो भ्राता कनीयान् विष्णुस्तस्य बलं सैन्यं तस्य पुरः पुर्याः परिचलतः सतः सलिलनिधेरम्बुनिधेश्च तदा महदन्तरं व्यवधानमभवत्, समुद्राद् दूरङ्गतं तदेत्यर्थः । अथवा अन्तरं विशेषो महानेव तदाभवदित्युक्त्या कथितम् । तमेव विशेषं विशेषणद्वारेणाह—कीदृशस्य सैन्यस्य, तुरगशतैरश्वीयैः समन्तादाकुलस्य व्याप्तस्य, सलिलनिधेः पुनः परं केवलमेकतुरङ्गस्योच्चैःश्रवसो जन्मोत्पत्तिर्यतस्तस्य एकतुरङ्गजन्मनः, बलस्य प्रतिपथं मार्गे मार्गे प्रमथिताश्चूर्णीकृता भूभृतो विपक्षा राजानो [3]गिरयो वा येन तस्य प्रमथितभूभृतः । उदधेः पुनरत्यर्थं महीभृता मन्दरेण मथितस्य, बलस्य सर्वदा धृतश्रियः सश्रीकस्य शोभायुक्तस्य वा, अम्बुधेः पुनश्चिरं बहुकालं विगता निवृत्ता श्रीर्लक्ष्मीपतिभार्या यस्या एवं बलमश्वीयैर्वृतं मथितभूभृत्सश्रीकं च । समुद्रस्तु निस्तुरङ्गो भूभृता मथितो निश्रीकश्चेति महदेवान्तरमनयोरभूत् । व्यतिरेकोऽलङ्कारः । रचिता वृत्तम् । निर्मयुर्मृगगुरू? (नजभजजा जरौ नरपते) रचिता सतां द्विजेति? भद्रम् ॥ ८१ ॥

इति श्रीमहामहोपाध्यायवर्य्य–आनन्ददेवायनि–वल्लभदेवाचार्य्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषधव्याख्यायां
यात्रावर्णनं तृतीयः सर्गः ॥ ३ ॥

---

१ 'चरतः' क. ग. पाठः । २ 'सलिलनिधेः' क. पाठः । ३ 'पर्वताः ग. पाठः ।

अथ

# शिशुपालवधकाव्ये ।

## चतुर्थः सर्गः ।

**निश्वासधूमं सह रत्नभाभिर्भित्त्वोत्थितं भूमिमिवोरगाणाम् ।**
**नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥ १ ॥**

असौ हरिर्गच्छन् रैवतकाख्यं पर्वतं ददर्श[1] । कीदृशं, नीलोपलैरिन्द्रनीलमणिभिः स्यूता सम्बद्धा विचित्रा नानाविधा धातवो गैरिकामनःशिलादयो यस्य तम् । अतश्चोत्प्रेक्ष्यते—भूमिं भित्त्वा शिरोमणिदीप्तिभिः सह सर्पाणां निःश्वासधूमं शूत्कृतोष्माणमिवोत्थितमुद्गतम् । धूमस्थानीया नीलोपलाः, रत्नरुचिनिभा धातवः । उरसा गच्छन्तीत्युरगाः। "उरसो लोपश्चे"ति डः सलोपश्च। इदानीं सर्गान्तं यावत् तद्वर्णनम् । इन्द्रवज्रोपेन्द्रवज्रासंयोगेन द्वादशभेदा उपजातयः । वृत्तमत्र प्रथमं निरूपितम् ॥ १ ॥

**गुर्वीरजस्रं दृषदः समन्तादुपर्युपर्यम्बुमुचां वितानैः ।**
**विन्ध्यायमानं दिवसस्य कर्त्तुर्मार्गं पुरो रोद्धुमिवोन्नमद्भिः ॥ २ ॥**

अन्यच्च कीदृशं तम्[2], उत्प्रेक्ष्यते—दिवसस्य कर्तुर्दिनकृतोऽग्रतो मार्गं रोद्धुं निवारयितुमिवोन्नमद्भिर्मेघैर्विन्ध्यायमानम् । विन्ध्येन हि आत्मानमुच्चीकृत्य सूर्यस्य गतं निवर्तितमासीदित्यागमः । इवशब्दोऽत्र युक्ततरः, कवयस्त्वन्यथा प्रयुञ्जते । विन्ध्य इवा[3]चरति विन्ध्यायते । "कर्तुः क्यङ् सलोपश्च" । दृषद उपर्युपर्येति पूर्ववत् ॥ २ ॥

**क्रान्तं रुचा काञ्चनवप्रभाजा नवप्रभाजालभृतां मणीनाम् ।**
**श्रितं शिलाश्यामलताभिरामं लताभिरामन्त्रितषट्पदाभिः ॥ ३ ॥**

अन्यच्च कीदृशं नगं, नवप्रभाजालभृतां महारुचिपुञ्जो[4]द्धारिणां मणीनां रुचा

---

१ 'ऐक्षत' ख. पाठः । २ 'विन्ध्यायमानं किं कर्त्तुमिव दिवसस्य कर्त्तुः सूर्यस्य पुरो मार्गं रोद्धुमिव कैरम्बुमुचां मेघानां वितानैः । विन्ध्येन हि आत्मानमुच्चीकृत्य गतिनिवर्त्तनं कृतमासीत्' ख. पाठः । ३ 'आचरणमाणं' विन्ध्यामानं' क. पाठः । ४ 'अधा' ख. पाठः ।

भासा क्रान्तम् । कीदृश्या रुचा, काञ्चनस्य सुवर्णस्य यद्भ्रं तटं तद्भजते श्रयते वा तया । तथा लताभिर्वल्लीभिः श्रितमासेवितम् । कीदृशीभिः, सौरभवशादामन्त्रिता आहूता इव षट्पदा भ्रमरा याभिः । तथा शिलानां श्यामलतया कार्ष्ण्येनाभिरामं हृद्यम् । श्याम एव श्यामलः । अथवा श्यामं गुणं लान्ति गृह्णन्तीति श्यामलास्तद्भावः श्यामलता, श्यामत्वयुक्ताभिः शिलाभिरभिराममित्यर्थः ॥ ३ ॥

**सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम् ।**
**विलोचनस्थानगतोष्णरश्मिनिशाकरं साधुहिरण्यगर्भम् ॥ ४ ॥**

अनेकगणनैः शिखरैः प्रत्यन्तशैलैश्च खावनी[1] व्याप्य स्थितम् । विलोचनस्थानं मध्यप्रदेशस्तत्र स्थितावर्केन्दू यस्येति उच्चत्वोक्तिः । तथा साधु शोभनं हिरण्यं गर्भे यस्य तं साधुहिरण्यगर्भम् । अथच साध्वखण्ड[2]नमेव हिरण्यगर्भं ब्रह्माणमित्यधिकश्लेषः । धातापि[3] शिरोभिः खं चरणैश्च भुवमापूर्य स्थितश्चक्षुषो[4] श्चन्द्रार्कौ वहति । उक्तश्च—"सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपा"-दिति । तथा च—"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नम"इति ॥ ४ ॥

**क्वचिज्जलापायविपाण्डुराणि धौतोत्तरीयप्रतिमच्छवीनि ।**
**अभ्राणि बिभ्राणमुमाङ्गसङ्गविभक्तभस्मानमिव स्मरारिम् ॥ ५ ॥**

नगं क्वचित्प्रदेशे न सर्वत्र मेघानुद्वहन्तम् । कीदृंशि अभ्राणि, तोयवृष्ट्या सितानि अत एव क्षालितोत्तरासङ्गसमकान्तीनि, अतश्च[5] क्वचिदेव सौवर्णोद्देशे मेघैरवच्छादितं तदा स्मरारिमिव गौरीश्वरतुल्यम् । कीदृशं हरं[6], उमाङ्गसङ्गेन गौरीशरीरयोगेन विभक्तं विभागेनावस्थितं भस्म यस्य तम् । सौवर्णभागस्योमाङ्गमुपमानं, सिताभ्रपिहितस्य तु हरभागः । सौवर्णत्वं तु रैवतकस्य सुमेरुशृङ्गैर्विरचितत्वात् प्रसिद्धम् ॥ ५ ॥

**छायां निजस्त्रीचटुलालसानां मदेन किञ्चिच्चटुलालसानाम् ।**
**कुर्वाणमुत्पिञ्जलजातपत्त्रैर्विहङ्गमानां जलजातपत्त्रैः ॥ ६ ॥**

विहङ्गमानां हंसभ्रमरादीनां जलजातपत्त्रैः पुण्डरीकच्छत्त्रैश्छायां विदधा-

---

१ 'आकाशं' 'चावनिंच' क. ख. पाठः । २ 'ण्डमे' । ३ 'हि' क. पाठः । ४ 'षा चन्द्रादित्यौ' क. पाठः । ५ 'च यदा' क. ग. पाठः । ६ 'तं' ख. पाठः ।

नम् । कीदृग्भिः, उत्पिञ्जलानि ऊर्ध्वानि कपिशानि च जातानि पत्राणि येषां तैरुत्पिञ्जलजातपत्रैः । उच्छब्द ऊर्ध्वार्थः । पिञ्जलमेव पिञ्जरं रलयोरैक्यत्वस्मरणात् । केचित् तूत्पिञ्जलमाकुलमाहुः । विहङ्गमानां निजस्त्रीषु सहचरीषु चटु चाटु प्रियं तत्र लालसाभिलाषो येषां, तथा मदेन मकरन्दपानोत्थया क्षीबतया किञ्चिच्चटुलानां चपलानामलसानां च मन्थराणाम् ॥ ६ ॥

**स्कन्धाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।**
**प्रनर्तितानेकलताभुजाग्रान् रुद्राननन्तानिव धारयन्तम् ॥ ७ ॥**

उर्वीरुहो वृक्षान् बहून् बि[1]भ्राणम् । कीदृशान्, स्कन्धे प्रकाण्डेऽधिरुढाः स्थिता उज्ज्वला हृद्या नीलकण्ठा मयूरा येषां, तथा अहीन्द्रैर्महोरगैः श्लिष्टतनूनालिङ्गितवपुषः, प्रनर्त्तिता वायुवशाच्चालिता अनेका लता एव भुजाग्राणि यैस्तश्च रुद्रानिव रुद्रतुल्यान् । उपमा । तेषामपि स्कन्धेऽधिरूढो विश्रान्तो नीलः कालकूटश्यामलः कण्ठः । अहीन्द्रेण वासुकिना च वेष्टितदेहान्, प्रनर्त्तितानि अभिनयीकृतानि अनेकानि लतातुल्यानि भुजाग्राणि यैस्तान् अ[2]नन्तानेकादशाख्यया वा ॥ ७ ॥

**विलम्बिनीलोत्पलकर्णपूराः कपोलभित्तीरिव रो[3]ध्रगौरीः ।**
**नवोलपालंकृतसैकताभाः शुचीरपः शैवलिनीर्दधानम् ॥ ८ ॥**

अपो दधानं तोयानि वहमानम् । कीदृशीः शुचीर्निर्मलाः, शैवलिनीः शैवलयुक्ता अतश्च नवोलपेनाशुष्कतृणविशेषेणालङ्कृतं यत्सैकतं तटं तस्या[4]भा कान्तिर्यासां तत एव कपोलभित्तीरिव गण्डस्थ[5]लीतुल्या । कीदृशीः कपोलभित्तीः, विलम्बि साधु विलम्बमानं नीलोत्पलं कर्णाभरणं यासां, तथा रोध्रेण रजोभेदेन गौरीरवदाताः । अपामुपमानं कपोलभित्तयः, सैकतस्य शैवलस्य तु [6]उपलकुवलये । केचित्तु सर्वाण्येतानि विशेषणानि उपमामेव व्याचक्षते । उपमानं कपोलभित्तेरेव तत्र श्लेषः । सिकता विद्यन्ते यत्र तत् सैकतम् "सिकताशर्कराभ्यां च, देशे लुबिलचौ चे"त्यण् । उलपं नीलतृणम् ॥ ८ ॥

**राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ।**
**कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥९॥**

---

१ 'धारयन्तम्' ख. पाठः । २ 'अनेकान्' क. पाठः । ३ 'ध्र' ख. पाठः । ४ 'स्येवा' क. पाठः । ५ 'ल' ख. पाठः । ६ 'रोध्रक' ख. पाठः ।

राजीवराज्यः पद्मावल्यस्तत्र वशा आयत्ता लोलाश्चटुला भृङ्गा भ्रमरा यत्र तं, तथा तरूणां ततिभिर्वृक्षाणामावलिभिरुष्णं घर्मं मुष्णन्तमपहरन्तं, कान्तो मनोहरोऽलकानां ललाटपतितकेशानामन्तोऽग्रं यासां ताः कान्तालकान्ताः, सुराणां ललना देवयोषितः उद्वहन्तं बिभ्रतं,[1] रक्षोभिर्यातुधानैरक्षोभितमनुपद्रुतमित्यर्थः ॥ ९ ॥

**मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।**
**भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥१०॥**

यस्य संबन्धिन उच्छ्रायसौन्दर्यगुणाः प्रांशुत्वरामणीयकविशेषाः कवीनां मृषोद्या मिथ्याकथनीया न भवन्ति, कविभिरलीका नोच्यन्ते इत्यर्थः । कवीनामिति कर्त्तरि षष्ठी । मृषा उद्यन्ते इति मृषोद्याः कर्मणि[2] क्यप् । कवीनां च मिथ्यावाक्त्वं प्राप्तं यतस्ते उद्दामगिरो विशृङ्खलवाचः स्वतन्त्रभारतीकास्तेऽवश्यमेवाधिकार्थवचनशीलाः । कथं तर्हि न मृषोद्या इत्याह—सुरैः कर्तृभिर्मेरोः शृङ्गैः कनकशिखरिशिखरैरुपचितस्यानीय प्रकृतत्वान्मेरुशिखराण्येव । किमर्थम्, नारायणस्य तुष्ट्यै । एवं च यः सुरपर्वतशिखर[3]रचितस्तत्रापि दैवैः साक्षादच्युतप्रीतये तस्य कथमिव[4] न सारूप्यं सम्भाव्यते इति कवीनां तद्गुणा मृषोद्या न भवन्तीत्युचितम् । उच्छ्राय इति "उदि श्रयतियौतिपूद्रुवः" ॥१०॥

**यतो महार्घाणि भृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।**
**आढ्यादिव प्रापणिकादजस्रं जग्राह रत्नान्यमितानि लोकः ॥११॥**

यतो यस्माद्रैवतकात् जनः सदा रत्नान्यमितान्यसंख्यानि जग्राहाददे । कीदृंशि, महार्घाणि बहुमूल्यानि परार्घ्यानीत्यर्थः । तथा अनूनैर्महाप्रमाणैर्भूरिभिरखिलैः प्रस्थैः सानुभिर्भृतानि ऊढानि । तथा उद्गता शिखा दीप्तिर्येषां तान्युच्छिखानि विपुल[5]भांसि । कुत इवेत्याह—आढ्यादीश्वरात् प्रापणिकाद्वणिजो[6] यथा लोको मणीन् गृह्णाति । तस्यैश्वर्यात् प्रस्थैर्दारुमयैः परिमाणविशेषैर्ह्रियन्ते नीयन्ते । शेषं समानम् ॥ ११ ॥

**अखिद्यतासन्नमुदग्रतापं रविन्दधानेऽप्यरविन्दधाने ।**
**भृङ्गावलिर्यस्य तटे निपीतरसा नमत्तामरसा न मत्ता ॥ १२ ॥**

---

१ 'बिभ्राणं' क. ग. पाठः । २ 'कर्तरि' ख. पाठः । ३ 'वि' ग. पाठः । ४ 'इव वैरूप्यं ख. पाठः । ५ 'कान्तीनि' ख. पाठः । ६ 'वणिजकात्' ख. पाठः ।

यस्य तटे रोधसि भृङ्गावलिश्चञ्चुरीकश्रेणिर्[1]नाखिद्यत न[2] खिन्ना । खेद-कारणमाह—कीदृशि तटे, रविं दधाने अर्कं बिभ्रति । कीदृशम्, आसन्नं निकटं, तथा उदग्रतापमुल्ल्वणभासम् । एवं खेदो युक्तः । तथा अरविन्दानां धाने स्थाने, अरविन्दानि धीयन्तेऽस्मिन्निति अरविन्दधानम् । कथं तर्हि न खिन्ने-त्याह—मत्तेत्यादि । किमिति क्षीबेत्याह—निपीतरसास्वादितमधुः, तथा नम-न्ति तामरसान्यब्जानि यस्याः सा नमत्तामरसेति खेदाभावे हेत्वन्तरम् । न म-त्तेति नञ् क्रियापदेन योज्यः । नहि रवेः सुमेरोरन्तरम् । खिद दैन्ये इति दिवादौ स्वरितेत्पठ्यते । अखिद्यतेति कर्त्तरि रूपम् । यथा—"किं नाम खिद्यते गुरु"रिति भट्टनारायणस्य ॥ १२ ॥

**यत्राधिरूढेन महीरुहोच्चैरुन्निद्रपुष्पाक्षिसहस्रभाजा ।**
**सुराधिपाधिष्ठितहस्तिमल्ललीलां दधौ राजतगण्डशैलः ॥ १३ ॥**

यत्र रूप्यपाषाणो विकसितकुसुमनयनदशशतीयुक्तेनोच्चतरुणा उपरिस्थि-तेन हेतुना शक्राधिरूढैरावणशोभां बभार । इन्द्रसनाथस्यैरावणस्य शोभा यत्र रूप्याश्मानं कुसुमिततरुभूषितमनुचकारेत्यर्थः । हस्तिश्रेष्ठो गण्डशैलस्योपमानं, शक्रो वृक्षस्य, पुष्पाणामक्षिसहस्रम् । महान्[3] मुक्तपाषाणो गण्डशैलः ॥ १३ ॥

**विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।**
**रत्नैः पुनर्यत्र रुचं रुचा स्वामानिन्यिरे वंशकरीरनीलैः ॥ १४ ॥**

यत्र रवेः रथ्या अश्वा रत्नैः सर्वव्यापिन्या रुचा करणेन भूय आत्मीयव-र्णमानिन्यिरे प्रापिताः । स्वकान्तित्यागे कारणमाह—गरुडस्याग्रजेनारुणेन वि-भिन्नवर्णाः च्युतनीलिमानः रक्तत्वं नीता इत्यर्थः । कैः रत्नैरित्याह—वंशाङ्कुर-हरितैर्मरकतैरित्यर्थः । ययवोऽपि शिरीषवर्णाः । तद्गुणोऽयमलङ्कारः । रथं वहन्तीति रथ्याः[4] ॥ १४ ॥

**यत्रोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिर्न समुन्नमद्भिः ।**
**वनं बबाधे विषपावकोत्था विपन्नगानामविपन्नगानाम् ॥ १५ ॥**

यत्र नगानां तरूणां वनं काननं समूहं वा विषाग्निसमुद्भवा विपद् दाहो न बबाधे । विषस्य कारणमाह—अविपन्नगानां सर्पसहितानां, न विगता प-

---

१ 'माला' क. पाठः । २ 'नो' ग. पाठः । ३ 'महान्तो मुक्ताः' ख. पाठ । ४ 'तद्वहति रथयु-गप्रासङ्गं । आनिन्यिरे इति कर्मणि लकारः । ख. पुस्तके अधिकः पाठः ।

न्नगा येषामिति कृत्वा । कथं तर्हि वनं न दग्धमित्याह—मेघैर्वृष्टाभिरद्भिर्जलैः समुन्नमार्द्रीकृतम्, अतस्तदग्निना न बाध्यते । समुन्नमद्भिरुन्नतैर्मेघैर्वर्षार्थं गृहीतयत्नैरित्यर्थः । नञ् क्रियापदेन योज्यः । बबाधे इति कर्त्तरि । समुन्नमित्युन्देः क्तः ॥ १५ ॥

**वमद्भिरुष्णांशुकरावमर्षात् कार्षाणवं धाम पतङ्गकान्तैः ।**
**शशंस यः पात्रगुणाद्गुणानां सङ्क्रान्तिराक्रान्तगुणान्तरेति ॥१६॥**

योऽद्रिः सूर्यकान्तैरर्ककिरणसंसर्गादाग्नेयं धाम वमद्भिः करणैरिति शशंस आख्यत् । किम्, गुणानां विशिष्टानां सङ्क्रान्तिः स्थानान्तरगमनं, सा पात्रगुणादाधारविशेषाद्धेतोराक्रान्तगुणान्तरा अधिष्ठितविशेषान्तरा भवतीति । यदि ह्येवं न स्यात्तदैव सूर्यतेजः सूर्यकान्तगतमाग्निमुदवमदिति भावः । तथा च भारविः—"प्राप्यते गुणवतापि गुणानां व्यक्तमाश्रयवशेन विशेषः । तत्तथाहि दयिताननदत्तं व्यानशे मधुरि[1]मातिशयेने"ति ॥ वाक्यार्थस्य समग्रस्येतिना[2]त्र सम्बन्धाद् द्वितीयाभावः । यथा—'क्रमादमुं नारद इत्यबोधि सः, इति पूर्व[3]पाठो रम्यतरः । सङ्क्रान्तिमिति पाठे सङ्क्रान्तिं शशंसेति योज्यम् । विशेषणे शब्दे सति प्रातिपदिकार्थे च स्थापनाद्द्वितीयाभावः । कृषाणोरिदं कार्षाणवम् । पतङ्गः सूर्यः ॥ १६ ॥

**दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान ।**
**क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ॥ १७ ॥**

स पर्वतो मुहुर्मुहुरवलोकितोऽपि हरेः प्रथमं दृष्ट इव[4] विस्मयमाततान कुतूहलमवर्धयत् । ननु यदसकृन्निरूपितं तन्न कुतूहलस्यावसर इत्याशङ्क्य साधकमर्थान्तरं न्यस्यति–रामणीयकस्य स एव स्वभावो यदनुमुहूर्तं वस्तु नवतामुपैति अपूर्वमिव भवति, यथा भारतरामायणौ । मुहुःशब्दो वीप्सायां बोद्धव्यः ॥ १७ ॥

**उच्चारणज्ञोऽथ गिरां दधानमुच्चा रणत्पक्षिगणास्तटीस्तम् ।**
**उत्कंधरं द्रष्टुमवेक्ष्य शौरिमुत्कं धरं दारुक इत्युवाच ॥ १८ ॥**

अथानन्तरं दारुकः सूतसुत इति वक्ष्यमाणमूचे । किं कृत्वा, कथने निमित्तमाह—हरिं रैवतकाचलं द्रष्टुं सकौतुकमवेक्ष्य बुद्ध्वा विचार्य, उच्चा रणत्पक्षिगणा उच्चकूजद्विहगश्रेणीस्तटीः रोधांसि बिभ्राणम् । कीदृशः, गिरामुच्चा-

१ 'रता' ग. पाठः । २ 'नान्यत्र' क. ग. पाठः । ३ 'वस्तु' ग. पाठः । ४ 'इति' क. पाठः ।

रणश्चः । एताः उपजातयः । अधुना नानावृत्तानि ॥ १८ ॥

**आच्छादितायतदिगम्बरमुच्चकैर्गा-**
**माक्रम्य च स्थितमुदग्रविशालशृङ्गम् ।**
**मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-**
**मुद्वीक्ष्य को न भुवि विस्मयते नगेशम् ॥१९॥**

एनं नगेशमद्रिश्रेष्ठं रैवतकमुद्वीक्ष्य दृष्ट्वा भुवि संसारे को न विस्मयते न चित्रीयते, सर्व एव कौतुकं यातीत्यर्थः । तेन स्थाने तव विस्मय इति भावः । कीदृशमेनम्, आच्छादिताः पिहिता आयता दिशो दीर्घाः ककुभोऽम्बरं चाकाशो येन, यत उच्चकैरुन्नतं । तथा गां भूमिमाक्रम्या[1]ध्यस्य स्थितम्, उदग्राण्युच्चानि विशालानि विस्तीर्णानि शृङ्गाणि शिखराणि यस्य, अत एव मूर्ध्नि स्खलन्ती मार्गाभावाद्विह्व[2]ला तुहिनदीधितिकोटिश्चन्द्रकला यस्य तम् । अथचैनं नगेशं गिरिशतुल्यं साक्षाद्भुवि वीक्ष्य को नाश्चर्यं यायादित्यधिकश्लेषः । कीदृशं शिवम्, आच्छादिताः पिहिता आयता दिश एवाम्बरं वासो येन तं । 'दिगम्बरो हि भगवान्' । तथा उन्नतं तीक्ष्णं विशङ्कटविषाणं च गां वृषमधिष्ठाय स्थितं, तथा शिरसि स्खलन्ती शशिकला यस्य तम् । एनमित्यत्रैतं पठनीयमन्वादेशाभावादेनादेशस्याप्राप्तेः । "तभौ जौ वसन्ततिलकं गुरुकद्वयं च"दिति॥१९॥

**उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।**
**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥२०॥**

अयं गिरिः रैवतकाचलो विलम्बि स्रंसमानं यद्घण्टाद्वयं किंकिणीयुगलं तेन परिवारितः परिवृतो भूषितो यो वारणेन्द्रो हस्तिश्रेष्ठस्तस्य[3] शोभां वहति धारयति । घण्टाशोभितं द्विरदमनुकरोतीत्यर्थः । कदा, सूर्ये उद्गच्छति शिशिनि चास्तं याति । कीदृशे, विततः प्रसृता अतिदीर्घा रश्मय एव रज्जवो यस्येत्युभयविशेषणम् । घण्टे अपि रज्जुष्वग्रे ग्रथ्येते । अर्केन्द्वोर्घण्टे उपमानं, रज्जवो रश्मीनां, नगस्य करी । अनेनैव[4] श्लोकेन कविना घण्टामाघ इति नाम लब्धम् । इटकिटकिटी गताविति केचिदीकारप्रश्लेषं वर्णयन्ति, तस्योदयतीति रूपम् । केचित् स्वरितेन्मध्येऽय गताविति पठन्ति । 'भजाति जगति नौ ततः परौ यौ नजसहितैर्जरगैश्च पुष्पिताग्रा' इति ॥ २० ॥

---

१ 'व्याप्य' क. पाठः । २ 'शाला' ख. । ३ 'स्य लीलां' क. ग. पाठः । ४ 'एक' ख. पाठः ।

**वहति यः परितः कनकस्थलीः सहरिता लसमाननवांशुकः ।**
**अचल एष भवानिव राजते सहरितालसमाननवांशुकः ॥ २१ ॥**

एषोऽचलो[1] भवानिव राजते शोभते । यः सहरिताः सदूर्वाः काञ्चनभूमीर्वहति, तथा सौवर्णत्वाल्लसमाना द्योत[2]माना नवा अजर्जरा अंशवो भासो यस्य स लसमाननवांशुकः । "शेषाद्विभाषे"ति कप् । लसमान इति ताच्छील्ये । तथा सह हरितालसमानैर्नवांशुकैर्वर्तत इति सहरितालसमाननवांशुकः पीतवासा इत्यर्थः । कनकस्थलीनां पिशङ्गे वाससी उपमानम् । अथवा शब्दश्लेषोऽयम् । अर्थसारूप्यं भवतु मा वा भून्न तत्रापेक्षा, एतच्चा[3]स्माकं रुद्रटटीकायां विचारितम् ॥ "द्रुतविलम्बितमाह नभौ भरौ" ॥ २१ ॥

**पाश्चात्यभागमिह सानुषु सन्निषण्णाः**
**पश्यन्ति शान्तमलसांद्रतरांशुजालम् ।**
**संपूर्णलब्धललनालपनोपमान-**
**मुत्सङ्गसङ्गिहरिणस्य हिमांशुमूर्तेः ॥ २२ ॥**

इहाद्रौ सानुषु प्रस्थेषु संनिषण्णा उपविष्टा शशिनः पाश्चात्यभागमपरपार्श्वमीक्षन्ते इत्युच्चत्वकथनम् । कीदृशं भागं, शान्तमलं निष्कलङ्कमत एव सान्द्रतरमतिघनमंशुजालं किरणनि[4]करो यस्य । अधोभाग एव शशिनः शशो विद्यते, तदाह—उत्सङ्गसङ्गिहरिणस्याङ्काधिरूढमृगस्य, अतश्च नैर्मल्यात् संपूर्णमखण्डमेव लब्धं ललनालपनोपमानमङ्गनामुखसादृश्यं येन तत् । अन्यत्र भागे हि समलत्वाद्विमलवनितावदनोपमानं विसदृशम् । पश्चाद्भवः पाश्चात्यः । "दक्षिणापश्चात्पुरसस्त्यप्" । हिमाः शीतला अंशवो मूर्तेर्मूर्तौ वा यस्य । वृत्तं वसन्ततिलकम् ॥ २२ ॥

**कृत्वा पुंवत्पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः ।**
**कुर्वन्ति द्यामुत्पतन्तः स्मरार्तस्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥ २३ ॥**

अत्र निर्झरौघाः प्र[5]तज्जलपूरा मदनदहनविवशीकृतसुरसुन्दरीदेहदाहो[6]पशमं विदधति । कदा, उच्चैरुच्चेभ्यो भृगुभ्यः श्वभ्रेभ्यो ग्राव्णां मूर्ध्नि दृषदामुपरि पतनं कृत्वा अनन्तरं जर्जराः शीकरतां गताः समुत्पतन्तो दिवमधिरोहन्तः ।

१ 'लो रैवतकः' ख. पाठः । २ 'नशीला' ग. पाठः । ३ 'तीव' क. पाठः । ४ 'समूहो' ख. पाठः । ५ 'प्रपात' क. पाठः । ६ 'हशमं' ख. पाठः ।

क इवेत्याह—पुंवत् पुरुषा इव, यथा केचित् स्वर्गार्थिनो भृगुभ्यः कालाञ्जरादिभ्योऽश्ममध्ये पतनं कृत्वा खण्डशो गताः सन्तो दिवमारूढाः कामातोऽप्सराशरीरसुखं कुर्वते । भृगुभ्य इति "अपादाने पञ्चमी" । द्योशब्दस्य द्यामिति रूपम् । निर्वाणमिति वातेर्निपूर्वस्य क्तः । "निर्वाणोऽवाते"रिति णत्वम् । "म्तौ त्गौ गश्चेच्छालिनी वेदलोकै"रिति शालिनीवृत्तम् ॥ २३ ॥

स्थगयन्त्यमूः शमितचातकार्तस्वरा
जलदास्तडित्तुलितकान्तकार्तस्वराः ।
जगतीरिह स्फुरितचारुचामीकराः
सवितुः क्वचित् कपिशयन्ति चामी कराः ॥ २४ ॥

अमूर्जगतीरे[१]ताः स्थलीः क्वचिन्मेघाः परिदधति, क्वचिच्च रविरश्मयोऽपि कपिशयन्ति पिञ्जरयन्ति । कीदृशा जलदाः, शमितो जलदानान्निवर्तितश्चातकानां मयूरपक्षिविशेषाणामार्तस्तृषादीनः स्वरः केका यैः । तथा तडिद्भिः सौदामिनीभिस्तुलितं सदृशीकृतं कान्तमुज्ज्वलं कार्तस्वरं सुवर्णं यैः । भूमीः कीदृशीः, स्फुरितं देदीप्यमानं चारु स्निग्धं चामीकरं हेम यासाम् । अमूरिति स्त्रियां शसन्तः । अमी इति पुंसि जसन्तः । आर्त इति ऋ गतौ आङ्पूर्वात् क्तः, 'उपसर्गादृति धाता"वित्येकादेशः रप[२]रः । "सजसा मता सह च येन पथ्या गौ" इति पथ्यावृत्तम् ॥ २४ ॥

उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बै-
रुत्तम्भितोडुभिरतीवतरां शिरोभिः ।
श्रद्धेयनिर्झरजलव्यपदेशमस्य
विष्वक् तटेषु पतति स्फुटमन्तरिक्षम् ॥ २५ ॥

अस्य रैवतकस्य तटेषु रोधःसु सानुषु वा स्फुटं निश्चितमन्तरिक्षं पतति । खं चेदधो याति कथं न दृश्यते इत्याह—श्रद्धेयः संभाव्यो निर्झरजलव्यपदेशो यस्य तत् । निर्झरजलव्याजेन पततीत्यर्थ इत्युत्प्रेक्षा । एतेन तोयस्याच्छत्वं प्राचुर्यं चोक्तम् । किमिति नभः पततीत्याह–शिरोभिः शिखरैरतीवतरामतिशयेनोत्क्षिप्तमुदस्तं, स्वस्थानात्करक्तकवच्चालितमित्यर्थः । अतिशयेनोत्क्षिप्यमाणं वस्तु पाषाणवत्पतति । कीदृग्भिः शिरोभिः, उच्छ्रिता ऊर्ध्वीकृता ऊर्ध्वमुखा ये सितां-

१ 'रिमा' क. पाठः । २ 'रेफः' क. ख. पाठः ।

शुकराश्चन्द्ररश्मयस्तानवलम्बन्ते संयुज्यन्ते ये तैः ऊर्ध्वमुखशशिकरस्पृष्टैरित्यर्थः। इत्युच्चत्वोक्तिः । योऽपि शिरसाश्मादिभारमुत्क्षिपति स कस्यचित्करमवलम्बते। अत एव चौन्नत्यादुत्तम्भितान्युत्तब्धान्याक्रान्तान्युडूनि तारकाः यैः । उत्तम्भित इति स्तंभुसौत्रो धातुः, स्वार्थिको णिच्, क्तः । अतीवेति निपातसमुदायोऽतिशयार्थः । तरामित्यशयस्यातिशयः प्रतिपाद्यते, स्वार्थे वा । श्रद्धेयः श्रद्धातव्यः श्रद्धामधिगम्यारोप्यः संभाव्य इत्यनर्थान्तरम् । वृत्तं वसन्ततिलकम् ॥ २५ ॥

**एकत्र स्फटिकतटांशुभिन्ननीरा नीलाश्मद्युतिभिदुराम्भसोऽपरत्र ।**
**कालिन्दीजलजनितश्रियः श्रयन्ते वैदग्धीमिह सरितः सुरापगायाः**

इह नद्यो यमुनातोयोत्पादितशोभाया गङ्गाया विच्छित्तिं सारूप्यमाश्रयन्ते शुक्लासिता भवन्तीत्यर्थः । वैदग्धी धौर्त्यं च्छाया विच्छित्तिः सादृश्यमित्येकोऽर्थः । कस्मात्प्रयागशोभां वहन्तीत्याह—एकत्र सितमणिमयरोधःकिरणच्छुरितजला, अपरत्र त्विन्द्रनीलमणिदीधितिविशेषिततोयाः । भिन्नं च्छुरितं, नीरं जलम् । स्वयं भिद्यते विश्लेषं गच्छतीति भिदुरमिति। "विदिभिदिच्छिदेः कुरच्" । भिदुरमम्भो यासां ता भिदुराम्भसः । ष्यञः षित्त्वाद्वैदग्धीमिति ङीष् । "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणी स्यात्"इति ॥ २६ ॥

**इतस्ततोऽस्मिन् विलसन्ति मेरोः समानवप्रे मणिसानुरागाः ।**
**स्त्रियश्च पत्यौ सुरसुन्दरीभिः समा नवप्रेमणि सानुरागाः ॥ २७ ॥**

इह गिरौ मेरोः समानवप्रे सुरशिखरिसदृशतटे मणिमयानां सानूनां समभूभागानां रागा भास इतस्ततो विलसन्ति द्योतन्ते । तथा स्त्रियो नार्योऽपि पत्यौ भर्तृषु सानुरागाः प्रीतियुक्ताः सत्यो विलसन्ति क्रीडन्ति । सुरसुन्दरीभिरप्सरोभिः समाः सदृश्यः । नवं शाश्वतं प्रेम स्नेहो यस्य तस्मिन् नवप्रेमणि पत्यौ अनन्यगतचित्त इत्यर्थः। रज्यतेऽनेन रागः । "अच्च घे"रित्यत्र पत्याविति समासे घिसंज्ञा नियमिता । नवप्रेमणीति "विभाषा ङिश्योः"रित्यल्लोपो विभाषितः । "उपेन्द्रवज्रा तु जतौ जगौ सा" इति ॥ २७ ॥

**उच्चैर्महारजतराजिविराजितासौ**
**दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा ।**
**अभ्येति भस्मपरिपाण्डुरितं स्मरारे-**
**रुद्वह्निलोचनललामललाटलीलाम् ॥ २८ ॥**

इहाद्रौ दुर्वर्णभित्तिः रूप्यकुड्यं हरतृतीयनयनभूषितालिकशोभामभ्येति । स्मरारिः शिवः । उद्गतो वह्निर्यस्मात्तदुद्वह्नि साग्नि लोचनं ललाम चिह्नं भूषणं वा यस्य तथाविधं यल्ललाटं कपालं तस्य लीलां विच्छित्तिं भस्मधवलां रजतभित्तिरभ्येति आभिमुख्ये प्राप्नोति । या उच्चैर्महारजतराज्या कनकलेखया भूषिता, तथा घनमङ्गोलसिता । 'राजतभित्तेर्भूतिसितं ललाटमुपमानम्, कनकराजेरग्निगर्भं तृतीयं नेत्रम् । वृत्तं वसन्ततिलकम् ॥ २८ ॥

**अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।**
**सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥ २९ ॥**

अयमद्रिस्तटीः पुलिनानि बिभर्ति । कीदृशीः, अतिशयेन जरठाः कठोराः कठिनपाषाणाः प्रकामगुर्वीरत्यन्तविस्तीर्णाः सपयस्त्वाच्चालघुभिर्महद्भिर्विलम्बिभिश्च विल[1]म्बमानैः पयोधरैर्मेघैरुपरुद्धाः विष्वग्व्याप्ताः, सदा चासुमतां प्राणिनामगम्यरूपा दुर्गमाः । सुष्ठु अगम्या अगम्यरूपाः "प्रशंसायां रूपप्" । अगम्यं रूपं संस्थानं यासामिति वा । तथा परिणता दत्तप्रहारा दिक्करिका दिग्दन्तिनो यासु ताः परिणतदिक्करिकाः । "शेषाद्विभाषे"ति कप् प्रत्ययः । अथच परिणतादिक्करिका वृद्धकुमारीसदृशीस्तटीर्बिभर्ति इत्युक्तिः । ता अपि परिणतत्वादतिजरठाः जर्जराः, प्रकामगुर्वीः स्थूलदेहाः, अलघुविलम्बिभिः पतितैः पयोधरैः कुचैरुपरुद्धा व्याप्तदेहाः, अतएवासुमतां तरुणानामगम्यरूपा असेव्यवपुषः । गमिरत्र मैथुने वर्तते । यथा "नाज्ञातां स्त्रियं गच्छे"दिति । दिक्करिकाः कुमार्यः । पुष्पिताग्रा वृत्तम् ॥ २९ ॥

**धूमाकारं दधति पुरः सौवर्णे वर्णनाग्नेः सदृशि तटे पश्यामी ।**
**श्यामीभूताः कुसुमसमूहेऽलीनां लीनां श्रेणीमिह तरवो बिभ्राणाः॥**

पुरोऽग्रे यत्तटं पुलिनं तत्र पश्य, अमी वृक्षा धूमाकारं धूमसादृश्यं दधति धारयन्ति । वाक्यार्थस्य कर्मत्वाद् द्वितीयाभावः । कीदृशि तटे, सौवर्णे काञ्चनमयेऽत एव वर्णेनाग्नेः सदृशि तुल्ये पिशङ्गे इत्यर्थः । तरवः कीदृशाः, कुसुमसमूहे पुष्पगच्छे लीनां संलग्नामलीनां भ्रमराणां श्रेणीमावलिं बिभ्राणाः, अत एव श्यामीभूताः कृष्णिमानमागताः, अतएव धूमरूपं दधति । सौवर्णे तटे बुध्यतेऽग्निः, तरवस्तु धूम इति तात्पर्यार्थः । दधतीति "अदभ्यस्तात्" । सदृशीति क्विन्नन्तः । "म्भौ स्मौ ख्याता जलधरमालाब्ध्यङ्कैः"इति ॥ ३० ॥

[1] 'र' ख. पाठः । [2] 'विस्रंसमानैः' क. पाठः ।

**व्योमस्पृशः प्रथयता कलधौतभित्ती-**
**रुन्निद्रपुष्पचणचम्पकतुल्यभासः ।**
**सौमेरवीमधिगतेन निकुञ्जशोभा-**
**मेतेन भारतमिलावृतवद्विभाति ॥ ३१ ॥**

एतेनाद्रिणा भारतं वर्षं मनुष्यलोकः इलावृतवद्विभाति स्वर्गवच्छोभते । मेरुसमीपे इलावृतो नाम लोको विद्यते यत्र सौवर्णं सर्वमेव, द्वादशवर्षसहस्राणि च जीव्यते । कुतस्तद्वद्भाति—यतः सौमेरवीं सुमेरुपर्वतसदृशीं निकुञ्जशोभां गहनप्रदेशलक्ष्मीमधिगतेन प्राप्तेन । एतदपि कथम्, यतः कलधौतभित्तीः सुवर्णशृङ्गाणि प्रथयता प्रसारयता । कीदृशीः, व्योमस्पृशो गगनचुम्बिनीः, तथा उन्निद्रैर्विकसितैः पुष्पैर्वित्ताः प्रतीता उन्निद्रचणा ये चम्पका वृक्षविशेषास्तैः पिङ्गाः कपिशयो भासो दीप्तयो यासां तास्तथोक्ताः । "तेन वित्तश्चञ्चुप्चणपौ" । इलावृतोऽप्येवंविधिनैव मेरुणा शोभते । सुमेरोरियं सौमेरवी । वसन्ततिलकं वृत्तम् उक्ता वसन्ततिलका तभजा जगौ गः ॥ ३१ ॥

**रुचिरचित्रतनूरुहशालिभिः प्रचलितैः परितः प्रियकव्रजैः ।**
**विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः ॥ ३२ ॥**

एषोऽद्रिः प्रियकव्रजैर्मृगभेदयूथैरभिभाति परितः शोभते । कीदृशैः, रुचिरैर्मोहनैश्चित्रैरनेकवर्णैस्तनूरुहैः रोमभिः शालन्ते श्लाघन्ते ये तैः । तथा परितः समन्तात्प्रचलितैश्चलितुं प्रवृत्तैः । अतश्चोत्प्रेक्ष्यते—स्वाङ्गैरिव जीवत्वं प्राप्तैरनीकजातीयमणिमयैः शोभते । अवयवसंस्थानाः प्रियकाः । विविधरत्नतुल्यानि रोमाणि । द्रुतविलम्बितमाह नभौ भराविति वृत्तम् ॥ ३२ ॥

**कुशेशयैरत्र जलाशयोषिता मुदा रमन्ते कलभा विकस्वरैः ।**
**प्रगीयते सिद्धगणैश्च योषितामुदारमन्ते कलभाविकस्वरैः ॥ ३३ ॥**

अत्रागे जलाशयोषिता सरआसिकाः[3] कलभाः करिपोतका र्विकस्वरैर्विकासिभिः कुशेशयैः कमलैर्मुदा तुष्ट्या रमन्ते क्रीडन्ते । न केवलमेतत्, यावत्सिद्धगणैश्च देवविशेषवृन्दैर्योषितामन्ते प्रेयसीसमीपे उदारमग्राम्यं प्रगीयते सुष्ठु गानं क्रियते । कीदृशैः, कलो मधुरो भाविकः सरसश्च स्वरो वाग्येषां तैः कलभाविकस्वरैः । कुशे जलमध्ये शेरत इति कुशेशयानि । आशयः स्थानम् ।

१ 'कल' ग. पाठः । २ 'तुल्यं' ख. पाठः । ३ 'ताः' ख. पाठः ।

आशेरतेऽस्मिन्निति कृत्वा "पुंसि संज्ञायां घः प्रायेण" । विकसन्ति तच्छीलानि विकस्वराणि । "स्थेशभासपिसकसो वरच्"। प्रगीयत इति भावे लकारः । भावो रस उपचारात् भावना वा । यदि वा कलत्वं कलभावः स विद्यते यस्यासौ कलभाविकः । "अत इनिठनौ" । 'उशन्ति वंशस्थमिदं जतौ जरा'-विति वंशस्थवृत्तम् ॥ ३३ ॥

असादितस्य तमसा नियतेर्नियोगा-
दाकाङ्क्षतः पुनरुपक्रमणेन कालम् ।
पत्युस्त्विषामिह महौषधयः कलत्र-
स्थानं परैरपरिभूतममूर्भजन्ते ॥ ३४ ॥

इह नगेऽमूरेता ओषधयस्त्विषां पत्युः सूर्यस्य कलत्रस्थानं प्रमदावासत्वं भजन्ते श्रयन्ते । तिष्ठन्त्यस्मिन्निति स्थानम् । कलत्रं दाराः। त्विषांपत्युश्च त्विष एव कलत्रं, ताश्च महौषधिषु मृतसंजीवनीप्रभृतिषु त्विषो निक्षिप्य रविरस्तं यातीति तात्पर्यार्थः। कीदृशस्य त्विट्पतेः, नियतेर्नियोगाद्विधेरादेशात् तमसान्धकारेणास्तंगमनेन वा आसादितस्य प्राप्तस्य । पितामहाज्ञया हि रविरस्तं याति। तथा भूयउपक्रमणेनोदयपर्वतगमनेन कालमाकाङ्क्षतः समयमभिलषतः, गत्या दिनकृदुदयं लभते । कीदृशं स्थानं, परैरन्धकारादिभिरपरिभूतमनाक्रान्तम् । नहि रात्रावोषधिषु तमो बाधते तेजोमयत्वात् । अथचोक्तिश्लेषः—यः किल महापुरुषो दैववशात्तमसा दारिद्र्येण शत्रुभिर्वा आसादितः स क्वाप्यग्रहारादौ अपरिभूते स्थाने कलत्राणि निक्षिपति, यतः पुनरुपक्रमणचेष्टया कालमाकाङ्क्षति । चन्द्रस्त्विषांपतिरिति न तथा हृदयहारि । वसन्ततिलकं वृत्तम् ॥ ३४ ॥

पुरः पतिस्कन्धनिषण्णबालप्रवालहस्ताः प्रमदा इवात्र ।
पुष्पेक्षणैर्लम्बितलोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः ॥ ३५ ॥

अत्र व्रतत्यो लताः प्रमदा इवाङ्गनातुल्याः । इदानीं श्लेषः । कीदृश्यो लताः, पुरोऽग्रे यः पतिर्वृक्षस्तस्य स्कन्धे प्रकाण्डे निषण्णाः संलग्ना बाला अभिनवाः प्रवालाः किसलयान्येव हस्ता यासाम् । 'लता हि निकटं तरुं वेष्टयन्ति, प्रमदा अप्यग्रवर्तिनः पत्युरुत्सङ्गे प्रवालतुल्यं पाणिं प्रायशः कुर्वते । तथा पुष्पाण्येवेक्षणानि विलोचनानि तैरुपलक्षिताः । नार्योऽपि पुष्पतुल्यैर्नेत्रैः शोभन्ते । कीदृग्भिर्मधुव्रतव्रातवृतैः मधु किञ्जल्कं व्रतयन्ति भक्षयन्ति मधुव्रताः

षट्पदाः । "व्रताद्भोजने" इति णिच् । तेषां व्रातः समूहस्तेन वृतैर्व्याप्तैरतश्च लम्बितलोचकैर्वा । वा इवार्थे । लोचकतुल्यैरित्यर्थः । प्रायेण कृष्णस्तनीयान् ग्रामनारीशिरोवासोविशेषो लोचकः । ग्रामनार्यो हि मुखे लोचकान् कुर्वते । यथा—यो गोपीजनवल्लभः कुचतटे व्यासङ्गलब्धास्पदश्छायावान्नवरङ्गको बहुगुणश्चित्रश्चतुर्हस्तकः । कृष्णः सोऽपि हताशया व्यपहृतः कान्तः कयाप्यद्य मे किं राधे मधुसूदनो नहि नहि प्राणाधिको लोचकः ॥ ३५ ॥

**विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम् ।**
**भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः ॥ ३६ ॥**

इह गिरौ कदम्बकुसुमसुगन्धौ विहगाः पक्षिणोऽनुक्षणं मुहुर्मुहुर्गाः कलयन्ति वाचमुच्चारयन्ति । कथम्, अनेको द्रुतमध्यविलम्बितभेदेन त्रिविधो लयो वाग्गुणो यत्र, कलेन गायन्तीवेत्यर्थः । तथायं पवनो वायुरुपैति वाति । कीदृशः[1], अभ्रं मेघं पुनःपुनर्भ्रमयन्निति शैत्यमृदुत्वोक्तिः । तथा धूतं कम्पितं नवं सरसं नीपवनं वार्षिककुसुमवृन्दं येनेति सौरभ्योक्तिः । प्रमिताक्षरावृत्तम् । "प्रमिताक्षरा सजयुतावथ साविति" ॥ ३६ ॥

**विद्वद्भिरागमपरैर्विवृतं कथंचित्**
**श्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः ।**
**श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं**
**गूढार्थमेष निधिमन्त्रगणं बिभर्ति ॥ ३७ ॥**

एषोऽचलो निधय एव मन्त्रास्तेषां गणं वृन्दं बिभर्ति धारयति । निधिर्निधानं, मन्त्रो वेदवाक्यविशेषः । कीदृशं निधिं, विद्वद्भिः प्राज्ञैरागमपरैः तालिशास्त्रप्र[2]माणज्ञैः कथंचित् क्लेशेन विवृतं प्रकटितं, तालिज्ञा एव निधानं जानते । तथा अन्यैरनिश्चितधीभिरस्थिरम[3]तिभिरतालिज्ञैः श्रुत्वात्र विद्यते निधानमित्यन्यतो बुद्ध्वापि दुर्ग्रहं दुरासदम् । अघानि च दारिद्र्यदुःखानि हन्तुं दक्षं समर्थं । तथा गूढोऽप्रकटोऽर्थो धनं यस्य तं गूढार्थमत एव कथंचिद्विवृतं दुर्ग्रहं च । एष कीदृक्, श्रेयान् श्रेष्ठस्तथा द्विजातिरिव ब्राह्मणसमः । सहि श्रेयान् सानुष्ठानो द्विजातिर्मन्त्रगणं बिभर्ति । कीदृशम्, आगमपरैः श्रुतिप्रधानैः कथंचिद्विवृतं व्याख्यातम्, अन्यैश्चावलिप्तैः श्रुत्वापि दुर्ग्रहमज्ञातं यतो गूढार्थमनु[4]त्ता-

१ 'क्षः' ग. पाठः । २ 'प्रमम' ख, प्रसार' ग. । ३ 'बुद्धिभिः' ग. । ४ 'नुत्तरा' क. नन्ता ख. पाठः

नाभिधेयं दुर्बोधमित्यर्थः । तथाघानि पापानि ध्वंसयितुं शक्तम् । वेदवाक्यैर्हि 'विधिवदभ्यस्तैस्त्रिविधमशुभं क्षीयत इति ॥ ३७ ॥

**बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्रश्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।**
**श्लिष्यन्तं मुहुरितरोऽपि तं निजस्त्रीमुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥**

द्विविधाः किंपुरुषाः केचिदश्वमुखा मनुष्यशरीराः केचिन्मनुष्यमुखा अश्वशरीराश्च, तेऽत्रान्योन्यस्याभिलेषुरिति तात्पर्यार्थोऽत्र । पदयोजना तु—तुरङ्गवक्त्रोऽश्वमुखः किंपुरुषः किन्नरं सामर्थ्यादश्वशरीरं बहु मनुते, एष शोभन इति जानीते । यतः प्रियाया मुखं बिम्बौष्ठं बिम्बवल्लोहिताधरं चुम्बन्तं पिबन्तम् । तस्य हि अश्वमुखत्वाच्चुम्बनं दुर्घटमतस्तस्मै स्पृहयति । इतरोऽश्वशरीरस्तमश्वमुखं बहु मन्यते यतः सहचरीं श्लिष्यन्तमालिङ्गन्तम् । अश्वशरीरेण च दुरारोहः परिष्वङ्गः । कीदृशीं स्त्रीम्, उत्तुङ्ग ऊर्ध्वमुखो यः स्तनभरः कुचभारस्तेन यो भङ्गस्त्रोटनं ततो भीरु त्रस्तं मध्यमुदरं यस्यास्तां पीनपयोधरां कृशोदरीं चेत्यर्थः । अत एव च स्पृहा । भीरुरिति "भियो रुक्लुकनौ" । प्रहर्षिणी वृत्तम् ॥ ३८ ॥

**यदेतदस्यानुतटं विभाति वनं ततानेकतमालतालम् ।**
**न पुष्पितात्र स्थगितार्करश्मावनन्तताने कतमा लतालम् ॥ ३९ ॥**

अस्य महीभृतोऽनुतटं पुलिनसमीपे यदेतद्वनं शोभते अत्र च कतमा केवला वल्ली अलमत्यर्थं न पुष्पिता सर्वैव संजातकुसुमेत्यर्थः । कीदृग्वनं, तमालाश्च तालाश्च तमालतालं तत्ततं विस्तीर्णमनेकं बहुतरं यत्र, अत एव स्थगितार्करश्मौ पिहितरविकिरणे, तथानन्तस्तानो यस्य तस्मिन्ननन्तताने महाभोगे इत्यर्थः ॥ ३९ ॥

**दन्तोज्ज्वलासु विमलोपलमेखलान्ताः**
**सद्रत्नचित्रकटकासु बृहन्नितम्बाः ।**
**अस्मिन् भजन्ति घनकोमलगण्डशैला**
**नार्योऽनुरूपमधिवासमधित्यकासु ॥ ४० ॥**

अत्र नगे नार्योऽनुरूपं श्रेष्ठमुचितमधिवासं स्थानं भजन्ति संश्रयन्ते उपभोगयोग्यान् प्रदेशान् सेवन्त इत्यर्थः । कीदृशीष्वधित्यकासु, दन्तैरुच्चपाषा-

१ 'यथाविध्य' ग. पाठः ।

णैरुज्ज्वलासु रम्यासु, तथा सद्रत्नैः परार्ध्यमणिभिश्चित्रकटकासु नानारूपसानुषु । नार्यः कीदृश्यः, विमलोपला उज्ज्वलरत्ना मेखलान्ताः काञ्चीपर्यन्ता यासु तास्तथोक्ताः । तथा बृहन्नितम्बाः पीवरजघनाः, तथा घनाः परिपूर्णाः कोमलाः सुस्पर्शाः गण्डशैलाः कपोलभित्तयो यासु ताः । अथ चानु[1]रूपमात्मतुल्यं स्थानमधिवासं भजन्ते इत्यर्थान्तरप्रतीतिः । एवं चानु[2]रूप्यं भवति, यदि नार्योऽधित्यकासदृश्यो भवन्ति तेनेह नार्योऽधित्यकासदृश्य इति तात्पर्यार्थः । नच विभागोपात्तैर्विशेषणैरत्र शब्दसादृश्यमर्थसाम्यं वा विद्यते । तस्मात् पञ्चापि विशेषणान्येकैकमुभाभ्यामप्यर्थवशाद्विभक्तिपरिणामेन योजनीयानि । तत्र यानि न व्याख्यातानि तानि योज्यन्ते । नार्यो दन्तैर्दशनैरुज्ज्वला मनोहरास्तथा सद्रत्नचित्रकटका उत्तममणिरम्यवलयाः । अधित्यकासु च विमलोपलमेखलान्तासु स्फटिकमध्यभागासु, तथा बृहन्नितम्बासु विस्तीर्णप्रदेशविशेषासु, तथा घनाः कोमलाश्च गण्डशैला महान्तो मुक्ता पाषाणा यासु । अधित्यका इति "उपाधिभ्यां त्यकन्नासन्नारूढयो"रिति ॥ ४० ॥

अनतिचिरोज्झितस्य जलदेन चिर-
स्थितबहुबुद्बुदस्य पयसोऽनुकृतिम् ।
विरलविकीर्णवज्रशकला सकला-
मिह विदधाति धौतकलधौतमही ॥ ४१ ॥

धौतं विमलं यत् कलधौतं रुप्यं तस्य मही भूमिरिह मे[3]घ्यस्य तोयस्याखण्डामनुकृतिं सारूप्यं विदधाति करोति । कीदृक् मही, विरलं विषमं विकीर्णानि स्थितानि वज्रशकलानि हीरकखण्डानि यस्यां सा । पयसः कीदृशस्य, जलदेनानतिचिरं वि[4]सृष्टस्य अत एव चिरस्थिता बहवो बुद्बुदाः फेना यस्य । चिरोज्झितं हि पयो न शुक्लं भवति नासबुद्बुदमिति अनतिचिरग्रहणम् । रुप्यभूमेर्मे[5]घ्यं पय उपमानं वज्राणां तु बुद्बुदाः । वृत्तं तु "[6]कुररीरुतं नजभजैर्लगयुगि"ति कुररीरुतमिति लक्षणात् ॥ ४१ ॥

**वर्जयन्त्या जनैः सङ्गमेकान्ततस्तर्कयन्त्या सुखं सङ्गमे कान्ततः ।**
**योषयैष स्मरासन्नतापाङ्गया सेव्यतेऽनेकया सन्नतापाङ्गया ॥ ४२ ॥**

---

१ 'कूल्यं' ख. पाठः । २ 'कूल्य' ख. पाठः । ३ 'मै' ग. पाठः । ४ 'वृष्ट' ग. पाठः । ५ 'मै' ग. पाठः । ६ 'कुरु कुररीरुतं नरववीरुवियुत्' क. ग. पाठः ।

एषोऽद्रिरनेकया योषया नायिकया यौवतेन सेव्यते । कीदृश्या, जनैः सङ्गं वर्जयन्त्या । किमर्थं जनसंपर्कं परिहरन्तीत्याह—संगमे सति कान्ततः प्रियादेकान्ततो रहसि सुखं तर्कयन्त्या बुध्यमानया । सत्यपि प्रियसन्निधौ जनसमक्षं न किञ्चित् सुरतसुखमासाद्यते इति शङ्कमानयेत्यर्थः । यतः स्मरासन्नतापाङ्गया कामेन हेतुनासन्नतापं निकटज्वरमङ्गं शरीरं यस्यास्तया समदनज्वरयेत्यर्थः । तथा सन्नतावधोऽधो निम्नावपाङ्गावक्षिपर्यन्तौ यस्यास्तया । "कीर्तितैषा चतूरेफिका स्रग्विणी" । "रैश्चतुर्भिर्युता स्रग्विणी संमते"ति ॥ ४२ ॥

संकीर्णकीचकवनस्खलितैकवाल-
विच्छेदकातरधियश्चलितुं चमर्यः ।
अस्मिन् मृदुश्वसनगर्भतदीयरन्ध्र-
निर्यत्स्वरश्रुतिसुखादिव नोत्सहन्ते ॥ ४३ ॥

अस्मिन्नगे चमर्यो वालप्रियाश्चलितुं नोत्सहन्ते गन्तुं नोद्यच्छन्ति । यतः संकीर्णे संहतं यत् कीचकवनं सस्वरवेणुकाननं तत्र स्खलितः संलग्नो य एको वालः कचस्तस्य विच्छेदेन त्रोटनेन कातरधियस्त्रस्तबुद्धयः खिन्नचित्ताः । जातिस्वभावाद्धि ता मरणमप्यङ्गीकुर्वन्ति न वालभङ्गम् । उत्प्रेक्ष्यते—मृदुश्वसनगर्भे कोमलवा[1]तपूर्णं यत्तदीयरन्ध्रं कीचकविवरं ततो निर्गच्छन् यः स्वरः शब्दः स्वराः षड्जादयो वा तस्य तेषां वा या श्रुतिराक[2]र्णनं तया यत्सुखं ततो हेतोरिव न चलन्ति । यो हि सरसः सन् जिगमिषुरपि गेयवाद्याकर्ण[3]नेन नूनं न याति । चलितुमिति "शकधृषे"ति तुमन् । निर्यदिति इणः शता ॥ ४३ ॥

मुक्तं मुक्तागौरमिह क्षीरमिवाभ्रै-
र्वापीष्वन्तर्लीनमहानीलदलासु ।
शस्त्रीश्यामैरंशुभिराशु द्रुतमम्भ-
श्छायामच्छामृच्छति नीलीसलिलस्य ॥ ४४ ॥

इह वापीषु दीर्घिकासु स्वच्छं सलिलं नीलीसलिलस्य नीलजलस्याच्छामनुपहतां छायां कान्तिमृच्छति प्राप्नोति नीलं भवतीत्यर्थः । किमिवेत्याह—क्षीरमिवेति । क्षीरं यथा महानीलरश्मिच्छुरितं नीलां कान्तिमाप्नोति । शतगुणं हि दुग्धं यन्नीलयति तदुत्कृष्टगुणं महानीलमित्यभियुक्ताः । नीली नील-

१ 'मारुत' क. ग. पाठः । २ 'श्रवणं' क. ग. पाठः । ३ 'नात् न दूरं याति' ख. ग. पाठः ।

वर्णा ओषधिस्तया विभावितं जलं नीलीसलिलम् । कीदृशं पयः, अभ्रैर्मुक्तं वृष्टम्। कदाचिन्मे[1]घ्यं पयो नीलं स्यात् न तच्चित्रमित्याह—मुक्तागौरं मौक्तिकसितमत एव क्षीरमिव दुग्धमिव । कथं नीलमित्याह—शश्वीश्यामैश्छुरिकावदसितैरंशुभिराशु तत्क्षणमेव द्रुतं [2]भिन्नं छुरितम् । कृष्णानां किरणानां पुष्करिणीषु क आगम इत्याह—अन्तर्लीनानि श्लेषितानि महानीलानामिन्द्रनीलानां दलानि खण्डानि यासां तासु वापीषु । ऋच्छतीति ऋगतावित्यस्य रूपम् । नीलीति जानपदादिसूत्रेण ङीष् । "म्तौ य्सौ गान्तं वेदयतिर्मत्तमयूर"मितिलक्षणात् मत्तमयूरं वृत्तम् ॥ ४४ ॥

**या न ययौ प्रियमन्यवधूभ्यः सारतरागमना यतमानम् ।**
**तेन सहेह बिभर्ति रहः स्त्री सा रतरागमनायतमानम् ॥ ४५ ॥**

या स्त्री वधूरन्यत्र यतमानं प्रयत्नपरं चाटुकारं प्रियं न ययौ नाभिससार, सा नारी तेन कान्तेन साकमिह नगे रह एकान्ते रतरागं सुरताभिष्वङ्गं बिभर्ति, मनस्विन्योऽपीह मानं मुञ्चन्तीत्यर्थः । कीदृशी स्त्री, अन्यवधूभ्यः सपत्नीभ्यः सकाशात् सारतरं हर्षोत्पत्त्योत्कृष्टतरमागमनं यस्या, अत एव प्रार्थ्यते । अनायतोऽदीर्घो मानो यत्र रतरागे तमनायतमानं निर्माणमित्यर्थः । रहःशब्दोऽव्ययम् अधिकरणप्रधानो निर्जनार्थेऽनव्ययोऽपि च विद्यते । यथा— "शङ्करो रहसि सेव्यता"मिति । "भौ तु भगौ गिति दोधकमेतदि"ति ॥ ४५ ॥

**भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-**
**रुच्चावचैरुपगतेषु सहस्रसंख्याम् ।**
**दोषापि नूनमहिमांशुरसौ किलेति ।**
**व्याकोशकोकनदतां दधते नलिन्यः ॥ ४६ ॥**

इहाद्रौ निश्चितं दोषापि रात्रावपि पद्मिन्यो व्याकोशकोकनदतां दधते विकसितपद्मत्वं बिभ्रति फुल्लाब्जा भवन्तीत्यर्थः । कदा, उच्चावचैर्नानाविधैर्मणिमयूखैः शशिमयूखेषु भिन्नेषु मिश्रितेष्वत एव सहस्रसंख्यां प्राप्तेषु, अतोऽसाविन्दुः किलाहिमांशुः सहस्ररश्मिरित्यतो हेतोर्विकसन्ति पद्मिन्यः । पद्मिनीभिः किल तावत्सूर्यदर्शनेनावश्यं विकासितव्यम् । इन्दोश्च किरणा यदा मणिकरनिकरबाहुल्यमापादितास्तदा सहस्ररश्मिभ्रान्त्या नूनं ता विकसेयुरिति वा-

---

१ 'मै' ग. पाठः । २ 'छिन्नं' क. ग. पाठः ।

क्यार्थः । अतश्चोक्तिमात्रं नहि नलिनीनां विकासः स्वायत्तः । उच्चावचेति मयूरव्यंसकादित्वात्समासः । दोषेति रहःशब्दवत् । किलेति सत्ये उपहासे वा। इतिर्हेतौ ॥ ४६ ॥

**अपशङ्कमङ्कपरिवर्तनोचिताश्चलिताः पुरः पतिमुपैतुमात्मजाः ।**
**अनुरोदितीव करुणेन पत्त्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥४७॥**

एषोऽद्रिः निम्नगा नदीः शकुनिकूजितेन करुणेनानुरोदितीव । पश्चाद्रोदने निमित्तमाह—यत आत्मजाः स्वतएव जाताः पुरोऽग्रे च यः पतिः समुद्रस्तं प्राप्तुं चलिताः प्रस्थिताः । अथापशङ्कं निःशङ्कमङ्कपरिवर्तने मध्यभ्रमणे उचिता अनुरूपाः । एष च वत्सलः सतृष्णः । यः किल वत्सलः पिता स सुताः पतिगृहं गन्तुं प्रवृत्ताः स्नेहवशादनुरोदितीति, ता अपि निर्यन्त्रणमङ्कपरिवर्तने शीलिताः । रोदितीति "रुदादिभ्यः सार्वधातुके" इति इट् । "द्विगुणौ सजौ सहगुरुः सुमङ्गली"ति सुमङ्गलीवृत्तम् ॥ ४७ ॥

**मधुकरविटपानमितास्तरुपंक्तीर्बिभ्रतोऽस्य विटपानमिताः ।**
**परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशङ्गलता ॥ ४८ ॥**

अस्यागस्य रोधस्तटं चकास्ति शोभते । कीदृशस्य, वृक्षततीर्वहतः । कीदृशीः, मधुकरा भ्रमरा एव विटा मत्तवालकास्तेषां पानमिता आस्वादं प्राप्तास्ते हि ताभ्यो रजः पिबन्ति । तथा विटपैः प्रकाण्डैरानमिता ईषत्कुटिलीकृताः। रोधः कीदृशं, परिपाकेन पिशङ्ग्यो[1] या लता व्रतत्यस्तासां रजसा रेणुना गलता भ्रश्यता कपिशं पिङ्गम् । अथवा परिपाकपिशङ्गलता इति वृक्षावलिविशेषणम्। गलता रजसा रोधश्चकास्तीति योजना । वृत्तमत्रार्यागीतिः ॥ ४८ ॥

**प्राग्भारतः पतदिहेदमुपत्यकासु**
**शृङ्गारितायतमहेभकराभमम्भः ।**
**संलक्ष्यते विविधरत्नकरानुविद्ध-**
**मूर्ध्वप्रसारितसुराधिपचापचारु ॥ ४९ ॥**

इह प्राग्भारतः श्वभ्रादुपत्यकास्वधोभागेषु एतदम्भः पतत् करिकरनिभमिन्द्रधनुस्तुल्यं च संलक्ष्यते । यतोऽनेकवर्णमणिनिकरकिरणाच्छुरितं, शृङ्गारितः सुधागैरिकादिरञ्जित आयतो दीर्घो यो महेभकरो हस्तिहस्तस्तस्येवाभा

---

१ 'ङ्ग्यः पीताः' ख. 'पिंङ्गाः' ग. पाठः ।

शोभा यस्य तत्तथोक्तम् । तथा ऊर्ध्वं प्रसारितमूर्ध्वीकृतं यत्सुराधिपचापं शक्रधनुस्तदिव चारु रमणीयमित्युपमोत्प्रेक्षा वा । शिखरसमीपं प्राग्भारः ॥ ४९ ॥

**दधति च विकसद्विचित्रकल्पद्रुमकुसुमैरभिगुम्फितानिवैताः ।**
**क्षणमलघुविलम्बिपिञ्छदाम्नः शिखरशिखाः शिखिशेखरानमुष्य ॥**

अमुष्यैतस्याद्रेरेताः शिखरशिखाः शृङ्गकोटयः शृङ्गचूडा वा शिखिशेखरान् मयूरावतंसान् दधति बिभ्रति । कीदृशान्, अलघूनि विलम्बीनि पिञ्छानि वर्हाणीव दामानि मालागुणा येषां तान् । अतश्चोत्प्रेक्ष्यते—विकसद्भिर्विचित्रैः कल्पवृक्षपुष्पैरभिगुम्फितानिव अन्तरान्तरोम्भितानिव । पिञ्छानां देवतरुकुसुमान्युपमानम् । अन्योऽपि शिखायां नानापुष्पोम्भितां मालां कुरुते । पुष्पिताग्रा वृत्तम् ॥ ५० ॥

**सवधूकाः सुखिनोऽस्मिन्ननवरतममन्दरागतामरसदृशः ।**
**नासेवन्ते रसवन्न नवरतममन्दरागतामरसदृशः ॥ ५१ ॥**

इह सुखिनः कामिनो नवरतमपूर्वं श्रेष्ठं निधुवनं न नासेवन्ते अपितु भजन्ते अनवरतमविच्छेदेन । नासेवन्ते इत्यस्य प्रतिषेधरूपस्य वाक्यस्य निषेधात्सप्रत्यभिज्ञोऽत्र विधिः प्रतीयते । तदुच्यते—द्वौ प्रतिषेधौ सातिशयं प्रकृतमेवार्थं ब्रूत इति । कीदृशाः सुखिनः, सवधूकाः कामिनीसहाया अत एव सुखिनस्तथा मन्दरादनागता अप्यमरसदृशो देवसदृश इति विभावना । मन्दरे हि सर्वश्रेष्ठा देवा विद्यन्ते तेनैव साक्षादमृतस्योत्पादितत्वात् । अथवा मन्दरग्रहणेन स्वर्गमात्रमुपलक्ष्यते, दृश्यते हि विशेषः सामान्योपलक्षितः । यथा—काकेभ्यो दधि रक्ष्यतामिति । अमन्दरागताश्च ते अमरसदृशश्च ते इति विशेषणसमासः । भूस्था अपि देवतुल्या इत्यर्थः । यद्विवा अनवरतमाः श्रेष्ठतमा मन्दरागता ये अमरास्तत्सदृशा इति वाक्यार्थः । तथा अमन्दरागमुत्कटवर्णं यत्तामरसं पद्मं तदिव दृशो नेत्राणि येषाम् । रसवत्सशृङ्गारं नवरतम् । आर्यागीतिः ॥ ५१ ॥

**आच्छाद्य पुष्पपटमेष महान्तमन्त-**
**रावर्तिभिर्गृहकपोतशिरोधराभैः ।**
**स्वाङ्गानि धूमरुचिमागुरवीं दधानै-**
**र्धूपायतीव पटलैर्नवनीरदानाम् ॥ ५२ ॥**

एषोऽद्रिर्घनवृन्दैरात्मीयान्यङ्गानि धूपायतीव सुगन्धयतीव । यत आगुरवीमगुरुधूपसदृशीं धूमकान्तिं बिभ्राणैरत एव गृहकपोतग्रीवानीलैः । वानेया हि कपोता धूलिवर्णा भवन्तीति गृहग्रहणम् । तथान्तर्मध्ये आवर्तिभिर्भ्रमद्भिः । किं कृत्वा धूपायतीत्याह—पुष्पाण्येव बहुलत्वात्पटस्तं महान्तमाच्छाद्य परिधाय । यः किल विलासी स महान्तं पुष्पवासितं पटं वासोविशेषं वा पुष्पपटं परिधायान्तर्वर्तिनं चागुरुधूमं कृत्वात्मानं धूपायति । अगुरुर्गन्धद्रव्यं तस्येयमागुरवी । धूपायतीति "गुपधूपे"ति स्वार्थे आयः ॥ ५२ ॥

**अन्योन्यव्यतिकरचारुभिर्विचित्रैरत्रस्यन्नवमणिजन्मभिर्मयूखैः ।**
**विस्मेरान् गगनसदः करोत्यमुष्मिन्नाकाशे रचितमभित्ति चित्रकर्म**

अस्मिन्नद्रौ मयूखैः खे रचितं यच्चित्रकर्म तद्गगनसदो देवान् विस्मेरान् करोति विस्मापयते । यतोऽभित्ति भित्तिवर्जितं, भित्तौ च चित्रेण भाव्यम् । कीदृग्भिर्मयूखैः, अनेकजातीयत्वात् परस्परसम्पर्कान्नानारूपैः, चित्रे ह्यनेके रागा भवन्ति । तथात्रस्यन्तोऽस्फुटिताः ये नवमणयस्ततो जन्म येषाम् । मणीनां त्रासो रविकिरणयोगाद्धीनता त्रस्त[2]श्च विरूपः[3] । विस्मेरानिति "नमिकम्पी"ति रः । गगने सीदन्ति संचरन्ति गगनसदो देवाः । प्रहर्षिणी वृत्तम् ॥ ५३ ॥

**समीरशिशिरः शिरःसु वसतां सतां जवनिका निकामसुखिनाम् ।**
**बिभर्ति जनयन्नयं मुदमपामपायधवला बलाहकततीः ॥ ५४ ॥**

अयं नगेशो बलाहकततीर्मेघमाला बिभर्ति धारयति । कीदृशोऽसौ, समीरशिशिरो वातशीतलोऽत एव मुदं जनयन् प्रीतिमुत्पादयन् । ताः कीदृशीः, निकामसुखिनां सदासुखितानां शिरःसु वसतां शृङ्गेष्वासीनानां सतां जवनिकास्तिरस्करिणीः । तथा अपामपायेन तोयवृष्ट्या धवलाः सिताः । जवनिका अपि प्रायेण धवला भवन्ति । "ऋतू जसजसा जलोद्धतगति"रिति ॥ ५४ ॥

**मैत्र्यादिचित्तपरिकर्मविदो विधाय**
**क्लेशप्रहाणमिह लब्धसबीजयोगाः ।**
**ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य**
**वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥५५॥**

इहास्मिन् रैवतके समाधिभृतो योगिनः ख्यातिं ज्ञानविशेषमधिगम्य प्रा-

---

१ 'नवघन' क. पाठः । २ 'स्ता' ख. पाठः । ३ 'पाः' ख. पाठः । ४ 'रसै' ख. पाठः ।

ष्य, अनन्तरं तामपि निरोद्धुं निवर्तयितुं वाञ्छन्ति अभिलषन्ति । चेतस ऐकाग्र्यं समाधिः । स च योगाङ्गोपलक्षणम् । यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधीनष्टावपि हि ते बिभ्रति । न केवलं चित्तवृत्तीरुधन् यावत्ख्यातिमपि उपादेयं कर्म परिजिहीर्षन्तीत्यपिशब्दार्थः । चशब्दो वर्णनीयप्रकारसमुच्चयार्थः। न केवलं पूर्वोक्तगुणविशिष्टोऽयं नगो यावदयमपि प्रकारोऽत्र विद्यत इत्यर्थः । एवमन्यत्र । प्रकृतिपुरुषयोर्भेदज्ञानं ख्यातिस्तदाह—सत्त्वपुरुषान्यतयेति । सत्त्वैकनिष्ठा बुद्धिः सत्त्वं, पुरुष आत्मा तयोरन्यता भेदस्तया हेतुना ख्यातिरधिगम्यते तद्रूपत्वात्तस्याः । नहि दृश्यद्रष्ट्रोर्भेदाग्रहणे[1] ख्यातिर्भवति, तेनान्या बुद्धिरन्यश्चात्मा इत्येवं प्रथममभ्यस्य पश्चात्पुरुषमेव निर्गुणं जिज्ञासन्ते इत्यर्थः। कीदृशाः समाधिभृत इति विशेषणद्वारेण ख्यातिप्राप्तावुपायमाह—मैत्र्यादयश्चित्तपरिकर्म चेतसः प्रसादनं तद्विदन्ति जानन्ति ये । मैत्रीकरुणामुदितोपेक्षाणां सुखदुखपुण्यापुण्यविषयाणामभ्यासाच्चेतःप्रसादनं चित्तपरिकर्म । सुखितेषु मैत्रीममात्सर्यं भावयेत्, दुखितेषु कारुण्यं, पुण्यवत्स्वनुमोदनं, पापिषूपेक्षामतश्च रजस्तमोनाशाच्चेतः प्रसीदति । तथा लब्धः प्राप्तः सबीजः सालम्बनो योगः समाधिर्यैस्ते लब्धसबीजयोगाः । निवृत्तवृत्तेश्चित्तस्यात्मनीन्द्रियेषु भूतेषु वा स्थितस्य तद्रूपतापत्तिः सबीजयोगः । किं कृत्वा लब्धसबीजयोगा इत्याह—क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां प्रहाणं च्यवनं कृत्वा । अनित्याशुचिदुःखानात्मसु विपरीतज्ञानमविद्या, भिन्नयोर्बुद्ध्यात्मनोरेकत्वप्रतीतिरस्मिता, सुखेष्वासक्ती रागः, दुखेष्वप्रीतिर्द्वेषः, अननुभूतादपि मरणादेस्त्रासोऽभिनिवेशः, एतेषां क्लेशानां क्षयं विधाय मैत्र्यादि चाभ्यस्य ततः ख्यातिमासाद्य तत्रापि हेयत्वाद्विरक्ताः सन्तस्तामपि हेयपक्षे क्षिपन्तीति वाक्यार्थः । निवृत्तविकल्पकल्लोलाः सन्तो मुक्तिमिच्छन्तीति यावत् । "श्रुत्वा प्रकाशवर्षात्तु व्याख्यातं तावदीदृशम् । विशेषतस्तु नैवास्ति बोधोऽत्रानुभवादृते" ॥ इति । वसन्ततिलकं वृत्तम् ॥ ५५ ॥

**मरकतमयमेदिनीषु भानोस्तरुविटपान्तरपातिनो मयूखाः ।**
**अवनताशितिकण्ठकण्ठलक्ष्मीमिह दधति स्फुरिताणुरेणुजालाः ॥५६॥**

अत्राद्रौ मरकतभूमिषु रविकिरणा वृक्षप्रकाण्डविवरनिर्गता ऊर्ध्वप्रसारितमयूरग्रीवाशोभां दधति । यतः कचकचायमानसूक्ष्मरजोनिकराः । एतच्चानुभवसिद्धं सर्वस्य । पुष्पिताग्रा वृत्तम् ॥ ५६ ॥

---

1 'ग्रहेन' क. पाठः ।

**या बिभर्ति कलवल्लकीगुणस्वानमानमतिकालिमालया ।**
**नात्र कान्तमुपगीतया तयास्वानमा नमति कालिमालया ॥ ५७ ॥**

अत्र नगे तयालिमालया भ्रमरावल्या उपगीतया गातुं प्रवृत्तया हेतुना का नारी अस्वानमा मानिन्यपि कान्तं न नमति सर्वैव कान्तवशगा भवतीत्यर्थः। वसन्तस्य प्रस्तुतत्वात् । सुखेनानमयितुं शक्यते इति स्वानमा, खल् ततो न-ञ्समासः । अपिशब्दार्थश्च बोद्धव्यः । कया तयेत्याह—यालिमाला कलवल्लकीगुणस्वानेन मधुरवीणातन्त्रीरवेण मानं तुलां सादृश्यं बिभर्ति, या चातिका-लमालया कालिम्नः कार्ष्ण्यस्यालयाः स्थानभूताः कालिमालया अञ्जनकोकिलका-कादयस्ते अतिक्रान्ताः कृष्णत्वेन जिता यया सातिकालमालया अतिकृष्णेत्यर्थः। केचित्तु अतिकालिम्न आलयेति व्याचक्षते । एवं च स्त्रीत्वं दुर्लभं स्यादालय-शब्दस्य पुंलिङ्गत्वात् । स्वान इति "स्वनहसोर्वे"ति अङ्विकल्पितः। "नौ रलौ गुरुयुता रथोद्धता" इति ॥ ५७ ॥

**सायं शशाङ्ककिरणाहतचन्द्रकान्त-**
**निष्यन्ननीरनिकरेषु कृताभिषेकाः ।**
**अर्कोपलोल्लसितवह्निभिरह्नि दीप्ता-**
**स्तीव्रं महाव्रतमिवात्र चरन्ति वप्राः ॥ ५८ ॥**

अत्राद्रौ वप्रास्तटास्तीव्रं दुश्चरं महाव्रतमिव चरन्ति । स्नात्वासकृदग्नौ प्र-वेशो महाव्रतं यत्र शामाशमलमिति प्रसिद्धिः । कुत इत्याह—सायं निशागमे चन्द्ररश्मिस्पृष्टेभ्यश्चन्द्रकान्तमणिभ्यो निष्यन्नेषु स्रुतेषु नीरनिकरेषु जलप्रवाहेषु कृतस्नानाः, तथा दिनेऽर्कोपलेभ्यो दिवसकरोपलेभ्यः सूर्यकान्तेभ्य उल्लसितैर्निः-सृतैरग्निभिर्दीप्तास्तप्ताः । यश्च महाव्रतं चरति स स्नात्वा स्नात्वा वह्नौ प्रविशति । निष्यन्नमिति स्यन्देर्निष्ठानलोपः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः । अनुविप-र्यभिनिभ्यः" इति षत्वम् "ष्टुना ष्टुः" । निष्यन्द इति त्वपपाठः ॥ ५८ ॥

**एतस्मिन्नधिकपयःश्रियं वहन्त्यः संक्षोभं पवनभुवा जवेन नीताः ।**
**वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः॥**

अत्राद्रौ महासरस्यः सरोविशेषा वाल्मीकिमुनेर्भारतीनां साधर्म्यं बिभ्रति। रामायणं सरांसि चात्र सदृशानीत्यर्थः । श्लेषोऽधुना । कीदृश्यः सरस्यः, अ-धिकां बह्वीं पयःश्रियं जलसंपदं धारयन्त्यः, तथा च पवनभुवा वातसमुत्थेन

जवेन संक्षोभमाकुलत्वं नीताः, तथा अरहितरामाः सहचरीसहिता लक्ष्मणाख्याः सारसा यत्र । भारत्योऽप्यधिकपयः, अधिकृता वर्णनीयत्वेन प्रस्तुताः कपयो वानराः यासु, तथा श्रियं सीतारूपिणीं वहन्त्यः । अथवा च्छन्दोलंकारादिकां श्रियं चारुतां बिभ्रत्यः, तथा पवनभुवा मारुतिना कर्त्रा जवेन वेगेनोदधिलङ्घनाग्निदाहादिना संक्षोभमाडम्बरं वीररसत्वं प्रापिताः, तथा अरहितौ विद्यमानौ रामलक्ष्मणौ दाशरथी यत्र । अर्थवशाच्चोभयत्र विभक्तिपरिणामः, नह्यन्यथा साधर्म्यं स्यात् । एवमन्यत्रापि नैयायिकः शब्दान्वयो बोद्धव्यः । समानो धर्मो येषां ते सधर्माणस्तद्भावः साधर्म्यं सादृश्यम् । प्रहर्षिणी वृत्तम् ॥ ५६ ॥

**इह मुहुर्मुदितैः कलभैरवः प्रतिदिशं क्रियते कलभै रवः ।**
**स्फुरति चानुवनं चमरीचयः कनकरत्नभुवां च मरीचयः ॥ ६० ॥**

इहाद्रौ प्रतिदिशं दिशि दिशि हृषितैः कलभैः करिपोतकैर्मुहुः कलभैरवो मधुरभीषणो रवो बृंहितं क्रियते । वने वने च चमरीणां चयो यूथः स्फुरति परिभ्रमति । तथा कनकभूमीनां रत्नोर्वीणां च मरीचयो भासः स्फुरन्ति द्योतन्ते । "द्रुतविलम्बितमाह नभौ भरा"विति वृत्तम् ॥ ६० ॥

**त्वक्साररन्ध्रपरिपूरणरक्तगीति-**
**रस्मिन्नसौ मृदितपक्ष्मलरल्लकाङ्गः ।**
**कस्तूरिकामृगविमर्दसुगन्धिरेति**
**रागीव सक्तिमधिकां विषयेषु वायुः ॥ ६१ ॥**

इहाद्रौ विषयेषु प्रदेशेषु वायुरधिकां सक्तिमुपैति नितरां सम्बन्धं याति सदैव वहतीत्यर्थः । कीदृशोऽसौ, त्वचि सारास्त्वक्साराः कीचका वेणवस्तेषां रन्ध्रं छिद्रं तस्य परिपूरणं व्याप्तिस्तेन रक्ता मधुरा गीतिर्ध्वनिर्यस्य स तथोक्तः, तथा मृदितान्यामृष्टानि पक्ष्मलानि तनुरोमाणि रल्लकानां मृगविशेषाणामङ्गानि शरीराणि येन, कस्तूरिकायोनिः कुरङ्गः कस्तूरिकामृगस्तस्य विमर्दः परामर्शस्तेन सुगन्धिः सुरभिरतश्च रागीव कामितुल्यः । यः किल रागी स विषयेषु शब्दस्पर्शरसरूपगन्धेषु अत्यर्थं सङ्गमुपैति, अन्यच्च यदा वंशं वादयति तदा मधुरगेयो भवति । केवले हि गीयमाने वैस्वर्यं भवति । तथा पक्ष्मलस्य सरोम्णो रल्लकस्य राङ्कवस्याङ्गं मृद्नाति, कस्तूरिकासमालभनेन च सु-

गन्धिर्भवति । गन्धशब्दोऽत्र गुणवचनो न द्रव्याभिधायीतीत्वं भवत्येव । "गन्धस्येदुत्पूतिसुसुरभिभ्यः" इति ॥ ६१ ॥

**प्रीत्यै यूनां व्यवहिततपनं प्रौढध्वान्तं दिनमिह जलदाः ।**
**दोषामन्यं विदधति सुरतक्रीडायासश्रमशमपटवः ॥ ६२ ॥**

इह मेघा दिवसं दोषामन्यं रात्रिमात्मानं मन्यमानं कुर्वन्ति, यूनां प्रीत्यै तरुणानां प्रमदाय । तेहि रात्रौ रमन्ते । युवतयश्च युवानश्च युवानः "पुमान्स्त्रिया" । कुतो दोषामन्यमित्याह—व्यवहितस्तपनो रविर्यत्र तमत एव प्रौढध्वान्तं घनान्धतमसम् । कीदृशाः मेघाः, सुरते निधुवने या क्रीडा केलिस्तत्र तया वा य आयासोऽङ्गमर्दस्तेन यः श्रमः खेदस्तस्य यः शमो निवृत्तिस्तत्र पटवः समर्थाः शैत्यकरणेन । प्रौढमिति "प्रादूहोढोढ्येषैष्येष्वि"ति वृद्धिः । ध्वान्तमिति निपातितम् । दोषा आत्मानं मन्यत इति दोषामन्यम् "आत्ममाने खश्चानव्ययस्ये"ति वचनात् मुमभावः । शमश्रमयोर्घञि "नोदात्तस्ये"ति वृद्धिप्रतिषेधः । "म्भौ न्लौ गः स्याद् भ्रमरविलसित"मिति ॥ ६२ ॥

**भग्नो निवासोऽयमिहास्य पुष्पैः सदानतो येन विषाणिनागः ।**
**तीव्राणि तेनोज्झति कोपितोऽसौ सदानतोयेन विषाणि नागः ॥६३॥**

इहाद्रौ तेन हेतुनासौ नागः सर्पः कोपितः संस्तीव्राणि दुःसहानि विषाणि क्ष्वेडान् मुञ्चत्युद्वमति । येनास्य नागस्य विषाणिना दन्तिनायमगश्चन्दनतरुर्निवास आश्र[1]यभूतो भग्नो मथितः । कीदृगगः, पुष्पैः सदा नित्यमानतो नम्रः । विषाणिना कीदृशेन, सदानतोयेन सह दानतोयेन मदजलेन वर्तते यस्तेन सदानतोयेन मत्तेनेत्यर्थः । अत एवागविघट्टनं । न गच्छतीत्यगः डः । "नगोऽप्राणिष्वन्यतरस्या"मिति । आख्यानिका वृत्तम् ॥ ६३ ॥

**प्रालेयशीतमचलेश्वरमीश्वरोऽपि**
**सान्द्रेभचर्मवसनाभरणोऽधिशेते ।**
**सर्वर्तुनिर्वृतिकरे निवसन्नुपैति**
**न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥ ६४ ॥**

इह नगेऽकिञ्चनोऽपि दरिद्रोऽपि अधिवसन्न किञ्चिदपि द्वन्द्वदुःखं शीतातपक्षुत्तृडादिकं क्लेशमुपैति प्राप्नोति । यतः सर्वेषु ऋतुषु सर्वैर्वा ऋतुभिर्निर्वृ-

[1] 'ल' क. ग. पाठः ।

तिकरे सुखविधायिनि । स्यादेतद्धिमवानप्येवंविध इत्याह—अचलेश्वरं नगाधिपम् ईश्वरोऽपि (सान्द्रेभ) चर्मप्रावरणोऽधिशेते । यतः प्रालेयशीतं हिमेन शीतलं, शीतेन चावश्यं सान्द्रं वासः पिधीयते, अयं तु सर्वर्तुनिर्वृतिकरः, हिमेन चाजस्रं शैत्यं तेनास्य का तुला यत्र निर्धनोऽपि न दुःखभाक् ऋतुषट्कं च तिष्ठति । अचलेश्वरमितीश्वर इति च साभिप्रायं नामात्र । अकिञ्चनता चात्र देशान्तरवासे सति भूतपूर्वगत्याढ्यतरापेक्षया वावबोद्धव्या, नत्वत्र निर्धनः कश्चित् । यद्वा मुख्यतोऽत्राकिञ्चनो निर्ममो निष्परिग्रहो मुनिर्विवक्षितः, पश्चात्तु दरिद्रः । यथा—"अकिञ्चनः सन्प्रभवः स संपदा"मिति ॥६४॥

**नवनगवनलेखाश्याममध्याभिराभिः**
**स्फटिककटकभूभिर्नाटयत्येष शैलः ।**
**अहिपरिकरभाजो भास्मनैरङ्गरागै-**
**रधिगतधवलिम्नः शूलपाणेरभिख्याम् ॥ ६५ ॥**

एष शैलः स्फटिककटकभूभिः प्रदेशविशेषोर्वीभिः शूलपाणेरभिख्यां शोभां नाटयत्यनुकरोति । शूलिनः कीदृशस्य, अहिर्वासुकिरेव परिकरः पर्यस्तिका तां भजते यः "भजो शिवः" । तथा भास्मनैर्भूतिकृतैरङ्गरागैः समालभनैरुद्धूलनैरधिगतधवलिम्नः प्राप्तशौक्ल्यस्य । वासुकेर्वृक्षषण्ड उपमानम्, स्फा[1]टिकभूमेर्भस्माङ्गरागः, रैवतस्य कपर्दी । भस्मन इमे विकाराः भास्मनाः "अनन्"ति प्रकृतिभावः । धवलिमेति "वर्णदृढे"तीमन् । मालिनी वृत्तमत्र ॥६५॥

**दधद्भिरभितस्तटौ विकचवारिजाम्बू नदै-**
**र्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः ।**
**निषेव्य मधु माधवाः सरसमत्र कादम्बरं**
**हरन्ति रतये रहः प्रियतमाङ्ककादम्बरम् ॥६६॥**

अत्राद्रौ माधवा वृष्णयो रह एकान्ते प्रियतमाङ्कात् कान्ताशरीराद-म्बरं हरन्ति वास आक्षिपन्ति, किमर्थं रतये रन्तुं । किं कृत्वा मधु मद्यं निषेव्य पीत्वा । कीदृशं, कादम्बर्या सुरया सहितं कृतसन्धानं कादम्बरम् । शैल इति लक्षणेनाण् । अथवा येन निमित्तेन सुरा कादम्बरीत्युच्यते तेन मध्वपि कादम्बरमत एव सरसं सुस्वादु । कीदृशास्ते, नदैर्जलाशयैर्विनोदितोऽप-

---
१ 'स्फ' ख. पाठः ।

नीतो दिनक्रमो यैः। कीदृग्भिर्नदैः, अभितः पार्श्वद्वये तटौ दधद्भिः पुलिने बिभ्राणैः । कीदृशौ, विकचवारिजं प्रफुल्लपद्ममम्बु जलं ययोस्तौ विकचवारिजाम्बू । तथा जाम्बूनदैः काञ्चनाभरणैः कृतरुचो विहितमण्डनाः । माधवाः स्नात्वालंकृत्य भुक्त्वा पीत्वा च प्रेयसीभिः सह अत्र रमन्तीति वाक्यार्थः । "वसुग्रहयुता जसौ जसयलाश्च पृथ्वी गुरु"रिति पृथ्वीवृत्तम् ॥ ६६ ॥

दर्पणनिर्मलासु पतिते घनतिमिरमुषि
ज्योतिषि रूप्यभित्तिषु पुरः प्रतिफलति मुहुः ।
व्रीडमसंमुखोऽपि रमणैरपहृतवसनाः
काञ्चनकन्दरासु तरुणीरिह नयति रविः ॥ ६७ ॥

इह रैवतकेऽर्कः काञ्चनकन्दरासु सुवर्णगुहासु तरुणीर्नायिका व्रीडं लज्जामसंमुखोऽपि नयति प्रापयति । व्रीडायाः कारणमाह—कीदृशीः, रमणैरपहृत वसना अपरिधानाः । असंमुखं पश्चात् स्थितश्चेत्कथं लज्जयति—आदर्शवन्निर्मलासु घनान्धकारापहारिणि तेजसि पुरोऽग्रे रूप्यभित्तिषु दुर्वर्णकुड्येषु पुनः पुनः प्रतिफलति सति । अत एव प्राकाश्याल्लज्जिताः । व्रीडोभयलिङ्गम् । वंशपत्रपतितं वृत्तत् ॥ ६७ ॥

अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥ ६८ ॥

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये रैवतकवर्णनं नाम
चतुर्थः सर्गः ॥ ४ ॥

असावद्रिस्त्वय्यभ्यागतेऽभिमुखमागते सरभसं साभिनिवेशमुच्चैः प्रत्युत्थानं करोतीव, कैरम्बुवाहैर्जलधरैः । कीदृशैः, विडम्बितशृङ्गसमूहशोभैरुच्चैरुन्नतैर्यतो द्रुतेन त्वरितेन मरुता वायुनापनुन्नैः प्रेरितैः सहेलं सविलासं समुन्नमद्भिः शितिवासोवसनश्यामैर्बलभद्रोत्तरीयकृष्णैर्यतोऽसौ नीलवासाः । नुन्न इति "नुदविदे"ति वा नत्वम् । अभ्युत्तिष्ठतीत्यूर्ध्वकर्मत्वात्तङभावः । श्यामलं कृष्णम् । मालिनी वृत्तम् । तल्लक्षणं तु "ननमयययुतेयं मालिनी भोगिलोकै"रिति भद्रम् ॥ ६८ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि-वल्लभदेवाचार्य्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां रैवतकवर्णनं चतुर्थः सर्गः ॥ ४ ॥

अथ

# शिशुपालवधकाव्ये ।



## पञ्चमः सर्गः ।

इत्थं गिरः प्रियतमा इव सोऽव्यलीकाः
शुश्राव सूततनयस्य तदाऽव्यलीकाः ।
रन्तुं निरन्तरमियेष ततोऽवसाने
तासां गिरौ च वनराजिपटं वसाने ॥ १ ॥

स भगवानित्थमुक्तेन प्रकारेण सूततनयस्य दारुकस्य तदा वाचोऽश्रौषीत् । कीदृशीः, अव्यलीका मनोरमाः, व्यलीकं हि मनसोऽप्रियम् । तथाऽव्यलीकाः सत्या अनध्यारोपितासदर्थत्वात् । विगतमलीकं यासामिति कृत्वातश्चाह्लादकत्वात् प्रियतमातुल्याः । यतश्चैवंविधा वाचः श्रुतवान् ततो हेतोस्तासां गिरामवसाने समाप्तौ तस्मिन् गिरौ रैवतके वनराजिपटं कानना[1]लिवासो वसाने परिदधति निरन्तरमातिशयेन रन्तुमियेष चिरं रमते स्म । सर्वगुणयुक्ते ह्यवश्यमेव महात्मानो रज्यन्ते । "तभौ जौ वसन्ततिलकं गुरुकद्वयं चेत्" ॥ १ ॥

तं स द्विपेन्द्रतुलितातुलतुङ्गशृङ्ग-
मत्युल्लसत्कदलिकावनराजिरुच्चैः ।
विस्ताररुद्धवसुधोऽन्वचलं चलाल
लक्ष्मीं दधत् प्रतिगिरेरलघुर्बलौघः ॥ २ ॥

---

१ 'राजि' ग. पाठः ।

स बलौघः सेनापूगस्तमचलमनु रैवतकं प्रति चचाल जगाम । कीदृशः, प्रतिगिरेः पर्वतान्तरस्य लक्ष्मीं शोभां दधदुद्वहन्, ज्ञायते द्वितीयः पर्वतोऽयमित्यर्थः । केचित्तु प्रतिपक्षभूतं गिरिं प्रतिगिरिमाहुः, विपक्षो ह्युपरि चलति। इदानीं पर्वतविशेषणद्वारेण सादृश्यमाह—कीदृशं तम्, द्विपेन्द्रो हस्तिश्रेष्ठस्तेन तुलितान्यनुकृतानि अतुलानि रम्याणि तुङ्गानि शृङ्गाणि यस्य तं, श्रेष्ठार्थत्वादतुलशब्दस्य नात्रार्थबाधा । बलौघः कीदृशः, अत्युल्लसन्त्यः स्फुरन्त्यः कदलिका ध्वजदण्डा एव वनराजयो वृक्षपंक्तयो यस्य स तथोक्तः । राजिमिति तु पाठे अत्युल्लसन्त्यः कदलिकातुल्या वनराजयो यस्येति विग्रहः । तथा विस्तारेण रुद्धा व्याप्ता वसुधा येन । उच्चैरुन्नत उन्नतं वा अलघुर्विस्तीर्णः । गिरेस्तु विभक्तिविपरिणमनीयानि विशेषणान्येतानि । गजानां शृङ्गाण्युपमानं, कदलिकानां वनराजयः, बलौघस्य गिरिः । अन्वचलमित्यन्नुशब्दः कर्मप्रवचनीयस्तद्योगे चाचलमिति द्वितीया । अन्यो विरुद्धो गिरिः प्रतिगिरिः "कुगतिप्रादयः"। ओघशब्दः पृषोदरादिः ॥ २ ॥

भास्वत्करव्यतिकरोल्लसिताम्बरान्ताः
सापत्रपा इव महाजनदर्शनेन ।
संविव्युरम्बरविराजि चमूसमुत्थं
पृथ्वीरजः करभकण्ठकडारमाशाः ॥ ३ ॥

पृथ्वीरजो भूरेणुमाशा दिशः कर्त्र्यः संविव्युः परिदधुः । यतोऽम्बरविराजि वस्त्रवच्छोभते । चमूसमुत्थं सेनातः समुद्भूतं करभकण्ठकडारमुष्ट्रग्रीवापिङ्गलम् । किं भूता दिशः, भास्वत्करव्यतिकरेण रविकिरणसंश्लेषेणोल्लसितो भास्वरोऽम्बरान्तो नभःपर्यन्तो यासाम् । अतश्चोत्प्रेक्ष्यते—महाजनदर्शनेन जनतावलोकनेन सलज्जाः सत्य इव रजोऽम्बरं संविव्युः । यस्याः किल महि[1]लाया भास्वता रत्नकटकवशेन सद्युतिना करेण[2] हस्तेन संपर्कादुल्लसितः स्रस्तः प्रकाशतरो वाम्बरान्त उत्तरीयप्रान्तं भवति सा गुरुजनावलोकनात्सव्रीडा सती शरीरावलोकननिवृत्तये वासो वस्ते । संविव्युरिति व्येञोर्लिट् उस् । "न व्यो लिटी"ति आत्वाभावः । "असंयोगाल्लिट् कित्" यजादित्वात्संप्रसारणम् । "संप्रसारणाच्चे"ति एकादेशः । द्वित्वं "लिट्यभ्यासस्योभयेषाम्"। येतु संविव्य-

---

१ 'ही' ग. पाठः । २ 'रयेन' ख. पाठः ।

युर्वसनचार्वििति पठन्ति तैः संप्रसारणाभावे युक्तिर्वक्तव्या । त्रिवर्ष उष्ट्रः करभ इति ॥ ३ ॥

आवर्तिनः शुभफलप्रदशुक्तियुक्ताः
संपन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः प्यधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्मिभिरापतन्तः ॥ ४ ॥

तुरगा ऊर्मिभिर्वृन्दैस्तूर्णं त्वरितमागच्छन्तो भूमिं प्यधुरस्थगयन् । कीदृशा अश्वाः, पयोधय इव समुद्रतुल्याः । अधुना श्लेषः—अश्वास्तावदावर्तिनः प्रशस्तलक्षणविशेषयुक्ताः, अब्दयोऽपि भ्रा[१]म्यज्जलवन्तः । अश्वा अभिमतदायिभिः शुक्तिभिरुरस्यैरावर्तविशेषैः सम्बद्धाः, उदधयोऽपि सितमुक्ताप्रदाभिः शुक्तिभिः प्राणिभेदैर्युक्ताः । अश्वाः संपन्नदेवमणयोऽखण्डकण्ठावर्ताः, उदधयोऽपि संपन्ना देवानां मणय एभ्य इति संपन्नदेवमणयः । देवमणिः कौस्तुभ इत्यन्ये । अश्वा भृतरन्ध्रभागा मांसलच्छिद्रप्रदेशाः, समुद्रा अपि जलपूरितागाधप्रदेशाः । अश्वा अतिरोचमानाः शुभेन रोचमानाख्येनावर्तेन युक्ताः, अब्दयोऽपि अतिशयेन शोभमानाः । अश्वास्तूर्णमूर्मिभिर्वृन्दैरागच्छन्तः, समुद्रा अप्यूर्मिभिस्तरङ्गैरापतन्तः शीघ्रमेव पृथिवीं पिदधति स्म । प्यधुरिति दधातेरपिपूर्वस्य लुङ् । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" ॥ ४ ॥

आरक्तमग्नमवमन्य सृणिं शिताग्र-
मेकः पलायत जवेन कृतार्तनादः ।
अन्यः पुनर्मुहुरुदप्लवतास्तभार-
मन्योन्यतः पथि वताबिभितामिभोष्ट्रौ ॥ ५ ॥

करिकलभौ मार्गे परस्परं चित्रमबिभितां त्रेसतुः । जातिस्वभावो ह्येष तयोः । तमेव त्रासमाह—एक इभ आरक्ते शिरोमर्मणि मग्नं तीक्ष्णकोटिं सृणिमङ्कुशमवमन्याविगणय्य मुक्तदीनगर्जितः सन् वेगात् पलायताधावत् । उष्ट्रः पुनर्भारं निरस्यासकृदुदप्लवतोट्टिटीके । पलायतेति परापूर्वस्यायतेर्लङ् । "उपसर्गस्यायता"विति लत्वम् । अबिभितामिति लङ् । तसस्ताम् "भियोऽन्यतरस्या"मितीत्वम् ॥ ५ ॥

१ 'म' ख. पाठः ।

आयस्तमैक्षत जनश्चटुलाग्रपादं
गच्छन्तमुच्चलितचामरचारुमश्वम् ।
नागं पुनर्मृदुसलीलनिमीलिताक्षं
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ६ ॥

लोकोऽश्वेभावेवं यान्तौ सन्तावायस्तं चिरमैक्षतादाक्षीत् । अश्वं तावच्चटुलौ चञ्चलावग्रपादौ पूर्वखुरौ यत्र तं तथा यान्तं चिरमदर्शयत् । कीदृशमश्वम्, उच्चलितं चलाचलं विसर्पि यच्चामरं प्रकीर्णकं तेन चारुं मनोहरम् । नागं कथं यान्तं, मृदु मन्थरं तथा सलीलं निमीलिते अक्षिणी यत्र येन वा । अथ किमित्येवं यान्तौ तौ लोकस्य मनोहरौ ननु विपर्ययेणेत्याह—सर्व एव कश्चिदनुरूपचेष्ट आत्मोचितव्यापारस्तोषयति । अश्वस्य च जवेन यानमुचितं नागस्य च मन्थरम् । खलुर्हेतौ ॥ ६ ॥

त्रस्तः समस्तजनहासकरं करेणो-
स्तावत् खरः प्रखरमुल्लसयांचकार ।
यावच्चलासनविलोलनितम्बबिम्ब-
विस्रस्तवस्त्रमवरोधवधूः पपात ॥ ७ ॥

जातिस्वभावात् खरः करेणोर्भीतः संस्तावत् प्रखरं विषममुल्लसयांचकारोदटीकत यावदवरोधवधूरन्तःपुरचेटिका पपात, नायिकायां त्वनौचित्यं स्यात् । कथमुट्टिटीके, सर्वलोकहासविधायि । कथं पपात, चलमस्थिरं यदासनमवस्थानबन्धः पर्याणं वा तेन विलोलमाकुलं यन्नितम्बबिम्बं पश्चात्कटीभागस्ततो विस्रस्तं पतितमुत्तरीयं यत्र अत एव च जनहासकरं । चुलुम्पादिवदुल्लसि[१]रपि धातुषु बोद्धव्यः । प्रयोगेऽपि दृश्यते । यथा—"कैश्चित् स्मेरमुखैर्निगृह्य वदनान्यन्यैर्हसद्भिस्तथा निर्यद्बाष्पमथापरैः कृतमहाशब्दोरुहासं जनैः । दृष्टो लम्ब[३]बृहत्कुचां पृथुकुचां पृष्ठात् क्षिपंस्तुन्दिलां चुन्दीमुल्लसयांचकार कलभत्रस्तश्चिरं टाकरः" इति ॥ आसनमिति भावेऽधिकरणे वा ॥ ७ ॥

शैलोपशल्यनिपतद्रथनेमिधारा-
निष्पिष्टनिष्ठुरशिलातलचूर्णगर्भाः ।

---

१ 'हस्तिनस्तु' ग. पाठः । २ 'मि' ग. पाठः । ३ 'म्बकुचां बृहत्पृ' क. पाठः । ४ 'म' ग. पाठः ।

भूरेणवो नभसि बद्धपयोदचक्रा-
　　श्चक्रीवदङ्गरुहधूम्ररुचो विसस्रुः ॥ ८ ॥

पृथिवीपांसवो वियति विसस्रुरुत्पेतुः । कीदृशाः, शैलोपशल्यं पर्वतनिकटं तत्र निपतन्त्यो या रथनेमिधाराः स्यन्दनचक्रप्रान्तकोटयस्ताभिर्निष्पिष्टं चूर्णीकृतं निष्ठुरं कठोरं शिलातलचूर्णं गर्भेऽभ्यन्तरे येषां, तथा आकाशे रचितं मेघतुल्यं चक्रं पुञ्जो यैस्तथा चक्रीवान् खरस्तस्याङ्गरुहाणि लोमानि तद्वद्धूम्ररुचो मलिनभासः ॥ ८ ॥

उद्यत्कृशानुशकलेषु खुराभिघाता-
　　द्भूमीसमायतशिलाफलकाचितेषु ।
पर्यन्तवर्त्मसु विचक्रमिरे महाश्वाः
　　शैलस्य [1]दर्दुरपुटानिव वादयन्तः ॥ ९ ॥

अश्वाः पर्वतस्य पर्यन्तवर्त्मसु निकटमार्गेषु विचक्रमिरे जग्मुः । अश्वानां गतिविशेषो वि[2]क्रमणम् । "वेः पादविहरणे" इत्यात्मने पदम् । कीदृक्षु वर्त्मसु, भूम्याः समैर्न निम्नैर्नाप्युन्नतैरायतैश्च दीर्घैः शिलाफलकैः दृषत्फ[3]लकैराचितेषु व्याप्तेषु, अतएवाश्वखुरप्रहारान्निस्सरद्वह्निस्फुलिङ्गेषु । अतश्च यदाश्वा विशिष्टया गत्या यान्ति तदा खुराणां पर्यायपातादुत्प्रेक्ष्यते—दर्दुरपुटानिव वादयन्तो व्रजन्ति । मुखावनद्धं वाद्यं दर्दुरपुट उच्यते, तमिव वादयन्तः, यः प्रेक्षणके मुरजैः सह वाद्यते । उद्यदिति यणः शता ॥ ९ ॥

तेजोनिरोधसमतावहितेन यन्त्रा
　　सम्यक्कषात्रयविचारविदा नियुक्तः ।
आरट्टजश्चटुलनिष्ठुरपातमुच्चै-
　　श्चित्रं चकार पदमर्धपुलालयेन ॥ १० ॥

आरट्टे जात आरट्टजोऽश्वविशेषश्चित्रं पदं चकार नानाप्रकारं गतिविशेषं विदधे । आरट्टवाह्लिककम्बोजादयो देशविशेषा अश्वयोनयः । कीदृगारट्टजः, उच्चैरुन्नतस्तथा यन्त्रा सादिनाश्वारोहेण नियुक्तश्चोदितः । कीदृशा, तेजोनिरोधो दर्पवारणं वेगोत्थापननिषेधस्तेन या समता साम्यावस्था अश्वस्य मध्या गतिस्तत्रावहितेन दत्तचित्तेन, धावन्तमश्वं वशीकर्तुं यो जानातीत्यर्थः । तथा सम्य-

[1] 'दु' ख. पाठः । [2] 'विच' ख. पाठः । [3] 'त्पट्टैः' ग. पाठः ।

गविपरीतो यः कषात्रयविचारस्तं वेत्ति यः । 'वडवावलोकन-स्खलन-स्वपन-त्रसन-हिंसन-विमनस्कतासु षट्सु ताडनस्थानेषु मध्यादेकत्र त्रिः कषया हननं कषात्रयम्, कषा वरत्रा । अन्ये त्वाहुः—निद्रा-विमनस्कता-रोषाख्यास्तिस्रः कषावस्थाः कषात्रयम् । गच्छतोऽश्वस्य निद्रा यदा भवति तदा मुखे हन्यते, यदा वैमनस्यं तदा पार्श्वताडनम्, यदा रोषस्तदा पश्चादिति । कीदृशं पदं, चटुलश्चपलो निष्ठुरः कठिनः पातः पादन्यासो यत्र । केन चकार, पुला गतिविशेषस्तस्या अर्धमर्धपुला तस्या लयो लीला स्थानकम् वा तेन । एतच्च सर्वमश्वलक्षणात् सुबोधम् ॥ १० ॥

नीहारजालमलिनः पुनरुक्तसान्द्राः
कुर्वन् वधूजनविलोचनपक्ष्ममालाः ।
क्षुण्णः क्षणं यदुबलैर्दिवमातितांसुः
पांसुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः ॥ ११ ॥

नगात्संभूतो रेणुराशामुखं क्षणमतुत्थयदरञ्जयत् श्यामलीचकारेत्यर्थः । कीदृक् पांसुः, नीहारजालमलिनो मिहिकानिकुरम्बश्यामस्तथा वनिताना[1]तनयनरोमपंक्तीः सुभावघना अपि पुनरुक्तसान्द्रा अधिकघना विदधत्, तथा वृष्णिसैनिकैः पिष्टः । अतश्च दिवमन्तरिक्षमातितांसुरारुरुक्षुः । यथा कश्चित् मलिनः पापीयान् तथा च क्षुण्णः स कदाचित्कुतोऽपि ··············वश्यमेवात्मवनितावदनानि तुत्थयति प्रकाशयति गर्वेण च दिवमप्यारोहति········ तद्वनिता···
······ति । आतितांसुरिति तनोतेः सन् । "तनिपतिदरिद्राणा"मितीड्विभाषितः। "अज्झनगमां सनि । तनोतेर्विभाषे"ति दीर्घः । तुत्थिधातुश्चुलुम्पादिवत् ॥११॥

उच्छिद्य विद्विष इव प्रसभं मृगेन्द्रा-
निन्द्रानुजानुचरभूपतयोऽध्यवात्सुः ।
वन्येभमस्तकनिखातनखाग्रमुक्त-
मुक्ताफलप्रकरभाञ्जि गुहागृहाणि ॥ १२ ॥

इन्द्रानुजानुचरभूपतय उपेन्द्रसेवकनृपाः प्रसभं बलादेव सिंहानपसार्य गुहागृहाणि दरीमन्दिराणि अध्यवात्सुरधितस्थुः । "उपान्वध्याङ्वसः" । किमि-

---

[1] 'य' ख. पाठः ।

वोच्छिद्येत्याह—विद्विष इव रिपून्यथा। यथा कश्चिच्छत्रून् प्रसभमुच्छिद्य तद्गृहानधिवसतीत्यर्थः। कीदृंशि गुहागृहाणि, वन्येभमस्तकेषु आरण्यकुञ्जरकुम्भेषु निखातानि सूचि[1]तानि यानि नखाग्राणि सिंहकरजकोटयस्तैर्मुक्तान्युत्सृष्टानि तेभ्यो वा मुक्तानि पतितानि यानि मुक्ताफलानि तेषां प्रकरान् पूगान् भजन्ते इति मुक्ताफलप्रकरभाञ्जि। रिपुपुराण्यपि समुक्ताफलानि भवन्ति। अध्यवात्सुरिति लुङ् ॥ १२ ॥

बिभ्राणया बहुलजापकपङ्कपिङ्ग-
पिञ्छावचूलमनुमाधवधाम जग्मुः।
चञ्च्वग्रदष्टचटुलाहिपताकयान्ये
स्वावासभागमुरगाशनकेतुयष्ट्या ॥ १३ ॥

अन्ये राजानोऽनुमाधवधाम कृष्णावासनिकासमीपे यः स्वावासभाग आत्मीयावसथप्रदेशस्तं जग्मुर्बुबुधिरे। केन, उरगाशनकेतुयष्ट्या उरगाशनो गरुडः स एव केतुश्चिह्नं तस्य यष्ट्या दण्डेन भगवद्ध्वजलतयेत्यर्थः। कीदृश्या यष्ट्या, चञ्च्वग्रेण गरुडतुण्डप्रान्तेन दष्टः खण्डितोऽत एव चटुलः कम्प्रो योऽहिरुरगः स एव पताका वैजयन्ती यस्यास्तथा बहुलो घनो यो जापकपङ्कः कालीयकनिर्यासस्तेन पिङ्गं हरिद्रं यत्पिञ्छं गरुडबर्हं तदेवावचूलं चामरं तद्बिभ्राणया वहन्त्या। ध्वजे हि सितं पिशङ्गं लोहितं वा चामरं क्रियते। अनुमाधवधामेति "अनुर्यत्समये"ति समासः। जग्मुरिति ज्ञो लिट् ॥ १३ ॥

छायामपास्य महतीमपि वर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम्।
सर्वो हि[2] नोपनतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमभ्युपैति ॥ १४ ॥

जनानां समूहा जनतास्ताः सांप्रतिकीं वृक्षच्छायामपास्य त्यक्त्वा एष्यन्तीं तां जगृहिरे सिषेविरे। कदाचित् सा ऊना स्यान्नेत्याह—महतीमपीति। कथं तर्हि जगृहिरे इत्याह—यतः सर्वः कश्चित् प्राप्तमपि स्थानं यावत् क्षीयमाणं तन्न सेवतेऽपित्वप्राप्तमपि वर्धमानम्। अतश्च यत्र संप्रति च्छाया तत्र सा

१ 'दि' ग. पाठः। २ 'पि' ग. पाठः।

क्षयेण क्षीयते अन्यत्र तु वृद्धिमती । आगमिष्यतीत्यागामिनी, गमेरिणिः आङि णित् । जगृहिरे इति कर्तरि लकारः । स्वरितेत्वादात्मनेपदम् । वर्धिष्णुमिति "अलंकृञ्"दिसूत्रेणेष्णुच् ॥ १४ ॥

अग्रेगतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्बाहुनाजुहुविरे मुहुरात्मवर्ग्याः ॥ १५ ॥

केनचित् पुरःसृतेन मुहुरात्मवर्ग्याः स्वसहायाः दूरादेवाजुहुविरे आहूता आकारिताः, यतोऽन्यतो गच्छन्तः । किं कृत्वाहूताः, मनोहरं स्थानमासाद्य अतएवापात्या आगन्तुका ये सैन्यास्तेषां यन्निराकरणं निवारणं तत्राकुलेन व्यग्रेण । कथमाजुहुविरे, आशु त्वरया प्लुतेन वेगेन कृतः स्वरः शब्दो यत्र, तथोद्बाहुना ऊर्ध्वभुजेन । तद्यथा आगच्छ भो देवदत्ताः ३ स्थानं मया साधु गृहीतमन्ये हरन्तीति । वसतिशब्द औणादिकः । रमयतीति रम्यः "कृत्यलिटो बहुल"मिति कर्तरि "अचो यत्" । आपतन्तीत्यापात्या "भव्यगेये"ति कर्तरि ण्यत् । आजुहुविरे इति ह्वेञः कर्मणि लिट् । "लिटि धातोरनभ्यासस्ये"ति द्वित्वं धातोर्यजादित्वात्संप्रसारणम्, द्वित्वस्य तु "लिट्यभ्यासस्ये"ति । आत्मवर्गे भवा आत्मवर्ग्याः स्वपक्षपातिताः "वर्गान्ताच्चाशब्दे यत्खावन्यतरस्याम्" ॥ १५ ॥

सिक्ता इवामृतजलेन मुहुर्जनानां
क्लान्तिच्छिदो वनवनस्पतयस्तदानीम् ।
शाखावसक्तवसनाभरणाभिरामाः
कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ॥ १६ ॥

तदानीं तस्मिन् काले वनवनस्पतयो वानेयवृक्षा विरेजुर्बभुः । कथं, कल्पद्रुमैः सह तुल्यैः सुरतरव इवेत्यर्थः । कुत इत्याह—जनानां मुहुर्या क्लान्तिरध्वखेदस्तस्याश्छिदो निवर्तकाः, अत एवामृतजलेन सिक्ता इव, अमृतयुक्तं हि श्रमनाशकरम् । तथा शाखास्ववसक्तैरवस्थापितैर्वसनाभरणैर्वस्त्रालंकारैरभिरामा हृद्याः । कल्पद्रुमा अप्यमृतसिक्ता भवन्ति श्रमशमपटवश्च, तथा वस्त्राभरणाद्यभिरामाः, यतो विचित्रफला नानाविधाभीष्टफलवस्तुयुक्ताः ॥ १६ ॥

यानाज्जनः परिजनैरवरोप्यमाणा
राज्ञीर्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटक्षणलक्ष्यमाण-
वक्त्रश्रियः सभयकौतुकमीक्षते स्म ॥ १७ ॥

जनः सामान्यलोको राज्ञीर्नृपदारान् सभयं सकौतुकं च ईक्षते स्म ऐक्षि-ष्ट । कीदृशीः परिजनैः कञ्चुकिभिर्यानादश्वादिकादवरोप्यमाणा भूमिं प्राप्यमा-णाः, तथा नरापनयने लोकोत्सारणे आकुला व्यग्राः सौविदल्ला महत्तरका यासु, अत एव सचकितमीक्षणम् । तथा स्रस्तः पतितो योऽवगुण्ठनपट उत्तरीय-वस्त्रं तेन हेतुना क्षणं लक्ष्यमाणा वक्त्रश्रीर्मुखकान्तिर्यासाम्, अत एवच स-कौतुकम् । अवरोप्यमाणा इति "रुहः पोऽन्यतरस्याम्" । राज्ञीरिति "ऋन्नी-भ्यो ङीप्" ॥ १७ ॥

कण्ठावसक्तनुबाहुलतास्तुरङ्गा-
द्राजावरोधनवधूरवतारयन्तः ।
आलिङ्गनान्यधिकृताः स्फुटमापुरेव
गण्डस्थलं शुचितया न चुचुम्बुरासाम् ॥ १८ ॥

अधिकृताः कञ्चुकिनो नृपशुद्धान्तनारीः अश्वेभ्योऽवरोपयन्तः स्फुटम-खण्डमेव परिष्वङ्गानापुर्लेभिरे, गण्डस्थ[1]लं कपोलफ[2]लकं पुनरासां ते शुचितया वैशिष्ट्येन न चुचुम्बुर्न पपुः । आश्लेषप्राप्तौ कारणमाह—कण्ठेषु अधिकृतग-लेषु अवसक्ता लग्नास्तन्व्यो मृद्व्यो बाहुलता भुजवल्लयो यासाम् ॥ १८ ॥

दृष्ट्वैव निर्जितकलापभरामधस्तात्
व्याकीर्णमाल्यकवरां कवरीं तरुण्याः ।
प्रादुद्रुवत् सपदि चन्द्रकवान् द्रुमाग्रात्
संघर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ १९ ॥

चन्द्रकवान् बर्ही द्रुमाग्रात् तरुप्रान्तात् सपदि तत्क्षणमेव प्रादुद्रुवत् पला-यामास, जनभयेनेतिभावः । अत्र निमित्तान्तरारोपमाह–अधस्तात् तरुतलस्थाया-स्तरुण्याः कवरीं केशपाशं दृष्ट्वैव सपदि ययौ । यतो निर्जितकलापभरां रामणी-

---

१ 'त' ख. पाठः । २ 'पु' ख. पाठः ।

यकपरिभूतशिखण्डाभोगां तथा व्याकीर्णैर्विक्षिप्तैर्माल्यैः कवरां शारां माल्यकैर्वा वरां श्रेष्ठाम् । युक्तं चैतत् यदसौ तदालोकनाद्गतः । यतः संघर्षिणा स्पर्धिना कर्त्रा गुणाभ्यधिकैर्विशेषोत्कृष्टैः सह दुरासं दुःखेनास्यत इति भावे खल् । मयूरश्च स्पर्धी युवतयो गुणाभ्यधिकाः । दृष्ट्वेवेति पाठान्तरम् । मालायां साधूनि पुष्पाणि माल्यानि "तत्र साधु"रिति यत् । तैः । कवरामित्यत्र केशविशेषाभावात् ङीषभावः, कवरीत्यत्र तदर्थत्वाद्भवत्येव । प्रादुद्रुवदिति लुङ् । "णिश्रिद्रुस्रुभ्य" इति च्लेश्चङ् । चन्द्रकं बर्हम् ॥ १९ ॥

**रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा**
**वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ।**
**भूभर्तुरायतनिरन्तरसन्निविष्टाः**
**पादा इवाभिबभुरावलयो रथानाम् ॥ २० ॥**

स्यन्दनपंक्तयोऽभिबभू रेजुः । कीदृश्यः, स्फुरन्त आयानमालादेः सुवर्णचयास्तेषामभीशुभिः कपिशीकृतदिक्काः, तथा वंशेषु वेणुदण्डेषु ये ध्वजाश्चिह्नानि तैरभ्रवलयं स्पृशन्त्यः, तथायतं दीर्घं निरन्तरं च निर्विवरं सन्निविष्टाः[1]स्थिताः, अतश्च भूभर्तू रैवतकाचलस्य पादा इव प्रत्यन्तशैलतुल्याः । तेऽपि दीप्यमानकनकदीपितककुभो वंशैरेव च ध्वजैरभ्रंलिहा आयतनिरन्तरस्थिताश्च । पिशङ्गीः करोति पिशङ्गयति "तत्करोती"ति णिच् । ततः कर्मणि निष्ठा ॥ २० ॥

**छायाविधायिभिरनुज्झितभूतिशोभै-**
**रुच्छ्रायिभिर्बहुलपाटलधातुरागैः ।**
**दूष्यैरिव क्षितिभृतां द्विरदैरुदार-**
**तारावलीविरचनैर्व्यरुचन् निवासाः ॥ २१ ॥**

भूपानां शिविराणि करिभिर्बभुः । कीदृग्भिः, शोभाकारिभिरत्यक्तमङ्गलकान्तिभिरुच्छ्रितैर्घनसिन्दूरादिरञ्[2]नैरुत्तमनक्षत्रमालालङ्कारैश्च, अतश्च दूष्यैरिव पटमण्डपतुल्यैरित्युपमा । यदि वा दूष्यैरपि रेजुरिति सहोक्तिः । तैरपि कीदृशैः, आतपाभावकरैः संस्थितसमृद्धदीप्तिभिरुच्चैः सान्द्रलाक्षादिरागैः परार्ध्यतारावलीविरचनैश्च । करिणां तारावली नक्षत्रमालानिभमाभरणं, दूष्याणां तु मुक्तावली, पाटलधातवो गैरिकादयः । रज्यतेऽनेनेति रागो रञ्जनं वा रागः । "घञि

१ 'आस्थिताः' ग. पाठः । २ 'रज' ग. पाठः ।

च भावकरणयोः" । व्यरुचन्निति भूतसामान्यविवक्षायां लुङ् । "द्युद्भ्यो लु-ङी"ति परस्मैपदम् ॥ २१ ॥

**उत्क्षिप्तकाण्डपटकान्तरलीयमान-**
**मन्दानिलप्रशमितश्रमघर्मतोयैः ।**
**दूर्वाप्रवालसहजास्तरणेषु भेजे**
**निद्रासुखं वसनसद्मसु राजदारैः ॥ २२ ॥**

राजदारैर्नृपप[1]त्नीभिर्वसनसद्मसु पटमण्डपेषु निद्रैव सुखं निद्राकृतं वा सुखं भेजेऽनुभूतम् । कीदृशैः, उत्क्षिप्तमुत्सारितं यत्काण्डपटकं पटकुटीपर्यन्तो लोमाख्यस्तद्रन्ध्रेण विशता मृदुमारुतेनापास्तं खेदस्वेदवारि येषां तैः । सद्मसु कीदृक्षु, शाद्वलाङ्कुरानाहार्यशय्येषु । लीयमानेति लीङः कर्तरि लकारः श्यन् ॥२२॥

**प्रस्वेदवारिसविशेषविषक्तमङ्गे**
**कूर्पासकं क्षतनखक्षतमुत्क्षिपन्ती ।**
**आविर्भवद्घनपयोधरबाहुमूला**
**च्छातोदरी युवदृशां क्षणमुत्सवोऽभूत् ॥ २३ ॥**

काचित् छातोदरी तनुमध्या युवदृशां तरुणचक्षुषां क्षणमुत्सवोऽभूत् आह्लादिनी जाता । यतः प्रकटीभवन् पीनस्तनकक्षाप्रदेशो यस्याः । कस्मादित्याह—यतः कूर्पासकं कञ्चुकमुत्क्षिपन्ती चालयन्ती । किमित्युत्क्षिपतीत्याह—देहे घर्माम्बुनात्यन्तलग्नमत एव च विदारितकररुहपदम् । छ्यतेः क्ते छातमिति रूपम् । छातमुदरं यस्याः सा छातोदरी लग्नावलग्ना । "नासिकोदरोष्ठे"ति ङीष् । यूनां दृशो युवदृशः ॥ २३ ॥

**यावत् स एव समयः सममेव ताव-**
**दव्याकुलाः पटमयान्यभितो वितत्य ।**
**पर्यापतत् क्रयिकलोकमगण्यपण्य-**
**पूर्णापणं विपणिनो विपणिं विभेजुः ॥ २४ ॥**

यावत् स एव समयः स्कन्धावारसन्निवेशकालस्तावदेव विपणिनो वणिजोऽव्याकुला निर्व्यग्राः समं युगपदेव विपणिं हट्टं विभेजुर्विभागेन शिश्रियुः । किं

---

1 'स्त्रीभिः' क. पाठः ।

कृत्वा, अभितः पार्श्वद्वये पटमयानि प्रचुरान् पटान् वितत्य प्रसार्य, पटैरापण-स्थानानि कृत्वेत्यर्थः । कीदृशं विपणिं, पर्यापतन्तो व्यञ्जनादिजिघृक्षयागच्छन्तः क्रयिकलोका ग्राहकजना यत्र, तथा अगण्येन बहुतरेण पण्येन व्यञ्जनादिना विक्रेयेण पूर्णा निर्भरा आपणा अववरिका निषद्या यत्र । यावत्तावच्छब्दौ नि-पातौ । बहून् पटान् प्रकृतान् प्राचुर्येण प्रस्तुतानिति वा विग्रहं कृत्वा "तत्प्रकृत-वचने मयट्, समूहवच्च बहुष्वि"ति चकारान्मयट् । स्वार्थिकाश्च प्रकृतितो लि-ङ्गान्यतिवर्तन्तेऽपीति, "णचः स्त्रियामञि"ति स्त्रीग्रहणेन ज्ञापितमिति नपुंसक-त्वम् । क्रीणातीति क्रयिकः क्रीता "क्रिय इकन्" । पणितव्यं पण्यं विक्रेयम्। आपणन्तेऽस्मिन्नित्यापणो विक्रयस्थानम् । "गोचरसंचरे"ति घः । विशेषेण प-णन्ते व्यवहरन्ते इति विपणिनो वाणिजकाः । दिदृक्षतीति चकारस्यानुक्तसमुच्च-यार्थत्वादिनिः । विपणन्तेऽस्मिन्निति विपणिर्वणिक्पथः—इण् । बाहुल्येन विप-णिशब्दं स्त्रियां स्मरन्ति ॥ २४ ॥

अल्पप्रयोजनकृतोरुतरप्रयासै-
रुद्गूर्णलोष्टलगुडैः परितोऽनुबद्धम् ।
उद्यातमुद्द्रुतमनोकहजालमध्या-
देकः शशं गुणमनल्पमवन्नवाप ॥ २५ ॥

अन्यः कश्चित् सैनिकः शशं मृगमवन् रक्षन् अनल्पं गरिष्ठं गुणं धर्मं सा-धुकारं वा अवाप लेभे । यत उद्द्रुतं भीतं, भीतत्राणे चावश्यमेव गुणो भव-ति । भये कारणमाह—उद्गूर्णाः प्रहारेच्छया उद्यमिता लोष्टाः पाषाणा लगुडाश्च दण्डा यैः, तैः समन्तादनुबद्धमुत्तब्धम्, अतश्चानोकहजालमध्याद् वृक्षषण्डान्तरा-दुद्यातमुत्थितं निःसृतम् । अल्पेन प्रयोजनेन शशकवधमात्रेण कृत उरुतरो ग-रीयान् प्रयासः क्लेशो यैरिति लागुडिकविशेषणम् । केचित्तु शशं कश्चिदवन् मारयन् अनल्पं गुणं चातुर्यं व्यञ्जनं वा अवापेति व्याचक्षते । कटकमध्येन हि शशको व्रजन् सर्वथावध्य इति लोकाचारः। उद्गूर्ण इति 'गुरी उद्यमने' इत्य-स्य क्ते रूपम् । अनोकहशब्दः पृषोदरादिः ॥ २५ ॥

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।

---

१ 'क्र' क. ग. पाठः । २ 'र्ण' ग. पाठः । ३ 'वि' ख. पाठः ।

**तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-**

**राकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥ २६ ॥**

हरिणो भयविह्वलत्वात् वेश्मनां समन्तात् सञ्चरन्नपि न कैश्चित् धानुष्कैरन्वबन्धि उत्तब्धः, तथापि न क्वचिदपि तस्थौ धृतिं बबन्ध। यतः श्रवणोपकण्ठप्रसृतलोचनशरैर्वनिताभिः परिभूतनेत्रलक्ष्मीक इत्युत्प्रेक्षा। एतदुक्तं भवति—यद्यपि धन्विभिरसौ नोत्तब्धस्तथापि सारङ्गाक्षीभिर्नयनशरैर्हतनेत्रत्वाम् पलायांचक्रे। निकेतानिति परितः—शब्दयोगे द्वितीया। धनुःशब्दश्चापपर्यायस्तस्येनि धन्वीति रूपम्। अन्वबन्धीति कर्मणि लुङ्। आकर्णं पूर्णानीति सुप्सुपेति समासः। नयनान्येवेषवः शराः॥ २६॥

**स्वास्तीर्णतल्परचितावसथः क्षणेन**

**वेश्याजनः कृतनवप्रतिकर्मकाम्यः।**

**खिन्नानखिन्नमतिरापततो मनुष्यान्**

**प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥ २७ ॥**

दासीलोकः श्रान्तान् आगच्छतः सैनिकान् उपचारैस्ताम्बूलादिभिरादरैः प्रत्यग्रहीत् प्रत्यैच्छत् आवर्जयामास। कीदृशः, क्षणेनैव स्वास्तीर्णतल्पाः सुष्ठु आस्तीर्णशय्या रचिता आवसथा येन, तथा तत्क्षणविहितप्रसाधनमनोहरोऽखिन्नमतिरश्रान्तमनस्कः, अतश्च ज्ञायते चिरनिविष्ट इव प्रथमतरं कृतास्थ इव। यो हि तद्दासी तस्यैतच्चातुर्यं भवति। वेशे कर्मणि पुरे वा भवा वेश्या। "दिगादिभ्यो यत्"। स चासौ जनो वेश्याजनः। प्रतिकर्म उत्कर्षाधानमिति॥ २७॥

**सस्नुः पयः पपुरनेनिजुरम्बराणि**

**जह्नुर्बिसं धृतविकासिबिसप्रसूनाः।**

**सैन्याः श्रियामनुपभोगनिरर्थकत्व-**

**दोषप्रवादममृजन् नगनिम्नगानाम् ॥ २८ ॥**

चमूचरा वानेयनदीनां याः श्रियो जलसंपदस्तासां यदनुपभोगेन निरर्थकत्वं निरुपयोगितया निष्प्रयोजनता तदेव दोषस्तेन यः प्रवादो गर्हाताममृजन् अक्षालयन्। आरण्या नद्यो न कस्मैचिदुपयुज्यन्त इत्ययशस्ते तासां निरास्थन्नित्यर्थः। तथाहि—सस्नुरुदमज्जन्, पयः पपुरुदकं[1] पिप्यिरे। अम्बराणि

---

१ 'जलं' ग. पाठः।

वासांसि अनेनिजुरक्षालयन्, बिसं जक्षुर्मृनालान्यादुः । तथा धृतं विकासि बिसप्रसूनं पद्मं यैः । एवं च सर्वभावोपयोगात् कथमित्र तासां निरर्थकत्वम् । अनेनिजुरिति लङ् । "निजां त्रयाणां गुणः श्लौ" गुणः । "सिजभ्यस्तविधिभ्यश्चे"ति जेर्भुस् । जक्षुरिति अदेर्लिट् "लिट्यन्यतरस्या"मिति घस्लादेशः द्वित्वं । "गमहने"ति अकारलोपः । "खरि चे"ति घस्य कः । "शासिवसिघसीनां चे"ति षत्वम् । अमृजन्निति लङ् "झोऽन्तः" "मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते" । निम्नं गच्छन्तीति निम्नगाः । "अन्येष्वपि दृश्यते" इति डः ॥ २८ ॥

**नाभीह्रदैः परिगृहीतरयाणि निम्नैः**
**स्त्रीणां बृहज्जघनसेतुनिवारितानि ।**
**जग्मुर्जलानि जलमण्डुकवाद्यवल्गु-**
**वल्गद्घनस्तनतटस्खलितानि मन्दम् ॥ २९ ॥**

स्नाने प्रवृत्ते तदा जलानि मन्दं जग्मुः । शनैर्वहने कारणमाह—यतो नितम्बिनीनां नाभीह्रदैर्गम्भीरैः सद्भिर्निषिद्धवेगानि, तथा विस्तीर्णश्रोणीतटप्रतीपनीतानि, तथा जले यन्मण्डुकवाद्यं वादनविशेषस्तेन वल्गु चारु वल्गन्तो नृत्यन्तो ये घनाः पीवराः कुचतटास्तत्र स्खलितानि प्रतिहतानि । अतश्च कारणत्रयात् स्वैरगमनम् ॥ २९ ॥

अथ हास्तिवर्णनम्—

**आलोलपुष्करमुखोल्ललितैरभीक्ष्ण-**
**मुक्षांबभूवुरभितो वपुरम्बुवर्षैः ।**
**खेदायतश्वसितवेगनिरस्तमुग्ध-**
**मूर्धन्यरत्ननिकरैरिव हास्तिकानि ॥ ३० ॥**

हास्तिकानि द्विपवृन्दानि तोयसेकैर्देहमत्यर्थमभित उभयत उक्षांबभूवुः सिषिचुः । कीदृशैः, आलोलं चपलं यत् पुष्करं कराग्रं तस्य यन्मुखं रन्ध्रं तेनोल्ललितैर्निरस्तैस्ततो वा उल्ललितैरुत्थितैर्निर्गतैः, अतश्च खेदेनाध्वपीडया आयतं दीर्घदीर्घं यदुच्छ्वसितं शूत्कारस्तेन वेगान्निरस्तो मुग्धो मनोज्ञो यो मूर्धन्यः शिरस्यो रत्ननिकरो मुक्ताफलपूगस्तैरिव तत्तुल्यैरिवेत्युपमोत्प्रेक्षा वा । उक्षांबभूवुरिति "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्, "कृञ्चानुप्रयुज्यते" इति लिट् । मूर्धनि भवो मूर्धन्यः "शरीरावयवाच्चे"ति यः । "ये चाभावकर्मणो"रिति प्रकृ-

तिभावः । हस्तिनां समूहा हास्तिकानि । "अचित्तहास्तिधेनोष्ठक्" ॥ ३० ॥

**ये पक्षिणः प्रथममम्बुनिधिं गतास्ते**
**येऽपीन्द्रपाणितुलितायुधलूनपक्षाः ।**
**ते जग्मुरद्रिपतयः सरसीं विगाढु-**
**माक्षिप्तकेतुकुथसैन्यगजच्छलेन ॥ ३१ ॥**

इह द्वये पर्वताः सपक्षाश्छिन्नपक्षाश्च, तत्र ये पक्षिणः सपक्षा नगेशा मैनाकप्रभृतयस्ते पूर्वमेवाब्धिमिन्द्रभयात् प्रविष्टाः, ये पुनः शक्रकरास्फालितवज्रच्छिन्नाङ्गरुहास्तेऽप्यपनीतध्वजकम्बलसेनाकुञ्जरव्याजेन ब्रुडितुं स[1]रसीं ययुरिवेत्युत्प्रेक्षा । महेभानामद्रय उपमानं, पक्षाणां ध्वजकुथाः ॥ ३१ ॥

**आत्मानमेव जलधेः प्रतिबिम्बिताङ्ग-**
**मूर्मौ महत्यभिमुखापतितं जवेन ।**
**क्रोधादधावदपभीरतितूर्णमन्य-**
**नागाभियुक्त इव युक्तमहो महेभः ॥ ३२ ॥**

कश्चिन्महेभो निर्भयः सन् कोपादात्मानमेव त्वरया चित्रमधावत् जिघांसया जगाम । आत्मा कथं गम्यते इत्याह—अब्धेर्महति कल्लोले प्रतिच्छन्दितदेहम्, अत एव वेगेनाभिमुखापतितं संमुखमागच्छन्तम्, अतश्च प्रतिनागाशङ्कया क्रोधाद्धावनमुचितम् । क इवाधावदित्याह—अन्यनागाभियुक्त इव प्रतिद्विरदोत्तब्धो यथा । यं किल सपत्नहस्ती आह्वयते स कोपाद्वेगेन तं प्रतिधावति, न चैष केनचिदभियुक्तोऽथच तद्वदेव शङ्कया क्षुभितोऽत एव चित्रम् । युक्तं चैतत्, यतोऽसौ महेभो मत्तद्विपोऽसहनः शौर्यान्वित इत्यर्थः ॥ ३२ ॥

**नादातुमन्यकरिमुक्तमदाम्बुतिक्तं**
**धूताङ्कुशेन न विहातुमपीच्छताम्भः ।**
**रुद्धे गजेन सरुषा सरितोऽवतारे**
**रिक्तोदपात्रकरमास्त चिरं जनौघः ॥ ३३ ॥**

करिणा नद्या अवतारे अवतरणमार्गे रुद्धे निषिद्धे सति लोकपूगश्चिरं रिक्तोदपात्रकरमास्तातिष्ठत् । रिक्तं शून्यमुदपात्रं जलभाण्डं घटादिकं यत्र तथा-

---

१ 'सरांसि' क. ख. ग. पाठः ।

विधः करः पाणिर्यत्र तत् रिक्तोदपात्रकरमिति क्रियाविशेषणम् । शून्यान् घटान् गृहीत्वा हस्तिभयाद्बहुकालं व्यलम्बतेत्यर्थः । किमिति गजेन सोपानमार्गो रुद्ध इत्याह—जलं न गृहीतुमिच्छता नापि त्यक्तुं यतो वनगजस्रुतदानजलकटुकमत एव सरुषा क्रुद्धेनेत्यर्थः । अतोऽपि चागणितसृणिना । अतश्च यदा तत्रैव प्रतिद्विरदलिप्सया स्थितस्तदा तोयार्थे जनो भाण्डानादाय तद्गमनावसरं प्रत्यपालयदिति वाक्यार्थः । अवतीर्यतेऽनेनेत्यवतारः तीर्थम् । "अवेस्तृस्त्रोर्घञ्" । उदकस्य पात्रमुदपात्रम् । "एकहलादा"वित्युदादेशः । आस्तेति पदसंस्कारपक्षे भूतानद्यतनविवक्षया लङ् ॥ ३३ ॥

पन्थानमाशु विजहीहि पुरा स्तनौ ते
पश्यन् प्रतिद्विरदकुम्भविशङ्किचेताः ।
स्तम्बेरमः परिणिनंसुरसावुपैति
शिङ्क्तैरगद्यत ससंभ्रममेवमेका ॥ ३४ ॥

एका काचिज्जलहारिका सत्रासं शिङ्क्तैस्तरुणैरेवमित्यगद्यताभाष्यत उक्ता । किमित्याह—मार्गं मंक्षु त्यज यस्मादयं स्तम्बेरमो हस्ती भवत्याः पयोधरौ दृष्ट्वा द्विरदान्तरकुम्भभ्रान्त्या परिणिनंसुः प्रजिहीर्षुः पुरा अचिरादुपैति उपैष्यति । विजहीहीति "हावि"तीत्वम् । पुरा उपैत्युपैष्यतीति भविष्यति "यावत्पुरा निपातयोर्लट्" । स्तम्बे रमतीति स्तम्बेरमः । "स्तम्बकर्णयो रमिजपो"रित्यच् । परिणिनंसुरिति परिणन्तुमिच्छुः, नमेः सन् । अगद्यतेति कर्मणि लङ् ॥ ३४॥

कीर्णं शनैरनुकपोलमनेकपानां
हस्तैर्विगाढमदतापरुजः शमाय ।
आकर्णमुल्ललितमम्बु विकासिकाश-
नीकाशमाप समतां सितचामरस्य ॥ ३५ ॥

अनेकपानां द्विपानामम्बु तोयं सितचामरस्य साम्यमाप तुलां लेभे, धवलप्रकीर्णकच्छायां भेजे इत्यर्थः । यतो विकासिकाशनीकाशं फुल्लकाशकुसुमनिभममलमित्यर्थः । तथा अनुकपोलं गण्डोद्देशे करैः शनैः कीर्णं निक्षिप्तं, किमर्थमुल्ल्वणदानोष्मपीडानिवृत्तये, तथाकर्णं श्रोत्रे यावदुल्लालितमुत्पातितम् । सितचामरे अपि करिणः कर्णसमीप एव क्रियेते । अनुकपोलमिति सप्तम्यर्थेऽव्ययीभावः । "अनुर्यत्समये"ति वा । आ कर्णाभ्यामाकर्णम् । "आङ् मर्यादाभि-

विध्यो''रित्यव्ययीभावः । आपेति लिट् ॥ ३५ ॥

**गण्डूषमुज्झितवता पयसः सरोषं**
**नागेन लब्धपरवारणमारुतेन ।**
**अम्भोधिरोधसि पृथुप्रतिमानभाग-**
**रुद्धोरुदन्तमुसलप्रसरं निपेते ॥ ३६ ॥**

गजेन केनचिदम्भोधिरोधसि अब्धितटे निपेते परिणतं पतितं प्रहारो दत्तः। कथं, सरोषं सक्रोधं, यतोऽनुभूतप्रतिद्विरदगन्धेन, अतएव गण्डूषजलं जहता। पृथुः स्थूलो यः प्रतिमानभागः लोहबन्धोद्देशस्तेन रुद्धो निषिद्ध उरुणो महतो दन्तमुसलस्य विषाणस्तम्भस्य प्रसरः प्रवृत्तिर्यत्र निपाते । गण्डूष आस्यजलम् । उज्झितवतेति कर्तरि क्तवतुः इडागमः । निपेत इति भावे लकारः ॥३६॥

**दानं ददत्यपि जलैः सहसाधिरूढे**
**को विद्यमानगतिरासितुमुत्सहेत ।**
**यद् दन्तिनः कटकटाहतटान्मिमङ्क्षो-**
**र्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥ ३७ ॥**

एवमहं मन्ये, यः पुरुषो दानमपि ददाति यावज्जलैः सहसाधिरूढो दुर्जनैर्बलादधिष्ठितस्तत्रैवंविधे पुरुषे यो विद्यमानगतिः सोपायान्तरः स क आसितुमुत्सहेत स्थातुं शक्नुयात्, निश्चितमेव खलाक्रान्तत्वात्तं जहातीत्यर्थः । इति पूर्वमर्थान्तरन्यासः, पश्चाच्च प्राकरणिकेनार्थेनैतदेव साधयितुमाह–यद्यस्मात् मिमङ्क्षोः सिष्णासोर्ब्रुडितुकामस्य हस्तिनः सम्बन्धिनः कटकटाहतटाद् गण्डलोहस्थ[1]लादलीनां पटलैर्भृङ्गपूगैः परितः समन्तात् मङ्क्षु क्षिप्रमेवोदपाति उड्डीनम् । यदि चैतन्न स्यात् तद् दन्ती दानं मदाख्यं ददात्येव तत् किमलिगणोऽन्यतो यायात्, यदात्वेवं तदासौ जलावृतत्वात् करिणः स्वयं च पक्षवद्भावेन सगतिकत्वादुत्पतितः । दानं धनत्यागो मदश्च । जला मूर्खास्तोयानि च । गतिर्जीवनोपायो गमनं च । ददतीति सप्तम्येकवचनम् । आसितुमिति ''शकधृषो''रिति तुमुन् । उत्सहेतेति सम्भावनायां लिङ् । यदिति हेतौ । कट एव तप्तत्वाल्लौहित्याच्च कटाहो लोहभाण्डं विस्तीर्णत्वाच्च तटः । मङ्क्तुमिच्छ[2]न् मिमङ्क्षुः । मस्जेरन्त्यात्पूर्वो ''मज्जिनशोर्झली''ति नुमागमः संयोगादिलोपः ।

१ 'त' ग. पाठः । २ 'च्छुः' ग. पाठः ।

मङ्क्षु इति शीघ्रार्थो निपातः । उदपातीति भावे लकारः । अलिशब्द इकारान्तो नान्तश्च ॥ ३७ ॥

**अन्तर्जलौघमवगाढवतः कपोलौ**
**हित्वा क्षणं विततपक्षतिरन्तरिक्षे ।**
**द्रव्याश्रयेष्वपि गुणेषु रराज नीलो**
**वर्णः पृथग्गत इवालिगणो गजस्य ॥ ३८ ॥**

अलिगणो रराज व्यद्युतत् । कीदृशः, गजस्य गण्डौ त्यक्त्वा नभसि मुहुर्विततपक्षतिः प्रसारिताङ्गरुहमूलः । किमिति करिणो गण्डौ त्यक्तवानित्याह—अन्तरभ्यन्तरे जलौघं तोयपूरमवगाढवतो जलमध्ये ब्रुडितस्येत्यर्थः । उत्प्रेक्ष्यते—गजस्यैव सम्बन्धी नीलो वर्णः कृष्णिमा पृथग्गत इव गजं विहाय स्वतन्त्र इव स्थितः । ननु सदैव द्रव्यस्था गुणास्तत्कथमसौ कारणः पृथग्भवितुमर्हतीत्याह—द्रव्याश्रयेषु गुणेष्विति, गुणेषु विशेषणेषु द्रव्याश्रयेष्वपि नित्यमेव गुणिनमजहत्स्वपि पृथग्गत इव, प्रत्यक्षमेव चेतसि तथाप्रतिभासादित्यर्थः । अवगाढवत इति क्तवतुः । पक्षमूलं पक्षतिः "पक्षात्तिः" ॥ ३८ ॥

**संसर्पिभिः पयसि गैरिकरेणुरागै-**
**रम्भोजगर्भरजसाङ्गविषङ्गिणा च ।**
**क्रीडोपभोगमनुभूय सरिन्महेभा-**
**वन्योन्यवस्त्रपरिवर्तमिव व्यधाताम् ॥ ३९ ॥**

नदीगजाधिपौ परस्परस्य वसनयोर्व्यत्ययमिव व्यधातां चक्रतुः । केनेत्याह—हस्तिसम्बन्धिभिर्गैरिकरजोरागैर्जले प्रसरद्भिस्तथा नाद्येन पद्मान्तरस्थेन रेणुना करिदेहजुषा । एतेन वस्त्रव्यत्यय उक्तः । किं कृत्वाकुरुतामित्याह—क्रीडैवोपभोगः सुरतं तमनुभूय सेवित्वा । नायकौ हि क्रीडामुपभोगं चानुभूय प्रायशः वस्त्रव्यत्ययं कुर्वाते । अङ्गे विषजति अत्यन्तामित्यङ्गविषाङ्गि । अन्योन्यशब्दे अन्यशब्दात् षष्ठ्यन्तात् "कर्मव्यतिहारे द्वे भवतः" इति वक्तव्यं समासवच्च बहुलं, यदा न समासवत् प्रथमैकवचनं तदा पूर्वस्य रुत्वोत्वपररूपत्वानि, ततो वस्त्रशब्देन सह षष्ठीसमासः । व्यधातामिति कर्तरि लुङ् तसस्ताम् "गातिस्थे"ति सिज्लुक् ॥ ३९ ॥

**यां चन्द्रकैर्मदजलस्य महानदीनां**
**नेत्रश्रियं विकसतो विदधुर्गजेन्द्राः ।**

तां प्रत्यवापुरविलम्बितमुत्तरन्तो
धौताङ्गलग्ननवनीलपयोजपत्रैः ॥ ४० ॥

महेभाः प्रसरतो दानतोयस्य चन्द्रकैर्बिन्दुचक्रैः सिन्धूनां यां नयनलक्ष्मीं चक्रुस्तामुत्कसन्तस्तत्क्षणमेव प्रत्यवापुः प्रतीपं लेभिरे । केन, आर्द्रीभवद्देहविषक्तिप्रत्यग्रासितोत्पलकिसलयैः । परिवृत्तिरलंकारः ॥ ४० ॥

प्रत्यन्यदन्ति निशिताङ्कुशदूरभिन्न-
निर्याणनिर्यदसृजं चलितं निषादी ।
रोद्धुं महेभमपरिव्रढिमानमागा-
दाक्रान्तितो न वशमेति महान् परस्य ॥ ४१ ॥

कश्चिन्निषादी हस्तिपको गजेन्द्रं रोद्धुं वशीकर्तुम् अपरिव्रढिमानम् अप्रभुत्वमागाद् ययौ धारयितुं न शशाकेत्यर्थः । यतः प्रत्यन्यदन्ति गजान्तरसंमुखं चलितं यियासुम् । कदाचिदताडितः स्यादित्याह–निशिताङ्कुशेन तीक्ष्णसृणिना दूरमत्यर्थं भिन्नाद् विदारितात् निर्याणान्मूर्धन्यमर्मविशेषात् निर्यन्निःसरदसृग्रुधिरं यस्य तम् । कथं तर्हि न वशीकृत इत्याह–यो महानुन्नतः स आक्रान्त्या बलात्कारेणान्यस्य वशमायत्ततां नैति, स च महेभः सर्वथा चाक्रान्तोऽधिरोहणात् ताडनाच्च । प्रत्यन्यदन्ति "लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावः । निशित इति "शाच्छो[1]रन्यतरस्या"मितीत्वम् । निर्याणमिति यातेर्ल्युट् । निर्यदिति इणः शतृप्रत्ययः । इणो यण्" । निषादीति आवश्यके णिनिः । रोद्धुमिति "पर्याप्तवचनेष्वि"ति तुमुन् । अपरिव्रढिमानमिति "प्रभौ परिवृढः" । ततो वर्णदृढादित्वादिमनिच् । "रऋतो हलादेर्लघोः" । कर्मणि द्वितीया । आगादिति आङ्पूर्वादिणो गा लुङ् । "गास्थे"ति सिज्लुक् । आक्रान्त्या[2]क्रान्तितः । आद्यादित्वात् तसिः । वश इति "वशरण्यो"रित्यप् ॥ ४१ ॥

सेव्योऽपि सानुनयमाकलनाय यस्मा
नीतेन वन्यकरिदानकृताधिवासः ।
नाभाजि केवलमभाजि गजेन शाखी
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥ ४२ ॥

द्विपेन तरुर्नाभाजि न सेवितः, केवलमभाजि उन्मूलितः । न केवलं ना-

---

1 'न च्छो' क. ख. पाठः । २ 'न्तेरा' क. पाठः ।

भाजि यावद्भाजि इत्येवंविधा तु व्याख्या द्वितीयेन नञा विना दुर्लभा । कदाचिदसौ शाखी शुष्को भवेत् तत्कथं सेव्यते इत्यत आह—सेव्योऽपि पुष्पफलच्छायया युक्तोऽपि । कदाचिद्गजो निषादिना ताडितस्तदवश्यमेव तं त्रोटयतीत्याह—यन्त्राधोरणेन सानुनयं सान्त्वाकलनाय नीतेन बन्धाय ढौकितेन । कथं तर्हि भग्न इत्याह—वानेयगजमदविहितभावनः । युक्तं चैतत्, यतो ये मानभृतः साहङ्कारास्तेऽन्यस्य परस्य गन्धमपि संपर्कमपि न सहन्ते न क्षमन्ते किमु स्वेच्छाविहारादिकं, सच गन्धयुक्तः । गन्धः सौरभं संस्पर्शश्च । वने साधुर्वन्यः । "तत्र साधु"रिति यत्, भवार्थे तु नद्यादित्वाद्वानेय इति स्यात् । नाभाजीति भजेः कर्मणि लुङ् । अभाजीति "भञ्जेश्च चिणी"ति नलोपः । "अत उपधाया" इति वृद्धिः । शाखा विद्यन्ते यस्य स शाखी, व्रीह्यादित्वादिनिः ॥ ४२ ॥

अद्रीन्द्रकुञ्जचरकुञ्जरगण्डकाष-
सङ्क्रान्तदानपयसो वनपादपस्य ।
सेनागजेन मथितस्य निजप्रसूनै-
र्मम्ले यथागतमगामि कुलैरलीनाम् ॥ ४३ ॥

चमूद्विपेन भग्नस्य काननवृक्षस्य निजप्रसूनैः स्वकुसुमैर्मम्ले शोषोऽभाजि । भृङ्गावल्या तु यथागतमगामि, यत एवागतं तत्रैव प्रतिगतम् इत्युभयत्रापि भावे लकारः । अन्यस्यापि शत्रुणोपद्रुतस्य निजा ये भ्रात्रादयस्ते नश्यन्ति, बाह्यजनस्तु[1] स्वकर्मभिर्याति । किमित्यसौ मथित इत्याह—अद्रीन्द्रकुञ्जचरा रैवतकाचलेशगहनवासिनो ये कुञ्जरास्तैस्तेषां वा यो गण्डकाषः कपोलकण्डूयनं तेन सङ्क्रान्तं प्रविष्टं दानपयो मदाम्बु यस्य, वनकरिमदकृताधिवासत्वाद्भग्नस्येत्यर्थः । कुञ्जचर इति "चरेष्टः" । कुञ्जावस्य स्त इति कुञ्जरः "खमुखकुञ्जेभ्य" इति रः । कुञ्जौ हस्तिहनू । कुञ्जं गहनम् । आगतानतिक्रमेण यथागतम् ॥ ४३ ॥

नोच्चैर्यदा तरुतलेषु ममुस्तदानी-
माधोरणैरभिहिताः पृथुमूलशाखाः ।
बन्धाय चिच्छिदुरिभास्तरसात्मनैव
नैवात्मनीनमथवा क्रियते मदान्धैः ॥ ४४ ॥

---

[1] 'स्य' क. ग. पाठः ।

गजास्तरूणां पृथ्वीर्मूलशाखाः स्कन्धलताः स्वयमेव बलाद् बन्धनाय चिच्छिदुरत्रोटयन् । कीदृशाः, तदानीं तस्मिन् काले आधोरणैर्हस्तिपकैरभिहिताश्छेदनाय चोदिताः । कदेत्याह—यदा तरुमूलेषु उच्चैस्ते न ममुः प्रववृतिरे । अतश्च यदि ते स्वयं शाखा नाच्छेत्स्यन् तत्स्थानाभावात् बन्धनं नावाप्स्यन् । यदा तु च्छिन्नास्तत् स्वयमेव[1] तैरात्मा बन्धितः, तदाह—आत्मनैव तरसा [2]बलाच्चिच्छिदुरिति । किञ्च उचितं, यतो ये मदान्धा उत्सिक्तास्तैरात्मनीनं स्वहितं न विधीयते, ते च मदान्धा दानाम्बुपिहितनेत्रत्वात् । धोरतेर्ल्युटि आधोरणशब्दः । तरसेति निपा[3]तितः । आत्मने हितमात्मनीनम् । "आत्मन्विश्वजने"ति खः । आत्माध्वानौ खे"इति प्रकृतिभावः ॥ ४४ ॥

उष्णोष्णशीकरमुचः प्रबलोष्मणोऽन्त-
रुत्फुल्लनीलनलिनोदरतुल्यभासः ।
एकान् विशालशिरसो हरिचन्दनेषु
नागान् बबन्धुरपरान् मनुजा निरासुः ॥ ४५ ॥

निषादिनो हरिचन्दनवृक्षेषु एकान् नागान् द्विरदाख्यान् बबन्धुः, अपरान् सर्पाख्यांस्तेभ्यो निरासुश्चिक्षिपुः अहीनपास्य हस्तिनो बबन्धुरिति पर्यायोऽलंकारः । कीदृशान्नागानिति श्लेषः—उष्णोष्णान् तप्तप्रकारान् शीकरान् जलकणान् सृजन्ति मुञ्चन्ति हस्तिनः । अहयोऽपि तथा अन्तरभ्यन्तरे प्रबलः प्रवृद्ध ऊष्मा दर्पो निःश्वासधूमश्च येषाम् । तथा विकास्यसितोत्पलगर्भसदृशकान्तीन्, उभयानपि कृष्णानित्यर्थः । विशालशिरसो गरीयोमस्तकान् । उष्णोष्णेति "प्रकारे गुणवचनेष्वि"ति द्वित्वम् । फुल्लेरुत्पूर्वस्य पचाद्यचि उत्फुल्लः, यदिवा "उत्फुल्लसंफुल्लयोरुपसंख्यान"मिति क्तस्य लत्वम् । येषामुद्घृष्यमाणानां कुङ्कुमवल्लौहित्यं जायते ते हरिचन्दनाः सर्वश्रेष्ठाः ॥ ४५ ॥

कण्डूयतः कटभुवं करिणो मदेन
स्कन्धं सुगन्धिमनुलीनवता नगस्य ।
स्थूलेन्द्रनीलशकलावलिकोमलेन
कण्ठेगुणत्वमलिनां वलयेन भेजे ॥ ४६ ॥

नगस्य तरोरलिनां वलयेन भृङ्गावल्या कण्ठगुणत्वं ग्रीवालङ्कारत्वं भेजे

१ 'वैतैः' ग. पाठः । २ 'बन्धाय' ग. पाठः । ३ 'पातः' ग. पाठः ।

प्राप्तम् । कीदृशालिवलयेन, स्कन्धं वृत्तप्रकाण्डमनुलीनवता श्लिष्टेन । कीदृशमिति श्लेषकारणत्वमाह—कटभुवं गण्डस्थलीं कण्डूयतः कषितुकामस्य गजस्य सम्बन्धिना मदेन दानेन सुगन्धि सुरभिम् । कीदृशा अलिवृन्देन, स्थूला महान्तो य इन्द्रनीलशकलाः सितेतरमणिखण्डास्तेषामावलिर्माला तद्वत् कोमलेन सच्छायेन ताभिर्वा कोमलेन तुल्येन, कृष्णत्वात् इन्द्रनीलमणिमालेव तरोरलिपङ्क्तिर्ज्ञायते इत्यर्थः । अपृथग्भूतस्य सौगन्ध्यस्य तरौ उपलम्भात् गन्धस्तरोरेकान्त एवेतीत्त्वे सुगन्धिमिति न विरुध्यते । अनुलीनवतेति "ओदितश्चे"ति निष्ठानत्वम् । कण्ठेगुण इति "हलन्तात् सप्तम्याः संज्ञाया"मिति ङेरलुक् ॥ ४६ ॥

निर्धूतवीतमपि चालकमुल्लसन्तं
यन्ता क्रमेण परिसान्त्वनतर्जनाभिः ।
शिक्षावशेन शनकैर्वशमानिनाय
शास्त्रं सुनिश्चितधियां क्व न सिद्धिमेति ॥४७॥

यन्ता निषादी चालकं मत्तहस्तिनं शनकैरत्वरया वशं विधेयतामानिनायागमयत् । कदाचिदङ्कुशाद्भीतो भवेदित्याह—निर्धूतवीतमपि अगणितसृणिमपि, तथोल्लसन्तमात्मानं धुन्वन्तं क्षुभितमित्यर्थः । कथं तर्हि वशीचकारेत्याह—शिक्षावशेन हस्तिशास्त्रज्ञत्वबलेन याः क्रमेण परिपाट्या परिसान्त्वनतर्जनाः सामक्रुधस्ताभिर्हेतुभूताभिः । अवसरं बुद्ध्वा कदाचित् प्रीतयः क्रियन्ते, कदाचिद्भयं, पुनश्च भूयोऽपि भयमिति क्रमार्थः । किं वात्र चित्रं, यतो निश्चितधियामसंदिग्धमतीनां प्राज्ञानां शास्त्रं क्व न सिद्धिमेति नास्त्येवासौ विषयो यत्राभियुक्तानां व्यापारितं निष्फलं भवतीत्यर्थः । वीतमिति 'वी गतिप्रजन' इत्यस्य क्ते रूपम् । कम्पनशीलो हस्ती चालक उच्यते, चलत्यत्यर्थमिति कृत्वा ॥ ४७ ॥

स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सरसाग्रहस्तः ।
बद्धापराणि परितो निगडान्यलावीत्
स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥ ४८ ॥

करेणुराजो गजाधिप उज्ज्वलं रम्यमखण्डितं स्वातन्त्र्यमात्माधीनत्वम् अवाप लेभे । राजा स्वतन्त्रो भवतीति राजग्रहणम् । तदेवौज्ज्वल्यमाह—महान्तं पृथु-

मुचितं चात्मयोग्यं स्तम्भमालानं बलादेव बभञ्ज । सरसाग्रहस्तो मदाम्बुक्लिन्न-पुष्करश्च दानमत्यर्थमदिशत् । तथा बद्धा अपराः पश्चात्पादभागा यैस्तानि निगडानि सर्वत एवालावीच्चिच्छेद । अपराशब्दः स्त्रीलिङ्गः । योऽपि राजा उज्ज्वलं स्वातन्त्र्यं सचिवेष्वनायत्तत्वात् प्राप्नोति स उचितं शीलितमपि महान्तं स्तम्भं गर्वं मुञ्चति, सजलपाणिश्च दानं धनं विप्रेभ्यो वितरति । तथा बद्धशत्रूण्यपि बन्धनानि त्रोटयति । करेणुराज इति "राजाहःसखिभ्यष्टच्" ॥ ४८ ॥

जज्ञे जनैर्मुकुलिताक्षमनाददाने
संरब्धहस्तिपकनिष्ठुरचोदनाभिः ।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे
मन्दोऽपि नाम न महानवगृह्य साध्यः ॥ ४९ ॥

कुपितनिषादिकठोरतर्जनाभिरपि अग्रवर्तिनमपि ग्रासं महेभेऽगृह्णति सति, लोकैरेवमवेदि । यथा यो महात्मा स मन्दोऽपि क्षीणशक्तिरपि नावगृह्य विरोधं विधाय साध्यो जय्यः, सोऽपि करी मन्दो मन्दजातीयः । भद्रमन्दमृगा हि हस्तिजातयः । कीदृशि करीन्द्रे, गम्भीरवेदिनि । यदुक्तम्—"त्वग्भेदाच्छोणितस्रावान्मासांसव्यथनादपि । संज्ञां न लभते यस्तं विद्याद्गम्भीरवेदिन"मिति ॥ जज्ञे इति ज्ञः कर्मणि लकारः । इतिशब्दश्च सम्बन्धापादनायाध्याहार्यः । जनैरिति कर्तरि तृतीया । मुकुलिते स्थगिते अक्षिणी यत्र तत् मुकुलिताक्षम् । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" । आङ्पूर्वो ददातिर्ग्रहणे वर्तते । यथा—"अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः । नचादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेदि"ति ॥ हस्तिनं पातीति हस्तिपो हस्तिप एव हस्तिपकः । "संज्ञायां कन्" । पुर इति निपातोऽग्रशब्दार्थः । साधयितुमात्मीकर्तुं शक्यः साध्यः । "शकि लिङ्च" । नामशब्दः प्राकाश्येऽवधारणे वा । नैव साध्य इत्यर्थः ॥ ४९ ॥

क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापेक्षते स्म निकटोपगतां करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्ष-
स्वेच्छाविहारवनवासमहोत्सवानाम् ॥ ५० ॥

गजो मुहुर्नवं नवमपि अग्रतो दत्तमिक्षुकाण्डं न जगृहे न जघास, त-

१ 'न्धा' क. ख. पाठः ।

थाभ्याशस्थितामपि करेणुं हस्तिनीं नापेक्षते स्म नाभिललाष । यत इच्छया विहारश्चेष्टा येषां तेषां वनवासानामरण्यासनानामत एव महोत्सवानां क्षणं सस्मार दध्यौ, काननविहारमहासुखस्मरणशून्यहृदयत्वात् न किञ्चिदपि प्रकृतं कर्मानुतष्ठावित्यर्थः । वानेयानां हि राजगृहादपि वनं सुखकारि । उक्तं च—"वातवृष्ट्यवधूतस्य मृगयूथस्य धावतः । पृष्ठतो यद्गमिष्यामः कदा नस्तद्भविष्यती"ति ॥ इक्षुकाण्डं गुडप्रकृतितृणस्तम्भः । जगृहे इति कर्तरि लिट् । अपेक्षते स्मेति भूते "लट् स्मे" । करेणुशब्दः स्त्रीपुंसलिङ्गः । महोत्सवानामिति "अधीगर्थदयेशां कर्मणी"ति षष्ठी ॥ ५० ॥

कृच्छ्रेण भोजयितुमाशयिता शशाक
तुङ्गाग्रकायमनमन्तमनादरेण ।
उत्क्षिप्तहस्ततलदत्तविधान्नपिण्ड-
स्नेहस्नुतिस्नपितबाहुरिभाधिराजम् ॥ ५१ ॥

आशयिता हस्तिभोजको हस्तीन्द्रं कृच्छ्रेणाशयितुं शशाक प्राभवत् । यतस्तुङ्ग उच्चोऽग्रकायः पूर्वदेहो यस्य, तथानादरेणावहेलयैव अनमन्तमप्रह्वम् । कीदृग्भोजयिता, उत्क्षिप्ते ऊर्ध्वीकृते हस्ततले पाणिपृष्ठे दत्तो निक्षिप्तो विधान्नपिण्ड इभभक्तगुलकस्तस्य यः स्नेहो मांसलरसस्तस्य या स्नुतिः प्रस्रावस्तया स्नपितः स्निग्धीकृतो बाहुर्भुजो यस्य स तथोक्त इति जातिबन्धः । इभाधिराजमिति "गतिबुद्धिप्रत्यवसाने"ति कर्मसंज्ञा । विधानं हस्त्यौदनः । स्नपितमिति स्नातेर्णिच् । "अर्तिह्री"त्यादिना पुक् । "मितां ह्रस्वः" ॥ ५१ ॥

शुक्लांशुकोपरचितानि निरन्तराभि-
र्वेश्मानि रश्मिविततानि नराधिपानाम् ।
चन्द्राकृतीनि गजमण्डलिकाभिरुच्चै-
र्नीलाभ्रपङ्क्तिपरिवेशमिवाधिजग्मुः ॥ ५२ ॥

राज्ञां शशाङ्कशुक्लानि पटगृहाणि संहताभिः करिघटाभिः सजलजलधरवलयपरिवृतिमिव प्रापुः, घनाघनावृतेन शशिना साम्यं लेभिरे इत्यर्थः । कीदृंशि वेश्मानीति साम्यमाह—शुक्लैरंशुकैरम्बरैरुपरचितानि कृतानि, धवलपटमण्डपानीत्यर्थः । अत एव चन्द्राकृतीनि शशिस्थानीयानि, तथा रश्मिभी रज्जु-

१ 'वासा' क. पाठः । २ 'स्था' क. पाठः । ३ 'स्योदयः' ग. पाठः ।

भिर्विततानि सम्बद्धानि ग्रथितानि । चन्द्रोऽपि शुक्लो रश्मिभिर्मयूखैर्विततो विस्तृतो भवति। पटवेश्मनां चन्द्र उपमानम्, करिणां मेघाः, उच्चैर्वेश्मानि करिघटाभिर्वा । परिवेशः सर्वतोव्याप्तिः ॥ ५२ ॥

अथाश्ववर्णनम्—

गत्यूनमार्गगतयोऽपि गतोरुमार्गाः
स्वैरं समाचकृषिरे भुवि वेल्लनाय ।
दर्पोदयोल्ललितफेनजलानुसार-
संलक्ष्यपल्ययनवभ्रपदास्तुरङ्गाः ॥ ५३ ॥

तुरङ्गा अश्वा भुवि वेल्लनाय भूमौ परिवर्तनाय स्वैरं शनैः समाचकृषिरे समाकृष्टा आनीताः। वाहयित्वा हि अश्वाः परिवर्त्यन्ते इति स्थितिः । कीदृशास्तुरङ्गाः, गतौ गमनविशेषे ऊना मन्दा मार्गी मृगानामियं मार्गी हरिणसम्बन्धिनी गतिः फलं[1] येषां ते गत्यूनमार्गगतयः, यदीयां गतिं दृष्ट्वा मृगा अपि स्वल्पगतयो ज्ञायन्ते इत्यर्थः । एवंविधा अपि गतोरुमार्गाः गतोऽतिवाहित उरुर्दीर्घदीर्घो मार्गः पन्था यैस्ते गतोरुमार्गाः । विरुद्धं चैतत् येषां हि गतौ मार्गे गतिरूनास्तेषां मृगसम्बधीव गतं गमनं गुरु स्यात् । अथ चेद् गुरु न तर्हि ऊनमृगगतय इति शाब्दो विरोधः । आर्थस्त्वविरोधः । तथैव च व्याख्यातम् । अन्यच्च कीदृशाः, दर्पस्योत्साहस्य य उदय आविर्भावस्तेनोल्ललितमुत्थितं यत्फेनजलं दिण्डीरवारि तस्यानुसारेण क्रमेण संलक्ष्यं दृश्यमपास्तस्य पल्ययनवभ्रस्य पर्याणरश्मेः पदं स्थानं येषां ते तथोक्ताः, फेनवभ्रच्छेदं दृष्ट्वाधुनैवैतेऽवतारितपर्याणा इति ज्ञायन्ते इत्यर्थः । वाह्यमानानां हि महाश्वानां सर्वाङ्गीनः फेनो भवति । समाचकृषिरे इति कर्मणि लकारः । पल्ययनमिति "उपसर्गस्यायता"विति लत्वम् । 'तुर त्वरणे' इत्यस्मात् "विडादिभ्यः कित्" इत्यङ्गचि तुरङ्गशब्दः ॥ ५३ ॥

आजिघ्रति प्रणतमूर्धनि वाह्लिजेऽश्वे
तस्याङ्गसंगमसुखानुभवोत्सुकायाः ।
नासानिरोकपवनोल्ललितं तनीयो
रोमाञ्चतामिव जगाम रजः पृथिव्याः ॥ ५४ ॥

---

1 'फालो' क. ग. पाठः ।

वा¹ह्लिर्वाजिभूमिर्देशविशेषस्तत्र जातो वाह्लिजस्तस्मिन् वाह्लिजे तुरगेऽवनतमुख आजिघ्रति शिङ्घति सति नासानिरोकपवनोल्लसितं घोणाविवरवातोत्थितं यत्तनीयोऽतिसूक्ष्मं रजो रेणुस्तद्भूमेः रोमाञ्चतामिव जगाम कण्टकत्वमिव लेभे, पुलकिता भूरिति ज्ञायते इत्यर्थः । यतस्तस्याश्वस्याङ्गसंगमेन शरीरसम्पर्केण परिवर्तनाख्येन यत्सुखं तस्य योऽनुभव उपलब्धिस्तत्रोत्सुकाया उत्कायाः । यस्याः किल नायिकाया निकटेऽवनतो नायको भवति सा च तत्स्पर्शसुखानुभवोत्का पुलकिताङ्गी भवति । अवतारितपर्याणा अश्वा भुवं जिघ्रन्तीति जातिस्वभावः । नासिकार्थोऽयं नासाशब्दः । 'नासृ दीप्ता'वित्यस्याचि साधुः । निरोकेति "ओक उचः के"। रोम्णामञ्चनमुद्गमो रोमाञ्चः ॥ ५४ ॥

**हेम्नः स्थलीषु परितः परिवृत्य वाजी**

**धुन्वन् वपुर्नतनिरायतकेशपंक्तिः ।**

**ज्वालाकणारुणरुचा निकरेण रेणोः**

**शेषेण तेजस इवोल्लसता रराज ॥ ५५ ॥**

सुवर्णोर्वीषु समन्तात्परिवृत्य वेल्लित्वा देहं कम्पयतोऽश्वस्य यः कणरेणुपुञ्जस्तेन स्फुरतासौ रेजे । उत्प्रेक्ष्यते—तेजसः शेषेणेव वपुर्धुन्वानस्यास्य दर्पभाग इव देहान्निर्यातः, इति ज्ञायते इत्यर्थः । कीदृग्वाजी, वपुर्धुन्वन् कम्पयन् । अत एव पूर्वं नता कुटिला पश्चान्निरायता ऋज्वी केशपंक्तिः केसरमाला यस्य । केचित्तु निरायतामिति दीर्घमाहुः । कीदृशा निकरेण शेषेण च, ज्वालानामर्चिषां ये कणास्तनुविस्फुलिङ्गास्तद्वदरुणा पिशङ्गी रुक् कान्तिर्यस्य तेन ज्वालाकणारुणरुचा । 'धुञ् कम्पने' इत्यस्य ह्रस्वान्तस्य सौवादिकस्य धुन्वन्निति रूपम् । वाजाः पक्षा विद्यन्ते येषां ते इति वाजिनस्तुरगाः । पूर्वं हि सपक्षाः पर्वता इवाश्वा आसन्निति ॥ ५५ ॥

**दन्तालिकाधरणनिश्चलपाणियुग्म-**

**मर्धोदितो हरिरिवोदयशैलमूर्ध्नः ।**

**स्तोकेन नाक्रमत वल्लभपालमुच्चैः**

**श्रीवृक्षकी पुरुषकोन्नमिताग्रकायः ॥ ५६ ॥**

श्रीवृक्षाकार आवर्तो विद्यते यस्यासौ श्रीवृक्षकी अश्वश्रेष्ठो वल्लभपालम-

१ 'वाह्लयो' ख. ग. पाठः ।

श्वरक्षितारं स्तोकेन नाक्रमत प्रायशो न जिघाय कथमपि न लङ्घयामास । कीदृक्षं यन्तारं, दन्तालिका दशनरश्मिर्मुखरज्जुस्तस्या धरणमवष्टम्भनं तेन निश्चलं विवशमुदासीनं पाणियुग्मं करयुगलं यस्य । श्रीवृत्तकी कीदृशः, उच्चैरुन्नतस्तथा पुरुषकः पुरुषदघ्न उन्नमित ऊर्ध्वीकृतोऽग्रकायः पूर्वदेहो येन, पुरुषप्रमाणमुत्प्लुत इत्यर्थः । अत एव स्तोकेन नाक्रमत । अतश्चोत्प्रेक्ष्यते—उदयपर्वतशिखराद् हरिः सूर्योश्व इवाधोंदितः साम्युद्गतः । वल्लभपालस्योदयशैलतटमुपमानं श्रीवृत्तकिणो ययुः । स्तोकेनेति "स्तोकाल्पे"ति तृतीया । आक्रमतेति सर्गे आत्मनेपदम् । स्तोकेन नाक्रमत स्वल्पस्तं प्रत्यस्योत्साहो नाभवत् बहुस्त्वभूदेव प्रायेण विवशीचकारेत्यर्थः । पुरुष इवायं प्रतिकृतिः पुरुषकः । "इवे प्रतिकृता"विति कन् । प्रमाणेऽर्थे तु कन्नास्ति प्रतिकृत्यर्थो न तत्रास्ति इति चिन्त्यमेतदिति ॥ ५६ ॥

रेजे जनैः स्नपनसान्द्रतरार्द्रमूर्ति-
र्देवैरिवानिमिषदृष्टिभिरीक्ष्यमाणः ।
श्रीसंनिधानरमणीयतरोऽश्व उच्चै-
रुच्चैःश्रवा जलनिधेरिव जातमात्रः ॥ ५७ ॥

अश्वो रेजे बभौ । कीदृशः, स्नपनेनाश्वपालकृतेन स्नानेन सान्द्रतरा सुपीना आर्द्रा क्नूता मूर्तिर्वपुर्यस्य, अत एव श्रीसन्निधानेन शोभासंयोगेन रमणीयतरोऽतिशयकाम्यः, अत एव च कौतुकेन देवैरिव निश्चलनेत्रैर्लोकैर्दृश्यमानः, उच्चैरुन्नतोऽतश्च समुद्राज्जातमात्रस्तत्क्षणमुत्पन्न उच्चैःश्रवा इव शक्राश्वो यथा । मात्रग्रहणेनोत्पत्तेरदूरत्वं सूच्यते । उच्चैःश्रवा अपि स्नानमांसलक्नूतदेहो देवैश्चानिमेषदृष्टिभिर्दृष्टः । श्रीरुदधितनया तत्सांनिध्यहृद्यतरश्च । श्रीसंनिधिश्च सहोत्पादात् । न निमिषन्तीत्यनिमेषाः । "इगुपधज्ञाप्रीकिरः कः" । अच् तु संज्ञायामेवेत्याहुः । तत्क्षणं जातो जातमात्र इति अस्वपदेन विग्रहः । सुप्सुपेति समासः ॥ ५७ ॥

अश्रावि भूमिपतिभिः क्षणवीतनिद्रै-
रश्वन् पुरो हरितकं मुदमादधानः ।
ग्रीवाग्रलोलकलकिङ्किणिकानिनाद-
मिश्रं दधद् दशनबुर्बुरशब्दमश्वः ॥ ५८ ॥

---

१ 'लग्न' ग. पाठः ।

ईषदतिवाहितमार्गस्वापैर्नृपैर्दन्तबुर्बुरशब्दं दधानस्तुरगोऽश्रावि श्रुतः । अश्वकृतमर्मरशब्दश्रवणादुपचारेणाश्वोऽश्रावीत्युक्तम् । कीदृशोऽश्वः, पुरोऽग्रे यो हरितको ग्रासस्तमश्नन् कवलयन् अत एव मुदमुद्वहन् । कीदृशं बुर्बुरशब्दं, ग्रीवाग्रे कन्धराकोटौ लोलाश्चलाः कलाश्च मधुरा या किङ्किणिका घण्टिकास्तासां निनादेन क्वाणेन मिश्रं संपृक्तम् । अश्रावीति कर्मणि लकारः । निनादेति "नौ गदनदपठस्वन" इति घञ् । दधदिति "नाभ्यस्ताच्छतु"रिति नुमभावः । हरितकस्य भुज्यमानस्य बुर्बुर इति योऽश्वदन्तसंयोगाद् ध्वनिः स दशनबुर्बुरशब्दः ॥ ५८ ॥

उत्खाय दर्पचलितेन सहैव रज्ज्वा
कीलं प्रयत्नपरमानवदुर्ग्रहेण ।
आकुल्यकारि कटकस्तुरगेण तूर्ण-
मश्वेति विद्रुतमनुद्रवतान्यमश्वम् ॥ ५९ ॥

केनचिदश्वेन कटकः स्कन्धावार आकुल्यकारि विह्वलीकृतः । यतोऽन्यं विद्रुतं पलायितमश्वं तूर्णमनुद्रवता पश्चाद्धावता । कुत अश्वेति अश्वाभ्रान्त्या घोटिकेयं नाश्व इत्यवगच्छता इत्यर्थः । किं कृत्वा आकुल्यकारि, रज्ज्वा रश्मिना सह कीलं स्तम्भमुत्खायोद्धृत्य, यतो दर्पेणोत्साहेन चालितः प्रेरितोऽत एव प्रयत्नपरैः सावधानैरपि मानवैरश्वपालैर्दुर्ग्रहो ग्रहीतुमशक्यः । अनाकुल आकुलः कृत इत्याकुल्यकारि च्विः । "अस्य च्वौ" । कर्मणि लकारः । अश्वेत्यजादित्वाट्टाप् ॥ ५९ ॥

अव्याकुलं प्रकृतमुत्तरधेयकर्म-
धाराः प्रसाधयितुमव्यतिकीर्णरूपाः ।
सिद्धं मुखे नवसु वीथिषु कश्चिदश्वं
वल्गाविभागकुशलो गमयांबभूव ॥ ६० ॥

कश्चिदश्ववारोऽश्वं गमयांबभूव अवाहयत्, कथमव्याकुलं धीरमव्यग्रं कृत्वा, अश्वं वा अव्याकुलं गतिचतुरम् । तथा मुखे मुखकर्मणि सिद्धं संपन्नं, षट्सु दिक्षु यथा तस्य मुखं क्रियते तथा कर्तुं यो जानातीत्यर्थः । तथा उत्तरधेया मुखसिद्धेरुत्तरकालं या धेयाः कर्तव्याः कर्मधारा गतिविशेषास्ताः प्रसाधयितुं

निष्पादयितुं प्रकृतं प्रस्तुतम् । धोरितं वल्गितं प्लुतमुत्तेजितमुत्तेरितं चेति पञ्च कर्मधाराः । विक्रमवल्गितोपकण्ठजवोपजवाख्या इति त्वन्ये । कीदृशीर्धाराः अव्यतिकीर्णमसंकीर्णं रूपं स्वभावो यासां ता अव्यतिकीर्णरूपाः । यद्यस्या लक्षणं सा तथैव कृता नतु सांकर्येणेत्यर्थः । क गमयामास, नवसु वीथिषु नवसंख्येषु मार्गेषु । काङ्कं मायूरमर्धमायूरं जव उपजवश्चेति पञ्च सांवाह्या वीथयः । नीचैर्गतं नारौष्ट्रं स्खलितमर्धस्खलितं चेति चतस्र औपवाह्याः । अन्ये त्वाहुः—चतुरश्रं काङ्कं मायूरमर्धमायूरमिति सांवाह्यं वीथिचतुष्टयम् । वल्गनं नीचैर्गतं लङ्घनं धोरणं नारोष्ट्रमित्यौपवाह्यं वीथिपञ्चकमिति । कीदृशोऽश्ववारः, वल्गा हस्तवध्रा तस्या विभागो दिग्विशेषेऽवस्थापनं तत्र कुशलः प्रवीणः कविकासंचारणज्ञ इत्यर्थः । एतच्च सर्वमश्वलक्षणादश्ववारेण सुज्ञानम् । प्रकृतमिति आदिकर्मणि निष्ठा कर्तरि । धेया इति "ईर्यति" ॥ ६० ॥

मुक्तास्तृणानि परितः कटकं चरन्त-
स्त्रुट्यद्वितानतनिकाव्यतिषङ्गभाजः ।
सस्रुः सरोषपरिचारकवार्यमाणा
दामाञ्छनस्खलितलोलपदं तुरङ्गाः ॥ ६१ ॥

अश्वाः कटकं परितः स्कन्धावारस्य समन्तात् सस्रुरधावन् । कीदृशाः, मुक्ता मन्दुरातस्त्यक्तास्तथा तृणानि चरन्तो घासमत्तुं स्वतन्त्रीकृता इत्यर्थः । तथा त्रुट्यन्त्यश्छिन्ना या वितानतनिकाः करक्तकरज्जवस्तासां व्यतिषङ्गं संपर्कं भजन्ते ये तेऽत एव सक्रोधेनाश्वपालकेन वार्यमाणाः कटकोपघ्नात् प्रेर्यमाणाः । कथं सस्रुः, दाम्नो दन्तालिकाया यदाञ्छनमाकर्षणं दाम्नां वा यदाञ्छनं संयमनं तेन स्खलितानि प्रतिहतानि अत एव लोलान्याकुलानि पदानि क्रमा यत्र सरणे । तृणानीति चरणक्रियापेक्षा द्वितीया, कटकमिति तु परितः शब्दयोगे । तनिकेति "कृञादिभ्यः संज्ञाया"मिति वुञ् । परिचरति सेवते इति परिचारकः । "वुण्तृचौ" । 'आछि आयासे' इत्यस्य आञ्छनमिति ल्युटि रूपम् ॥६१॥

अथोक्षवर्णनम्—

उत्तीर्णभारलघुनाप्यलघूलपौघ-
सौहित्यनिःसहतरेण तरोरधस्तात् ।

---

१ 'त्त' ग. पाठः । २ 'रो' ग. पाठः ।

रोमन्थमन्थरचलद्गुरुसास्नमासां-
चक्रे निमीलदलसेक्षणमौक्षकेण ॥ ६२ ॥

औक्षकेण दान्तवृन्देन तरोरधस्तात् वृक्षतले आसांचक्रे विश्रान्तमिति भावे लकारः। कथं, रोमन्थेन चर्वितचर्वणेन मन्थरमीषच्चलन्ती कम्पमाना गुर्वी बृहती सास्ना गलचर्म यत्र । तथा निमीलन्ति पिहितानि अलसानि ईक्षणानि चक्षूंषि यत्र । कीदृशेनौक्षकेण, उत्तीर्णोऽपास्तो यो भारो लवणादिकस्तेन हेतुना लघुना गतागतदक्षेणापि निःसहतरेण अलसेन कार्यं कर्तुमक्षमेण। कुतः? अलघुर्महान् य उलपौघस्तृणविशेषराशिस्तेन यत्सौहित्यं तृप्तिस्तेन । उक्ष्णां समूह औक्षकम् । "गोत्रोक्षोष्ट्रे"ति वुञ् ॥ ६२ ॥

मृत्पिण्डशेखरितकोटिभिरर्धचन्द्रं
शृङ्गैः शिखाग्रगतलक्ष्ममलं हसद्भिः ।
उच्छृङ्गितान्यवृषभाः सरितां नदन्तो
रोधांसि धीरमपचस्करिरे महोक्षाः ॥ ६३ ॥

महोक्षा वृषभवरा नदीनां रोधांसि प्रतीराणि धीरं निर्भयं शृङ्गैरपचस्करिरे हर्षेणोच्चख्नुः । धैर्ये कारणमाह—उच्छृङ्गिता उत्खातविषाणाः कृता अन्ये सपत्ना वृषभा दान्ता यैः, अत एव नदन्तो गर्जन्तः । कीदृशैर्विषाणैः, तटोल्लिखनात् मृत्पिण्डेन शेखरिता सावतंसेव कृता कोटिरग्रं येषामत एव शशिखण्डं हसद्भिर्विडम्बयद्भिः । अनुकार एवात्र हासः । कीदृशं चन्द्रं, शिखाग्रगतं लेखाप्रान्तस्थितं लक्ष्म चिह्नरूपं मलं शशाख्यं यस्येत्युत्पाद्योपमा । उत्सङ्गसाङ्गिहरिणस्य शशिनः शिखाग्रे मलं यदि भवेत् तत्तेनोपमा भवेदित्यर्थः । यदि वा च (?) विना न तथैषालंकारविद्भिः सिद्धिरूपाङ्गीकृता । शृङ्गाणामर्धचन्द्र उपमानं मृदस्तु मलम् । उत्खातानि शृङ्गाणि येषां ते उच्छृङ्गाः । "प्रादिभ्यो धातुजस्य वा" । उच्छृङ्गान् करोतिति णिच् ततः कर्मणि निष्ठा । एवं शेखरितेति । अपचस्करिरे इति कर्तरि भूते लिट्, किरतेः "हर्षजीविकाकुलायकरणेष्वि"ति हर्षे गम्यमाने आत्मनेपदम् । "अपाच्चतुष्पाच्छकुनिष्वालेखने" इति सुट् कित्वाद्गुणाभावः, द्वित्वम् "ऋतश्च संयोगादेर्गुणः । ऋच्छत्यृताम्" । महान्तश्च ते उक्षाणः महोक्षाः । "अचतुरा"दिसूत्रेणाज्निपात्यते ॥ ६३ ॥

---

१ 'सीकृता' ख. पाठः ।

मेदस्विनः सरभसोपगतानभीकं
भङ्क्त्वा पराननडुहो मुहुराहवेन ।
ऊर्जस्वलेन सुरभीमनु निःसपत्नं
जग्मे जयोद्धुरविशालविषाणमुदणा ॥ ६४ ॥

केनचिदुदणा वृषभेण सुरभीमनु गवा सह जग्मे यातमिति भावे लकारः। किं कृत्वा, पराननडुहः सपत्नदान्तान् आहवेन युद्धेनाभीकं सधैर्यं मुहुः क्षणेनैव भङ्क्त्वा जित्वा । कदाचित्ते कृशा भवेयुर्नेत्याह—मेदस्विनः पीवरान्। कदाचित् कार्यान्तरासक्त्यानवहिताः स्युर्नेत्याह—सरभसमौत्सुक्येन रणश्रद्धयोपगतान् युद्धाय प्राप्तान् । कथं तर्हि जितास्तेनेत्याह—ऊर्जस्वलेन बलवता तेजस्विना । कथं जग्मे, निःसपत्नम् अविद्यमानो रिपुर्यत्र, तथा जयेन सपत्नपरिभवेन उद्धुरे चण्डे सगर्वे विशाले च विशङ्कटे विषाणे शृङ्गे यत्र तत्कृत्वा । मेदो विद्यते येषां ते मेदस्विनः । "अस्मायामेधास्रजो विनिः" । ऊर्जो विद्यते यस्यासावूर्जस्वलः। "ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्नि"ति सूत्रेण वलच् निपात्यते । सुरभीमन्विति "तृतीयार्थे" इति कर्मप्रवचनीयसंज्ञा ॥ ६४ ॥

अथोष्ट्रवर्णनम्

बिभ्राणमायतिमतीमवृथा शिरोधिं
प्रत्यग्रतामधिरसामधिकं दधन्ति ।
लोलौष्ठमौष्ट्रकमुदग्रमुखं तरूणा-
मभ्रंलिहानि लिलिहे नवपल्लवानि ॥ ६५ ॥

औष्ट्रकमुष्ट्रसमूहस्तरूणां नवपल्लवानि अशुष्ककिसलयानि लिलिहे बुभुजे । कीदृशानि पत्राणि, अधिको रसो मृष्टत्वं यस्यास्तामधिकरसां प्रत्यग्रतां नूतनत्वमधिकं नितरां दधन्ति वहमानानि, तथा अभ्रंलिहानि व्योमस्पृंशि। उच्चानि चेत् कथं लीढवदित्याह—आयतिमतीं दीर्घतरां शिरोधिं ग्रीवाम् अवृथा सफलां कारणेन बिभ्राणं दधत् । अवृथात्वं तूच्चपल्लवग्रहणात् । यदि हि सा तानि न ग्रहीतुं शक्नुयात् तन्निरर्थकं तस्या दैर्घ्यं भवेत् । अन्यच्च कीदृशमौष्ट्रकं, लोलौष्ठं पल्लवजिघत्सया चलत्प्रोथमत एवोदग्रमुखमूर्ध्ववदनम् । शिरो धीयतेऽस्यामिति शिरोधिः। "कर्मण्यधिकरणे चे"ति किः। औष्ट्रकमित्यौक्षकवत् । अभ्रंलिहानीति "वहाभ्रे लिह" इति खच् । "अरुर्द्विषदजन्तस्य मुम्" । लिलिहे

इति कर्तरि लकारः । स्वरितेत्त्वादात्मनेपदम् । पल्लवशब्दः पुंस्थितिलिङ्गः । उक्तं च—"कटकं षण्डपल्लव"मिति ॥ ६५ ॥

साकं कथंचिदुचितैः पिचुमन्दपत्रै-
रास्यान्तरालगतमाम्रदलं म्रदीयः ।
दाशेरकः सपदि संवलितं निषादै-
र्विप्रं पुरः पतगराडिव निर्जगार ॥ ६६ ॥

दाशेरक उष्ट्र आम्रतरुपर्णं सपदि ग्राससमनन्तरमेव पुरोऽग्रे निर्जगार निष्ठ्यूतवान् । कीदृशम्, उचितैः शीलितैः पिचुमन्दपत्रैर्निम्बपल्लवैः सह कथंचिद्दैववशादास्यान्तरालगतं कण्ठप्राप्तं, तथा म्रदीयः कोमलम्, अतश्च स यदा कटुककण्टकभोजी तच्च सुस्वादु कोमलमतोऽनुचितत्वान्मुखविवरपतितमपि आश्वेव जहौ । को यथा कैर्मिश्रितं कमिव तत्याज, पतगराट् गरुडो निषादैः शाकुनिकैः सह कथञ्चित् संवलितं मिश्रितं कण्ठप्राप्तं विप्रं ब्राह्मणं पुरस्तात् तत्क्षणादेवोद्गीर्णवान् । एवं ह्यागमः—पुरा सुपर्णेन क्षुधितेन भोजनं दृष्टं मे दिशेति पिता कश्यपो विज्ञप्तः, तेन च जलराश्युपशयान्निषादान्भक्षयेति विना ब्राह्मणं, यश्च कण्ठं दहतीव स द्विजो ज्ञेय इत्यसावभिहितः । ततस्तेनानुदिनं निषादान् भुञ्जानेन कदाचिद्दैवागतो मुखविवरं दहन्निव विप्रो झगित्येव खाटिति कृत्वोद्गारि ॥ ६६ ॥

स्पष्टं बहिःस्थितवतेऽपि निवेदयन्त-
श्चेष्टाविशेषमनुजीविजनाय राज्ञाम् ।
वैतालिकाः स्फुटपदप्रकटार्थमुच्चै-
र्भोगावलिं कलगिरोऽवसरेषु पेठुः ॥ ६७ ॥

वैतालिकास्तुतिपाठका मागधाद्या अवसरेषु समयेषु भोगावलिं व्यवहारानुरूपं काव्यं गाथाद्विपद्यादिकं नृपाणां पेठुरभिजगदुः, कथमुच्चैरुदात्तम् । अत एव स्फुटैरश्लिष्टैः पदैर्वर्णैः प्रकट उत्तानोऽर्थो यत्र स्फुटपदप्रकटार्थमत एव च कीदृशा वैतालिकाः, बहिः कद्याप्रदेशेष्वपि स्थितस्य सेवकलोकस्य राज्ञां चेष्टाविशेषं मुखप्रक्षालनदेवतास्मरणताम्बूलदानादिकं स्पष्टं निःसन्देहं निवेदयन्तः कथयन्तः, कलगिरो मधुरस्वराः । यत्र काव्ये राज्ञो नानाविधाः क्रियाः स्नानभोजनपानादिकाः कुर्वाणस्य तदनुरूपा गाथादयः पठ्यन्ते सा भोगावलिरुच्य-

ते, अतश्च वाक्यार्थमवगत्य निश्चितमिदानीं मनुजेश्वर इदं कुरुत इत्यक्लेशेनैवानुजीविनो बुध्यन्ते । निवेदयन्त इति ज्ञानार्थस्य विदेर्हेतुमण्णिचि रूपम् । यदि वा निवेदनं निवेदस्तं कुर्वन्ति इति निवेदयन्ति इति तद्भावः । अनुजीविजनायेति "क्रियाग्रहणमपि कर्तव्यम्" इति संप्रदानसंज्ञा । वैतालिकशब्दो वेतालशब्दात् तद्धिता इति बहुवचननिर्देशात् ठक्, अव्युत्पन्नो वा ॥ ६७ ॥

**उन्नम्रताम्रपटमण्डपमण्डितं त-**
**दानीलनागकुलसंकुलमाबभासे ।**
**संध्यांशुभिन्नघनकर्बुरितान्तरिक्ष-**
**लक्ष्मीविडम्बि शिविरं शिवकीर्तनस्य ॥ ६८ ॥**

शिवं श्रेयस्करं कीर्तनं संशब्दनं यस्य स शिवकीर्तनो भगवान् विष्णुस्तस्य तच्छिविरं स्कन्धावारमाबभासे चकाशे । कीदृशम्, उन्नम्राण्युन्नतानि ताम्राणि रक्तानि यानि पटमण्डपानि वसनवेश्मानि तैर्मण्डितं भूषितं, तथा आनीलैः समन्तात् कृष्णैर्नागकुलैः करियूथैः संकुलं गहनं व्याप्तमित्यर्थः। अत एव संध्यायां येऽशवो रश्मयस्तैर्भिन्नाश्छुरिता ये घना मेघास्तैः कर्बुरिता शारीकृता या अन्तरिक्षलक्ष्मीरा[1]काशशोभा तां विडम्ब[2]तेऽनुकरोतीति तत्तथोक्तम् । ताम्रपटमण्डपानां संध्यांशवो लोहित्यादुपमानं गजानामभ्राणि, शिविरस्य खम् । वसन्ततिलकं वृत्तम् । कल्पितोपमा नामालंकारः ॥ ६८ ॥

**धरस्य प्रोद्धर्ता त्वमिति ननु सर्वत्र जगति**
**प्रतीतिस्तत्किं मामतिभरमधः प्रापिपयिषुः ।**
**उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसौ**
**बलाक्रान्तः क्रीडद्द्विरदमथितोर्वीरुहरवैः ॥ ६९ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये सेनातदङ्गादिवर्णनं नाम पञ्चमः सर्गः ॥ ५ ॥

---

असौ गिरिपती रैवतको बलाक्रान्तः सैन्यपीडितः सन् श्रीपतिं लक्ष्मीपतिमित्येवं वक्ष्यमाणमुच्चैर्वेगेनोपालब्धेव सप्रणयरोषमुक्तवानिव । उपालम्भो वा-

---

१ 'अम्बर' ग. पाठः । २ 'म्बयते' ग. पाठः ।

च्यता । ओलहना इति भाषया। केनोपालब्ध, क्रीडन्तो रममाणा ये द्विरदास्तै- र्मथिता भग्ना ये उर्वीरुहा वृक्षास्तेषां रवैः स्फोटनशब्दैः, वचनेन हि वाच्यता विधीयते । किमुपालब्धेत्याह—धरस्यागस्य गोवर्धनाख्यस्य त्वं प्रोद्धर्ता भवा- नेव परित्राता त्वयैव मग्न उद्धृत इत्येवं यदा सर्वत्र जगति त्रिभुवने प्रतीतिः ख्यातिस्तत् कस्मान्मामतिभरं महाभरयुक्तमधः पातालं प्रापिपयिषुर्निनीषुर्ब्रोडयि- तुमिच्छुः। यदा ह्यापन्नवत्सलो भवांस्तदा गोवर्धनस्येव ममापि रक्षैव कर्तुं युक्ता नतूपद्रवः, इतीव रुग्णतरुरवैर्भगवन्तमसौ बलपरिभवमश्रावयदिति वाक्यार्थः । धारयतीति धरः पचाद्यच् । "बहुलमन्यत्रापि संज्ञाच्छन्दसो"रिति णिलुक्, क- र्मणि षष्ठी । प्रकर्षेणोद्धरति प्रोद्धर्ता "ण्वल्तृचौ" । इतिशब्दः प्रतीतिप्रकार- निर्देशे । ननुरभिमुखीकरणाय हेतौ वा। मामिति प्रापणक्रियापेक्षया द्वितीया। अतिशयेन भरो यस्य तमतिभरं माम्, अतितरां वा भरो यत्र तदतिभरम् । प्रापयितुमिच्छुः प्रापिपयिषुः । ण्यन्तात्सन् । इट्, सन्यङोरजादेर्द्वितीयस्ये"ति पिशब्दो द्विरुच्यते । "सनः शंसभिक्ष उः" । उपालब्धेति लभेर्लुङ् अनुदात्ते- त्वात्तङ्, सिच् "झलो झलि । झषस्तथोर्धोऽधः । झलां जश् झशि" इति । उपालम्भप्रकारनिर्देशे उत्प्रेक्षालंकारः । शिखरिणी वृत्तम् । "यमौ न्सौ भ्लौ गन्ता रसहरविरामा शिखरिणी" इति भद्रम् ॥ ६९ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि-वल्लभदेवाचार्य्यविरचि-
तायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां
रैवतकसेनातदङ्गादिवर्णनं पञ्चमः
सर्गः ॥ ५ ॥



अथ

# शिशुपालवधकाव्ये

## षष्ठः सर्गः



**अथ रिरंसुममुं युगपद्गिरौ कृतयथास्वतरुप्रसवश्रिया ।**
**ऋतुगणेन निषेवितुमादधे भुवि पदं विपदन्तकरं सताम् ॥ १ ॥**

अथानन्तरं गिरौ रैवतकाचले या भुवो भूमिभागास्तत्र ऋतुषट्केन समं समकालं पदं स्थानमादधे कृतम् । किमर्थममुं भगवन्तं निषेवितुमाराधयितुं, यतो रिरंसुं विजिहीर्षुम् । कीदृशेन ऋतुगणेन कृता जनिता यथास्वं यथायथं तरूणां प्रसवानां पुष्पाणां च श्रीः समृद्धिर्येन, यानि यस्यात्मीयानि लिङ्गानि तानि तेनाविष्कृतानी'[1]त्यर्थः । अथवा कृता यासौ यथास्वं तरुप्रसवश्रीस्तया निषेवितुमिति योज्यम् । कीदृशं भगवन्तं सतां पुण्यवतां विपदन्तकरं जननमरणाद्यापदवसानकरम् । प्रसूयन्ते इति प्रसवाः पुष्पाणि धान्यानि च । या या स्वा यथास्वं वीप्सायामव्ययीभावः । आदधे इति कर्मणि लकारः । सर्गेऽस्मिन् शब्दालंकारः । एकदेशजं यमकम् । वृत्तं द्रुतविलम्बितम् । "द्रुतविलम्बितमाह नभौ भरा" विति ॥ १ ॥

ऋतुगणेन पदमादधे इत्युक्तं, ते च ऋतवो न प्रत्यक्षग्राह्याः, अपितु कार्यानुमेयास्तत्र यद्यस्य कार्यं तदाह—युगपच्चेत्युक्तं, न च ते युगपद्वर्णयितुं शक्यन्तेऽपितु क्रमेण । तत्र प्रथमं तावदृतुराजवर्णनमाह—

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।**
**मृदुलतान्तलतान्तमरूपयत् स सुरभिं सुरभिं सुमनोभरैः ॥२॥**

स हरिः पुरः पूर्वं सुरभिं वसन्तमरूपयदुदैक्षत, लिङ्गैर्निरूपयामासेत्यर्थः । कीदृशं सुरभिमिति विशेषणद्वारेण लिङ्गान्याह–नवपलाशानि सरसकिसलयानि पलाशवनानि वृक्षविशेषकाननानि यत्र । तथा स्फुटपरागाणि प्रकटरेणूनि प-

---

[1] 'भूतानी' क. पाठः ।

रागतानि प्राप्तानि पङ्कजानि अब्जानि यत्र । तथा मृदुलाः कोमला अत एव तान्ता म्लाना लतान्ता वल्लीप्रान्ता यत्र । केचित्तु तान्तं दीर्घमाहुः, मृदुलं च मार्दवग्राहिणं, तथा सुमनोभरैः कुसुमसमृद्धिभिः सुरभि सुगन्धिम् ॥ २ ॥

**विलुलितालकसंहतिरामृषन् मृगदृशां क्ल[१]मवारि ललाटजम् ।**
**तनुतरङ्गततीः सरसां दलत्कुवलयं वलयन्मरुदाववौ ॥ ३ ॥**

मलयानिल उवाह–कीदृशः सारङ्गाक्षीणां विलुलिता कम्पिता अलकसंहतिर्लालाट्यकेशपंक्तिर्येनेति मार्दवोक्तिः । तथा तासामेव क्लमभवं घर्माम्बु आमृषन् स्पृशन्नपास्यन्निति प्रियकारित्वोक्तिः । तथा जलाशयानां सूक्ष्मकल्लोलमाला वलयन् भ्रमयन्निति शैत्योक्तिः । कथं वलयन्नित्याह–दलन्ति विकस्वराणि कुवलयान्युत्पलानि यत्र तद्दलत्कुवलयमिति सौरभोक्तिः ॥ ३ ॥

**तुलयति स्म विलोचनतारकाः कुरवकस्तवकव्यतिषङ्गिणि ।**
**गुणवदाश्रयलब्धगुणोदये मलिनिमालिनि माधवयोषिताम् ॥४॥**

अलिनि भ्रमरे यो मलिनिमा कार्ष्ण्यं स यादवाङ्गनानां नयनकनीनिकास्तुलयति स्म अतूतुलदनुचकार । कीदृशेऽलिनि स्त्रीणां कुरवकाख्यकुसुमगुच्छभाजि, अत एव गुणवदाश्रयेण सितवर्णकुरवकसम्पर्केण लब्धः प्राप्तो गुणस्य कार्ष्ण्यस्य धर्मस्योदय आधिक्यं येन । सिते हि कृष्णं नितरां राजते, अत एव तारका अतूतुलत् । लोचनानां कुरवकमुपमानं, तारकाणां भृङ्गाः[२] । उभयथा प्रयोग[३]दर्शनात् तुलिरदन्तोऽपि बोद्धव्यः । मलिनिमेति "वर्णदृढादिभ्यः ष्यञ्चे"ति इमनिच् । अलिशब्दो नान्तोऽपि ॥ ४ ॥

**स्फुटमिवोज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः ।**
**विरहिणां हृदयस्य भिदाभृतः कपिशितं पिशितं मदनाग्निना ॥५॥**

भास्वरहाटककोमलैश्चम्प[४]कपुष्पैः सम्बद्धमशोकं स्फुटमत्यर्थमशोभतादीप्यत । उत्प्रेक्ष्यते—भिदाभृतः स्फुटितस्य वियोगिहृदयस्य कामानलेन कपिशितं पिशङ्गीकृतं पिशितमिव मांसमिव । विरहिभिस्तावदवश्यं तदा मर्तव्यमतश्च लोकस्यैवमूहो भवति । चम्प[५]कराशिः कामाग्निः, अशोकनिचयस्तु पिशितमिति । इवशब्दोऽत्र भिन्नक्रमः । भिदां विदारणं बिभर्तीति भिदाभृत् तस्य ॥ ५॥

---

१ 'श्र' ख. पाठः । २ 'कस्य भृङ्गः' ग. पाठः । ३ 'जन' ख. पाठः । ४ 'म्प' ख. पाठः । ५ 'म्प' ख. पाठः ।

**स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः ।**
**निपतिताः परितः पथिकव्रजानुपरि ते परितेपुरतो भृशम् ॥ ६ ॥**

इहाम्राणि विकसितानि दृष्ट्वा तत्स्पर्शामोदादीनि चानुभूय 'कष्टं वसन्तेऽपि वयं विरहिताः' इति पथिकाः परितप्यन्ते इति स्थितिः । तद्यथा—"भमरभरभग्गवेण्ठे अवणि पडिअम्मि चूअपुच्छमि । डड्ढेणवविहुआइं सुरइ रंपहिएण अङ्गाइं" ॥ तत्र कविरुत्प्रेक्षते—पथिकव्रजान् परितः अध्वनीनवृन्दानां समन्तादुपरि शिरसि पतिताः सन्त आम्रषण्डस्य च रजःकणा रेणुलेशाः स्मरहुताशनमुर्मुरचूर्णतां कामाग्निकणक्षोदत्वं दधुरिव ऊहुर्यथा त एव ते पथिकव्रजा भृशमत्यर्थं परितेपुर्दग्धपीडामापुः । यदि ते हि नाग्निचूर्णत्वं बिभृयुस्तत्कथं पान्थानां शिरःसु पतितास्तापं कुर्युः, तस्माद्यदा तैः पतितैस्ते सन्तप्तास्तदा नूनं ते स्मराग्निमुर्मुरचूर्णत्वं दधुरिति वाक्यार्थः । सूक्ष्मा अग्निकणा मुर्मुरास्तेषां त एव वा चूर्णम् । आम्रवणस्येति "प्रणिरन्तः शरे" त्यादिना णत्वम् । व्रजानिति "अभितः परितः" इति द्वितीया ॥ ६ ॥

**रतिपतिप्रहितेव कृतक्रुधः प्रियतमेषु वधूरनुनायिका ।**
**बकुलपुष्परसासवपेशलध्वनिरगान्निरगान्मधुपावलिः ॥ ७ ॥**

अगाद् वृक्षात् मधुपावलिर्भ्रमरमाला निरगात् निःससार । कीदृशी बकुलपुष्परसः केसरकुसुममकरन्दस्तदेवासवः पानं तेन पेशलध्वनिर्मधुररुता । किमर्थं निरगात् । कान्तेषु कृतक्रुधो विहितरुषो मनस्विनीर्वधूरनुनायिका अनुनेतुं सान्त्वयितुमिव । अलिरुतं हि श्रुत्वा मानिन्यः प्रसीदन्तीति अलयस्तासामनुनायिकाः । उत्प्रेक्ष्यते—रतिपतिप्रहितेव वधूरनुनेतुं कामेनेव विसर्जितासौ, दूत्यपि मधुरवाग्भवति । क्रोधः क्रुत् संपदादित्वात् क्विप् । अनुनायिकेति "तुमुन् ण्वलौ क्रियायां क्रियार्थाया" मिति कर्तरि ण्वल् । वधूरिति "अकेनोर्भविष्य" दिति षष्ठीनिषेधः । वधूरनुनेष्यामीति निरगात्, उत्प्रेक्षायामेव वा योज्यमेतत् । प्रियेषु क्रुद्धा वधूरनुनेतुं कामेनेव विसर्जितेति । प्रियतमेष्वित्याधारविवक्षायां सप्तमी, तेन "क्रुधद्रुहे" ति चतुर्थी न कृता । निरगादिति "इणो गा लुङि" ॥ ७ ॥

**प्रियसखीसदृशं प्रतिबोधिता किमपि काम्यगिरा परपुष्टया ।**
**प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गनाः ॥ ८ ॥**

मानिन्यः कान्तायाप्रार्थितमपि वपुरदुर्निचिक्षिपुः, यतः कोकिलया विश्वस्तसख्येव किमप्यज्ञायमानं वस्तु प्र[1]बोधिताः । कीदृश्या परपुष्टया काम्यगिरा हृद्यवाचा, तथा गुरुमत्सरच्छिदुरया महारोषापासिन्या । प्रतिबोधिता इवेत्युत्प्रेक्षेयम् । आदौ हि प्रार्थिता अपि न सम्मुखाः कोकिलया वाशितेना[2]ननुनीता अपि मानं जहुः, अतो ज्ञायते अनया किमपि बोधिताः, अन्यथा कुतोऽधुना नीरोषाः संपन्ना इति वाक्यार्थः । मत्सर ईर्ष्या । छिदुरयेति छिदेः कर्तरि कुरच् इति लभ्यते । प्रियसख्याः सदृशमिति प्रतिबोधविशेषणम् ॥ ८ ॥

**मधुकरैरववादकरैरिव स्मृतिभुवः पथिका हरिणा इव ।**
**कलतया वचसः परिवादिनीस्वरजिता रजिता वशमाययुः ॥ ९ ॥**

पान्थाः कामस्य वशमायत्ततां जग्मुः, यतो भ्रमरैः परिवादिनीस्वरजिता वचसः कलतया वीणातन्त्रीपरिभावुकेन वाङ्माधुर्येण मृगा इव रजिता हृताः । भृङ्गगुञ्जितं हि श्रुत्वा अध्वगाः कान्तानां सस्मरुरिति वाक्यार्थः । कीदृशैर्मधुकरैः अववादकरैरिव आज्ञाविधायिभिरिव प्रकृतत्वात् कामस्यैव । यः किल निदेशवर्ती स प्रभोरन्यं वशं नयति । तैश्च वचसः कलत्वेन ते वशीकृताः, हरिणा अपि मृगयुभिर्गीत्वा माधुर्येणैव रजिता वशं नीयन्ते । परिवादिनी वीणा तस्याः स्वरं जयतीति स्वरजित् तया । अथ रजिता इति कथम् ? मृगरमणे हि रञ्जेर्नलोप उक्तः, नच पथिका मृगाः, औपमानिकं मृगत्वं भविष्यति, येन हि उक्तं पथिका हरिणा इवेति तेन प्रकटमेव तेषां मृगत्वमुक्तम् । वशमिति "वशिरण्यो" रित्यप् ॥ ९ ॥

**समभिसृत्य रसादवलम्बितः प्रमदया कुसुमावचिचीषया ।**
**अविनमन्न रराज वृथोच्चकैरनृतया नृतया वनपादपः ॥ १० ॥**

काननतरुरनृतया नृतया अलीकेनैव पौरुषेण न रराज न बभौ, यतः पुष्पोच्चिचीषया हेतुभूतया रसादागत्य वध्वाश्रितोऽप्यविनमन् न प्रणतः अतो वृथैवोच्चकैरुन्नतः । उच्चत्वस्य पुरुषत्वस्य च खल्वेतदेव फलं यद्रभसागतकामिनीप्रह्वत्वम् । तद्यथा—"अपङ्कंभिणअणणनिअंवीअं कुविआणपोढमहिलाण । तीअंतंनत्थिजएजस्स मएणामिसंसीसम्" ॥ स चावलम्बितोपि न नतोऽतो सत्यमेव तस्य पुरुषत्वम् । पादपशब्दो हि पुंलिङ्गः । नुर्भावो नृता तया नृतया ।

१ 'प्रति' क. ख. पाठः । २ 'नानु' क. ख. पाठः ।

न ऋता अनृता असत्या "तस्मान्नुडचि"। अवचेतुमिच्छा अवचिचीषा ॥१०॥

**इदमपास्य विरागि परागिणीरलिकदम्बकमम्बुरुहां ततीः ।**
**स्तनभरेण जितस्तबकानमन्नवलते! वलतेऽभिमुखं तव ॥ ११ ॥**

**सुरभिणि श्वसिते दधतस्तृषं नवसुधामधुरे च तवाधरे ।**
**अलमलेरिव गन्धरसावमू मम न सौमनसौ मनसो मुदे ॥१२॥**

**इति वदन्तमनन्तरमङ्गना भुजयुगोन्नमनोच्चतरस्तनी ।**
**प्रणयिनं रभसादुदरश्रिया वलिभयालिभयादभिषस्वजे ॥ १३ ॥**

काचिदङ्गना योषित् प्रणयिनं कान्तमभिषस्वजे आश्लिक्षत् । कीदृशम् इत्येवं वदन्तं भाषमाणम् । किमित्याह–इदमित्यादि, स्तनभरेण कुचाभोगेन जिता न्यक्कृताः स्तवकैर्गुच्छैरानमन्त्यो नम्रा नवाः सरसा लता व्रतत्यो यया तस्या आमन्त्रणम् । स्तनयोः स्तबका उपमानं, तस्या लता । इदमलिकदम्बकं भृङ्गवृन्दं परागिणीः रेणुमतीरम्बुरुहां ततीरब्जराजीः अपास्य त्यक्त्वा तव संमुखं वलते धावति, यतो विरागि पद्मरागादुद्विग्नम्, त्वं च लताया अपि मनोहरा । किंच अमू एतौ सौमनसौ पौष्पौ गन्धरसौ सौरभमधुनी मम न मनसो मुदे चित्तस्य प्रीतये अलं पर्याप्तौ, यतस्तव सम्बन्धिनि सुरभिणि सुगन्धे श्वसिते मुखमारुते नवसुधामधुरे प्रत्यग्रामृतास्वादे चाधरे ओष्ठरसे तृषमभिलाषमुद्वहतः । यो हि स्वादुनि भोजनेऽभिलाषं धत्ते तस्मायम्लिष्टं न रोचते । कस्येव न प्रीतये इत्याह–अलेरिव । यथास्य त्वदभिमुखस्यालेर्मधुपस्य त्वदीये श्वासिते अधरे च तृष्णां बिभ्रतः सौमनसौ गन्धरसौ तुष्टये नालं तथा ममापि,–इतीत्थं वदन्तं सन्तं तमसावनन्तरम[1]लिभयाद् रभसादौत्सुक्येनालिलिङ्ग । कीदृश्यसौ अभिष्वङ्गवशात् भुजयुगलस्य बाहुयुग्मस्योन्नमनेन ऊर्ध्वीकरणेन उच्चतरावत्युन्नतौ स्तनौ यस्याः । तथा वलिभया त्रिवलीयुक्तयोदरश्रिया मध्यश्रिया उपलक्षिता । विरागीति घिनुणन्तः । सुरभिणीति "इकोऽचि विभक्ता‌वि" ति नुम् । सुमनस इमौ सौमनसौ । मुदे इत्यलंशब्दयोगे चतुर्थी । अनन्तरमथेत्यर्थः । अथवा अविद्यमानमन्तरं यत्र तदनन्तरं निर्विवरं गाढमालिङ्गनम् । प्रशस्तान्यङ्गानि विद्यन्ते यस्याः सा अङ्गना "अङ्गात् कल्याणे" इति नः । वलयो विद्यन्ते यस्याः

---

१ 'चा' ग. पाठः ।

सा वलिभा "तुन्दिवलिवटेर्भः" । अभिषस्वजे इत्यौपसंख्यानिकं कित्त्वम्, "उपसर्गात्सुनोती" ति षत्वम्, धातोस्तु "सदिस्वञ्जोः परस्य लिटी" ति निषेधात् न भवति । त्रिभिर्विशेषकम् ॥ ११ ॥ १२ ॥ १३ ॥

**कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।**
**वलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥१४॥**

अन्यया नायिकया परिवृत्तया सत्या कलमेखलाकलकलो मधुररशनाझणझणत्कारो विदधे कृतः । कीदृश्या तयेति वलने कारणमाह—कुसुमसौरभलोभेन पुष्पसौरभ्यगर्धेन परिभ्रमन्तो ये भ्रमरास्ततो यः संभ्रमस्त्रासस्तेन संभृतार्जिता धृता शोभा रामणीयकं यया, अत एवालकैर्लोलाकुला दृक् दृष्टिर्नेत्रे वा यस्याः । चलितयेति पाठान्तरम् ॥ १४ ॥

**अजगणन् गणशः प्रियमग्रतः प्रणतमप्यतिमानितया न याः ।**
**सति मधावभवन् मदनव्यथाविधुरिता धुरि ताः कुकुरस्त्रियः ॥१५॥**

या वृष्णिवनिता मानिनीत्वात् पुरः प्रह्वीभूतं चरणपतितमपि कान्तं बहुशो नाजगणन् न बहु मेनिरे, ता वसन्ते प्राप्ते मदनव्यथाविधुरिताः कामज्वरदुःखिताः सत्यो धुर्यग्रे आसन् । कस्य धुरीति चेत्, सन्निधानात् मदनव्यथाविधुरितानामेव विरहदुःखपीडितानां ता एवाग्रण्योऽभवन्नित्यर्थः । स्वयमेव प्रियमभिसस्रुरितियावत् । अजगणन्निति गणेर्णिजन्तात् लुङ्, च्लेश्चङ् "ई च गणः" इतीत्वं विभाषितम् । गणश इति "बह्वल्पार्था" दिति शस् । मदनव्यथाविधुरिता धुरीति पृथक्पदे समासे सति समासान्तप्रसङ्गात् ॥ १५ ॥

**कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः ।**
**मरणमप्यपराः प्रतिपेदिरे किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ १६ ॥**

अपरा गतभर्तृकाः प्रोषितभर्तृका मरणमपि प्रतिपेदिरे अपि मम्रुः, किमु किन्न पुनर्मुहुर्मुमुहुः मोहं गताः, मोहं न प्रत्यपद्य[1]न्त अवश्यमेवामुह्यन्तेत्यर्थः । मरणान्मोहस्योनत्वादिति भावः । मरणे मोहे च कारणमाह—कुसुमकार्मुकेन पुष्पचापेन कार्मुके धनुषि संहिता योजितास्ततो द्रुता मुक्ता ये शिलीमुखाः शरास्तैः खण्डितविग्रहा ग्लपितशरीराः । किम्विति निपातसमुदायः । गतभर्तृकाः पान्थवनिताः ॥ १६ ॥

१ 'त्स्य' ग. पाठः ।

**रुरुदिषा वदनाम्बुरुहश्रियः सुतनु सत्यमलङ्करणायते ।**
**तदपि संप्रति सन्निहिते मधावधिगमं धिगमङ्गलमस्त्रुणः ॥ १७ ॥**

**त्यजति कष्टमसावचिरादसून् विरहवेदनयेत्यघशङ्किभिः ।**
**प्रियतया गदितास्त्वयि बान्धवैरवितथा वितथाः सखि मा गिरः १८**

**न खलु दूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितैः ।**
**प्रणयिनो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥ १९ ॥**

काचिद्विरहिणी ऋतैः सत्यवचनैर्निर्ववौ निर्वृतिं लेभे, अत एवामृतैरिवामृततुल्यैः । अमृतेन हि निर्व्रियते । कीदृशैः सत्यैः इत्यनेन प्रकारेण बन्धुतया सखीसमूहेनोदितैरुक्तैः । तमेव प्रकारमाह—रुरुदिषेत्यादि । हे सुतनु विरहिणीत्वादतिकृशे, अथवा शोभनगात्रि तवैषा रुरुदिषा रोदितुमिच्छा सत्यं मुखाब्जलक्ष्म्या भूषणं, तथाप्यधुना वसन्ते निकटे सत्यस्त्रुणो वाष्पस्य योऽधिगम आविर्भावस्तं धिक्, यतोऽमङ्गलमशकुनम् । तस्मादलं रुदित्वेति भावः । धिङ् निन्दायाम् ॥—किंच बान्धवैः स्वजनैर्वियोगव्यथयाऽधुनैव हा कष्टमेषा प्राणान् जहातीति या वाचस्त्वय्यभिहितास्ताः सखि अवितथाः सत्या मा वितथा मा कृथाः, मासूंस्त्याक्षीरित्यर्थः । कीदृग्भिर्बान्धवैः प्रियतया वाल्लभ्येनाघशङ्किभिरनिष्टोत्प्रेक्षिभिः । प्रिये हि जने सर्वथा व्यसनमाशङ्क्यते । उक्तं च—"स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्कते स्नेहा" दिति ॥—किंच असौ त्वत्कान्तो दूरगतोऽपि दवीयानपि निश्चितं महं मदनोत्सवं न खलु नैवातिवर्तते उपेक्षते, अवश्यमेव वसन्तोत्सवनिमित्तमागच्छतीत्यर्थः । एवं यावद्बन्धुता वक्ति तावद्बहिरङ्गने प्रणयिनः प्राणनाथस्य सा स्वरं वाचमशृणोत् । तां चाकर्ण्य बान्धवसत्यवाक्यैरसौ निर्ववार । यथा कस्यचित्—"भ्रातः किं तत्र देशे निशि जलगुरवो न ध्वनन्त्यम्बुवाहाः किंवा सान्द्रेन्द्रगोपा न भवति वसुधा येन नायान्ति पान्थाः । इत्थं वाष्पप्लुताक्षी वदति विरहिणी यावदुद्भूतवाष्पा तावत् संरम्भकूजद्द्रुतकरभगतो वल्लभः प्राप्त एवे" ति ॥ रुरुदिषेति "रुदविदे" ति सनः कित्त्वम् । सुतनुशब्दे "संज्ञापूर्वको विधिरनित्यः" इति ह्रस्वस्य गुणो न भवति । अथवा तनूशब्दस्य रूपमेतत् । एवं हि ह्रस्वकरणसामर्थ्याद्गुणाभावः । अधिगममिति दिक्शब्दयोगे द्वितीया । वितथा इति तनेर्माङि लुङ् थास्, "तनादिभ्यस्तथासो" रिति सिज्लुक् । बन्धूनां समूहो बन्धुता "ग्रामजनब-

न्धुगजसहायेभ्यस्तल्" । कर्तरि तृतीया । उदितैरिति वदेः कर्मणि निष्ठा । कर्म तु ऋतानि । निशमय्य श्रुत्वा "ल्यपि लघुपूर्वा" दिति णेरयादेशः । निर्ववाविति वातेर्लिट् "आत औ णलः" । त्रिभिर्विशेषकम् ॥ १९ ॥

**मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया ।**
**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ २० ॥**

मधुकराङ्गनया भ्रमर्या मुहुरसकृत् उज्जगे गुञ्जितं गीतम् । कथं निभृतान्यव्यक्तानि मधुराण्यक्षराणि स्वरा यत्र तन्निभृताक्षरम् । कीदृश्या मधुरया अरूक्षया, यतो मधुना वसन्तेन बोधिता विकासं नीता यासौ माधवी अतिमुक्तकलता तस्या मधु रसस्तस्य समृद्धिर्भूयस्त्वा तया समेधिता पटूकृता मेधा बुद्धिर्यस्यास्तया, अत एवोन्मदध्वनिभृता सहर्षनिनादधारिण्या । यद्विवोद्गतो मदो मनोविकारो यस्मादित्युन्मदध्वनिः । अलि[1]नीरुतेन हि कामिनो माद्यन्ति । उज्जगे इति भावे लकारः । मधुश्चैत्रो मासः, मधु पुष्परसः ॥ २० ॥

**अरुणिताखिलशैलवना मुहुर्विदधती पथिकान् परितापिनः ।**
**विकचकिंशुकसंहतिरुच्चकैरुदवहद्दवहव्य[2]भुजः श्रियम् ॥ २१ ॥**

उन्नतविकस्वरकिंशुकपुष्पाणां संततिः समूहो दवहव्यभुजो दवाग्नेः श्रियं शोभामुदवहत् बभार, यतो लोहितीकृताशेषनगकानना, तथासकृदध्वन्यान् परितापिनः खेदयुक्तान् कुर्वती । विरहिणो हि किंशुकान्युत्फुल्लानि दृष्ट्वा कष्टं माधवमास आगतो वयं न संगता इति परितप्यन्ते । दावाग्निरपि तापयति, शैलवनानि चारुणयति । दवो वनम्, दूङः पचाद्यच् ॥ २१ ॥

अथ ग्रीष्मवर्णनम्—

**रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजोरुचः ।**
**उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसंपदः ॥ २२ ॥**

असौ शुचिराषाढो मास उपययौ संप्राप्तः, ग्रीष्म आविरभूदित्यर्थः । मासैः सर्वत्र यथायथमृतवो लक्ष्यन्ते । कीदृशः शुचिः नवमल्लिकाः कुसुमविशेषांश्चिरसौरभसंपदो विदधत्, चिरं सौरभसंपत् सौगन्ध्यसमृद्धिर्यासां तांश्चिरसौरभसंपदः सौरभातिशययुक्ताः कुर्वन्नित्यर्थः । तदैव तासां प्रबोधात् । असावि-

---

१ 'नो' क. ख. पाठः । २ 'वहः' क. ग. पाठः ।

त्यनेन यादृग्गुणविशिष्टो विवक्षितस्तं धर्मं स्वरूपेण वक्ति । कोऽसावित्याह—यत्र शुचौ शिरीषरजोरुचः शिरीषाख्यपुष्परेणुभासो रवितुरङ्गतनूरुहतुल्यतां सूर्याश्वरोमसाम्यं बिभ्रति, शिरीषाणि नीलवर्णानि यत्र भवन्ति विकसन्तीत्यर्थः। रविहया हि नीलाः । तनूशब्दः औणादिकः ॥ २२ ॥

**दलितकोमलकुड्मलपाटले निजवधूश्वसितानुविधायिनि ।**
**मरुति वाति विलासिभिरन्वितभ्रमदलौ मदलौल्यमुपाददे ॥ २३ ॥**

तदा वाते वहति सति कामिभिर्मदेन लौल्यमाकुलत्वमुपाददे गृहीतम्, लोकस्तदा ममादेत्यर्थः । कीदृशे मरुति दलिता व्याकोशिताः कोमलकोरकाः पाटलाः पुष्पविशेषा येन, अत एव सान्निध्यात् निजा आत्मीया या वध्वो युवतयस्तासां श्वसितं मुखोच्छ्वासम् अनुविदधात्यनुकरोति यस्तस्मिन्, तथा अन्विता अनुगता भ्रमन्तः संचरन्तोऽलयो यत्र । उपाददे इति कर्मणि लकारः । मदश्चित्तविकारः ॥ २३ ॥

**निदधिरे दयितोरसि तत्क्षणस्नपनवारितुषारभृतः स्तनाः ।**
**सरसचन्दनरेणुरनुक्षणं विचकरे च करेण वरोरुभिः ॥ २४ ॥**

वरा रम्या गौराः पीवरा ऊरवो यासां ताभिर्वरोरुभिः कान्तवक्षसि कुचा निदधिरे निहिताः, तस्य दाहशान्तये इति भावः । यतस्तत्क्षणं तदैव यत् स्नपनमभिषेकस्तेन तत्र वा यज्जलं तेन तुषारभृतः शैत्यधारिणः, तथा तत्र करेण पाणिना अनुक्षणमसकृदभिनवमलयजपरागो विचकरे विकीर्णः । न केवलं दयितोरसि स्तना निदधिरे यावत् चन्दनरेणुरपि विचिक्षिपे इति चार्थः । उभयत्रापि कर्मणि लकारः । विचकरे इति "ऋच्छत्यृता"मिति गुणः ॥ २४ ॥

अथ प्रावृड्वर्णनम्—

**स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा ।**
**जलधरावलिरप्रतिपालितस्वसमया समयाज्जगतीधरम् ॥ २५ ॥**

अथ मेघमाला जगतीधरमद्रिं समयादभिययौ, प्रावृट् प्रवृत्तेत्यर्थः । कीदृग् जलदावलिः मुहुरसकृत् स्फुरन्त्योऽधीराश्चञ्चलास्तडित एव नयनानि यस्याः, तथा अगलितमभ्रष्टमुरु महत् पयो जलं धारयतीति अगलितोरुपयोधरा, तथा अप्रतिपालितोऽप्रतीक्षितः स्वसमय आत्मीयकालो वर्षाख्यो यया । अत एव

नगं कीदृशं प्रियमिव कान्ततुल्यम्, प्रियं हि कान्ता उत्कत्वादप्रतीक्षितवेलैवाभिसरति । कीदृशी कान्ता स्फुरन्ती अधीरे तडित्तुल्ये नयने यस्याः, तथा अगलितावपतितावुरू पीवरौ पयोधरौ स्तनौ यस्याः । कान्ता त्वत्र प्रतीयमाना । समयादिति यातेर्लङि रूपम् ॥ २५ ॥

**गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे ।**
**अभिससार न वल्लभमङ्गना न चकमे च कमेकरसं रहः ॥ २६ ॥**

नभसि श्रावणे मासि द्विरदवृन्दकालं घनाघनमाकाशेऽवलोक्य का कामिनी कान्तं नाभिससार रहसि च कं न चकमे नाचकमत, सर्वमेव प्रियतमं सर्वैवाङ्गना अचकमतेत्यर्थः । कीदृशं वल्लभम् एकरसं, रसो रागः, एको रसो यस्य तमेकरसं रागिणं शृङ्गारप्रधानमित्यर्थः । तत्र च सर्वर्तूनां स्वसमयानपेक्षमवस्थानेऽपि कवेर्वर्णनं यथास्थितकालविभागेनैवेति नभसीति वचनं न विरुध्यते । एवमन्यत्र । चकमे इति लिट् "आयादय आर्धधातुके वा" । रह इत्यधिकरणप्रधानम् । चशब्दः क्रियान्तरसमुच्चयार्थः ॥ २६ ॥

**अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् ।**
**धृतधनुर्वलयस्य पयोमुचः शवलिमा बलिमानमुषो वपुः ॥ २७ ॥**

पयोमुचोऽब्दस्य यः शवलिमा शारत्वं स बलिमानमुषो बलिदर्पहरस्य हरेर्वपुरनुययौ देहमनुचकार । कीदृशस्य पयोमुचः धृतधनुर्वलयस्य रूढेन्द्रायुधमण्डलस्य, अत एव च शवलत्वम् । कीदृग् वपुः विविधोपला नानामणयो ये कुण्डलास्तेषां द्युतिवितानकेन दीप्तिपुञ्जेन संवलिते मिश्रिते छुरिते अंशुके वाससी यस्य । धनुर्वलयमिव वक्रत्वात् । मेघस्य कृष्णवपुरुपमानम्, इन्द्रधनुषो विविधदीप्त्यनुगतमंशुकम् । शवलिमेति इमनिजन्तः ॥ २७ ॥

**द्रुतसमीरचलैः क्षणलक्षितव्यवहिता विटपैरिव मञ्जरी ।**
**नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदैः ॥ २८ ॥**

नभस्तरोराकाशश्रेष्ठस्याचिररोचिस्तडित् अरोचत । कीदृशस्य कार्ष्ण्यात् सरसतमालतरुसदृशस्य । किंभूता अचिररोचिर्वेगवद्वातचटुलैरभ्रैर्मुहुर्लक्षिता क्षणं च तिरस्कृता । कैरिव का क्षणदृष्टा पिहिताशोभतेत्याह—विटपैरिव मञ्जरी, यथा तमालतरोर्द्रुतसमीरचलैर्विटपैः शाखाप्रतानैः क्षणलक्षितव्यवहिता म-

श्चरी, पुष्पवती लता शोभते । खस्य तमालतरुरुपमानं, विद्युतो मञ्जरी । शोभनं नभो नभस्तरुः इति "प्रशंसावचनैश्चे" ति मयूरव्यंसकादित्वाद्वा समासः । अन्यार्थानामपि शब्दानां प्रशंसार्थता दृश्यते । यथा—कर्णतालः, केशहस्तः, मुनिशार्दूल इत्यादौ तालादीनाम् । एतच्चास्माभिरलङ्कारटीकायां सुविचारितम् । नभस्तरुरिवेति उपमितसमासे आधिक्यदोषः स्यात्, नवतमालनिभस्येत्यनेनैव तरुत्वावगतेः । अरोचतेति लङ् ॥ २८ ॥

**पटलमम्बुमुचां पथिकाङ्गना सपदि जीवितसंशयमेष्यती ।**
**सनयनाम्बुसखीजनसंभ्रमाद्विधुरबन्धुरबन्धुरमैक्षत ॥ २९ ॥**

काचिदध्वन्यजाया मेघवृन्दमैक्षताद्राक्षीत् । कथमबन्धुरं दीनं, यतः सपदि मेघालोकनसमकालमेव विरहात् जीवितसन्देहमत्यर्थमेष्यती यास्यन्ती, अत एव साश्रुवयस्यालोकत्रासात् दुःखितस्वजना । रुदत्सखीजनो यदा संभ्राम्यति तदा बान्धवा अपि यस्या दुःखिता इत्यर्थः । एष्यतीति एतेर्लृट् । पन्थानं गच्छति पथिकः "पथः ष्कन्" ॥ २९ ॥

**प्रवसतः सुतरामुदकम्पयद्विदलकन्दलकम्पनलालितः ।**
**नमयति स्म वनानि मनस्विनीजनमनोनमनो घनमारुतः ॥ ३० ॥**

घनमारुतोऽभ्रवातः प्रवसतः पान्थानत्यर्थमुदकम्पयत् विह्वलीचकार, तथा वनानि काननानि नितरां नमयति स्म नम्रीचकार अदलयत् । कीदृशः विदलाः फुल्ला ये कन्दला लताभेदास्तेषां कम्पनेन लालितः शीलितः, अत एव मनस्विनीजनमनोनमनो मानिनीलोकचित्तवशीकर्ता । वायुः कन्दलानिव पान्थानकम्पयत्, वनानीव मानिनीमनांस्यनमयदिति वाक्यार्थः । नमयतीति नमनः, मनसो नमन इति षष्ठीसमासः । प्रवसत इति शसन्तः ॥ ३० ॥

**जलदपङ्क्तिरनर्तयदुन्मदं कलविलापि कलापिकदम्बकम् ।**
**कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसम्पदा ॥ ३१ ॥**

घनावली मत्तं मधुरभाषि च मयूरनिकुरुम्बमात्मीयया गर्जनसम्पत्त्या अनर्तयत् । कीदृश्यसौ कृतः संमार्जनस्य पिण्डीलिप्तस्य मर्दलमण्डलस्य ध्वनेर्जयः परिभवो यया सा कृतसमार्जनमर्दलमण्डलध्वनिजया । मार्जना कार्मारव्या-

पादिकाः संस्कारविशेषाः । मर्दलं मुरजाकारोऽवनद्धवाद्यविशेषः । मण्डलं समूह आभोगो वा । उत्पन्नो मदो यस्य तमुन्मदम् । अन्योऽपि मत्तो मर्दले वाद्यमानेऽवश्यमेव नृत्यति ॥ ३१ ॥

**नवकदम्बरजोऽरुणिताम्बरैरधिपुरन्ध्रि सिलिन्ध्रसुगन्धिभिः ।**
**मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे ॥ ३२ ॥**

रागिणां चित्तेषु काननवातैर्नवनवा अपूर्वैवाधिपुरन्ध्रि स्त्रीषु नायिकाविषयेऽनुरागिता विदधे औत्सुक्यं कृतम्, यतः सिलिन्ध्रसुगन्धिभिस्तथा सरसकदम्बधूलिलोहितीकृतमुखैः । सिलिंध्रकदम्बकौ प्रावृषेण्यपुष्पविशेषौ । पुरन्ध्रिष्वधिपुरन्ध्रीति विभक्त्यर्थेऽव्ययम् । नवनवेति प्रकारे द्वित्वम् । प्रकारः सादृश्यम् । कर्मधारयवत्कार्यम् ॥ ३२ ॥

**शमिततापमपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् ।**
**प्रविरलैरचलाङ्गनमङ्गनाजनसुगं न सुगन्धि न चक्रिरे ॥ ३३ ॥**

मेघा असंहतैरपां नवकणैर्नगाजिरं न सुगन्धि न चक्रिरे अपितु सुरभितमेव विदधुः । न सुगन्धीत्यस्य निषेधरूपस्य वाक्यार्थस्य निषेधादत्र सातिशयविधिप्रतीतिः । कीदृशमङ्गनं शमिततापमपास्तघर्मं प्रकृतत्वाद्विप्रुड्भिरेव । तथा अपोढमहीरजो निवृत्तस्थलीधूलि, अत एवाङ्गनाजनेन यौवतेन सुगं गमने सुखावहम् । शमितमिति शमेर्ण्यन्तान्निष्ठा । अपपूर्वाद्वहतेः क्ते अपोढमिति रूपम् । अङ्गनमजिरम्, अङ्गतेऽस्मिन्निति कृत्वा । सुखेन गम्यतेऽस्मिन्निति सुगम् "सुदुरोरधिकरणे" इति डः, ततस्तृतीयातत्पुरुषः । चक्रिरे इति कर्तरि लकारः ञित्वात् तङ् । अथ कीदृशमत्र कर्त्रभिप्रायक्रियाफलत्वं, नह्यम्बुदाः फलभाजः, विकल्पफलत्वात् तस्येत्यदोषः । एवं ह्यत्र लक्ष्यदर्शनम् । तथाहि—कर्त्रभिप्राये क्रियाफलेऽपि क्वचिन्न भवति । यथा च कालिदासस्य "यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्री" मिति ॥ अत्र कर्त्रभिप्रायेऽपि क्वचिद्दृश्यते । यथेहैव यदिवा विवक्षा तत्र प्रधानं न वस्तुतत्त्वं, सा चेह न केनचिन्निषिद्धा । एवमन्यत्रापि ३३।

**द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् ।**
**घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिव च्युतम् ॥ ३४ ॥**

---

१ 'र आन' क. पाठः । २ 'सिलीन्ध्र' ग. पाठः । ३ 'क्षधू' ग. पाठः ।

केतकपुष्पमलक्ष्यत दृष्टम् । कीदृशं दन्तिदशनवद्धवलं कृशशिखं तन्वग्रं, तथा स्फुरिता भृङ्गस्येव मृगस्य शशस्य च्छविः कान्तिर्यत्र । अतश्चोत्प्रेक्ष्यते— दिवः खात् च्युतं पतितं कृशशिखं तनुलेखं शशिखण्डमिव । पाते निमित्तमाह—घनघनौघविघट्टनया संहताभ्रवलयप्रेरणया, घनाघनैश्चालितत्वात् पतित आकाशादर्धचन्द्रो ज्ञायते इत्यर्थः । कृशो हि जनमर्दनप्रेरणयावश्यमेव पतति । केतकस्य शश्युपमानं, मृगो भ्रमरस्य । वलक्षशब्दः शुक्लपर्यायः । केतक्या विकारो पुष्पं केतकं "पुष्पमूलेषु बहुल" मिति विकाराणो लुक्, "लुक्तद्धितलुकि" ॥ ३४ ॥

**दलितमौक्तिकचूर्णविपाण्डवः स्फुटितनिर्झरशीकरचारवः ।**
**कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥३५॥**

कुटजकुसुमकिञ्जल्कलेशा दधिरेणुविडम्बनां दधिकणानुकारमखण्डं विदधिरे चक्रुर्बभुः । कीदृशाः कणाः पिष्टमुक्तामणिक्षोदधवलाः, तथा विशीर्णप्रपातजलकणरमणीयाः त्रयाणां साम्यमूहुरित्यर्थः । दध्नो रेणवः कणाः, विडम्बनानुकारः । विदधिरे इति कर्तरि लकारः ॥ ३५ ॥

**नवपयःकणकोमलमालतीकुसुमसंततिसन्ततसङ्गिभिः ।**
**प्रचलितोडुनिभैः परिपाण्डिमा शुभरजोभरजोऽलिभिराददे ॥३६॥**

अलिभिः भृङ्गैः परिपाण्डिमा सितत्वमाददे धृतम् इति कर्मणि लकारः । कृष्णानां सितिमा कुत आगत इत्याह–शुभरजोभरज इति, शुक्लस्य रेणुनिकरस्य । कस्तेषामागम इत्याह–नवा अचिरोज्झिता ये पयःकणास्तोयबिन्दवस्तद्वत् कोमला मनोज्ञा या मालतीकुसुमसन्ततिर्जातीप्रसूनराशिस्तत्र सन्ततं सततं सङ्गः परिचयो विद्यते एषाम्, अत एव स्फुरन्नक्षत्रसदृशैः । मालतीसंज्ञं कुसुमं मालतीकुसुममिति शाकपार्थिवादित्वात् समासः । मालत्या लताया वा कुसुममिति षष्ठीसमासः ॥ ३६ ॥

**निजरजः पटवासमिवाकिरद् धृतपटोपमवारिमुचां दिशाम् ।**
**प्रियविमुक्तवधूजनचेतसामनवनी नवनीपवनावलिः ॥ ३७ ॥**

नवनीपवनावलिः सरसनीपकुसुमकाननराजिर्निजरजः स्वरेणुं दिशामाशास्वकिरत् चिक्षेप । कीदृशां दिशाम् ऊढवसननिभनीरदानाम् । सा तु कान्त-

विरहिताबलालोकमनसामनवनी अपालनी अप्रीतिकारिणी उद्वेगोत्पादकत्वात् । कीदृग्रजः पटवासमिव चन्दनादिचूर्णतुल्यम् । यथा काचिन्नायिका सखीनामाच्छादितपटानां पटवासं क्षिपति, एवं या निजरजो दिशामकिरदित्यर्थः । अवति प्रीणयतीत्यवनी "कृत्यल्युटो बहुलं" ततो नञ्समासः ॥ ३७ ॥

**प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः ।**
**प्रणयिनः परिरब्धुमनन्तरं ववलिरे वलिरेचितमध्यमाः ॥ ३८ ॥**

वलिभी रेखाभी रेचितमाश्लेषवशाद्रहितं मध्यममुदरं यासां ता वलिरेचितमध्यमाः, सामर्थ्यान्नार्य उच्यन्ते । ताः प्रियानालिङ्गितुं ववलिरे परिवृत्ताः । कदाचित् प्रसन्नाः स्युरित्याह–प्रणयकोपभृत इत्यत एव पराङ्मुखा अप्रीताः । कथं तर्हि वलिता इत्याह–सपदि विरोधसमकालमेव, यतो वारिधरारवात् मेघगर्जितात् भीरवस्त्रस्नवः, अनन्तरं ववलिरे । अनन्तरार्थः पूर्ववत् । प्रणयकोपो रतिकलहः । अपिर्विरोधे भिन्नक्रमः । पराङ्मुखा अपि वलिताः । यः किल पराङ्मुखः स कथं वलितो भवेत् । पराञ्चतेः क्विप्, नलोपः । पराचि देशे "दिक्शब्देभ्य" इत्यस्तातिः । अञ्चेर्लुक् । पराक् मुखं यासां ताः पराङ्मुखाः । ङीष् विकल्पितः । आरव इति "विभाषाङि रुप्लुवोः" । प्रणयं प्रीतिः । मध्यदेशे भवं मध्यमम् "मध्यान्मः" ॥ ३८ ॥

**विगतरागगुणोऽपि नरो न कश्चलति वाति पयोदनभस्वति ।**
**अभिहितेऽलिभिरेवमिवोच्चकैरननृते ननृते नवपल्लवैः ॥ ३९ ॥**

वर्षासु वातवशात् किसलयानि चलन्त्यलयश्च गुञ्जन्ते इति ऋतुस्वभावः। तत्र कविरूहते–अलिभिरेवमननृते सत्यभूतेऽभिहिते इव सति नवपल्लवैर्नूतनकिसलयैर्ननृते नृत्तं चलितमिति भावे लकारः । किमभिहिते इत्याह—पयोदनभस्वति घनवाते वहति सति यः पुरुषो विगतरागगुणो नीरागः सोऽपि को न चलति धैर्यान्न भ्रश्यति, मुनयोऽपि वर्षासु क्षुभ्यन्तीति भावः । यतश्च नीरागोऽपि चलति तदा तानि सरागत्वान्नवानि कथं न चलेयुः । अथच यदा विगतरागा मुनयोऽपि चलन्ति तदा नवपल्लवैः शिङ्गैश्चलितमित्युक्तिः । रागो व्यसनं लौहित्यं च । ऋतं सत्यं, न ऋतमनृतं, नानृतमननृतं सत्यम् । भूयोऽपि नञ्समासो नुड् च ॥ ३९ ॥

**अरमयन् भवनाद्चिरद्युतः किल भयाद्पयातुमनिच्छवः ।**
**यदुनरेन्द्रगणं तरुणीगणास्तमथ मन्मथमन्म[1]नभाषिणः ॥ ४० ॥**

अथ तं यदुनरेन्द्रगणं कुकुरनृपवृन्दं युवतिपूगा अरमयन् अतोषयन्, यतस्तडितस्त्रासात् किल गृहान्निर्गन्तुमकामाः । किलेत्यलीके । तत्त्वतो हि शङ्का एव, केवलं तान् वशीकर्तुं भयं ताभिर्नाटितमित्यर्थः । तथा मन्मथेन कामेन मन्मनमव्यक्तं भाषन्ते इति मन्मथमन्मनभाषिणः । मन्मनशब्दोऽव्यक्तघर्घरस्वरवाचको दे[2]शीपदम् । नासामननार्थ इति त्वन्ये ॥ ४० ॥

**ददतमन्तरिताहिमदीधितिं खगकुलाय कुलायनिलायिताम् ।**
**जलदकालमबोधकृतं निशामपरथाप रथावयवायुधः ॥ ४१ ॥**

स भगवान् रथावयवायुधश्चक्रहेतिः कृष्णो जलदकालं वर्षाः अपरथा अपरेण प्रकारेण साधर्म्ययोगाख्येन निशां रात्रिमाप नतु स्वापात् । प्रावृषि हि मासचतुष्टयं देवः स्वपिति, स्वापाच्चास्य सा निशा, अद्य तु तामपरथा असौ निशामाप, निशाप्रावृषोः साम्यात् प्रावृषं निशामिवाज्ञासीदित्यर्थः । तदेव साम्यं विशेषणद्वारेणाह—कीदृशं जलदकालम् अन्तरितः पिहितोऽहिमदीधितिः सूर्यो यत्र । अत्र च सजलदत्वमेव हेतुः । तथा खगकुलाय पक्षिपूगाय कुलायनिलायितां नीडाश्रयत्वं ददतम् । अत्र चातिवृष्टिः कारणम् । तथा अबोधकृतं भगवतो निद्राकारिणम् । वर्षासु हि भगवान् शेषपर्यङ्के स्वपिति, रात्रिरप्येवंविधैव भवति असूर्या नीडलीनविहगा निद्राविधायिनी च । कुलायेऽवश्यं निलीयन्ते इति कुलायनिलायिनः तद्भावस्तत्ता । अबोधं करोतीति अबोधकृत्, क्विप् । रथावयवश्चक्रम् । आयुध्यन्ते अनेनेत्यायुधम् ॥ ४१ ॥

अथ शरद्वर्णनम्—

**सविकचोत्पलचक्षुषमैक्षत क्षितिभृतोऽङ्कगतां दयितामिव ।**
**शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्तनः ॥ ४२ ॥**

अघनाशनं पापक्षयकारि कीर्तनं नामग्रहणं यस्य स भगवान् हरिः शरदं शरदाख्यं ऋतुमैक्षतादर्शत् । कीदृशीं विकचानि प्रफुल्लानि उत्पलान्येव चक्षूंषि यस्यास्तथा क्षितिभृतो रैवतकाचलस्याङ्कगतां मध्यवर्तिनीम्, तथा अच्छा निर्मला गलन्तो नश्यन्तो वसनोपमाक्षमाः सितवस्त्रोपमाक्षमाः सितवस्त्रसादृश्य-

---

[1] 'मन्थर' ख. पाठः । [2] 'श' ख. पाठः ।

योग्या मेघा यस्यास्ताम् अतश्च दयितामिव प्रेयसीतुल्याम् । सापीन्दीवरतुल्यनेत्रा भवति अङ्कस्थिता च, तत्र निर्मलगलद्वसना च ॥ ४२ ॥

**जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः ।**
**जलजराशिषु नैद्रमदिद्रवन्न महतामहताः क्वचनारयः ॥ ४३ ॥**

उष्णरश्मिस्तदा रश्मिभिर्भुवि नैशमन्धकारमदिद्रवदनीनशत्, खे च घनौघागतं, पद्मावलिषु च नैद्रं सङ्कोचजम् । किं वैतच्चित्रम्? यद्रविणा सर्वत्र सर्वं तमो निरस्तं, यतो महतामुन्नतानां येऽरयः शत्रवः ते न क्वचन न क्वचिदहताः सर्वत्रैव हता इत्यर्थः । क्वेत्याधारनिर्देशः । चनशब्दश्चिदर्थः । अथवा क्वेत्यसंभावनायां, चशब्दो यस्मादर्थे, प्रतिषेधानां च त्रितयम् । तेन य एव क्व हता इत्यस्यार्थः स एव न न क्व हता इत्यस्य । यस्मात् महतामरयो न न क्व हता अपितु सर्वत्रैव हता इत्यर्थः । महतामिति कर्तरि सम्बन्धे वा षष्ठी । निशायां भवं नैशं "निशाप्रदोषाभ्यां चे" त्यण् । वारिदवृन्दमयम् इत्यागतार्थे मयट् । निद्रा सङ्कोचस्तत आगतं नैद्रम् । अदिद्रवदिति द्रवतेर्ण्यन्तात् लुङ् "णिश्रिद्रुस्रुभ्यः कर्तरि चङि" ति चङ् णिलोपः, प्रत्ययलक्षणेन वृद्धिः "णौ चङ्युपधाया ह्रस्वः" स्थानिवद्भावाद् द्वित्वं द्रु । "सन्वल्लघुनि चण्परेऽनग्लोपे" इति सन्वद्भावे सति "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वे" तीत्वम् ॥ ४३ ॥

**समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।**
**शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम् ॥ ४४ ॥**

हंसरवाः सारसध्वनयः शरदि रमणीयतामयुर्हृद्यत्वं प्रापुः । कथं परुषीकृतोऽरमणीयत्वमापादितः स्वरः केका येषां ते परुषीकृतस्वरा मयूरा यत्र याने। हंसारवं श्रुत्वा रूक्षवाचो मयूरा ज्ञायन्ते इत्यर्थः । कीदृशा हंसरवाः इत्येवं प्रणिगदन्त इव कथयन्तो यथा । किमित्याह—शरीरिणां स्थावरजङ्गमानां समयः स्वकाल एव बलाबलं सामर्थ्यासामर्थ्यं करोतीति, अतोऽस्माकं शरत्कालस्तेन वयं चित्तमावर्जयामः, मयूराणां चाकालस्तेनैते रूक्षवाचः । परुषीकृतस्वरं रामणीयकमस्या उत्प्रेक्षाया निमित्तम् । समय इति "एरच्" । अयुरिति यातेर्लङ्, "लङः शाकटायनस्ये" ति झेर्जुस् "उस्यपदान्तात्"[1] । प्रणिगदन्त इति "नेर्गदनदे" ति णत्वम् ॥ ४४ ॥

[1] 'दत्वात्' ख. पाठः ।

**तनुरुहाणि पुरो विजितध्वनेरमलपक्षविहङ्गमकूजितैः ।**
**जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥४५॥**

बर्हिणः पुरोऽग्रे कालवशात् पक्षा जगलुः पेतुः । उत्प्रेक्ष्यते-अक्षमयेव क्रोधेनेव । अक्षमायां निमित्तमाह—अमलपक्षविहङ्गमकूजितैः सितच्छदविहगवाशितैर्जितध्वनेस्तिरस्कृतरुतस्य । हंसरुतश्रवणेन हि मयूरकेका नाह्लादयन्ति मनः । युक्तं च तस्याभिभूतस्य पक्षपतनं यस्मादरिभवो रिपुसमुत्थो यः परिभवोऽवमानः स सुदुःसहः नितरां सोढुं न शक्यते, ते च हंसैर्जिताः । अन्योऽपि मानी परिभवे सति अवश्यमेवाक्षमया केशान् मुण्डयति । परिभव इति "परौ भुवोऽवज्ञाने" इति पक्षे अप् । अरिभव इति, भवतीति भवः पक्षे पचाद्यच् । अरेर्भवोऽरिभवः इति पञ्चमीसमासः ॥ ४५ ॥

**अनुवनं वनराजिवधूमुखे बहल[1]रागजपाधरचारुणि ।**
**विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ४६ ॥**

वनराजिः काननलेखा सैव वधूरङ्गना तस्या मुखे प्रारम्भे विकचबाणदलावलयो विकस्वरबाणपुष्पकिसलयराजयोऽधिकं रुरुचिरेऽत्यर्थं बभुः । किमेकस्मिन्नेव वने बभुर्नेत्याह—अनुवनं वनेवने । अनुवनग्रहणं वीप्सार्थम् । यदि वानुवनं नायकनिभवनसमीपे ·यासौ वनराजिवधूस्तस्या मुखे बाणदलावलयो रराजिरे इति योज्यम् । वनराजिवधूग्रहणं तु रूपकार्थं श्लेषार्थं च, अन्यथा हि निरलङ्कारमेतद्वाक्यं स्यात् । कीदृशि मुखे बहलरागा नितान्तोज्ज्वला यासौ जपा कुसुमविशेषः सैवाधर ओष्ठस्तेन चारुणि रम्ये, प्रारम्भे एव बाणानि जपा च यत्र विद्यन्ते इत्यर्थः । आवलयः कीदृशः रुचिराणां मनोहराणामीक्षणानां नेत्राणामिव विभ्रमः शोभा यासां ता रुचिरेक्षणविभ्रमाः नयनतुल्या इत्यर्थः । यापि वधूस्तस्या जपालोहिताधरोष्ठे मुखे वदने बाणतुल्यानि ईक्षणानि प्रियनिकटे विकासितानि नितरां राजन्ते ॥ ४६ ॥

**कनकभङ्गपिशङ्गदलैर्दधे सरजसारुणकेसरचारुभिः ।**
**प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता ॥ ४७ ॥**

असनैः प्रियकपुष्पैरवृथार्थता सफलत्वं दधे धृतम्, सर्वस्यैवोपयुक्तान्यासन्नित्यर्थः । अथच अवृथार्थता अन्वर्थत्वं दधे इत्यर्थान्तरप्रतीतिः । यतः का-

[1] 'बहुल' ग. पाठः ।

न्तकोपितमानिनीक्रुधां निरसनैर्नाशकैः क्षेप्तृभिः, अन्यथा तु अस्यन्तीत्यसनानि –इति निर्वचनं तैलपायिकावत् व्युत्पत्त्यर्थमेव स्यात् । यदा तु मानिनीनां मानस्तैर्दर्शनादेव निरासि तदा असनमिति सत्यार्थं नाम । अन्यच्च कीदृशैः काञ्चनस्फोट[1]कपिशपत्रैः । तथा सपरागेण रक्तेन च किञ्जल्केन रम्यैः । सरजसमित्यच् समासान्तश्चिन्त्यः, साकल्येऽव्ययीभावे तस्य निपातितत्वात्, नचेह तदर्थानुगमः। अथवा नैतत् सूत्रकारस्य वचनं, पद्मनाभादिवद्वा अजिति योगविभागेन साध्यम् । प्रयोगा अपि दृश्यन्ते । यथा भारवेः–"सरजसमपहाय केतकीनां प्रसवमुपान्तिकनीपरेणुकीर्णम्" इति ॥ तथा–"विरलमपजहार बद्धबिन्दुः सरजसतामवनेरपां निपातै" रिति ॥ दधे इति कर्मणि लकारः । असनैरिति "कृत्यल्युटो बहुलम्" । वृथार्थो यस्यासौ वृथार्थः तद्भावस्तत्ता, ततो नञ्समासः ॥ ४७ ॥

**मुखसरोजरुचं मदपाटलमनुचकार चकोरदृशां यतः ।**
**धृतनवातपमुत्सुकतां ततो न कमलं कमलम्भयदम्भसि ॥४८॥**

क्षीबतालोहितं कामिनीनां वदनपद्मकान्तिं यस्मात् बालातपभूषितमब्जमनुचकार, ततो हेतोः कं पुरुषमुत्कण्ठामत्यर्थं नालम्भयत्, सर्वस्यैव महतीमुत्कण्ठां चकारेत्यर्थः । तद्दर्शनेन सादृश्यात् प्रियावक्त्रेन्दोः स्मरणादिति भावः । नवातपस्य मद उपमानम् । मदः क्षीबता "मदोऽनुपसर्गे" इत्यप् । अनुचकारेति "अनुपराभ्यां कृञः" । चकोरः पक्षिविशेषः, तद्दृष्टितुल्या चटुलत्वात् दृक् दर्शनं नेत्रे वा यासां ताश्चकोरदृशो मदमत्तनेत्राः। अलम्भयदिति "लभेश्चे"ति नुमागमः । गत्यर्थविवक्षायां "गतिबुद्धी" ति कर्मसंज्ञायां कमुत्सुकतां नालम्भयदिति प्रयोगः । अम्भोग्रहणं स्थलकमलनिवृत्त्यर्थम् । कमलमिति कर्तृपदम् ॥ ४८ ॥

**विगतसस्यजिघत्समघट्टयत् कलमगोपवधूर्न मृगव्रजम् ।**
**श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ४९ ॥**

कलमं धान्यविशेषस्तं गोपायति रक्षतीति कलमगोपी "कर्मण्यण्" । सा चासौ वधूः कलमगोपवधूः साग्रतोऽपि स्थितं मृगव्रजं हरिणयूथमिषे आश्वयुजे मासि नाघट्टयत् नापासयत्, यतो विगतसस्यजिघत्सम् । कुतो निवृत्त-

[1] स्फोटः खण्ड इत्यर्थः ।

धान्यबुभुक्षितमित्याह—आकर्णितकलमगोपाङ्गनोच्चारितापरुषगेयशब्दम् अत एव च निश्चलनयनम् । इषग्रहणं कलमस्य पाकप्रतिपादनार्थम् । पाके च सति जिघत्सातितरां प्राप्ता । अत्तुमिच्छा जिघत्सा, "लुङ्सनोर्घस्लृ" । गानं गीतम्, भावे क्तः । गीतमेव गीतकं "यावादिभ्यः कन्" । तस्य ध्वनिः । लुगकारेकाररेफाश्च वक्तव्या इति छन्दसीषादयोऽभ्युपगता भाषायामपि सर्वत्र दृश्यन्ते । तदत्र महाकवय एव प्रमाणम् । न निमिषन्तीत्यनिमिषाः इगुपधत्वात्कः ॥ ४६ ॥

**कृतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम् ।**

**ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ॥ ५० ॥**

सततगा वाता ववुरूहुः । कीदृशाः अयुक्छदगुच्छसुगन्धयः सप्तपर्णस्तबककृताधिवासा अतएवालिभिर्भृङ्गैस्तता प्रसारिता गानगीर्गेयवाग् गुञ्जितध्वनिर्येषु । अतश्चोत्प्रेक्ष्यते—ऊर्जः कार्तिक एव मतङ्गजो हस्ती तं निगदन्त इवाभिदधत इव प्रकाशयन्त इव । यतः कृतमदं जनितचित्तविकारम् अत एव चाकुलीकृतजगत्त्रयं विह्वली[1]कृतत्रिभुवनं, कामोद्दीपकत्वात् परामवस्थां प्रापितं जगद्येनेत्यर्थः । योऽपि मतङ्गजः स यदा कृतमदो मत्तो भवत्यत एवाकुलीकृतजनस्तदा दुन्दुभिपुरःसरं 'पलायध्वं भो मत्त एष मातङ्गः' इति लोके निवेद्यते । सततं गच्छन्ति वान्तीति सततगाः ॥ ५० ॥

**विगतवारिधरावरणाः क्वचिद् ददृशुरुल्लसितासिलतासिताः ।**

**क्वचिदिवेन्द्रगजाजिनकञ्चुकाः शरदि नीरदिनीर्यदवो दिशः ॥५१॥**

माधवा घनात्यये ककुभो ददृशुरैक्षन्त । कीदृशीः क्वचित् देशे निवृत्तमेघाच्छादनाः, अतएव स्फुरितखड्गयष्टिनीलाः, क्वचिच्च नीरदिनीः सिताभ्रयुक्ता अत एवेन्द्रगजाजिनकञ्चुका इव, इन्द्रगज ऐरावणस्तस्याजिनं चर्म तदेव कञ्चुकमुत्तरीयं यासां ता इव सितोत्तरीया इत्यर्थः । नीरदग्रहणेनात्र सिता मेघा बोद्धव्याः शरद्ग्रहणात् । एवं च ऐरावणाजिनेन सादृश्यं घटते तद्धि सितम् । आव्रियते आच्छाद्यते इत्यावरणं वस्त्रं, वारिधरा एवावरणमथवावृतिरावरणं वारिधरैरावरणम् इति तृतीयासमासः । उल्लसिताः कोशादाकृष्टाः । मेघानां कोश उपमानम् ॥ ५१ ॥

---

[1] 'लित' ग. पाठः ।

**विलुलितामनिलैः शरदङ्गना नवसरोरुहकेसरसम्भवाम् ।**

**विकिरितुं परिहासविधित्सया हरिवधूरिव धूलिमुदक्षिपत् ॥ ५२ ॥**

सरसकमलकिञ्जल्कजं रजो वातचालितं शरद्वनिता उदक्षिपत् निरास । उत्प्रेक्ष्यते—क्रीडाचिकीर्षया भगवदङ्गना इव विकिरितुमाच्छादितुम् । वध्वो हि सखीभिः सहावश्यमेव रमन्ते ॥ ५२ ॥

**हरितपत्रमयीव मरुद्गणैः स्रगवबद्धमनोरमपल्लवा ।**

**मधुरिपोरतिताम्रमुखी मुदं दिवि तता विततान शुकावलिः ॥५३॥**

शुकावलिः कीरमाला हरेः प्रीतिं[1] विततान अजनयत् । कीदृशी हरितपत्रमयी नीलाङ्करुहमयी, अतिताम्रमुखी लोहितचञ्चुः, दिवि तता खे प्रसृता । उत्प्रेक्ष्यते—देवसङ्घैर्हरेर्मालेव दिवि तता । कीदृशी अवबद्धा उम्भिता मनोरमा नानावर्णा पल्लवाः पत्राणि यस्याः सा । इवशब्दो भिन्नक्रमः स्रक्शब्दादनन्तरं[2] बोद्धव्यः । इवेन विभक्त्यलोप इति तु नित्यसमासो हरितपत्रमयीशब्देनासामर्थ्यान्न प्रवर्तते, स्रक्शब्देन ह्यत्र सामर्थ्यं तेन तर्हि कथं न भवति । अत्राहुः—तद्वचनं विभक्त्यलोपार्थं स्वरार्थं च नतु नित्यसमासार्थम्, एवं हि लक्ष्यदर्शनम् । नच लक्ष्यविरुद्धा विकल्पना युक्ता । एवमन्यत्र बोद्धव्यम् । हरितानि पत्राणि प्रकृतानि प्राचुर्येण प्रस्तुतानि यस्यां सा हरितपत्रमयी "तत्प्रकृतवचने मयट्" । मनो रमयतीति मनोरमः, "कर्मण्यण्" णिलोपः । तस्य स्थानिवद्भावात् "मितां ह्रस्वः" । अथवा रमयतीति रमः "पचाद्यच्"। मनसो रमो मनोरम इति षष्ठीसमासः । एवं च स्त्रियां टाप् सिद्धो भवति । अतिताम्रमुखीति "स्वाङ्गाच्चोपसर्जना" दिति ङीष् ॥ ५३ ॥

**स्मितसरोरुहनेत्रसरोजलामतिसिताङ्गविहङ्गहसद्दिवम् ।**

**अकलयन्मुदितामिव सर्वतः स शरदं शरदन्तुरदिङ्मुखाम् ॥५४॥**

स भगवान् शरदं सर्वत्रैव मुदितामिवाकलयत् हृष्टामिव ऊहामास, सर्वत्रैव हासप्रयोगादिति भावः । तथाहि—कीदृशीं तां स्मितानि विकसितानि सरोरुहाण्येव पद्मान्येव नेत्राणि यत्र तत् स्मितसरोरुहनेत्रं तादृशं सरःसु जलं यस्यास्तां स्मितसरोरुहनेत्रसरोजलाम्, तथा अतिसिताङ्गा धवलपक्षा ये विह-

१ 'मुदं' ग. पाठः । २ 'रो' ख. ग. पाठः ।

ङ्गा हंसास्तैर्हसन्तीव द्यौः खं यत्र तामतिसिताङ्गविहङ्गहसद्दिवम्, तथा शरैः काण्डतृणपुष्पैर्दन्तुराणीव दिङ्मुखानि यत्र तां शरदन्तुरदिङ्मुखाम् । योऽपि मुदितः स हासवशाद्दर्शितदशनो भवत्युत्फुल्लनेत्रश्च[1] । दन्तुर इति "दन्त उन्नत उरच्" । हसदिति वर्तमानसामीप्ये लट् । एवमन्यत्र ॥ ५४ ॥

अथ हेमन्तवर्णनम्—

**गजपतिद्वयसीरपि हैमनस्तुहिनयन् सरितः पृषतां पतिः ।**
**सलिलसन्ततिमध्वगयोषितामतनुतातनुतापभृतां दृशोः ॥ ५५ ॥**

हैमनो हेमन्तभवः पृषतां पतिर्मारुतोऽध्वगयोषितां पान्थस्त्रीणां दृशोर्नेत्रयोः सलिलसन्ततिरस्रुपद्धतिस्तामतनुतापभृतां भृशोष्णिमधारिणीमतनुत चकार, विरहदुःखादुष्णमस्रु वियोगिनीनयनानामजनयदिति वाक्यार्थः। कदाचित् सर्वमेव जलमुष्णीकुर्यादित्याह—गजपतिद्वयसीर्महेभदघ्नीरपि नदीस्तुहिनयन् शीतलीकुर्वन् । अत्र च हैमनत्वमेव कारणम् । "प्रमाणे[2] द्वयसज्दघ्नञ्मात्रचः" । हेमन्ते भवो हैमनः । "सर्वत्राण् तलोपश्च" । तुहिनाः करोति तुहिनयति । अतनुतेति लङ् । योषितामिति जातौ बहुवचनम् ॥ ५५ ॥

**इदमयुक्तमहो महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा ।**
**स्मृतसयौवनसोष्मपयोधरान् सतुहिनस्तु हिनस्तु वियोगिनः॥५६॥**

इह तावद्वायोरयं स्वभावः यत् सर्वस्मिन्नेव ऋतावुत्कण्ठाजनकत्वं, तत्रायं कविर्विचारयति—अनिलो वायुरन्यदा ग्रीष्मादौ यद्वियुक्तान् वरतनोः कान्तायाः स्मरयति एतन्महदेवायुक्तमतिशयेनानुपपन्नम् । यतस्तत्स्मरणे सति साहचर्या-(दाख्या? त् स्मृ) ताः सयौवनास्तरुणाः सोष्माण उष्णाः पयोधराः कुचा यैस्ते स्मृतसयौवनसोष्मपयोधराः। उष्णं च शीते सति स्मर्यते, ग्रीष्मश्चोष्णस्तत्किमिति वायुः सोष्मस्तनास्तरुणीर्वियुक्तान् स्मरयतीति ततो महदयुक्तमेतत् । सतुहिनः सहिमस्तु पुनरनिलो वियोगिनो हिनस्तु तृणेढु मारयतु, हननस्य प्राप्तकालस्तस्येत्यर्थः । शीते सत्युष्णस्मरणस्य युक्तत्वात्, घातस्य तु प्रियायाः स्मरणेऽप्यघटनात् । वायुर्वहन् किल विरहे उत्कण्ठयति इति ततो हन्ति । वरतनोरिति "अधीगर्थदयेशां कर्मणि" षष्ठी । वियोगिन इति "गतिबुद्धी" त्यादिना कर्मसंज्ञा । यद्विवा वरतनोः स्मरयतीत्येतावदत्र विवक्ष्यते, एवं च ह-

१ 'नयनः' ग. पाठः । २ 'णेऽर्थे' क. ख. ग. पाठः ।

न्तिक्रियापेक्षयैव द्वितीया ॥ ५६ ॥

**प्रियतमेन यया सरुषा स्थितं न सह सा सहसा परिरभ्य तम् ।**
**श्लथयितुं क्षणमक्षमताङ्गना न सहसा सहसा कृतवेपथुः ॥ ५७ ॥**

यया भामिन्या[१] प्रेयसा सह सार्धं नासितं तं कान्तं सा मानिनी सहसा अशङ्कितमेव गुणदोषाविचारेणैव परिरभ्याश्लिष्य श्लथयितुं मोक्तुं क्षणमपि नाक्षमत नाशकत् । यतः सहसा मार्गशीर्षेण कृतवेपथुर्जनितकम्पा, उत्पादितविरहवेदनेत्यर्थः । सह हसेन स्मितेन वर्तते इति सहसा हासयुक्ता । "स्वनहसोर्वा" इत्यप् । हासस्तु स्वयमेव मानत्यागात् ॥ ५७ ॥

**भृशमदूयत चाधरपल्लवक्षतिरनावरणा हिममारुतैः ।**
**दशनरश्मिपटेन च सीत्कृतैर्निवसितेव सितेन सुनिर्ववौ ॥ ५८ ॥**

कस्याश्चित् नायिकायास्तुषारवातैरधरपल्लवक्षतिरधरोष्ठकिसलयव्रणमत्यर्थमदूयत अखिद्यत, यतोऽनावरणा अनाच्छादना । अनावरणं चावश्यमेव हिमवातैस्ताप्यते । अनन्तरं पीडावशाद्यानि सीत्कृतानि मणितानि तैः सा सुष्ठु निर्ववौ पीडां जहौ, मुखविकृतिरुतैर्हि प्रायशो वेदना तन्वीभवति । उत्प्रेक्ष्यते-सीत्कृतवशाद्ये दशनरश्मयो दन्तप्रभास्ता एव वस्त्रं तेन सितेन धवलेन निवसितेवाच्छादितेव सा निर्ववौ । यः किल निरावरणत्वाद्धिममारुतैर्धूतः स पटावृतो निर्वृतो भवति । तनोर्बभाविति पाठान्तरम् । तनोस्तन्व्याः सीत्कृतैर्यो दशनरश्मिपटस्तेनाच्छादितेव बभौ । चशब्दावेककालत्वसूचनार्थौ । यदैवादूयत तदैव निर्ववौ बभावित्यर्थः । अदूयतेति कर्तरि लकारः । निवसितेति वसेर्निष्ठा । निर्ववाविति—निस्पूर्वात् वातेर्लिट् । पाठान्तरे तनोरिति "वोतो गुणवचनादि" ति ङीष् विकल्पितः ॥ क्वचित्तु एवंविधोऽस्य श्लोकस्य पाठः—"व्रणभृता सुतनोः कलसीत्कृतस्फुरितदन्तमरीचिमयं दधे । स्फुटमिवावरणं हिममारुतैर्मृदुतया दुतयाधरलेखया" ॥ मृदुतया मार्दवेन हेतुना हिममारुतैर्दुतया तप्तया । अन्यद् व्याख्यातप्रायम् ॥ ५८ ॥

**धृततुषारकणस्य नभस्वतस्तरुलताङ्गुलितर्जनविभ्रमाः ।**
**पृथु निरन्तरमिष्टभुजान्तरं वनितयानितया न विषेहिरे ॥ ५९ ॥**

उद्गूढहिमकणस्य वायोर्या तरुलता वृक्षशाखा एवाङ्गुलयस्ताभिर्यत्तर्जनं तेन

---

१ 'सह रुषा वर्तते या सरुट् सरुषो भावः सरुट्त्वं तस्मात् सरुट्त्वात्' इत्यधिकः ख. पाठः ।

तस्य वा ये विभ्रमा विलासास्ते कयाचित् कामिन्या न विषेहिरे न सोढाः तान् दृष्ट्वा मुमोहेत्यर्थः । यतः पृथु विततं निरन्तरं[1] समग्रतयैवापूरितमिष्टभुजान्तरं कान्तवक्षः अनितया अगतया, गाढं यतस्तया कान्तो नाश्लेषि, वल्लभवियुक्तयेत्यर्थः । वियोगिन्यो हि कामोद्दीपकैर्भावैरत्यर्थमुद्विजन्ते । एतेनेभि क्ते अनितयेति रूपम् ॥ ५९ ॥

**हिमऋतावपि ताः स्म भृशस्विदो युवतयः सुतरामुपकारिणि ।**
**प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ ६० ॥**

ता विलासिन्यो विलासिनः कान्तान् रमयन्ति स्म अक्रीडयन् । कीदृश्यस्ताः हिमऋतावप्यत्यर्थं स्वेदवारियुक्ताः । कीदृशि हिमऋतौ अकृत्रिमं सहजं स्मरमयं रसमनुरागं स्नेहं प्रकटयति प्रकाशमाने, अत एवात्यर्थमुपकारिणि कामिनां हितकृति । यदा हिमवत्यपि शीते प्रियसंपर्कवशात् तासां स्वेदो जायते तदा कान्तं प्रति यस्तासां सहजः शृङ्गारश्चानुरागः स प्रकटितो भवति । अनुरागलक्षणं हि स्वेदः तस्मिंश्च सति प्रेयसां चित्ते भवति नूनं वयमासां प्रियाः, अन्यथा कुतोऽस्मत्संपर्के सत्यासां शीतेऽपि स्वेदः इति सुतरामुपकारित्वम् । हिमऋतौ "ऋत्यक" इति प्रकृतिभावः । भृशं स्विद्यन्तीति भृशस्विदः, क्विप् । प्रकटयतीति सप्तमी । स्मरादागतं, स्मरः प्रस्तुतो वा यत्रेति स्मरमयम् ॥ ६० ॥

अथ शिशिरवर्णनम्—

**कुसुमयन् फलिनीरलिनीरवैर्मदविकासिभिराहितहुंकृतिः ।**
**उपवने निरभर्त्सयत प्रियान् वियुवतीर्युवतीः शिशिरानिलः॥६१॥**

हिमात्ययवात उपवने उद्याने युवतीर्निरभर्त्सयत, क्वेदानीं यातेत्यतर्जयतेव। का नारीरित्याह–प्रियान् कान्तान् वियुवतीर्वियुञ्जानाः प्रियरहिता इत्यर्थः । कीदृग्वायुः फलिनीः प्रियङ्गुलताः कुसुमयन् । शिशिरानिलवशाद्धि ताः पुष्प्यन्ति । तथा अलिनीरवैः भृङ्गीरुतैः कृतहुंकारः । यो हि भर्त्सयते स हुमिति कुरुते । रवैः कीदृग्भिर्मदेन क्षीबत्वेन विकासिभिः दीर्घतरैः । अलिनीति "ऋन्नेभ्यो ङीप्" । युवतीरिति "यूनस्तिः" । कुसुमवतीः करोति कुसुमयति, णिच्, "विरामतोर्लुक्" इष्ठवत्त्वात् "टे" रिति णिलोपः । वियुवतीरिति यौते-

1 'रं च' ख. पाठः ।

विंपूर्वस्य लटः शत्रादेशः, उवङ् "उगितश्चे" ति ङीप् ॥ ६१ ॥

**उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद् बलवानपि ।**
**तपसि मन्दगभस्तिरभीशुमान्नहि महाहिमहानिकरोऽभवत्॥६२॥**

एवमहं मन्ये कालवशादरिषु वृद्धेषु सत्सु शक्तः कालवशादेवाशक्तत्वं याति । एतदेव प्राकरणिकेनार्थेन द्रढयति–यस्मात् तपसि माघमासे रविरपटुरश्मित्वात् महाहिमहानिकरो हिमानीक्षयकृत् नैवाभूत् । अभीषवोंऽशवः॥६२॥

**अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत रोध्ररजश्चयः ।**
**क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः ॥ ६३ ॥**

अयं रोध्राख्यकुसुमरेणुनिकरः ककुभस्तिरयन् पिदधत् उदभूदुद्गतः । अयमित्यनेन यो धर्मो विवक्षितस्तमाह–कीदृशोऽसौ रोध्ररजश्चयः, जगन्त्यभिषिषेणयिषुं सेनयाभियातुमिच्छन्तं काममाख्यतेव अकथयदिव, कामोऽयं सन्नद्ध आगत एवोपरीति जनस्यावेदयदिवेत्यर्थः । यतश्चलितचतुरङ्गबलधूलिधवलद्युतिः । यः किलाभिषेणयति तस्याग्रतः सेनारजो दृश्यते । सेनया अभिसंनद्धुमिच्छुरभिषिषेणयिषुः "सत्यापपाशे" ति णिच् "उपसर्गात्सुनोती" ति षत्वं, ततः सनादिकम् । आख्यतेति "चक्षिङः ख्याञ् । अस्यतिवक्तिख्यातिभ्योऽङ्" । तिरः करोतीति तिरयति । णिच् टिलोपः ॥ ६३ ॥

**शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।**
**इति धियास्तरुषः परिरेभिरे घनमतोऽनमतोऽनुमतान् प्रियाः ६४**

प्रियाः भामिन्योऽनुमतान् प्रेयसोऽनमतोऽप्रह्वानपि घनं गाढमतोऽस्माद्धेतोः परिरेभिरे आश्लिक्षन्, यत इतीत्थं धियास्तरुषस्त्यक्तमानाः । कथमित्याह— अस्य अस्मत्स्तनौष्ण्यस्य शीतहरस्य शिशिरमासं माघाख्यं मासमपास्य त्यक्त्वा क इवान्यो गुणः । शीतनिरसनं हि औष्ण्यस्य फलम् । यदि च वयमद्यापि क्रुध्यामस्तत् निरर्थकोऽयमस्मत्कुचोष्मा न कस्यचिदपि शीतहरत्वादिति धिया विचारपूर्वकं मानमपहाय, कृतागसोऽपि ते ताभिरालिङ्गिता इति वाक्यार्थः । शिशिरस्य शीतस्य मासः शिशिरमास इति षष्ठीतत्पुरुषः । शिशिरः शीतलो वा मास इति कर्मधारयः । शिशिरे ऋतौ वा मास इति सप्तमीसमासः । इतिशब्दो रोषपरित्यागप्रकारनिर्देशे । अत इति हेतौ । अपास्येति ल्य-

बन्तप्रतिरूपको निपातः ॥ ६४ ॥

**अधिलवङ्गममी रजसाधिकं मलिनिताः सुमनोदलतालिनः ।**
**स्फुटमिति प्रसवेन पुरोऽहसत्सपदि कुन्दलता दलतालिनः ॥६५॥**

इह कुन्दलता शिशिरे फुल्लति भ्रमराश्च पुष्पात्पुष्पान्तरं यान्तीति भावः। तत्र कविरयमूहते—कुन्दवल्ली दलता विकसता प्रसवेन पुष्पेण स्फुटं निश्चितमित्यतः कारणात् पुरोऽग्रेऽलिनो भृङ्गान् अहसदुपजहास । तदेव कारणमाह— अमी अलयोऽधिलवङ्गं लवङ्गे लवङ्गलतायां याः सुमनसः पुष्पाणि तासां दलेषु किसलयेषु तालिनः कृतस्थितयः सन्तः सपदि स्थानान्तरमेव रजसा रेणुनाधिकं नितरां मलिनिताः कृष्णिमानमापादिताः । अयमर्थः—अलेर्द्वे नायिके कुन्दलता लवङ्गलता च पूर्वा सितापरा कृष्णा । आदौ च कुन्दलतामसावुपभुज्य पश्चात् लवङ्गलतां यातस्तत्क्षणादेव[2] तद्रजसा कृष्णतरः समपद्यत, अतश्च ज्ञायते—हासस्थानीयेन फुल्लप्रसवेन तमसौ हसत्येतत्संपर्कवशात् परमनेन मालिन्यमाप्तमिति । यः किल नायको हीनां नारीमासेव्य मालिन्यं पङ्कमाप्नोति तमवश्यं नायिकोपहसति । लवङ्गेऽधिलवङ्गं, विभक्त्यर्थेऽव्ययम् । अलिन इति शसन्तः । इति शिशिरवर्णनम् ॥ ६५ ॥

भूयोऽपि लाघवेन ऋतुवर्णनं नानावृत्तैः संदष्टयमकालंकारेणाह—

**अतिसुरभिरभाजि पुष्पश्रिया मतनुतरतयेव सन्तानकः ।**
**तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः ॥ ६६ ॥**

अतिसुरभिः सुगन्धितरः सन्तानकाख्यो वृक्षो नायकस्थानीयः पुष्पश्रिया कुसुमसमृद्ध्या नायिकयाभाजि सेवितः । वसन्ते हि स पुष्यति । उत्प्रेक्ष्यते—मतनुतरतयेव मतमभीष्टं नुतमुत्कृष्टं रतं निधुवनं यस्यास्तयेव । यस्याः किल रिरंसा जायते सा सुर[3]तिं नायकं सेवते । केचित्तु पुष्पश्रियां सम्बन्धिनी या अतनुतरता भूयस्ता तयेवाभाजीति व्याचक्षते । किंच तरुणपरभृतो मत्तकोकिलो रागिणां रतये कामिनां क्रीडार्थं स्वनमतनुत रवं चकार । कीदृशः वसन्तस्यानकः पटहः । कोकिलान् किल दृष्ट्वा वसन्तः प्राप्त इति ज्ञायते, अत एव रागिणां रतिः । अभाजीति कर्मणि लकारः । अतनुतेति कर्तरि । मतान्तरेऽतिशयेन तनुस्तनुतरस्तद्भावस्तनुतरता, ततो नञ्समासः । "त्रिमाणिस-

१ 'यु' ग. पाठः । २ 'व च' ख. पाठः । ३ 'भिं' ख. पाठः ।

मजपीति सिद्धिर्लगौ" (?) (सुरशरविरतिननौ रौ प्रभा) ॥ ६६ ॥

**नोज्झितुं युवतिमाननिरासे दक्षमिष्टमधुवासरसारम् ।**
**चूतमालिरलिनामति[1]रागादक्षमिष्ट मधुवासरसारम् ॥ ६७ ॥**

अलिनामालिर्भृङ्गपङ्क्तिश्चूतवृक्षमुज्झितुं नाक्षमिष्ट त्यक्तुं नाशकत् । कुतोऽतिरागात् प्रीत्यतिशयात् । सर्ववृक्षेभ्यो हि मधुपाश्चूते प्रीयन्ते । उक्तं च—"महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् । अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा" इति ॥ कीदृशं चूतं युवतिमाननिरासे मानिनीमत्सरत्याजनेऽरं क्षिप्रं दक्षं चतुरम्, नहि प्रफुल्लचूतदर्शनेन मानः स्थिरो भवति । तथा मधुवासरेषु वसन्तदिनेषु सारमुत्कृष्टम् । आलिः कीदृशी, इष्टमभीष्टं यन्मधु मकरन्दः तत्र वासोऽवस्थितिस्तत्र रसो व्यसनं यस्याः सा इष्टमधुवासरसा, अत एव च त्यक्तुं न सेहे । अक्षमिष्टेति लुङ् । "स्वागता रनभगैर्गुरुकान्ता" ॥ ६७ ॥

**जगद्वशीकर्तुमिमाः स्मरस्य प्रभावनीके तनवै जयन्तीः ।**
**इत्यस्य तेने कदलीर्मधुश्रीः प्रभावनी केतनवैजयन्तीः ॥ ६८ ॥**

मधुश्रीर्वसन्तलक्ष्मीः कदलीस्तेने रम्भा अवर्धयत् वितस्तार । अत्रोत्प्रेक्ष्यते—इत्येवं धिया पूर्वं विचार्यैव तेने । किमित्याह—अस्य स्मरस्य सत्के अनीके सैन्ये इमाः कदलीरहं केतनवैजयन्तीः चिह्नपताकाः तनवै करवाणि, भवति मे प्रार्थना कथं नामाहमेव तनुयामित्यर्थः । अतो जगद्वशीकर्तुं विधेयतां नेतुं प्रभौ समर्थेऽनीके । यश्चान्यान् वशीकर्तुं शक्नोति तस्यावश्यमेव चिह्नपताका दीयन्ते । कीदृशीः वैजयन्तीः, जयत्यभिभवति परानिति जयन्तीर्जैत्रीः । वैजयन्त्या ह्यवश्यं[2] पराभिभवः क्रियते । कीदृशी मधुश्रीः प्रभावनी "भू प्राप्तौ" स्वार्थे णिच् । प्रभावयतीति प्रभावनी प्रभविष्णुः, कर्तरि ल्युट् । यः किल प्रभवति तस्य चिह्नदाने शक्तिर्भवति । तनवै इति तनोतेर्लोट्, टेरैत्वं "एत ऐ, आडुत्तमस्य पिच्च" गुणः । जयन्तीति जयन्त्यः । "तॄभूवहि" त्यौणादिको झिच् पिच्च "लटः शता वा" । तेने इति लिट्, एत्वाभ्यासलोपौ । कदलीरिति शसन्तः । उपजातिर्वृत्तम् ॥ ६८ ॥

---

१ 'नु' ख. पाठः । २ 'मेवान्याभि' ग. पाठः ।

**स्मररागमयी वपुस्तमिस्रा परितस्तार रवेरसत्यवश्यम् ।**
**प्रियमाप दिवापि कोकिले स्त्री परितस्ताररवे रसत्यवश्यम् ॥६९॥**

अवश्यं निश्चितं स्मररागमयी कामव्यसनरूपा तमिस्रा निशा ध्वान्तापहं[1] रवेः सूर्यस्य वपुर्बिम्बं परितस्तार समन्तात् पिदधे, असती अविद्यमाना । नहि स्मररागमयेन तमसा रवेर्वपुः कदाचित् पिहितम् । अशोभना वा । कुतोऽयं भवतो निश्चय इत्याह–यत् ताररवे पटुस्वने कोकिले परपुष्टे परितः समन्ताद्रसति कूजति सति रागान्धा कामिनी दिवापि प्रियमवश्यमविधेयमाप अभिससार । यदि च तमिस्रया रवेर्वपुर्न पिहितं स्यात् तत्कथं दिनेऽपि रात्रिभ्रान्त्या तमसावभिसरेत्, तस्मादतोऽनुमिमीमहे–नूनं स्मररागमयी तमिस्रा रवेर्वपुः परितस्तारेति । स्मरे रागो व्यसनं तत आगता स्मररागमयी । तमिस्रेति तमो बहुलमस्त्यस्यामिति । "ज्योत्स्नातमिस्रे" ति निपातितम् । परितस्तारेति स्तृञो लिट् । अवश्यमिति निश्चयार्थो निपातः । अपरस्तु वशं गतो वश्यः, न वश्योऽवश्यः । औपच्छन्दसिकं वृत्तम् ॥ ६९ ॥ (वसन्तः)

**वपुरम्बुविहारहिमं शुचिना रुचिरं कमनीयतरा गमिता ।**
**रमणेन रमण्यचिरांशुलतारुचिरङ्कमनीयत रागमिता ॥ ७० ॥**

कान्तेन कान्ताङ्कमनीयत उत्सङ्गं प्राप्यत, यतः कमनीयतरातिहृद्या । कुत इत्याह–शुचिना आषाढेन यतो वपुः रुचिरं गमिता रुचिरत्वं प्रापिता । एतदपि कथमित्यह–यतोऽम्बुविहारहिमं जलकेलिशीतलम् । कीदृशी रमणी, अचिरांशुलतायास्तडिद्वल्ल्या[1] इव रुचिः कान्तिर्यस्यास्तथा रागमिता प्रीतिं प्राप्ता, प्रियं प्रति साभिलाषेत्यर्थः । अनीयतेति कर्मणि लकारः । "अथ तोटकमब्धिसकारचितम्" ॥ ७० ॥ (ग्रीष्मः)

**मुदमब्दभुवामपां मयूराः सहसायन्त नदी पपाट लाभे ।**
**अलिनाऽरमतालिनी सिलिन्ध्रे सह सायतन्नदीपपाटलाभे ॥७१॥**

अब्दभुवामपां मेघ्यानां सहसाप्रतर्कितमेव लाभेऽधिगमे सति मयूरा मुदमायन्त हर्षं जग्मुः, तथा तासामेवापां लाभे नदी सरित् पपाट रयादवहत् । किंच भृङ्गेण सह भ्रमरी सिलिन्ध्रपुष्पेऽरमत चिक्रीड । कीदृशे सिलिन्ध्रे, सायन्तनः प्रादोषिको यो दीपः प्रद्योतकस्तस्येव पाटला लोहिनी[2] आभा का-

१ 'ध्वान्तं मोहं' ग. पाठः । २ 'ता' ग. पाठः ।

न्तिर्यस्य तस्मिन् सायन्तनदीपपाटलाभे । अब्दात् जलदात् भूर्जन्म यासां ता अब्दभुवः । आयन्तेति अयतेर्लुङ् "झोऽन्तः" । औपच्छन्दसिकम् ॥ ७१ ॥

कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं
समयावनौ घनमदभ्रमराणि ।
गगनं च गीतनिनदस्य गिरोच्चैः
समया वनौघनमदभ्रमराणि ॥ ७२ ॥

शिखिभिर्मयूरैर्गिरा वाचा उच्चैस्तारमराणि केकायितम् । किं कृत्वा शिखरीन्द्रं समया रैवतकाद्रीशस्य समीपे या अवनिरुर्वी तत्र कुटजकुसुमानि वीक्ष्य, प्रावृषं प्रस्तुतामालोच्येत्यर्थः । प्रावृषेण्यानि हि कुटजानि । कीदृंशि घनमदाः प्रवृद्धदर्पा भ्रमरा भृङ्गा येषु । तथा गगनमपि वीक्ष्यारावि । कीदृशं खं वनौघेन तोयपूगेन नमन्ति लम्बमानानि अभ्राणि मेघा यत्र तत् वनौघनमदभ्रम् । कीदृशा गिरा गीतनिनदस्य गेयध्वनेः समया तुल्यया मधुरयेत्यर्थः । विशेषणयोगार्थं गीर्ग्रहणम् । प्रथमः समयाशब्दो निपातः समीपवाची, अपरस्तृतीयान्तः । गीतनिनदस्येति "तुल्यार्थै" रिति पक्षे षष्ठी । अराणीति भावे । "द्विगुणीगुणोगणगुरू सुमङ्गली"(?)(सजसा भवेदिह सगौ कुटजाक्षम्) ॥७२॥
(वर्षाः)

अभीष्टमासाद्य चिराय काले समुद्धृताशं कमनी चकाशे ।
योषिन्मनोजन्मसुखोदयेषु समुद्धृताशङ्कमनीचकाशे ॥ ७३ ॥

काचिद्योषित् चिरेण प्रियमासाद्य चकाशे रेजे, यतः समुत् कान्तयोगात्सहर्षा । कदासाद्येत्याह–अनीचा वृद्धिं गताः काशा गुल्मविशेषा यत्र तस्मिन् अनीचकाशे काले शरदीत्यर्थः । कीदृशमभीष्टं समुद्धृता निवर्तिताशङ्का भूयोवियोगभयं येन तं समुद्धृताशङ्कम् । कुत इत्याह–मनोजन्मा कामस्तत्कृतानि यानि सुखानि तेषां य उदया आविर्भावास्तत्र धृता ऊढा आशा आसङ्गो येन तं धृताशम् । यतोऽसावुत्पन्नसुरताभिलाषः, अत उन्मूलिताशङ्क इत्यर्थः । केचित्तु हृतमशं दुःखं येनेति व्याचक्षते । कीदृग्योषित् कामयतीति कमनी कमित्री कामिनी । ल्युट् "आयादय आर्धधातुके वा" । उपजातिर्वृत्तम् ॥ ७३ ॥

---

१ 'सं' ख. ग. पाठः ।

**स्तनयोः समयेन याङ्गनानामभिनद्धारसमा न सा रसेन ।**
**परिरम्भरुचिं ततिर्जलानामभिनद्धा रसमानसारसेन ॥ ७४ ॥**

रसमानाः कूजन्तः सारसा लक्ष्मणा यत्र तेन रसमानसारसेन समयेन कालेन शरदाख्येनाङ्गनानां कुचयोर्या जलानां ततिस्तोयकणमाला अभिनद्धा रचिता सा रसेन रागेण या परिरम्भरुचिराश्लेषाभिलाषस्तं नाभिनत् न न्यवर्तयत्, यतो हारसमा मुक्ताकलापस्थानीया । अरुचिस्तु–स्वेदवशात् प्राप्ता । रसमान इति "ताच्छील्ये चानश्" । अभिनदिति भिदेर्लङ् । औपच्छन्दसिकं वृत्तम् ॥ ७४ ॥

**जातप्रीतिर्या मधुरेणानुवनान्तं**
**कामे कान्ते सारसिकाकाकुरुतेन ।**
**तत्सम्पर्कं प्राप्य पुरा मोहनलीलां**
**कामेकान्ते सा रसिका का कुरुते न ॥ ७५ ॥**

सा का स्त्री कां न मोहनलीलां सुरतविलासं कान्ते प्रेयसि रसिका सरागा सती एकान्ते रहसि पुरा न कुरुते न चक्रे, सर्वा सर्वामेव व्यधादित्यर्थः । सेत्युक्तं कासावित्याह–अनुवनान्तं उपवने[१] यत् सारसिकाया हंस्याः काकुरुतं ध्वनिविशेषस्तेन मधुरेण या कामे सुरते जातप्रीतिरुत्पन्नाभिलाषा । किं कृत्वा कुरुते, तेन कान्तेन सम्पर्कं संयोगं प्राप्य, औत्सुक्यकारिसारसिकारुतमाकर्ण्य सर्वत्रैव मानिनी कान्तवशगाभूदिति वाक्यार्थः । काकुश्च तद्रुतं काकुरुतं, काकुरुच्चारविशेषः । पुरा कुरुते इति "पुरि लुङ् चास्मे" इति लट् । रसो रागो विद्यते यस्या इति रसिका "अत इनिठनौ" "रसादिभ्यश्च" इत्यत्र तु गुणानां रसादीनां ग्रहणम् । "म्तौ य्सौ गान्तं वेदयतिर्मत्तमयूरम्" ॥ ७५ ॥ (शरत्)

**रामाजनेन रहसि प्रसभं गृहीत-**
**केशे रते स्मरसहासवतोषितेन ।**
**प्रेम्णा मनःसु रजनीष्वपि हैमनीषु**
**के शेरते स्म रसहासवतोषितेन ॥ ७६ ॥**

---

१ 'वने वने' ख. पाठः ।

एवंविधे रहसि रते निधुवने सति हैमनीष्वपि शर्वरीषु दीर्घदीर्घासु के शेरते स्म शिश्यिरे, रसवशान्न केचिदपि सुषुपुरित्यर्थः । कीदृशे रते रामाजनेन रमणीलोकेन प्रसभं बलाद्गृहीतकेशे आकृष्टमूर्धजे, परां भूमिं गते इत्यर्थः । कीदृशेन रामाजनेन स्मरसहः कामक्षमो नातिमनाक् नचातिबहुर्य आसवः पानं तेन तोषितेन सहर्षेण, अत एव गृहीतकेशत्वम् । ईषत्पानेन हि लज्जैव न निवर्तते भूयसा प्राणा अपि न चेत्यन्ते । तथा प्रेम्णा प्रीत्या कामिनां मनःसु चित्तेषु उषितेन स्थितेन, तथा रसहासवता, रसः शृङ्गारः, हासः स्मितं तौ विद्येते यस्य । उषितेति "वसतिक्षुधोरिट्" । शेरते इति "लट् स्मे, शीङो रुट्" । वसन्ततिलकं वृत्तम् ॥ ७६ ॥ (हेमन्तः)

**गतवतामिव विस्मयमुच्चकैरसकलामलपल्लवलीलया ।**
**मधुकृतामसकृद्गिरमावली रसकलामलपल्लवलीलया ॥ ७७ ॥**

मधुकृतामलीनामावली श्रेणिरसकृत् भूयोभूय उच्चकैस्तारं गिरमलपत् वाचमुदचारयत् । कीदृशीं गिरं रसकलां मधुमधुराम् । आवलिः कीदृशी लवली लताविशेषस्तत्र लयोऽवस्थानं यस्याः सा लवलीलया । वागुच्चारणे ऊहमाह— असकला ईषज्जाता अमला मनोज्ञा ये पल्लवाः पत्राणि तेषां लीलया शोभया, विस्मयं गतवतामिव । यः किल क्वचिद्विस्मयते सोऽसकृदुच्चैः साधु सुष्ठ्वित्यादिवाक्यैस्तमुत्साहयति । गतवतामिति क्तवतुः । सकृदिति "एकस्य सकृच्च" इति सुच् सकृच्चादेशः । द्रुतविलम्बितं वृत्तम् ॥ ७७ ॥ इति शिशिरवर्णनम् ।

**कुर्वन्तमित्यतिभरेण नगानवाचः**
**पुष्पैर्विराममलिनां च न गानवाचः ।**
**श्रीमान् समस्तमनुसानु गिराविहर्तुं**
**बिभ्रत्यचोदि स मयूरगिरा विहर्तुम् ॥ ७८ ॥**

इति माघभट्टविरचिते शिशुपालवधकाव्ये षड्ऋतुवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥

स भगवान् कृष्ण इहास्मिन् गिरौ रैवतकाचले विहर्तुं रन्तुं मयूरगिरा बर्हिणवाचा अचोदि प्रेरित इवेत्युत्प्रेक्षा । मयूराः केकाभिरत्र क्रीडेत्येव तमाहुरित्यर्थः । कीदृशे गिरौ अनुसानु सानुनि सानुनि इति पूर्वोक्तेन प्रकारेण

समस्तं षट्संख्यम् ऋतुं वसन्तादिकं बिभ्रत्युद्वहति । कीदृशमृतुं पुष्पैः करणैः, अतिभरेण हेतुना नगांस्तरून् अवाचो नम्रान् कुर्वन्तं, कुसुमसमृद्ध्या प्रह्वान् वृक्षान् विदधतमित्यर्थः । तथा पुष्पैरेवालिनां भृङ्गाणां गानवाचो गेयध्वनेर्विराममवसानं न कुर्वन्तं, कुसुमरेणुसमृद्ध्याजस्रमेव मधुपा यत्र गुञ्जन्तीत्यर्थः । भगवान् कीदृशः श्रीमाँल्लक्ष्मीपतिः सर्वसमृद्धियुक्त इत्यर्थः । अवाञ्चन्तीत्यवाचोऽधोमुखान् । अञ्चतेः क्विप् नलोपः शस् । गीतिर्गानम् । अनुसान्विति वीप्सा । इहर्तुमिति "आद्गुणः, उरण् रपरः" । बिभ्रतीति शत्रन्तः । अचोदीति कर्मणि लुङ् । मयूरस्य गीः मयूरगीस्तया मयूरगिरा । वसन्ततिलकं वृत्तम् । अतिशयोत्प्रेक्षालङ्कार इति भद्रम् ॥ ७८ ॥

इति श्रीमहामहोपाध्यायवर्य्य—आनन्ददेवायनि—वल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां षड्तुवर्णनं नाम षष्ठः सर्गः ॥ ६ ॥

अथ

# शिशुपालवधकाव्ये

## सप्तमः सर्गः ।



**अनुगिरमृतुभिर्वितायमानामथ स विलोकयितुं वनान्तलक्ष्मीम् ।**
**निरगमदभिराद्धुमादृतानां भवति महत्सु न निष्फलः प्रयासः ॥१॥**

अथानन्तरं स भगवान् वनान्तलक्ष्मीमुपवनसमृद्धिमवलोकयितुं निरगमदुच्चचाल । कीदृशीं ताम् अनुगिरं गिरौ ऋतुभिर्वसन्तादिभिर्वितायमानाम् । युक्तं चैतत् यदसौ पुष्पादिश्रियं द्रष्टुं प्रतस्थे । यस्मात् येऽभिराद्धुं सेवितुमादृता उद्युक्तास्तेषां महत्सूत्तमेषु विषये यः प्रयासः क्लेशः स निष्फलो निरर्थको न भवति । ऋतुभिश्च भगवन्तमाराधयितुं वनश्रीर्वितता यदि चासौ तां न पश्येत् तदा तेषामायासो निष्फलः स्यात् । एतेन चैतदाह—न सामान्यजनवत् कौतुकेन भगवान्निर्ययावपितु परानुग्रहार्थमिति । गिरावनुगिरं, विभक्त्यर्थेऽव्ययम् । "गिरेश्च सेनकस्ये" ति टच् । निरगमदिति लुङन्तः । अर्थान्तरन्यासोऽलङ्कारः । पुष्पिताग्रा वृत्तम् । "भवति जगति नौ ततः परौ यौ नजसहितैर्जरगैश्च पुष्पिताग्रा" ॥ १ ॥

**दधति सुमनसो वनानि बह्वीर्युवतियुता यदवः प्रयातुमीषुः ।**
**मनसिशयमहास्त्रमन्यथामी न कुसुमपञ्चकमप्यलं विसोढुम् ॥ २ ॥**

अथ वृष्णयो वनितासहायाः काननानि गन्तुमीषुरभिलेषुः । कीदृंशि बह्वीः सुमनसो दधति प्रभूतानि पुष्पाणि बिभ्रति[1], अत एव च कामिनीयुता जग्मुः, यस्मादन्यथा केवला अमी यदवः कामास्त्रभूतं पुष्पपञ्चकमपि विसोढुं नालं न समर्थाः किं पुनर्बह्वीः सुमनसः । विरहिणां हि पञ्चसायकसायकाः दुःसहास्तस्मादतः कारणान्नारीसहाया गन्तुमीषुः । मनसि शेते वसतीति मनसिशयः "अधिकरणे शेते" रित्यच् । "शयवासवासिष्वकाला" दिति सप्तम्या

---

1 'न्ति' ग. पाठः ।

अलुक् । विसोढुमिति "सहेः साढः" इति षत्वाभावः । कुसुमशरमहास्त्रमिति पाठान्तरम् । तत्तु रम्यतरम् ॥ २ ॥

**अवसरमधिगम्य तं हरन्त्यो हृदयमयत्नकृतोज्ज्वलस्वरूपाः ।**
**अवनिषु पदमङ्गनास्तदानीं न्यदधत विभ्रमसम्पदोऽङ्गनासु ॥ ३ ॥**

तदानीं गमने प्रवृत्ते वनिता भूमिषु पदं क्रमं चरणं वा न्यदधत निचिक्षिपुः, तथा विभ्रमसम्पदो विलासलक्ष्म्योऽङ्गनासु पदं न्यदधत स्थानं बबन्धुः, सविलासं तदा जग्मुरिति तात्पर्यार्थः । कीदृश्योऽङ्गनाः, तमवसरं पुष्पावचयकालमधिगम्यासाद्य हृदयं हरन्त्यो मनांसि मुष्णन्त्यः । कामसाधनेषु हि सत्सु चेतोहारित्वमासां शोभते, नतु गुरुजनादिसन्निधौ, तदा च कुसुमक्रीडा क्रियते इति सुष्ठु कान्तहृदयहरणस्यावसरः । विभ्रमसम्पदोऽप्येवंविधा एव । तथायत्नकृतमनाहार्यमुज्ज्वलं मनोज्ञं स्वरूपं यासां तास्तथोक्ताः स्वभावरम्या इत्यर्थः । विभ्रमसम्पदोऽप्ययत्नेनैव कृतमङ्गनानामुज्ज्वलं स्वरूपं याभिः । न्यदधतेति लङ् ॥ ३ ॥

**नखरुचिरचितेन्द्रचापलेखं ललितगतेषु गतागतं दधाना ।**
**मुखरितवलयं पृथौ नितम्बे भुजलतिका मुहुरस्खलत्तरुण्याः ॥ ४ ॥**

कस्याश्चित् तरुण्या युवत्या विकटे कटीतटे झणझणायमानाङ्गदं बाहुवल्ली अस्खलत् । कीदृशी सविलासगमनेषु सत्सु गतागतं वहमाना । कीदृशं रक्तकरजकान्त्या जनिता सुरायुधराजिर्येन । अनेकाभरणद्युतिव्यतिकराद्धि शक्रचापोत्पत्तिः ॥ ४ ॥

**अतिशयपरिणाहवान् वितेने बहुतरमार्पितरत्नकिङ्किणीकः ।**
**अलघुनि जघनस्थलेऽपरस्या ध्वनिमधिकं कलमेखलाकलापः ॥ ५ ॥**

कस्याश्चित् जघनतटे कलमेखलाकलापो मधुररशनादाम तारं रवं चक्रे, यतो बंहीयोग्रथितमणिघण्टिकः । किमिति बह्व्यः किङ्किण्यस्तत्रोम्भिता इत्याह—अतिशयपरिणाहवान् महाभोगोऽसौ यतः । अत्रापि कारणमाह—अलघुनि विकटे कटितटे । मापितमुम्भितम् । मातेर्णिच् पुक् क्तः ॥ ५ ॥

**गुरुनिबिडनितम्बबिम्बभाराक्रमणनिपीडितमङ्गनागण[1]स्य ।**
**चरणयुगमसुस्रुवत् पदेषु स्वरसमसक्तमलक्तकच्छलेन ॥ ६ ॥**

---

१ 'जन' क. ख. पाठः ।

यौवतस्य चरणयुगं कर्तृ क्रमेषु यावकव्याजेनेव स्वरसमात्मीयरागं लौहित्यम् असुस्रुवदुद्वामेत्युत्प्रेक्षा । चरणौ हि तासां रक्तौ । केचित्तु रसमनुरागमित्याहुः । कान्तान्प्रति यस्तस्या॑नुरागः स एव ज्ञायते, अलक्तकव्याजेनासक्तं निर्यात इत्यर्थः । एतत्तु न मन आवर्जयति चित्तधर्मत्वादनुरागस्य, चेतसि ह्यनुरागो भवति न पादयोः । प्रस्तावे हेतुमाह–कीदृक् चरणयुगं गुरु महत् निबिडं पीवरं नितम्बबिम्बं कटीतटः स एव भारस्तेनाक्रमणमध्यासनं तेन निपीडितं ताडितम् । ताडितं हि रसपूर्णं वस्त्रादि स्रवति । असुस्रुवदिति "णिश्रिद्रुस्रुभ्य" इति कर्तरि चङ् ॥ ६ ॥

**तव सपदि समीपमानये तामहमिति तस्य मयाग्रतो[२]ऽभ्यधायि ।**
**अतिरभसकृतालघुप्रतिज्ञामनृतगिरं गुणगौरि मा कृथा माम् ॥ ७ ॥**

**नच सुतनु न वेद्मि यन्महीयानसुनिरसस्तव निश्चयः परेण ।**
**वितथयति न जातु मद्वचोऽसाविति च तथापि सखीषु मेऽभिमानः**

**सततमनभिभाषणं मया ते परिपणितं भवतीमनानयन्त्या ।**
**त्वयि तदिति विरोधनिश्चितायां भवतु भवत्वसुहृज्जनः सकामः ९**

**गतधृतिरवलम्बितुं वतासूननलमनालपनादहं भवत्याः ।**
**प्रणयिनि यदि न प्रसादबुद्धिर्भव मम मानिनि जीविते दयालुः १०**

**प्रियमिति वनिता नितान्तमागःस्मरणसरोषकषायितायताक्षी ।**
**चरणगतसखीवचोऽनुरोधात्किल[३] कथमप्यनुकूलयांचकार ॥ ११ ॥**

(पञ्चभिः कुलकम् ।)

काचित् कामिनी कथमपि महता क्लेशेन कान्तमनुकूलयांचकारातूतुषत् । कथमित्येवंविधानां पादपतितायाः सख्या वचसामनुरोधेनानुवृत्त्या किल । किलशब्दो व्याजे । सखी किल तामुपरोधयत्यतः कान्तमनुनये तत्त्वतस्तु आत्मेच्छयैव सानुनीतवती । तानि कानि सखीवचांसीत्याह–तवेत्यादि । हे गुणगौरि गुणैः सौन्दर्यादिभिरवदाते मां त्वमलीकवचनां मा कार्षीः, मद्वचोऽङ्गीकुरुष्वेत्यर्थः । यतो मया विचार्यैवौत्सुक्यात् वल्लभस्य पुर एवमभ्यधायि उक्तम्, यथा भवत्सकाशमधुनैव तां प्रापयामि इत्यतिरभसेनाविचारितपूर्वं कृता अलघ्वी गुरुः

१ 'स्य रा' ग. पाठः । २ 'वचो' ग. पाठः । ३ 'दिति' ग. पाठः ।

प्रतिज्ञा यया तामतिरभसकृतालघुप्रतिज्ञाम् । तव निश्चयो महत्त्वादन्येनासुनिरसोऽपरिहार्यः इति कृशाङ्गि न न जाने । एवं चेद्वेत्सि[1] तत् कस्माद्[2] दुस्तरा प्रतिज्ञा त्वया कृतेत्याह—यद्यप्येवं तथापि वयस्यासु ममैवंविधोऽभिमानो यथास्मद्वाक्यं सा न कदाचिदपि उल्लङ्घयतीति । सुखेन निरस्यते इति सुनिरसः, कर्मणि खल्, ततो नञ्समासः । वितथमनृतं करोति वितथयति । स्यादेतद्भव त्वमलीकवाक् किमेतावता ममेत्याह—सततमित्यादि । त्वामप्रापयन्त्या मया भवत्या अवचनं सदैव परिपणितं, तव कदाचिन्मया आलापो न देय इति पणः कृतः । भवत्यां चैवमभिमानोद्यतायां तदनभिभाषणं भवतु, विपक्षवर्गश्च परिपूर्णाभिलाषो भवत्विति उभयमप्युपगमे काका वा । स्यादेतत् भवत्वेवं का क्षतिरित्याह—भवत्याश्चाकथनान्नष्टधृतिः सती प्राणानहं धारयितुं कष्टमनलमसमर्था, अवश्यमेव म्रिय इत्यर्थः । अतश्चाकठोरे कान्ते चेत्तव नानुग्रहबुद्धिस्तदस्मदायुषि सकरुणा भव, अनुष्ठीयतामस्मत्प्रार्थनेत्यर्थः । इत्युक्त्वा पादयोः पतिता इत्येवंविधैः सखीवचनैः[3] पादपतनगर्भैर्मनस्विनी प्रियप्रार्थनासंमुखी बभूव । कीदृशी आगःस्मरणेनापराधानुध्यानेनात्यर्थं सक्रोधे लोहिते दीर्घे अक्षिणी[4] यस्याः सा आगःस्मरणसरोषकषायितायताक्षी । एवंविधैर्हि वाक्यैस्तस्याः प्रियापराधा नवीभूताः । पादपाताच्च तद्वचोऽङ्गीचक्रे ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

**द्रुतपदमिति मा वयस्य यासीर्ननु सुतनूमनुपालयानुयान्तीम् ।**
**नहि न विदितखेदमेतदीयस्तनजघनोद्वहने तवापि चेतः ॥ १२ ॥**
**इति वदति सखीजनेऽनुरागाद् दयिततमामपरश्चिरं प्रतीक्ष्य ।**
**तदनुगमवशादनायतानि न्यधित मिमान इवावनिं पदानि ॥ १३ ॥**

(युग्मकम् ।)

कश्चिन्नायक आलीवर्गेऽभिदधति सति अनायतानि स्वल्पानि पदानि क्रमान् न्यधित निक्षिप्तवान् मृदु जगामेत्यर्थः । किं वदतीत्याह—हे सखे इत्येवं त्वरितक्रमं मा गमः, ननु पश्चादागच्छन्तीं कृशोदरीं प्रतीक्षस्व । इतिः प्रत्यक्षनिर्देशे । ननुरभिमुखीकरणे । स्यादेतदेषापि कथं त्वरितं नागच्छतीत्याह—एतदीयकुचकटीतटधारणे भवतोऽपि चित्तं न न विदितखेदमपि तु ज्ञा[5]तश्रममेव । त्वयापि ह्येषाजस्रमेव चेतसि पुरुषायितेऽवधृता, तस्माद्दृढगुरुतरस्तनजघनभा-

१ 'वेद्मि' क. ख. । २ 'कथं' ग. । ३ 'चोभिः' ग. । ४ 'ईक्षणे' । ५ 'विज्ञा' ग. पाठः ।

रत्वादेषा तूर्णं गन्तुं न शक्नोति । इति यावत् सखीजनो वक्ति[1] तावत् तेनासौ प्रेम्णा चिरं प्रतीक्षिता प्रतिपालिता यावन्निकटमागता, अनन्तरं च मन्दानि पदानि ददौ । कथं, तदनुगमवशात् तस्या योऽनुगमः पश्चाद्गमनं तद्वशात् तत्सामर्थ्यात् । उत्प्रेक्ष्यते-भूमिं मिमान इव परिच्छिन्दन्यथा । यः किल पदैर्भुवं मिमीते स मन्दानि पदानि क्षिपति । संदानितकम् ॥ १२ ॥ १३ ॥

**यदि मयि लघिमानमागतायां तव धृतिरस्तु गतास्मि संप्रतीयम् ।**
**अनिभृतपदपातमापपात प्रियमिति कोपपदेन कापि सख्याः॥१४॥**

काचिन्नायिका आल्या इति कोपव्याजेन कान्तमनिभृतपदपातं त्वरिततरैः पदैः क्रमैरनुययौ । तमेव कोपप्रकारमाह-मयि चेल्लघिमानं प्राप्तायां तव तुष्टिस्तद्भवतु, इयमस्मीदानीं यातेति । सख्या हि सा व्रजन्ती याहीति चोदिता, लाघवं त्वत्प्रार्थनयैव स्वयं गमनात् । अनिभृतोऽमन्दः सत्वरः पदपातः क्रमविक्षेपो यत्रापतने तदनिभृतपदपातम् ॥ १४ ॥

**अविरलपुलकः सह व्रजन्त्याः प्रतिपदमेकतरः स्तनस्तरुण्याः ।**
**घटितविघटितः प्रियस्य वक्षःस्थ[2]लभुवि कन्दुकविभ्रमं बभार ॥ १५ ॥**

कस्याश्चित् युवत्याः प्रेयसा सह यान्त्या एकः कुचः कान्तोरस्तटावनौ कन्दुकविभ्रमं बभार वीटाविलासं दध्रे, यतः प्रतिपदं क्रमे क्रमे घटितविघटितः पूर्वं घटितः संबद्धः पश्चाद्विघटितो विश्लिष्टः । कन्दुकमवनौ घटितविघटितं भवति । कीदृक् स्तनः अविरलपुलकः कान्तसंस्पर्शात् घनरोमाञ्चः । एकतर इति "एकाच्च प्राचा" मिति स्वार्थे डतरच् ॥ १५ ॥

**अशिथिलमपरावसज्य कण्ठे दृढपरिरब्धबृहद्बहिःस्तनेन ।**
**हृषिततनुरुहो भुजेन भर्तुर्मृदुममृदु व्यतिविद्धमेकबाहुम् ॥ १६ ॥**
**मुहुरसुसममाघ्नती नितान्तप्रणदितकाञ्चि नितम्बमण्डलेन ।**
**विषमितपृथुहारयष्टि तिर्यक् कुचमितरं तदुरःस्थले निपीड्य॥ १७ ॥**
**गुरुतरकलनूपुरानुनादं सललितनर्तितवाह्यपादपद्मा ।**
**इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥ १८ ॥**

(विशेषकम् ।)

---

१ 'वदति' ग. पाठः । २ 'स्त' ग. पाठः ।

अन्या नायिका मन्मथमन्थरं कामवशान्मन्दं जगाम। किं कृत्वा भर्तुः कण्ठे एकं दक्षिणं भुजमशिथिलं गाढमवसज्य संश्लेष्य। कीदृशमेकबाहुं भर्तुरेकभुजेन वामेनामृदु घनं व्यतिविद्धं संवलितं तथा मृदुं कोमलम्। कीदृशेन भुजेन दृढं गाढं परिरब्धोऽवष्टब्धो बृहत्पीवरो बहिःस्तनो वामपयोधरो येन, अत एव हृषिततनुरुहः सरोमाञ्चस्य। कीदृशी नायिका प्राणतुल्यमसकृत् जघनस्थलेनाघ्नती नुदती, कथं नितान्तं प्रणदिता अत्यर्थं शिञ्जाना काञ्ची रशना यत्र। तथेतरं दक्षिणं कुचं प्रियवक्षस्तटे निपीड्य घनं लगयित्वा, कथं तिर्यक्तिरश्चीनम्, अत एव विषमिता एकपार्श्वस्था पृथ्वी हारयष्टिर्मुक्तालता यत्र। तथा सविलासं नर्तितश्चलितो बाह्यो वामपादो यया, कथं गुरुतरो म[1]हीयांस्तारः कलो मधुरो नूपुरनादो मञ्जीरशिञ्जितं यत्र नर्तने। तथा इतरदाभ्यन्तरं पदमनतिलोलमादधाना निक्षिपती। दक्षिणोऽत्र नायिकाया बोद्धव्यः। हृषितमिति "हृषेर्लोमसु" इतीडागमः। त्रिभिर्विशेषकम्॥ १६॥ १७॥ १८॥

**लघुललितपदं तदंसपीठद्वयनिहितोभयपाणिपल्लवान्या।**
**सकठिनकुचचूचुकप्रणोदं प्रियमबला सविलासमन्वियाय॥ १९॥**

अन्या कान्ता कान्तमन्वियाय पश्चात् जगाम। कथं सविलासं सलीलं तथा लघूनि मन्दानि ललितानि मनोहराणि पदानि क्रमा यत्र। कीदृशी अबला पश्चात् स्थितत्वात् प्रियस्कन्धयुग्मनिक्षिप्तकरयुगलप्रवाला, अत एव प्रियं कीदृशं कठिनौ कर्कशौ यौ कुचौ स्तनौ तयोर्यत् चूचुकमग्रं तेन यः प्रणोदोऽभिघातः सह तेन वर्तते यस्तं सकठिनकुचचूचुकप्रणोदम्। क्रियाविशेषणं वैतत्। अंसे पीठ इव महत्त्वात्॥ १९॥

**जघनमलसपीवरोरु कृच्छ्रादुरुनिबिरीसनितम्बभारखेदि।**
**दयिततमशिरोधरावलम्बिस्वभुजलताविभवेन काचिदूहे॥ २०॥**

अन्या नायिका श्रोणीतटं कृच्छ्रात् क्लेशेन ऊहे उवाह, यतोऽलसपीवरोरु मन्थरे पीनत्वादूरू यत्र। तथा बृहता निबिरीसेन च निबिडेन नितम्बबिम्बभारेण खेदि सायासम्। जघननितम्बौ नारीणां पूर्वापरौ कटीभागौ। कथं तर्ह्यूहे इत्याह—दयिततमशिरोधरावलम्बिन्यौ कान्तग्रीवावलम्बिन्यौ ये निजबाहु[2]वल्लयौ तद्विभवेन तत्सामर्थ्येन कान्तकण्ठमवलम्ब्येत्यर्थः। निबिरीसं निबि-

१ 'बं' ग. पाठः। २ 'हू एव व, ग. पाठः।

डम् । "नेर्बिडज्बिरीसचौ" । ऊहे इति वहेः कर्तरि लकारः ॥ २० ॥

**अनुवपुरपरेण बाहुमूलप्रहितभुजाकलितस्तनेन निन्ये ।**
**नि[1]मितदशनवाससा कपोले विषमवितीर्णपदं बलादिवान्या॥२१॥**

अन्येन नायकेनान्या नायिका बलादिव नीता । यतोऽनुवपुर्देहस्य पश्चाद्भागेन बाहुमूलयोः कक्षयोः प्रहितौ निक्षिप्तौ यौ भुजौ ताभ्यामाकलिताववष्टब्धौ कुचौ येन, यदि वा बाहुमूलेन प्रहितेन भुजेनाकलितः स्तनो येनेत्येकवचनान्तेन विग्रहः । तथा कपोले गण्डस्थले निमितदशनवाससा निहितदन्तच्छदेन अत एव विषमाणि दत्तानि पदानि क्रमा यत्र बलनयने । यो हि हठान्नीयते स पश्चादवष्टभ्यते असमानि च पदानि दधाति । निन्ये इति कर्मणि लकारः ॥ २१ ॥

**अनुवनमसितभ्रुवः सखीभिः सह पदवीमपरः पुरोगतायाः ।**
**उरसि सरसरागपादलेखाप्रतिमतयानुययावसंशयानः ॥ २२ ॥**

अन्यः कामी वयस्याभिः साकं पूर्वमप्युपवनं यातायाः सुदृशो मार्गमसंदिहान एवानुजगाम । यदि गच्छन्तीं नाद[2]र्शत् तत्कथं निःसंशयमिति हेतुमाह—रतविशेषवशाद्वक्षसि सरागा सद्रवालक्तका यासौ पादलेखा चरणमुद्रा तस्याः प्रतिमतया सादृश्येन । प्रतिमातीति प्रतिमः सदृशः "आतश्चोपसर्गे" कः । यादृश्येव हि तस्योरसि सालक्तका पादमुद्रा तादृगेवावनावुत्पन्ना, अतश्च तयोः सारूप्यमवगम्य नूनमस्मात्प्रियानेन यातीति चिन्तयित्वा निर्भ्रान्त्यैव तत्पदवीं जगामेति वाक्यार्थः । अनुवनमिति सामीप्येऽव्ययीभावः ॥ २२ ॥

**मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ताः ।**
**सरित इव सविभ्रमप्रयातप्रणदितहंसकभूषणा विरेजुः ॥ २३ ॥**

ता नायिका गच्छन्त्यो नद्य इव विरेजुः । अधुना श्लेषः । कीदृश्यस्ताः मदनरसमहौघेन सुरतरागबृहत्पूरेण पूर्णा ये नाभीह्रदास्तत्र परिवाहिताः प्रवाहरूपं प्रा[3]पिता रोमावलयो यासाम् । तथा सविलासगमनेन शब्दायमानानि हंसकभूषणानि नूपुरालंकारा यासां ताः । सरितोऽपि रसमहौघनिर्भरैर्ह्रदैः परिवाहीकृता भवन्ति सविभ्रमप्रयाणप्रणदितहंसाश्च । रसो रागो जलं च । परिवाह उच्छ्वास उच्यते येनोदकं निःसार्यते ॥ २३ ॥

१ 'न' क. पाठः । २ 'पश्य' ख. ग. पाठः । ३ 'प्राप्ता' ग. पाठः ।

**श्रुतिपथमधुराणि सारसानामनुनदि शुश्रुविरे चिरं रुतानि ।**
**विदधति जनतामनःशरव्यव्यधपटुमन्मथचापनादशङ्काम् ॥ २४ ॥**

सारसा लक्ष्मणास्तेषामनुनदि सरित्समीपे चिरं रुतानि शुश्रुविरे श्रुतानि । कीदृंशि श्रोत्रसुखकारीणि, तथा जनतामनांसि लोकचित्तानि तान्येव शरव्यं लक्ष्यं तेषां व्यधो भेदस्तत्र पटुः चतुरो यो मन्मथस्तस्य यच्चापं तस्य यो नादः क्रोङ्कारस्तच्छङ्कां तद्भ्रान्तिं विदधति कुर्वाणानि, पञ्चशरधनुर्निर्घोषा इव यानि ज्ञायन्ते इत्यर्थः । उत्कण्ठाजनकत्वात् । श्रुतिः श्रोत्रं सा चासौ पन्था श्रुतिपथः कर्णः । सरसि भवाः सारसा लक्ष्मणाः। नदीं समयानुनदि "अनुर्यत्समया" । शुश्रुविरे इति कर्मणि लकारः । विदधतीति "जसः शिः । नाभ्यस्ताच्छतुः" । जनानां समूहो जनता "ग्रामजने" ति तल् । व्यधनं व्यधः "व्यधजपोरनुपसर्गे" । शरं व्ययतीति शरव्यमिति व्युत्पत्तिमात्रम् "आतोऽनुपसर्गे कः" ॥ २४ ॥

**मधुमथनवधूरिवाह्वयन्ति भ्रमरकुलानि जगुर्यदुत्सुकानि ।**
**तदभिनयमिवावलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभिः ॥ २५ ॥**

इह वनेऽलिनो गुञ्जन्ति वातवशाच्च शाखाश्चलन्ति । तत्र कविरूहते–सरभसान्यलिवृन्दानि भगवद्वनिताह्वानं कुर्वाणानीव यज्जगुश्चकूजुः तस्याह्वानस्याभिनयमिव[1] काननराजिरभिनवकिसलयैरेवाङ्गुलीभिरतनुत चकार । या किलोत्सुका सखीमाह्वयति सा हि नवपल्लवरम्याभिरङ्गुलीभिरभिनयं कुरुते । वनावलिरत्राह्वाने कर्त्री, अलिरुतं वचनस्थानीयं, पल्लवा अङ्गुलिप्रकाराः । आह्वयन्तीति शत्रन्तः । नवमेव नूतनं सरसम् । नवस्य नू–आदेशः त्नप्तनप्खाश्च प्रत्ययाः । पल्लवः पत्रवच्छाखाग्रम् ॥ २५ ॥

**असकलकलिकाकुलीकृतालिस्खलनविकीर्णविकासिकेसराणाम् ।**
**मरुदवनिरुहां रजो वधूभ्यः समुपहरन् विचकार कोरकाणि ॥२६॥**

मरुद्वायुरवनिरुहां तरूणां कोरकाणि कलिका विचकार व्याकोशयामास। कीदृशो वधूभ्यो भगवज्जनीभ्यो रजो रेणुं समुपहरन् वितरन् । कीदृशां वृक्षाणाम्, असकला अप्रफुल्ला याः कलिकाः कोरकास्ताभिराकुलीकृताः क्षोभं नीता लाम्पट्यात् किंकर्तव्यतामूढा येऽलिनस्तेषां यत् स्खलनमुद्घातस्तेन विकीर्ण

[1] 'ने' क. ख. पाठः ।

भ्रष्टं विकासि बहलं केसरं किञ्जल्कं येषामत एव रजःसमुपहारः ॥ २६ ॥

**उपवनपवनानुपातदक्षैरलिभिरलाभि यदङ्गनागणस्य ।**
**परिमलविषयस्तदुन्नतानामनुगमने खलु संपदोऽग्रतःस्थाः ॥ २७ ॥**

अङ्गनागणस्य यौवतस्य सम्बन्धी यः परिमलो विमर्दज आमोदस्तस्य यो विषयो गोचरो यत्र स तिष्ठति स यद्यस्मादुद्यानवातानुगमनचतुरैर्मधुपैरलाभि प्राप्तः, तत् तस्मादुन्नतानां सत्पुरुषाणामनुगमने सेवायां सत्यां समृद्धयोऽग्रतःस्थाः पुरोवर्तिन्य एव हस्तस्थिता एवेत्यर्थः । कथमन्यथैवोपवनानुगमनमात्रेणैवालाभि परिमलः प्राप्त इति भावः । खलुर्वाक्यालंकारेऽवधारणे वा । अग्रतोवर्तिन्य एवेत्यर्थः । अलाभीति कर्मणि लुङ् । "विभाषा चिण्णमुलो" रिति नुम् विकल्पितः ॥ २७ ॥

**रथचरणधराङ्गनाकराब्जव्यतिकरसम्पदुपात्तसौमनस्याः ।**
**जगति सुमनसस्तदादि नूनं दधति परिस्फुटमर्थतोऽभिधानम् ॥२८॥**

इह पुष्पाणां सुमनस इति नाम डित्थवत्स्थितं तत्र कविरूहते—सुमनसः कुसुमानि नूनं निश्चितं तदादि तत्प्रभृति सुमनस इत्यभिधानम् अर्थतोऽभिधेयेन परिस्फुटं प्रकटं दधति, तत आरभ्यान्वर्थं नाम बिभरांबभूवुरित्यर्थः । यतो माधववनितापाणिपद्मसम्पर्कादुपात्तसौमनस्या धृतहर्षा इव । वनिताकरतलस्था हि ता रम्यतरा दृश्यन्ते । अतश्च शोभनं मनो यासां ताः सुमनस इत्यवयवार्थसद्भावः । पूर्वं तु नाम्नैव सुमनस इत्यभवन् । रथचरणश्चक्रं तं धारयतीति रथचरणधरो भगवांश्चक्रायुधो हरिः । तदादीति निपातितः ॥ २८ ॥

**अभिमुखपतितैर्गुणप्रकर्षादवजितमुद्धतिमुज्ज्वलां दधानैः ।**
**तरुकिसलयजालमग्रहस्तैः प्रसभमनीयत भङ्गमङ्गनानाम् ॥ २९ ॥**

वनितानां कराग्रैर्वृक्षपर्णनिचयो बलाद्भङ्गमनीयत भे[१]दं प्राप्यत, अङ्गुलीभिस्त्रो[२]टितमित्यर्थः । कीदृग्भिरग्रहस्तैरभिमुखपतितैर्विभङ्ग्या पर्णानां संमुखं यातैः, । तथोज्ज्वलां रम्यां रक्तां चोद्धतिमुन्मुखत्वं कान्तिं वा बिभ्राणैः । अत एव कीदृग्जालं गुणप्रकर्षाल्लौहित्यातिशयादवजितं तिरस्कृतम् । अतश्च भङ्गमनीयत परं पराभवं प्रापितमित्युक्त्याभिहितम् । यः किल पण्डितः कंचिद्वादिपूगं स-

१ 'दु' ग. पाठः । २ 'छे' ग. पाठः ।

भायां प्रसभं गुणप्रकर्षाद्बोधातिशयात् जयति, स त[1]स्यामुद्धतिं गर्वं दधत् तमग्रहस्तैरङ्गुलिभङ्गैः संमुखागतैर्भङ्गं नयत्यप्रतिपत्तिं प्रापयति । अनीयतेति कर्मणि लकारः। कर्म तु प्रधानं तरुकिसलयजालम् । नपुंसकैकवचनं चैतत् । नयतेश्च द्विकर्मकत्वाद्भङ्गमित्यपरं कर्म, तस्य च न केनचिदभिहितत्वाद् द्वितीयोत्पद्यत एव । यतः—"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति ॥ भङ्गमिति चाप्रधानं कर्म ॥ २९ ॥

**मुदितमधुभुजो भुजेन शाखाश्चलितविशृङ्खलशङ्खकं धुवत्याः ।**
**तरुरतिशयितापराङ्गनायाः शिरसि मुदेव मुमोच पुष्पवर्षम् ॥ ३० ॥**

कस्याश्चिन्नायिकायाः पादपः कुसुमव[2]र्षं मूर्धन्यकिरत् । उत्प्रेक्ष्यते–तोषेणेव । तोषस्य हेतुमाह–यतोऽतिशयितापराङ्गनायाः । कुतो जितसपत्नीकाया इत्याह–बाहुना झणझणायमानाबद्धवलयेन मत्तभृङ्गा लताः कम्पयन्त्याः, अत एव च पुष्पवर्षमोक्षः । विशृङ्खलग्रहणं वासःसम्बन्धाङ्गदनिवृत्त्यर्थम् । नहि तानि मुखराणि भवन्ति । अन्योऽपि यः कस्मैचित् तुष्यति स पुष्पवर्षेण तं मानयति । 'धू विधूनने' इत्यस्य शतरि धुवत्या इति रूपम् ॥ ३० ॥

**अनवरतरसेन रागभाजा करजपरिक्षतिलब्धसंस्तवेन ।**
**सपदि तरुणपल्लवेन वध्वा विगतदयं खलु खण्डितेन मम्ले ॥ ३१ ॥**

केनचित् तरुणपल्लवेनाशुष्कविटपेन मम्ले म्लानं, शोषः प्राप्तः । निर्दयमेवाङ्गनया खण्डितेन त्रोटितेन सपदि खण्डनानन्तरमेव । अन्यच्च कीदृशेन अनवरतरसेनात्यार्द्रेण तथा करजपरिक्षत्या नखखण्डनेन लब्धसंस्तवेन प्राप्तव्यतिकरेण । अथ चो[3]क्तिश्लेषः । तरुणपल्लवः शिङ्गप्राय उच्यते, स यदा कामिन्या खण्ड्यते सङ्केतभङ्गं प्राप्यते तदावश्यमेव म्लायति। कीदृशेन तेन अनवरतरसेन अत्यर्थरणरणकेन, अथवाविद्यमानोऽवरतरसो नूतननिधुवनशृङ्गारो यस्य, रागभाजा व्यसनिना तथा करजपरिक्षत्या नखदानमात्रेणोपलब्धः संस्तवः परिचयो येन । मम्ले इति भावे लकारः ॥ ३१ ॥

**प्रियमभि कुसुमोद्यतस्य बाहोर्नवनखमण्डनचारु मूलमन्या ।**
**मुहुरितरकराहितेन पीनस्तनतटरोधि तिरोदधेंऽशुकेन ॥ ३२ ॥**

---

१ 'रम्यां' ख. ग. । २ 'वृष्टिं' क. । ३ 'चेदानीं' क. पाठः ।

अन्या नायिका कान्ताभिमुखं पुष्पग्रहणार्थमुत्क्षिप्तस्य बाह्वोर्मूलं कक्ष्यदेशमंशुकेन तिरोदधे वाससास्थगयत्, यतः सरसकरजालङ्कारमनोहरं तथा महाभोगपयोधरस्थलेन व्याप्तम् । पीनस्तनतटरोधो विद्यते यस्येति मत्वर्थीयः । कीदृशांशुकेन इतरकरेण वामपाणिना गृहीतेन । प्रियमभीति लक्षणे कर्मप्रवचनीयसंज्ञा ॥ ३२ ॥

**विततवलिविभाव्यपाण्डुलेखाकृतपरभागविनीलरोमराजिः ।**
**कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखलोचनावलग्नम् ॥ ३३ ॥**
**प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा ।**
**अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला ॥ ३४ ॥**
**व्यवहितमविजानती किलान्तर्वणभुवि वल्लभमाभिमुख्यभाजम् ।**
**अधिविटपि सलीलमग्रपुष्पग्रहणपदेन चिरं विलम्ब्य काचित् ॥३५॥**
**अथ किल कथिते सखीभिरत्र क्षणमपरेव ससंभ्रमा भवन्ती ।**
**शिथिलितकुसुमाकुलाग्रपाणिः प्रतिपदसंयमितांशुकावृताङ्गी ॥३६॥**
**कृतभयपरितोषसंनिपातं सचकितसस्मितवक्त्रवारिजश्रीः ।**
**मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती ॥ ३७ ॥**
**अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थितास्मै ।**
**अहरत सुतरामतोऽस्य चेतः स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥३८॥**

(षड्भिः कुलकम् ।)

काचित् वधूरधीरत्वात् अन्तर्धानमिवेच्छन्ती यदस्मै वल्लभायाधोमुखी अस्थित स्वाभिप्रायं प्रकाशयन्ती स्थिता, रिरंसामाविश्चकार, अतो हेतोरस्य प्रियस्य नितान्तं मनो जहार । किं कृत्वास्थित अधिविटपि वृक्षे सविलासं यत्पुष्पग्रहणं तदेव पदं व्याजस्तेन चिरं विलम्ब्य स्थित्वा, कुसुमोच्चयव्याजं कृत्वेत्यर्थः । इदानीं यथा तस्या व्रीडागमस्तं पुष्पावचयस्थानकमाह—कीदृश्यसावित्याह वितततेत्यादि । स्वभावात् तन्वप्यवलग्नमुदरं भूय ऊर्ध्वप्रसृतत्वात् तानवं प्रापयन्ती । कीदृगवलग्नं वितताासु प्रसृतासु वलिषु ताभिर्वा विभाव्या लक्षयितुं शक्या याः पाण्डवो लेखास्ताभिस्तत्र वा कृतपरभागा जनितशोभा विनीलाति-

१ 'गू' ग. । २ 'हस्त' ग. । ३ 'नि' ग. पाठः ।

कृष्णा रोमराजिः रोमावलिर्यत्र तत् तथोक्तम् । भिन्नौ हि वर्णौ नितरां शोभाते । अन्यच्च कीदृशी विपुलतरे अतिविशाले उन्मुखे ऊर्ध्वप्रसृते लोचने यस्याः सा विपुलतरोन्मुखलोचना ॥–किंच प्रसकलौ परिपूर्णौ यौ कुचौ ताभ्यां बन्धुरं रम्यमुद्धुर[1]मुन्नतं यदुरो वक्षस्तेन तत्र वा प्रसभं बलादेव विभिन्नस्त्रुटितस्तनुः सूक्ष्म उत्तरीयस्य कञ्चुकस्य बन्धो ग्रन्थिर्यस्याः । शिङ्ग्यो हि तनीयांसं ग्रन्थिं दधते । तथाग्रपुष्पग्रहणवशात् अवनमत् अन्तर्विशत् यदुदरं तत उच्छ्वसत् पतद्यद् दुकू[2]लं संव्यानं तेनातिप्रकटमेव विभाव्यं लक्ष्यं निम्नं च नाभिमूलं जघनं यस्याः । ननु नायकसंनिधौ लज्जा न्याय्या तत्कथमसावेवंविधेत्याह—अन्तर्वणभुवि उद्यानवनभूमौ व्यवहितं तिरोहितं संमुखमपि कान्तं किलाजानती । किलेत्यलीके । तत्त्वतो ह्यसौ बुद्ध्यत एव । यथा मामेष लताप्रच्छन्नदेहो वीक्षते इति चेतोग्रहणार्थं त्वज्ञानपदम् । कथं तर्हि बुद्धवतीत्याह—अथानन्तरं वयस्याभिः किलात्र नायके कथिते अमुष्मिन्प्रदेशे प्राणनाथस्तव स्थित इत्यभिहिते सति अपरेवान्येवाज्ञातवृत्तान्तेव ससंभ्रमा सभया क्षणं भवन्ती सम्पद्यमाना, अत एव शिथिलितो मन्दीकृतः कुसुमेष्वाकुलो व्यग्रोऽग्रपाणिः कराग्रं यया, प्रतिपदं यथास्थानं पदे पदे वा संयमितेनावष्टब्धेनांशुकेनोत्तरीयेणावृतान्यङ्गानि स्तनादीनि यया ॥—तथा कामोपाध्यायेन तदानीमेव निरूपितं किमप्यवाच्यमेव रसेन प्रीत्या रसान्तरं भजन्ती सेवमाना । कीदृग्रसान्तरं कृतो भयपरितोषाभ्यां संनिपातः सहभावो यत्र । प्रियदर्शनाद्धि भयं चेतोहरणाच्च तोषः । अत एव सचकिता सत्रासा सहासा च वक्त्रवारिज[3]श्रीर्यस्याः । अथ किमिति सलज्जा सती अस्य चेतो जहारेत्याह—स्फुटमभिभूषयति स्त्रियस्त्रपैव, स्फुटं निश्चितं कामिनीर्लज्जैवालङ्कुरुते । अन्तर्वणमिति "प्रनिरन्तःशरेक्षु" इति णत्वम् । अस्मै इति "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति संप्रदानसंज्ञा । अस्थितेति "प्रकाशनस्थेयाख्ययोश्चे" ति तङ् । स्त्रियः इति "वाम्शसोः" । षड्भिः कुलकम् ॥ ३३–३८ ॥

**किसलयशकलेष्ववाचनीयाः पुलकिनि केवलमङ्गके निधेयाः ।**
**नखपदलिपयोऽपि दापितार्थाः प्रणिदधिरे दयितैरनङ्गलेखाः ॥ ३९ ॥**

दयितैर्विरहिभिर्मिथुनैः किसलयशकलेषु पर्णखण्डेषु अनङ्गलेखाः कामसंदेशाः प्रणिदधिरे प्रहिताः । लिख्यत इति लेखः सन्देशः । कीदृशाः नखपदं

1 'चो' ग. । 2 'गू' ग. । 3 'लक्ष्मीः' ख. पाठः ।

करजक्षतिरेव लिपिरक्षरविन्यासो येषामेवंविधा अपि दापितार्था उक्ताभिधेयाः प्रकटितानुरागा विरहसन्तापकथकत्वात्, तथा नखपदलिपित्वादेवावाचनीयाः। यदि वाचयितुं न शक्यन्ते किं तर्हि तैः प्रहितैरित्याह—केवलं पुलकिनि कण्टकितेऽङ्के कृशशरीरे निधेया अर्पणीयाः । एतैः किल तदङ्गस्पर्शोऽलाभीति संदेशस्य निधातुमशक्यत्वात् तदाधाराणां किसलयशकलानामत्र निधानम् । सनखपदान् पुष्पोच्चयप्रसङ्गाद् गृहीताननुरागसूचकान् पत्रखण्डान् कान्तप्रेषितान् वल्लभाः सन्तापनिवारणाय क्षणमात्रं विरहग्लपिते देहे न्यधुरिति वाक्यार्थः। दापितमित्युक्तार्थे देशीपदमित्याहुः । प्रणिदधिर इति कर्मणि लकारः । दयितैरिति "पुमान् स्त्रिये"ति पुंसः शेषः ॥ ३९ ॥

**कृतकृतकरुषा सखीमपास्य त्वमकुशलेति कयाचिदात्मनैव ।**
**अभिमतमभि साभिलाषमाविष्कृतभुजमूलमबन्धि मूर्ध्नि माला४०**

कयाचित् कामिन्या कान्तस्याग्रतः स्वयमेव शिरसि स्रग्[1] बद्धा । कदाचिदाल्यभावो भवेदित्याह—सखीमपास्येति । किमित्यसौ निवारितेत्याह—त्वं किलानिपुणेति, अत एव विहितालीकक्रोधया । कथमबन्धीति व्याजहेतुमाह—अभिमतमभि कान्तस्य संमुखं साभिलाषं साकाङ्क्षमाविष्कृते प्रकटीकृते भुजमूले कक्षौ यत्र तत् आविष्कृतभुजमूलम् । अबन्धीति कर्मणि लकारः ॥ ४० ॥

**अभिमुखमुपयाति मा स्म किंचित्त्वमभिदधाः पटले मधुव्रतानाम् ।**
**मधुसुरभिमुखाब्जगन्धलब्धेरधिकमधित्वदनेन मा निपाति। ४१।**
**सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु वीरुधां विरक्तः ।**
**ध्रुवममृतपनामवाञ्छयाऽसावधरममुं मधुपस्तवाजिहीते ॥ ४२ ॥**
**इति वदति सखीजने निमीलद्द्विगुणितसान्द्रतराक्षिपद्ममाला ।**
**अपतदलिभयेन भर्तुरङ्कं भवति हि विक्लवता गुणोऽङ्गनानाम् ।४३।**

(त्रिभिर्विशेषकम् ।)

काचिदङ्गना भृङ्गभीत्या भर्तुरुत्सङ्गमध्युवास । कदा एवमालिवृन्दे ब्रुवति सति । किमित्याह—अस्मिन् मधुपपूगे त्वत्संमुखमागच्छति सति मास्म किंचिदपि त्वमभिदधाः मावोचः मूकेवास्स्वेत्यर्थः । कस्मादित्याह—अनेनालिपूगेना-

१ 'ग्दाम' क. पाठः ।

धित्वत् त्वयि माधिकमत्यर्थं निपात्यागंस्यते । कुत इत्याह—आसवसुगन्धिवद-नकमलसौरभप्राप्तेः । यदा हि त्वं वक्ति तदा मुखामोदो निर्गच्छति तदासवा-दानाच्चाखण्डपद्मभ्रान्त्यात्यर्थमेतत् त्वामाकुलीकुरुते । मुखस्याभिमुख्येनाभिमु-खम् "लक्षणेनाभिप्रती आभिमुख्ये" । उपयातीति शत्रन्तः । त्वं माभिदधा इति माङ् निषेधे "स्मोत्तरे लङ्च" । मधु व्रतयन्ति भक्षयन्तीति मधुव्रता भृङ्गाः । त्वयि अधित्वदिति सप्तम्यर्थेऽव्ययीभावः । "अव्ययीभावश्चे" ति नपुंसकत्वे सति "नपुंसका" दिति सुब्लुक् । विभक्त्यभावाच्च त्वादेशोऽत्र चिन्त्यः । त्वं चेत इत्यत्र तु "अलिङ्गे युष्मदस्मदी" इति नास्ति नपुंसकत्वं सुब्लुकोऽभावे अमादेशे कृते त्वादेशो भवत्येव । मा निपातीति भावे लकारः । माङाशङ्कायाम् । उभया-र्थो ह्ययम् । यथा—"मा तात प्रभवामीति बाधिष्ठाः कृपणं जनम् । मा त्वा कृपणचक्षूंषि धाक्षुरग्निरिवेन्धन" मिति । "माङि लुङ्" । ननु यद्यस्य गन्धलो-भोऽस्ति तत् नानाविधानि कुसुमानि सन्ति तानि किमिति न यातीत्याह—सरजसेत्यादि । निश्चितमसौ मधुपो भृङ्गोऽमृतपसंज्ञेच्छया त्वदोष्ठमिममाजिही-ते आयाति । पुष्पमधुपानात् हि अनेन मधुप इति नाम लब्धम् अधुना त्वमृतप इत्यस्य नाम्न आशंसास्य विद्यते, तच्च कथमाप्नोति, यदि भवत्या अमृतसम-ममृतरसं पिबति । कीदृशो मधुप इति विशेषणद्वारेण पुष्पत्यागे कारणमाह—वीरुधां लतानां याः प्रसवविभूतयः कुसुमसमृद्धयस्तासु विरक्त उद्विग्नो यतः । कदाचित् ताः शुष्काः स्युरित्याह—सरजसं रेणुमद्यन्मकरन्दं पुष्परसस्तेन नि-र्भरासु पूर्णासु । आजिहीते इति ओहाङः । प्रसूयते इति प्रसवः "कर्मण्यण्" ॥ –इति वदति सखीजने सा भयेन भर्तुरङ्कमपतत् । कीदृश्यसौ निमीलन्ती सं-कुचिता अत एव द्विगुणितात एव सान्द्रतरा सुनिबिडा अक्षिपक्ष्मलेखा नेत्ररो-मराजिर्यस्याः सा निमीलद्द्विगुणितसान्द्रतराक्षिपक्ष्मलेखा । ननु स्वयमङ्कगमने धार्ष्ट्यदोषो भवति तत्कथमसौ यातेत्याह—भवति हि विक्लवता गुणोऽङ्गनानां, विक्लवता सभयत्वं गुणो भवति, वैक्लव्येन गुणेन तासां धार्ष्ट्यदोषो नायाती-त्यर्थः । द्वौ गुणाववयवौ यस्याः सा द्विगुणा । त्रिभिर्विशेषकम् ॥ ४१–४३ ॥

**मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि ।**

**तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या । ४४ ।**

---

१ 'प्राप्तं' ग. पाठः ।

तरुणेन वक्त्रपद्ममुत्क्षिप्य रभसाद्यत् मुग्धाङ्गनाचुम्बि चुम्बिता तत्किल सुरतनिपुणया सख्या न ज्ञातम्, यतो नवाग्रकिसलयोच्चयगतचित्तया । किलापरमार्थे । विदग्धत्वात् तया ज्ञातमेव, केवलं लज्जास्य मा भूदिति विदग्धत्वादेव तयाविदितमिति कृतं पुष्पावचयव्यग्रा किलाहमिति । अचुम्बि, विविदे इति कर्मणि लकारः ॥ ४४ ॥

**व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः ।**
**यदद्धदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥ ४५ ॥**

प्रेयस्या मुखं कान्तो यददधत् अपात् चुचुम्ब तद्वक्त्रपानं वीरुत्प्रतानपिहितायामपि सपत्न्यां विवव्रे व्या[1]ख्यातम् । केनेत्याह—अधरावलोपेनोष्ठदंशेन नृत्यन् कम्पमानो यः करः पाणिस्तत्र यानि वलयान्यङ्गदानि तेषां स्वनितेन शिञ्जितध्वनिना, वलयरवेण सपत्न्या ज्ञातं, नूनमनेनासौ चुम्बितेत्यर्थः । अदधदिति "विभाषा धेट्श्व्यो" रिति च्लेश्चङादेशः । चङीति द्विवचनम् । विवव्रे इति वृणोतेः कर्मणि लिट् ॥ ४५ ॥

**विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः ।**
**रमणमृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥ ४६ ॥**

काचिन्मुग्धवधूः सखीनामपि पुरः कान्तं परिषस्वजे । कुतः अग्रवर्तिवृक्षाधिरूढाया वल्ल्या विलासं विडम्बयन्ती, इत्थमनया लतया तरुराश्लेषीत्युक्त्वा तमाश्लिक्षदित्यर्थः । ननु सखीसन्निधौ स्वयमालिङ्गनं दोषायेत्याह-अकलितचापलदोषमिति । कस्मात् धाष्टर्यदोषो न गणित इत्याह–ऋजुतयेति । मुग्धा किलेयं प्रौढव्यवहारं न जानाति[2] नाप्ययमस्या अपराध इत्यालीभिर्दोषो न गृहीत इत्यर्थः । ऋजुतया वानुकुर्वतीति योज्यम् । "अनुपराभ्यां कृञः" इति परस्मैपदम् । चपलस्य भावश्चापलम् "हायनान्तयुवादित्वा" दण् । तच्चासौ दोषश्चापलदोषः ॥ ४६ ॥

**सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयान्या ।**
**सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ४७**

काचिदुच्चस्तबकजिघृक्षया कान्तं करेण स्कन्धे सविलासमवष्टभ्य कुचाभ्यां

---

१ 'आ' क. । २ 'नाते' ग. पाठः ।

रागाद्वक्षसि अवतस्तरे पिदधे । कीदृग्भ्यां सकलौ परिपूर्णौ यौ कलभकुम्भौ हस्तिपूतकमस्तके तद्वद्विभ्रमः संस्थानं ययोः । अवतस्तरे इति कर्तरि लकारः । "शर्पूर्वाःखय" इति सलोपः ॥ ४७ ॥

**मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य ।**
**उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरूच्चिकीषयान्या ॥ ४८ ॥**

अपरा वधूः पत्युः पृष्ठे न्यपतत्, यतः कुचकुम्भभरासहा । कस्मात् स्तनभरं न सहते इत्याह—मृदुचरणतलाग्रदुःस्थितत्वादिति । सुकुमारचरणप्रान्तावस्थानं कुत इत्याह-उच्चतरूच्चिकीषयेति पाते वा हेतुः । एषा कथमपतत्, अविद्यमानमवलम्बनमाश्रयो यत्र तत् निरवलम्बनम् । यदा ह्यसौ उन्नताद्वृक्षात् पुष्पाणि उच्चेतुमिच्छति तदा मृदुचरणाग्रेऽतिष्ठदतश्च स्तनभरं न सहते, अवलम्बनं च न विद्यते, अतः कान्ताङ्क एवापतदिति वाक्यार्थः । उच्चेतुमिच्छा उच्चिकीषा "विभाषा चे" रिति कुत्वम् । ततः पञ्चमीसमासः ॥ ४८ ॥

**उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुभोऽन्यः ।**
**प्रथितपृथुपयोधरां गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥ ४९ ॥**

कश्चित् मुग्धवधूं नवोढां बाहुभ्यामुच्चिक्षेप । कीदृशीमुन्नतप्रसूनानि मृगयमाणाम् । कथमुदास, स्वयमेव त्वं गृह्णीष्वेति । तथा प्रथितौ कान्तोरसि प्रथिमानमागतौ चक्रीभूतौ पृथू विस्तीर्णौ पयोधरौ स्तनौ यत्र । यदि मार्गितानि पुष्पाणि कथं स्वयं न दत्तानि उत्क्षिप्ता किमित्याह—यतोऽसौ परिरम्भलोलुभ आश्लेषगृध्नुः, अतश्चात्मनैव त्वमादत्स्वेति चातुर्यात् तामुदास । परिरम्भ इति "रभेरशब्लिटो" रिति नुमागमः । अत्यर्थं लुभ्यतीति लोलुभः, लुभेर्यङन्तात्पचाद्यच् ॥ ४९ ॥

**इदमिदमिति भूरुहां प्रसूनैर्मुहुरभिलोभयता पुरःपुरोऽन्या ।**
**अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः ॥ ५० ॥**

काचिद्योषा पत्या अनुरहसमनायि गहनं नीता । कीदृशेन पुरःपुरोऽग्रेऽग्रे यानि भूरुहां वृक्षाणां पुष्पाणि तैर्मुहुरभिलोभयता लोभमुत्पादयता । कथमिदमिदमिति, इदं रम्यमिदं रम्यमेतद् गृह्यतामिति पुरः पुरस्ता[1]वक्तानि दर्श-

---

१ 'दृवृ' क. ख. पाठः ।

यति यावद्रहः । रिरंसया रहो व्याजेन स्वायत्ताप्यसौ नीतेत्यत्र विस्मयमानोऽर्थान्तरन्यासमाह—त्वरयति रन्तुमहो जनं मनोभूरिति । रह एवानुरहसम् । वाक्यं त्विदं रम्यमिदं रम्यमेतदादीयतामिति, तथा सर्पः सर्प आगतः पलायस्वेत इति ॥ ५० ॥

**विजनमिति बलादमुं गृहीत्वा क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या ।**
**अभिपतितुमना लघुत्वभीतेरभवदमुश्वति वल्लभेऽतिगुर्वी ॥ ५१ ॥**

कयाचिन्मानिन्या विजनमित्यनुरहसमिदं न कश्चिदत्र लक्षयते इति स्वयमेव हठात् कान्तोऽवष्टब्धः, अनन्तरं च तत्क्षणं गृहीत्वा वीक्षते, यावत्सपत्नी समीपे स्थिता ततः सा लाघवभयादपसर्तुमैच्छत् । एवं च बुद्ध्वा ततः सा जिगमिषन्ती प्रेयसा न मुक्ता, अत एवातिगुर्वी गरीयसी गौरवास्पदमप्यभूत्, प्रेमातिशयदर्शनादितिश्लोकार्थः । वीक्षणापेक्षं ग्रहणस्य पूर्वकालत्वं वीक्षणस्याप्यभिपतनापेक्षम् । प्रियं स्वयं गृहीत्वा विपक्षमदर्शत्[3], दृष्ट्वा वाभिपतितुमैषीदित्यर्थः ॥ ५१ ॥

**अधिरजनि जगाम धाम तस्याः प्रियतमयेति रुषा स्रजावबद्धः ।**
**पदमपि चलितुं युवा न सेहे किमिव न शक्तिहरं ससाध्वसानाम् ५२**

कश्चिद्युवा पदमपि चलितुं न सेहे न सोढवान् । यदि तरुणस्तत्कथं नाशकदित्याह—प्रियतमया यतो रुषा स्रजावबद्धः । कुतः कान्तया क्रोधेन मालया निश्चलीकृत इत्याह—तस्याः सपत्न्या अधिरजनि निशायां धाम वासवेश्मायं जगाम गतवानित्यतो हेतोः । किं वैतच्चित्रं तत्तरुणोऽप्यबलयापि स्रगवबद्धो यातुं न शक्तः, यतः सभयानां किमिव न शक्तिहरं, नास्त्येव तद्वस्तु यत्तेषां सामर्थ्यनाशकं न भवतीत्यर्थः । स च सभयः परोक्षं विपक्षगमनात् । शक्तिं हरतीति शक्तिहरः "हरतेरनुद्यमनेऽच्" ॥ ५२ ॥

**न खलु वयममुष्य दानयोग्यः पिबति च पाति च यासकौ रहस्त्वाम् ।**
**व्रज विटपममुं ददस्व तस्यै भवतु यतः सदृशोश्चिराय योगः ॥ ५३ ॥**

**तव कितव किमाहृतैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।**
**ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५४ ॥**

---

१ 'नी' क. ख. । २ 'ध्वं भा' क. । ३ 'र्शयत्' क. ख. ग. पाठः

**मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेताम् ।**
**वसतिमुपगतेन धाम्नि तस्याः शठ कलिरेष[1] महांस्त्वयाद्य दत्तः ।५५।**
**इति गदितवती रुषा जघान स्फुरितमनोरमपद्मकेसरेण ।**
**श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥५६॥**

(कलापकम्) ।

काचिन्मानिनी क्रुधा वल्लभं समकालमेव नीलोत्पलेन कटाक्षेण चाताडयत् । कीदृशेन नीलाब्जेन, स्फुरितानि चटुलानि मनोरमाणि हृद्यानि पद्मतुल्यानि केसराणि किञ्जल्कानि यस्य, तथा श्रवणे कर्णे नियमितेन ग्रथितेन कृतेन । चक्षुषा कीदृशेन, स्फुरितानि मनोरमाणि पद्माणि पत्राण्येव केसराणि यस्य, तथा श्रवणनियमितेन श्रोत्रे[2] निवर्तितप्रसरेण, कर्णान्तं यावत्प्रसृतेनेत्यर्थः । कीदृशी नायिका इत्येवं रुषा गदितवती ब्रुवाणा । किमित्याह–न खल्वित्यादि । तेन हि तस्यै संमुखीकरणार्थं विटपपल्लवकलिका वितीर्णा, अतः सा वक्ति ॥ –हे कितव धूर्त अस्य विटपस्य शाखाविशेषस्य यस्माद्वयं न दानयोग्या न पात्रमतस्तस्यै एवैनं देहि, या असकौ या काचिदज्ञायमाना कुत्सिता वा त्वां विटं धूर्तं रह एकान्ते पिबत्युपभुङ्क्ते पाति च नायिकान्तरगमनाद्रक्षति च । यतः सदृशोर्योगः सम्बन्धश्चिरेण भवतु । विटपशब्दो हि पिबतेः पातेर्वा साधुः । विटं पिबति पाति वा विटपः "आतोऽनुपसर्गे कः" । एवं च विटपस्य विटपयैव योगो योग्यः । विटपा च सैव यतस्त्वां विटं पिबति पाति च, तस्मात् नास्माकमसावनुरूपः । गच्छामुं तस्यै देहि ॥ –यान्यन्यानि तरुपल्लवानि पुष्पाणि च कर्णावतंसार्थं त्वं ददासि, किमेतैरस्माकं वृथैव निरर्थकमेव तवाहृतैर्दत्तैः, यतस्त्वदवमानैर्लोकज्ञातैः कर्णयुगलमस्माकं चिरपरिपूरितमत्यर्थं निर्भरमेव । कर्णपूरौ ह्येतदर्थं क्रियेते कर्णौ मा शून्यौ भूतामिति, यदा च भवदपराधैस्तौ चिरं पूरितौ तदा निरर्थकमेवै[3]तद्दानम् ॥ –तथैतां कलिकां कोरकं किमर्थं त्वं मे शठ ददासि, यतस्तस्या अज्ञायमानाया धाम्नि गेहे वसतिमुपगतेन स्थानं बध्नता त्वया महानेव कलिर्वैरं दत्तः । तत्रैवाजस्रं वासात् खलु नौ कुतः प्रीतिः एवं च यस्य महान् कलिर्दत्तस्तस्य किं स्वल्पया कलिकया प्रयोजनम् । कीदृशीं कलिकाम्, अलिनादैर्भृङ्गरुतैर्मुहुर्भूयोभूय उपहसितामिव मामुपहासितुं प्रवृत्ता-

---

१ 'व' ग. पाठः । २ 'त्रेण' ख. ग. पाठः । ३ 'मेव' क. ख. पाठः ।

मिव यथा, किमियं वराकी विडम्ब्यते इति । यदा किल कश्चित् कंचिद्विताडयति तदान्येऽप्युपहसन्ति । उपहसितामिति कर्तरि निष्ठा । इत्थं क्रोधादुक्त्वा युगपन्नीलोत्पलेन चक्षुषा च तं जघान ॥ अमुष्येत्यदसो ङसि त्यदादित्वम् "अदसोऽसेर्दादु दो मः" । "पूर्वत्रासिद्ध"मिति ङसः स्य, षत्वम् । अज्ञाता कुत्सिता वासावसकौ "अव्ययसर्वनाम्नामकच् प्राक् टेः" । तवेति कर्तरि षष्ठी। ददस्वेति "दद दाने" इत्यस्य । न इति चतुर्थी "युष्मदस्मदोर्बहुवचनस्य वस्नसौ"। वसतिर्वासोऽवस्थानम् । प्रत्यक्षे प्रियंवदः परोक्षे विप्रियकारी शठः । चतुर्भिश्चङ्कलकमिदं कलापकं वा । उक्तं च—"द्व्यादिजात्येकवाक्यत्वे सन्दानितविशेषकौ । कलापकश्चङ्कलं वा कुलकानि क्रमाद्दिशेत्" इति ॥ ५३ — ५६ ॥

**विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन ।**
**तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ ५७ ॥**

कान्ते कान्तायाः पौष्पं रजो वक्त्रवातैर्नयनादपास्यति सति तत्सपत्न्या नेत्रयुग्ममत्यर्थं कोपरेणु[1]भिरापुपूरे व्यानशे, इति पर्यायाख्योऽलङ्कारः । आपुपूरे इति कर्मणि लकारः ॥ ५७ ॥

**स्फुटमिदमभिचारमन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम् ।**
**वरतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥ ५८ ॥**

अङ्गनानां मानिनीनां प्रतियुवतेः सम्बन्धि यदभिधानं सपत्नीनाम्ना यदाह्वानमिदं स्फुटं निश्चितमभिचारमन्त्र एव उच्चाटनवेदवाक्य[2]मेव, यथाभिचारमन्त्रेण विनश्यति तथा नूनं गोत्रस्खलितेनेत्यर्थः । कथं जानीषे इत्याह—यत् सुगात्री भर्त्रामुना सपत्नीनाम्नोपहूयाकार्य मृदुनापि कुसुमेन ताडिता सती अमूर्च्छत् मुमोह । यदि चे[3]तन्न स्यात् तत्कथं विपक्षाभिधानाह्वानपूर्वकं पुष्पताडनमात्रं मूर्छायै भवेत् । तस्मात् स्फुटं कामिनीनां प्रतियुवतेरभिधानमभिचारमन्त्र एव । अभिचारो हिंसा, तत्प्रधानो मन्त्रोऽभिचारमन्त्रः । अमुनेति प्रतियुवत्यभिधाननिर्देशः ॥ ५८ ॥

**समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः ।**
**व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ।५९।**

---

१ 'रजो, ख. ग. पाठः । २ 'क्येन' क. पाठः । ३ 'चेत्त' पाठः ।

कस्याश्चित् कृशोदर्याः कान्तेन कर्णे सकामं कुसुमे कर्णपूरीकृते सपत्न्याः कनककुण्डलाद्यलंकरणं लाघवं गच्छदपि भारो बभूव। सपत्नीसौभाग्यदर्शनाल्लघुत्वं बभूव। अगौरवादेव च भारत्वम्। हिरण्यस्य विकारो हिरण्मयम्। यलोपो निपात्यते ॥ ५६ ॥

**अवजितममुना तवाहमक्ष्णा रुचिरतयेत्यवनम्य लज्जयेव।**
**श्रवणकुवलयं विलासवत्या भ्रमररुतैरुपकर्णमाचचक्षे ॥ ६० ॥**

कस्याश्चिद्विलासिन्याः कर्णसमीपे कर्णोत्पलं व्रीडयेवावनतं भूत्वा अलिक्वाणैरित्येवाचचक्षे आख्यदिवेति समस्तमेव वाक्यमुत्प्रेक्षारूपम्। तस्यास्त्वलिरुतमेव निमित्तम्। किमाचख्यावित्याह—अमुना त्वदीयेन चक्षुषा कान्तिमत्तयाहमवजितं पराभूतमिति। यः किल जीयते स नम्रो भूत्वा मन्दं वदति। अवजितमिति कर्मणि निष्ठा, नपुंसकैकवचनम्, कुवलयशब्दस्य नपुंसकत्वात्। आचचक्षे इति "वा लिटि" ॥ ६० ॥

**अवचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यमालिनीषु।**
**पदमुपदधिरे कुलान्यलीनां न परिचयो मलिनात्मनां प्रधानम् ॥६१॥**

अलीनां कुलानि भृङ्गपूगा लतास्त्यक्त्वा योषास्वास्पदमुपदधिरे आस्थां बबन्धुः, यतस्ता अव[1]चितपुष्पाः, तासु मनोज्ञशेखरधारिणीषु। किं वैतच्चित्रं यतो मलिनात्मनां परिचयोऽकृतप्रज्ञानां संस्तवो न प्रधानम्। यतो हि स्वार्थसिद्धिस्तत्र तेषां रतिः, अलयश्च मलिनात्मानः कार्ष्ण्यात्। माल्यं मलन्ते धारयन्तीति माल्यमालिन्यः। उपदधिरे इति कर्तरि लकारः। प्रधानशब्द आविष्टलिङ्गः ॥ ६१ ॥

**श्लथशिरसिजपाशपातभारादिव नितरां नतिमद्भिरंसभागैः।**
**मुकुलितनयनैर्मुखारविन्दैर्घनमहतामिव पक्ष्मणां भरेण ॥६२॥**
**अधिकमरुणिमानमुद्वहद्भिर्विलसदशीतमयूखरश्मिजालैः।**
**परिचितपरिचुम्बनाभियोगादपगतकुङ्कुमरेणुभिः कपोलैः ॥ ६३ ॥**
**अवसितललितक्रियेण बाह्वोर्ललिततरेण तनीयसा युगेन।**
**सरसकिसलयानुरञ्जितैर्वा करकमलैः पुनरुक्तरक्तभाभिः ॥ ६४ ॥**

---

[1] 'उप' क. ख. पाठः।

**स्मरसरसमुरःस्थलेन पत्युर्विनिमयसङ्क्रमिताङ्गरागरागैः ।**
**भृशमतिशयखेदसम्पदेव स्तनयुगलैरितरेतरं निषण्णैः ॥ ६५ ॥**
**अनतकुचभरानतेन भूयः क्लमजनितानतिना शरीरकेण ।**
**अनुचितगतिसादनिःसहत्वं कलभकरोरुभिरूरुभिर्दधानैः ॥ ६६ ॥**
**अपहृतनवयावकैश्चिराय क्षितिगमनेन पुनर्वितीर्णरागैः ।**
**कथमपि चरणाम्बुजैश्चलद्भिर्भृशविनिवेशवशात् परस्परस्य ॥ ६७ ॥**
**मुहुरिति वनविभ्रमाभिषङ्गादतमि तदा नितरां नितम्बिनीभिः ।**
**मृदुतरतनवोऽलसाः प्रकृत्या चिरमपि ताः किमुत प्रयासभाजः । ६८ ।**

(सप्तभिः कुलकम्) ।

तदा पुष्पोच्चये प्रवृत्ते नितम्बिनीभिर्वरारोहाभिर्नितरां सुष्ठु इतीत्थम् अतमि तान्तं खिन्नमिति भावे लकारः । "नोदात्तोपदेशस्य मान्तस्ये"ति वृद्धिनिषेधः । कस्मादतमि—भणति, मुहुः पुनःपुनर्ये वनविभ्रमा विशेषेण विविधानि वा भ्रमणानि तेष्वभिषङ्गः सक्तिस्तैर्वा योऽभिषङ्गोऽभिभवस्ततोर्हेतोः । कीदृशीभिस्ताभिरिति तान्तानां स्वरूपमाह—अंसभागैः स्कन्धदेशैरुपलक्षिताभिः । कीदृग्भिः प्रकृत्यात्यन्तनम्रैः । उत्प्रेक्ष्यते—शिथिलकेशकलापस्रंसनभरादिव, यो हि भाराक्रान्तः सोऽवश्यमेव नमति । तथा वक्त्रपद्मैरुपलक्षिताभिः । कीदृशैः स्थगितनेत्रैः । उत्प्रेक्ष्यते—घनमहतां निबिडदीर्घाणां रोम्णां[1] भरेणेव निमीलितलोचनैः ॥—तथा गण्डस्थलैरुपलक्षिताभिः । कीदृग्भिः कान्तचुम्बनासक्त्या नष्टकुङ्कुमैरप्यत्यर्थं रक्तत्वं दधानैः । कुङ्कुमं चेदपास्तं कथमविरललोहितैरित्याह—स्फुरितोष्णक[2]रमयूखजालैः ॥—तथा भुजयुगलेनोपलक्षिताभिः । कीदृशेन कृशतरेण तथा श्रमवशान्निवृत्तविलासेमापि स्वभावाद्रमणीयेन, तथा पाणिपद्मैरुपलक्षिताभिः । कीदृशैः पुनरुक्तरक्तभाभिर्द्विगुणितलोहितच्छविभिः । उत्प्रेक्ष्यते—लोहितपल्लवरक्तीकृतैरिव । वा इवार्थे ॥ —तथा कुचयुग्मैरुपलक्षिताभिः । किंविधैः पत्युरुरःस्थलेन कान्तवक्षःस्थलेन कर्त्रा विनिमयेन परिवर्तनेन सङ्क्रमितः प्रवेशितः प्रतिबिम्बितोऽङ्गरागरागः समालभ[3]नलौहित्यं येषां तैः । वक्षसा कुचौ रञ्जितौ ताभ्यामपि तत् । कथं सङ्क्रमितः, स्मरेण कामेन सरसं सरागं सप्रीति, तथेतरेतरमन्योन्यस्य

१ 'म्णामिव' ग. पाठः । २ 'किरण' ग. पाठः । ३ 'म्भ' ग. पाठः ।

भृशं निषक्तैर्लग्नैः, परस्परं पीडयद्भिरित्यर्थः । उत्प्रेक्ष्यते-अतिशयेन सुतरां या खेदसम्पच्छ्रमबाहुल्यं तयेव निषक्तैः । यौ ह्यतिभारार्तौ तावन्योन्यं निषक्तौ भवतः । अतिगमेति पाठान्तरम्, अतिशयगमनेनेत्यर्थः ॥-तथा शरीरकेण कृशेन वपुषा उपलक्षिताभिः । कीदृशेन उच्चमुखस्तनभरनम्रेण, तथा भूयः पुनरपि क्रमजनितानतिना खेदोत्पादितप्रह्वत्वेन । तथोरुभिरुपलक्षिताभिः । कीदृशैः कलभकरोरुभिर्हस्तिहस्तस्थूलैः, तथानभ्यस्तगमनावसादेन निःसहत्वमसामर्थ्ये स्तब्धत्वमुद्वहद्भिः॥ -तथा पादाब्जैरुपलक्षिताभिः । कीदृशैश्चिरं क्षितिगमनेन नष्टसरसालक्तकैरप्युर्वीभ्रमणेनैव भूयोऽपि दत्तलौहित्यैः, तथा कथमपि कथं कथञ्चित् भृशमत्यर्थं परस्परस्यान्योन्यस्य यो विनिवेशोऽवस्थानं भरसमर्पणं तद्वशात् तत्सामर्थ्याच्चलद्भिर्गच्छद्भिः, पादे पादं विधाय कथमपि यान्तीभिरित्यर्थः ॥ -इति वनविभ्रमाभिषङ्गात् ताभिस्तदा अतामि, किं वाश्चर्यं यतस्ताः स्वभावेन सुकुमाराङ्ग्यो मन्थराश्च, किं पुनश्चिरप्रयासभाजो गमनखिन्नाः, अतोऽवश्यं तासां खेदो युक्तः । सप्तभिः कुलकम् ॥ ६२—६८ ॥

**प्रथममलघुमौक्तिकाभमासीत्**
**श्रमजलमुज्ज्वलगण्डमण्डलेषु ।**
**कठिनकुचतटाग्रपाति पश्चा-**
**दथ शतशर्करतां जगाम तासाम् ॥ ६९ ॥**

तासां च श्रान्तानामुज्ज्वलगण्डमण्डलेषु रक्तकपोलफलकेषु यत् स्वेदवारि तत्पूर्वं स्थूलमुक्तामणिनिभमभूत्, अनन्तरं शतखण्डत्वं ययौ, यतः कर्कशकुचतटीप्रान्ते पतितम् । यो हि श्वभ्रादश्ममध्ये जलनिकरः पतितः सोऽवश्यमेव शतखण्डत्वं याति । शर्कराः कणिकाः ॥ ६९ ॥

**विपुलकमपि यौवनोद्धतानां**
**घनपुलकोदयकोमलं चकाशे ।**
**परिमलितमपि प्रियैः प्रकामं**
**कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ ७० ॥**

तरुणीनां स्तनयुग्मं रेजे । कीदृशं विपुलमेव विपुलकं महाभोगं, तथा घनेन संहतेन पुलकोद्गमेन रोमाञ्चो[1]दयेन पेशलं मनोज्ञं, तथा प्रियैः परिमलित-

१ 'द्रुमनेन' क. पाठः ।

मुपमृदितं परिभुक्तमत एवात्यर्थमुज्ज्वलं सच्छायम् । विरुद्धं चैतत् । यत्किल विपुलकं विगतपुलकं तत्कथं पुलकोदयकोमलं भवेत्, अथैवंविधं तर्हि न विपुलकम् । तथा यत्परिमलितं मृदितं परितो वा सञ्जातमलं तत् कथमुज्ज्वलं स्यात्, अथ चेदुज्ज्वलं तत्कथं परिमलितमिति विरोधः । कीदृशीनां कामिनीनां यौवनोद्धतानां तारुण्यगर्वितानाम् ॥ ७० ॥

**अविरतकुसुमावचायखेदा-**
**न्निहितभुजालतयैकयोपकण्ठम् ।**
**विपुलतरनिरन्तरावमग्न[1]-**
**स्तनपिहितप्रियवक्षसा ललम्बे ॥ ७१ ॥**

कयाचित् कामिन्या लम्बितं संनिधानात् प्रियकण्ठ एव । कीदृश्या उपकण्ठं कान्तकण्ठे निक्षिप्तबाहुवल्ल्या, कुतः पुष्पावचायखेदात् । तथा विपुलतरौ महानिवेशौ निरन्तरौ संहतौ अवमग्नौ कान्तोरसि ब्रुडितौ यौ स्तनौ ताभ्यामाच्छादितं वल्लभवक्षो यया । काचिच्छ्रमवशात् स्तनोपपीडं कान्तस्य कण्ठे लग्नेति वाक्यार्थः । अवचाय इति "हस्तादाने चेरस्तेये" इति घञ् । ललम्बे इति भावे लिट् ॥ ७१ ॥

**अभिमतमभितः कृताङ्गभङ्गा**
**कुचयुगमुन्नतिवित्तमुन्नमय्य ।**
**तनुरभिलषितं श्रमच्छलेन**
**व्यवृणुत वेल्लितबाहुवल्लरीका ॥ ७२ ॥**

काचित् तनुस्तन्वी श्रमव्याजेन चिकीर्षितं व्यवृणुत व्याचचक्षे । यतः प्रियसंमुखं विहितगात्रविवर्ता, तथा कुञ्चितभुजलतिका । किं कृत्वा स्थिता, उन्नत्या उच्चमुखत्वेन प्रतीतमुन्नतिवित्तं स्तनयुगमुन्नमय्य उत्क्षिप्य, दर्शयित्वा इत्यर्थः । श्रमवशात् खल्वेवंविधाश्चेष्टा भवन्ति प्रियाभिलाषेणापि । त[2]तश्च श्रमव्याजं विधाय स्वाभिप्रायमेव व्याचख्यौ ॥ ७२ ॥

**हिमलवसदृशः श्रमोदबिन्दू-**
**नपनयता किल नूतनोढवध्वाः ।**

---

१ 'लग्न' क. ख. पाठः । २ 'अ' ग. पाठः ।

कुचकलशकिशोरकौ कथश्चित्
तरलतया तरुणेन पस्पृशाते ॥ ७३ ॥

केनचिद्यूना नवपरिणीताङ्गनायाः पयोधरौ पस्पृशाते स्पृष्टौ पीडितावित्यर्थः । किं निर्व्याजमेव नेत्याह—तुषारकणनिभाः स्वेदजलविप्रुषः किलोत्पुंसयता, घर्मोदकलवोत्पुंसनव्याजेनेत्यर्थः । किलेत्यलीके[1] । तत्त्वतः कुचजिघृक्षयैवेत्यर्थः । कथं स्पृष्टौ[2] कथंचित् कथमपि । कुतस्तरलतया कम्पवशात् कुचयोः । सा हि वोढ्रा बलात् स्पृष्टा वेपते, तरलत्वादेव च कुचकलशयोः किशोरकावुपमानम् । अन्योऽपि यस्तरुणः स तरलं किशोरकं कथश्चिदाक्रामति । किशोरकस्तरुणोऽश्वः । कुचौ पीनत्वाद्गौरवत्वाच्च कलशाविव । यदि वा कुचौ कलशाविव किशोरकाविव चेति विगृह्य "मयूरव्यंसकादयश्चे" ति समासः । एवमन्यत्र । उदबिन्दुरिति "मन्थौदनसक्तुबिन्दुष्वि" त्युदकस्योदादेशः । पस्पृशाते इति कर्मणि लकारः । पुष्पिताग्रा वृत्तम् ॥ ७३ ॥

गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः
स्थित्वा नाभौ वलिषु वलयन् गाङ्गमम्भोविलासम् ।
प्राप्योरुत्वं स्तनतटभुवि प्लावयन्रोमकूपान्
स्वेदापूरो युवतिसरितां व्याप गण्डस्थलानि ॥ ७४ ॥

नारीनदीनां घर्मोदकौघः कपोलतलानि व्यानशे । कीदृशोऽसौ श्रोणीतटे उद्रेकं बाहुल्यं गत्वा प्राप्य व्याप्तोदरभागः, ततो नाभौ स्थित्वा वलिषु त्रैपथगमुदकविभ्रमं वलयन् अनुकुर्वन्, त्रिवलिप्रदेशे मार्गत्रयेण गच्छन्नित्यर्थः । ततः कुचस्थलदेशे महत्त्वमासाद्य रोमकूपाँल्लोमरन्ध्राणि प्लावयन् पूरयन् । योऽपि सरित्पूरः सोऽपि प्रथमं पुलिनानि व्याप्नोति ततः कूपादीनि । स्वेदस्तत्र श्रमवशात् कान्तकरसम्पर्काच्च । मन्दाक्रान्ता वृत्तम् । तल्लक्षणं तु "मन्दाक्रान्ता मभनततगा गः समुद्रर्तुलोकै" रिति ॥ ७४ ॥

प्रियकरपरिमार्गादङ्गनानां यदाभूत्
पुनरधिकतरैव स्वेदतोयोदयश्रीः ।
अथ वपुरभिषेक्तुं तास्तदाम्भोभिरीषु-
र्वनविहरणखेदम्लानमम्लानशोभाः ॥ ७५ ॥

---

1 'ककरणे' क. पाठः । २ 'पस्पृशाते, ग. पाठः ।

इति माघभट्टविरचिते शिशुपालवधकाव्ये कुसुमक्रीडावर्णनं नाम सप्तमः सर्गः ॥ ७ ॥

अथानन्तरं वनितास्तोयैः शरीरं क्षालयितुमभिलेषुरित्युत्तरसर्गार्थसूचनम्। कदेत्याह—यदा तासामङ्गनानां 'हिमलवसदृशः श्रमोदबिन्दून्' इत्युक्ता[1], प्रियकरपरिमार्गात् कान्तहस्तोन्पुंसनाद्भूयोऽप्यधिकैव 'गत्वोद्रेक'मिति निर्दिष्टा स्वेदतोयोदयश्रीः घर्मोदकाविर्भावलक्ष्मीर्बभूव । यद्यपि तासां स्वेदतोयं कान्ताः करेणापनयन्ति तथापि मन्मथवशात् पुनर्द्विगुणितमेव तदभूदित्यर्थः । संस्पर्शो वा परिमार्गः । कान्तकरस्पर्शात् घर्मतोयोदयस्य श्रीः शोभा यदा अधिकैवाभूत् इत्यर्थः, ता ह्येवमचिन्तयन्–यदि तोयोदयमात्रादियमस्माकमङ्गे कान्तिः, किमिति सरिति बहुना तोयेन ना[2]म न स्यादिति तदेव वपुरद्भिरभिषेक्तुमीषुरित्युत्प्रेक्षा। कीदृशं वपुः काननकेलिश्रमनिःसहमिति स्नाने कारणान्तरम् । ताः कीदृश्यः, अम्लानशोभा अनष्टकान्तय इति विरोधाभासः । परिमार्जनं परिमार्गः, भावे घञ् । "मृजेर्वृद्धि"रिति वृद्धिः । उत्प्रेक्षाप्रायोऽलङ्कारः । मालिनी वृत्तमिति भद्रम् ॥ ७५ ॥

इति श्रीमहामहोपाध्यायाचार्यवर्य्य–आनन्ददेवायनि–वल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां कुसुमक्रीडावर्णनं सप्तमः सर्गः ॥ ७ ॥

---

१ 'क्रान्' ग. पाठः । २ 'न स्नाम इति' वा. पाठः ।

अथ

# शिशुपालवधकाव्ये

## अष्टमः सर्गः ।



**आयासादलघुतर[1]स्तनैः स्तनद्भिस्तान्तानामविशदलोचनारविन्दैः ।**
**अभ्यम्भः कथमपि योषितां समूहैस्तैरुर्वीनिमितचलत्पदं प्रचेले॥१॥**

अथ तैर्माधवयोषितां समूहैः स्त्रैणैरभ्यम्भस्तोयाभिमुखं कथमपि प्रचेले गतमिति भावे लकारः । कृच्छ्रूचलने कारणमाह–तान्तानां खिन्नानाम् । कुत इत्याह–आयासात् कुसुमावच[2]यश्रमात् । तथा अलघुतरस्तनैर्महानिवेशपयोधरैरत एव स्तनद्भिः कणद्भिस्तथा विशदलोचनारविन्दैः अलसनयननीलोत्पलैः । कथं प्रचेले, उर्व्यां भुवि निमितानि क्षिप्तानि चलन्ति स्खलन्ति पदानि क्रमा यत्र, स्खलद्गति गच्छद्भि[3]रित्यर्थः । प्रहर्षिणी वृत्तम् । "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणी स्यात्" ॥ १ ॥

**यान्तीनां सममसितभ्रुवां नतत्वादंसानां महति नितान्तमन्तरेऽपि**
**संसक्तैर्विपुलतया मिथो नितम्बैः संबाधं बृहदपि तद् बभूव वर्त्म॥२॥**

असितभ्रुवां नायिकानां समं यान्तीनां गच्छन्तीनां बृहदपि तद्वर्त्म संबाधं संकटं बभूव, नितान्तमत्यर्थं महत्यन्तरेऽपि सति । कुतो महद्व्यवधानमित्याह–अंसानां नतत्वादिति । तासां हि श्र[4]मवशात् स्कन्धा नताः । यदुक्तम् "श्लथशिरसिजे" त्यादि (७ सर्ग ६२ श्लो०) । यदि नितान्तमन्तरं विस्तीर्णश्च पन्थास्तत् कथं सम्बाधत्वमित्याह–नितम्बैरारोहैर्मिथोऽन्योन्यं संसक्तैः संश्लिष्टैः, कुतो विपुलतया विस्तीर्णत्वात् । यद्यपि ह्युपरिभागे न रन्ध्रसद्भावस्तथाप्यधोभागे नितम्बा मिथः संश्लिष्टाः, अतो बृहदपि वर्त्म सम्बाधं बभूव ॥ २ ॥

**नीरन्ध्रद्रुमशिशिरां भुवं भजन्तीः साशङ्कं मुहुरिव कौतुकात् करैस्ताः**
**पस्पर्श क्षणमनिलाकुलीकृतानां शाखानामतुहिनरश्मिरन्तरालैः ॥३॥**

---

१ 'रैः' ख. पाठः । २ 'चा' क. ख. पाठः । ३ 'गच्छन्ती' क. ख. पाठः । ४ 'श्र' क. ख. पाठः ।

ता नारीः संहततरुत्वात् शीतलामुर्वीं सेवमाना वातचालितानां शाखानां विवरैः सूर्यः किरणैर्मुहुर्मुहुः पस्पर्श अच्छुपत् । अतश्च शाखाविवरस्पर्शादुत्प्रेक्ष्यते–कौतुकात् कुतूहलात् साशङ्कं सभयमिवास्प्राक्षीत् । यः किलोद्यानस्थान् परदारान् करैः स्प्रष्टुमिच्छति स कस्मिंश्चिल्लतागहने निलीय मुहुर्दर्शनं भूयश्चादर्शनं याति, ते च भगवद्दाराः, अतश्चाशङ्का युक्ता ॥ ३ ॥

**एकस्यास्तपनकरैः करालिताया बिभ्राणः सपदि सितोष्णवारणत्वम् सेवायै वदनसरोजनिर्जितश्रीरागत्य प्रियमिव चन्द्रमाश्चकार ॥ ४ ॥**

इह तापनिवारणार्थं महतां छत्रं धार्यते[1], तत्र कविरूहते–एकस्याः कस्याश्चिद्वनिताया सितोष्णवारणत्वं बिभ्राणो धवलातपत्ररूपत्वमुद्वहन् मृगाङ्कः सेवार्थमागत्य प्रियमिव चकार । सितातपत्रव्याजेन शशी अत एवातपमरुद्धेत्यर्थः । किमिति सेवां व्यधत्तेत्याह–वदनसरोजनिर्जितश्रीरिति । यश्च येन जितः सोऽवश्यमेव तं सेवते । कदाचिच्छत्रं तस्यानभिमतं स्यादित्याह–तपनकरैः अर्ककिरणैः करालिताया भास्वरायाः सन्तप्तायाः इत्यर्थः । सपदि तापादनन्तरमेव । उष्णं वार्यतेऽनेनेत्युष्णवारणं छत्रम् ॥ ४ ॥

**स्वं रागादुपरि वितन्वतोत्तरीयं कान्तेन प्रतिपथवारितातपायाः । सच्छत्रादपरविलासिनीसमूहाच्छायासीदधिकतरा तदापरस्याः ५**

अन्यस्या नायिकायास्तदा अपरविलासिनीसमूहात् सपत्नीपूगसकाशादत्यर्थं नितरां छाया आतपाभावः शोभा चासीत् । कदाचिच्छत्राणि तस्य न स्युः, नेत्याह–सच्छत्रादिति । सन्ति रम्याणि छत्राणि यस्यासौ सच्छत्रस्तस्मात् । कदाचित्तस्या बृहच्छत्रं[2] स्यादित्याह–प्रतिपथं मार्गे मार्गे प्रेयसा स्वमात्मीयं वासः प्रीत्या शिरसि धारयता वारितातपाया अपास्तरविप्रभायाः, वस्त्रमात्रातपत्राया इत्यर्थः । अतश्च[3] सपत्नीवृन्देन स्वयं सौभाग्यदर्शनात् महती च्छाया कान्तिर्बभूव । स हि विभवो यो विपक्षेण दृश्यते ॥ ५ ॥

**संस्पर्शप्रभवसुखोपचीयमाने सर्वाङ्गे करतललग्नवल्लभायाः । कौशेयं व्रजदपि गाढतामजस्रं सस्रंसे विगलितनीवि नीरजाक्ष्याः ।६।**

कस्याश्चिदुत्पलाक्ष्याः कौशेयं जघनाम्बरं सस्रंसे स्रस्तं भ्रष्टम् । कदाचिच्छिथिलं स्यादित्याह–नितरां गाढतां तीव्रतां व्रजदपि । कदा सस्रंसे इति गा-

[1] 'ध्रियते' क. पांठः । [2] 'हत्तरं' ग. पाठः । [3] 'एव' ग. पाठः ।

ढत्वे कारणमाह–संस्पर्शप्रभवं यत् सुखमुपजोषं तेनोपचीयमाने उच्छ्वसति अशेषे वपुषि सति । किमीये स्पर्शे सतीत्याह–करतललग्नवल्लभाया इति । कथं तर्हि स्रस्तमित्याह–विकसितनीवि शिथि[1]लोच्चयम्, अत्र चाङ्गोच्छ्वास एव कारणम् । कौशेयमिति "कोशाड्ढक्" । सस्रंसे इति कर्तरि लकारः । 'नीविराग्रथनं नार्या जघनस्थस्य वाससः' ॥ ६ ॥

**आयान्तीरलसमवेक्ष्य विस्मयिन्यस्तास्तन्वीर्न विदधिरे गतानि हंस्यः**
**बुद्ध्वा वा जितमपरेण काममाविष्कुर्वीत स्वगुणमपत्रपः क एव ॥७॥**

ताः कृशाङ्गीः सविलासं गच्छन्तीर्दृष्ट्वा हंस्यो गतानि न विदधिरे नायुः, यतो विस्मयिन्यस्तद्विलासगत्या विस्मेराः, तासां हि सदैवाभिमानोऽस्मत्परो नान्यः सलीलं याति, यदा तु स्वगतिं ताभिर्विशेषितामविदुस्तदा निरुत्साहा अभवन्नित्यर्थः । किं वात्र चित्रं, यतोऽन्येन स्वगुणमत्यर्थमभिभूतं ज्ञात्वा क एव[2] निर्लज्जस्तमाविष्कुर्वीत प्रकटयेत् । स्वगुणाभिभवं विदित्वा संवरणमेव तस्य न्याय्यमित्यर्थः । वाशब्दः पूर्वोक्तमाक्षिपति । एवशब्दः सम्भावनायाम् । न सम्भावयामि यो दर्शयेदित्यर्थः ॥ ७ ॥

**श्रीमद्भिर्जितपुलिनानि माधवीनामारोहैर्निबिडबृहन्नितम्बबिम्बैः ।**
**पाषाणस्खलनविलोलमाशु नूनं वैलक्ष्याद्युरवरोधनानि सिन्धोः ।८।**

इह नदीनां स्वभावोऽयं यत् क्वचिद्वेगगमनं क्वचिच्च स्खलनं, तत्र कविरूहते–सिन्धोरवरोधनानि समुद्रमहिष्यो नद्यो नूनं निश्चितं वैलक्ष्यात् लज्जया आशु तूर्णं पाषाणस्खलनेन च विलोलमाकुलं जग्मुः । वैलक्ष्ये कारणमाह–यतो वृष्णिवनिताभिरारोहैः श्रोणीभिः जितपुलिनानि परिभूतसैकतानि । माधवानां स्त्रियो माधव्यः । अयुरिति यातेर्लङ् । "लङः शाकटायनस्य" ॥ ८ ॥

**मुक्ताभिः सलिलरयास्तशुक्तिपेशीमुक्ताभिः कृतरुचि सैकतं नदीनाम् ।**
**स्त्रीलोकः परिकलयांचकार तुल्यं पल्यङ्कैर्विगलि[3]तहारचारुभिः स्वैः९**

नारीजनः सरित्तटं सुरतसंप्रयोगवशात् छिन्नमुक्तामणिरम्यैर्निजशयनैः सदृशं परिकलयांचकाराबुद्ध, यतो मुक्ताभिर्मौक्तिकैर्जनितकान्ति । कीदृशीभिस्तोयवेगेन क्षिप्ताभिः शुक्तिपेशीभिः शुक्तिखण्डैर्मुक्ताभिरुद्वान्ताभिः । शुक्तिर्जलचरवि-

---

१ 'लितो' ग. पाठः । २ 'इव' क. ख. पाठः । ३ 'रचि' क. पाठः ।

शेषः । पेशी शकलम् । पल्यङ्कः शय्या । "परेश्च घाङ्कयो" रिति लत्वम् ॥ ९ ॥

**आघ्राय श्रमजमनिन्द्यगन्धबन्धुं निःश्वासश्वसनमसङ्गमङ्गनानाम् ।**
**आरण्याः सुमनस ईषिरे न भृङ्गैरौचित्यं गणयति को विशेषकामः ॥१०॥**

भ्रमरैरारण्याः सुमनसो वानेयानि पुष्पाणि नेषिरे नाभिलषिताः । कुतः, वनितानां निःश्वासश्वसनमुच्छ्वासवातं भृशमाघ्रायोपलभ्य । कीदृशं श्रमजं खेदोत्थं, तथानिन्द्यस्य श्रेष्ठस्य गन्धस्य सौरभस्य बन्धुं सहचरं, सुगन्धिमित्यर्थः । ननु पौष्पो गन्धस्तेषां सदोपभोग्यः तत्कथमागन्तुको नारीमुखमारुतस्तैरभाजीत्याह—यो विशेषकामोऽधिकार्थी स क इवौचित्यं परिचयं युक्तत्वं वा गणयति विचारयति । पुष्पेभ्यश्च नारीवदनसौरभं रम्यतरम् । अरण्ये भवा आरण्याः "अरण्याण्णो वक्तव्यः" ॥ १० ॥

**आयत्यां निजयुवतौ वनात्सशङ्कं बर्हाणामितरशिखण्डिनीं भरेण ।**
**आलोक्य व्यवदधतं मयूरमाराद्भामिन्यः श्रद्धुरनार्जवं नरेषु ॥११॥**

भामिन्यो मनस्विन्यः पुरुषेष्वनार्जवं शाठ्यं श्रद्धुः सम्भावयामासुः, भवन्ति निःसंशयं धूर्ता नरा इति बुबुधिरे इत्यर्थः । कदा मयूरं दृष्ट्वा, कीदृशमारात् निकटस्थां परशिखण्डिनीं मयूर्यन्तरं बर्हाणां भरेण शिखण्डाटोपेन सशङ्कं व्यवदधतं स्थगयन्तम् । कदा, निजयुवतौ स्वगृहिण्यां वनादायत्यामायान्त्याम् । स हि परमयूर्या सह रन्तुमारब्धो यावच्च प्रेक्षते तावन्निजमयूरी संप्राप्ता, ततस्तद्दर्शनभयाद्बर्हकलापेन तां [1]पिदधतं तं दृष्ट्वा, नारीभिरज्ञायि यत्र तिर्यञ्चोऽप्येवंविधास्तत्र नराः शठा इति किं चित्रमिति वाक्यार्थः । अथवैवंविधं मयूरमालोक्य भामिन्यो नरेष्वनार्जवं श्रद्धुः, स्त्रीभिर्नरेषु शठत्वादनार्जवेन भवितव्यं वर्तितव्यम्, स्त्रीणामपि धूर्तता वरमिति श्रद्धुरूरीचक्रुरित्ययमर्थः । आयत्यामितीणः शतरि रूपम् । श्रद्धुरिति श्रत्पूर्वस्य दधातेर्लङ् ॥११॥

**आलापैस्तुलि[2]तरवाणि वाणिनीनां माधुर्यादमलपतत्रिणां कुलानि ।**
**अन्तर्धामुपययुरुत्पलावलीषु प्रादुःष्यात् क इव जितः पुरः परेण ॥१२॥**

अमलपतत्रिणां कुलानि हंसयूथानि कुवलयावलीष्वन्तर्धामुपययुरदर्शनं ज-

---

१ 'व्यव' ख. पाठः । २ 'विंजि' ख. ग. पाठः ।

ग्मुः । अत्र जनभयं कारणमुत्प्रेक्ष्यते–वाणिनीनां मृदुभाषिणीनामालापैर्वचोभिर्माधुर्यात् तुलितरवाणि जितध्वनीनीव । तेभ्यो हि ता मञ्जुभाषिण्यः । युक्तं चैतत्, यतो यो विपक्षेणाभिभूतः स क इव तदग्रे प्रादुःष्यात् प्रादुर्भवेत् संमुखस्तिष्ठेत् । तुलितमत्राभिभूतम् । साधु वणन्ति भाषन्ते इति वाणिन्यो नार्यः । अमलपतत्रिणः सितच्छदाः । अन्तर्धानमन्तर्धा "आतश्चोपसर्गे" इत्यङ् । प्रादुःष्यादिति अस्तेर्लिङ् ॥ १२ ॥

**मुग्धायाः स्मरललितेषु चक्रवाक्या निःशङ्कं दयिततमेन चुम्बितस्य ।**
**प्राणेशानभि विदधुर्विधूतहस्ताः सीत्कारं समुचितमुत्तरं तरुण्यः ॥१३॥**

इह सहचरीं चुम्बन्तं चक्रवाकं यदुभिः प्रेयसीनां दर्शितं पश्यतेति, ततस्ताभिस्तं दृष्ट्वानुभवादिव हर्षेणाभ्यासवशात् सीत्कारपूर्वं पाणिपल्लवविधूननमकारीति तत्त्वम्, तत्र कविराह–प्रियैर्दर्शितं चक्रवाक्याश्चक्रवाकेन यच्चुम्बितं वक्त्रपानं तस्य चुम्बनस्य तरुण्यः सीत्कारं प्रियान्प्रति उत्तरं ददुः । यतः समुचितं योग्यम् । चुम्बनस्य हि प्रतीपं भा[1]षणमुचितम् । कीदृश्याश्चक्रवाक्याः स्मरलालितेषु कामव्यवहारेषु मुग्धाया अनभिज्ञायाः । नहि तिर्यञ्चः स्मरविशेषज्ञाः, अत एवाभिरुचितं सीत्कारमुत्तरं दत्तम् । कीदृश्यस्ता विधूतहस्ताः कम्पितपाण्यः, हस्तधूननमप्युचितमुत्तरं ददुरित्यर्थः । चक्रवाक्या इति सम्बन्धे षष्ठी । दयिततमेनेति कर्तरि तृतीया । चुम्बितमिति भावे क्तः । चक्रवाककर्तृकं चक्रवाक्या यच्चुम्बितं तस्येत्यर्थः । प्राणेशानभीति "अभिरभागे" इति कर्मप्रवचनीयसंज्ञा । प्रियदर्शनमत्रोत्तरग्रहणादवगम्यते ॥ १३ ॥

**उत्क्षिप्तस्फुरितसरोरुहार्घमुच्चैः सस्नेहं विहगरवैरिवालपन्ती ।**
**नारीणामथ सरसी सफेनहासा प्रीत्येव व्यतनुत पाद्यमूर्मिहस्तैः ॥१४॥**

अथानन्तरं सरसी कल्लोलकरैर्वनितानां पाद्यमिव व्यतनुत ददौ । पादार्थं पुष्पोदकादि पूजनं पाद्यं "पादार्घाभ्यां चे" ति यत् । कीदृशम्, उत्क्षिप्तान्युद्धूतानि स्फुरितानि सरोरुहाण्येवार्घोऽर्चाकुसुमं च यत्र । पाद्ये ह्यर्घेण भवितव्यम् । कीदृशी सरसी, उच्चैस्तारं पक्षिकूजितैः सप्रेमालपन्तीव कुशलप्रश्नमिव कुर्वती, तथा फेन एव हासः सह तेन वर्तते इति सफेनहासा । यः किल कंचिद्गृहमागतं स्निग्धमर्च[2]ति स तोयपुष्पादिना सम्भाषणेन[3] केलिहासादिना

१ 'भणनं' ग. पाठः । २ 'र्चेय' क. पाठः । ३ 'णादिना' क. पाठः ।

च तमावर्जयति । नारीति "नृनरयोर्वृद्धिश्च" । वृद्धिश्च । सर एव सरसी, पिप्पल्यादित्वात् ङीष् । हल्ङ्याब्भ्यो दीर्घात्... हल्ङ्यादिलोपः ॥ १४ ॥

**नित्याया निजवसतेर्निरासिरे यद्रागेण श्रियमरविन्दतः कराग्रैः ।**
**व्यक्तत्वं नियतमनेन निन्युरस्याः सापत्न्यं क्षितिसुतविद्विषो महिष्यः**

लौहित्येन भगवन्नारीभिः पद्मानि जितानीत्ये[1]वमर्थं कविर्भङ्ग्यन्तरेणाह—क्षितिसुतो भौमो नरकासुरस्तस्य विद्विट् शत्रुर्भगवान् विष्णुस्तस्य महिष्यो ललनाः सत्यभामाप्रभृतयस्ता नियतं निश्चितमस्याः श्रियः सापत्न्यमनेन वस्तुना व्यक्तत्वं निन्युः प्रकटीचक्रुः । एतावन्तं हि कालं तासां सापत्न्यं श्रिया सह न लक्षितमधुना तदाविरभूत् । केनेत्याह—यदेताः पाणिपल्लवैः करणैः रागेण लौहित्येन च हेतुना अरविन्दतः पद्मात् श्रियं शोभां पद्मां च निरासिरे निरास्थन् चिक्षिपुः । कीदृशात् अरविन्दात् नित्यायाः सनातन्या निजवसतेरात्मीयवासगृहात् । पद्मे हि सदैव लक्ष्मीर्वसति, अतश्च यदासौ तस्मात् ताभिर्निरस्ता तदा सापत्न्यप्रकाशनम् । सपत्नी किल चिरस्थितां सपत्नीं रागेणेर्ष्यया च वासान्निरस्यति । श्रीशब्दस्योभयार्थत्वादेषात्रोक्तिः । समानः पतिर्यस्याः सा सपत्नी । "नित्यं सपत्न्यादिष्वि"ति ङीषूनकारौ । निरासिरे इति कर्तरि । "उपसर्गादस्यत्यूह्योर्वा वचनम्" । अरविन्द इति गवादिषु विन्देः संज्ञाया"मिति शः ॥ १५ ॥

**आस्कन्दन्कथमपि योषितो न यावद्भीमत्यः प्रियकर[2]धार्यमाणहस्ताः**
**औत्सुक्यात्त्वरितममूस्तदम्बु तावत्संक्रान्तप्रतिमतया दधाविवान्तः**

अङ्गनाः कथमपि यावदम्बु नास्कन्दन् न जगाहिरे, तावत् तत्तोयं कर्तृ अमूर्योषा अन्तरभ्यन्तरे दधावुदवहत् । कथं, संक्रान्तप्रतिमतया तासां प्रतिबिम्बितेन देहेन । उत्प्रेक्ष्यते—औत्सुक्यात् त्वरितमिवोत्कण्ठाप्रेरितमिव । यः किलोत्सुकः सोऽनागतामपि कान्तामन्तर्दधाति हृदये वहति । कीदृश्यो योषित इति कृच्छ्रास्कन्दे कारणमाह—भीमत्यः सत्रासाः, अत एव कान्तहस्तावष्टब्धकराः । आस्कन्दन्निति लङ्, झि "झोऽन्तः" । अम्बुशब्दो द्वितीयान्तो भिन्नक्रमः । आस्कन्दन्नित्यस्य समीपे बोद्धव्यः । भीर्विद्यते यासां ता भीमत्यः ॥ १६ ॥

---

१ 'तमेवा' ग. पाठः । २ 'तम' ख. ग. पाठः ।

**ताः पूर्वं सचकितमागमय्य गाधं कृत्वाथो मृदुपदमन्तराविशन्त्यः**
**कामिन्यो मन इव कामिनः सरागैरङ्गैस्तज्जमलनुरञ्जयांबभूवुः। १७।**

कान्ताः सरागैः समालब्धैर्देहैस्तज्जलमनुरञ्जयांबभूवुः लोहितीचक्रुः । किं कृत्वा, प्रथमं तज्जलं सत्रासमागमय्यासाद्य गवेषयित्वा वा, अथो अनन्तरं गाधं कृत्वा प्रतिष्ठां विधाय, ततो मृदुपदं मन्दक्रममन्तर्मध्यमाविशन्त्यो यान्त्यः, ततो जलमरञ्जयन् । किमिवेत्याह-कामिनो मन इवेति । यथा प्रेयसः सानुरागैः सस्नेहैरङ्गैश्चित्तमनुरञ्जयन्ति प्रीणयन्ति । कथं, पूर्वमागमय्य तच्चित्तं बुद्ध्वा वश्यं स्यान्नवेति । ततो गाधमवस्थानं तत्र कृत्वा, मृदु कोमलेनोपायेनान्तराविशन्ति, ततः सरागं तं कुर्वन्ति ॥ १७ ॥

**संक्षोभं पयसि मुहुर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने ।**
**विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥१८॥**

रथाङ्गनाम्नोर्युगं चक्रवाकयोर्मिथुनं विश्लेषमगमत् वियोगं प्राप । कदा, हस्तिमस्तकस्थूलेन कुचयुग्मेन तोये संक्षोभं नीयमाने पुनःपुनः प्रकम्पं प्राप्यमाणे । किं वै[1]तच्चित्रं यत् कुचकुम्भौ तद्वियोगकारिणौ । यतो य उद्वृत्तस्त्यक्तचारित्रः स क इवान्येषां सुखजनकः । स्तनयुगस्य चोद्वृत्तत्वात् । वृत्तं परिणाहि ॥ १८ ॥

**आसीना तटभुवि सस्मितेन भर्त्रा**
**रम्भोरूरवतरितुं सरस्यनिच्छुः ।**
**धुन्वाना करयुगमीक्षितुं विलासान्**
**शीतालुः सलिलगतेन सिच्यते स्म ॥ १९ ॥**

काचित् कदलीकोमलोरूस्तटस्था जलस्थेन पत्या सिच्यते स्मोक्षिता । कीदृशी, सरसि जलमध्येऽवतरितुं प्रवेष्टुमनिच्छन्ती, यतः शीतालुः शीतं न सहते ! किमर्थं सिक्ते[2]त्याह-विलासानीक्षितुमिति । यतो जलसेकात् सा पाणियु[3]गं धुन्वाना। आसीनेति "ईदासः"। वृत्तश्लक्ष्णशीतलत्वात् रम्भेवोरू यस्याः सा रम्भोरूः "ऊरूत्तरपदादौपम्ये" इत्यूङ् । स्वादौ 'धुञ् कम्पने' इत्यस्य ह्रस्वान्तस्य धुन्वानेति रूपम् । शीतं न सहते शीतालुः । सलिलं गतः सलिलगत इति "द्वितीया श्रिते"ति समासः ॥ १९ ॥

---

१ 'चै' ग. पाठः । २ 'सिच्यते स्मे वि' ग. पाठः । ३ 'ग्मं' ग. पाठः ।

**नेच्छन्ती सममममुना सरोऽवगाढुं रोधस्तः प्रतिजलमीरिता सखीभिः**
**आश्लिक्षद्भयचकितेक्षणं नवोढा वोढारं विपदि न दूषितातिभूमिः २०**

काचिदचिरपरिणीता पतिमाश्लिक्षत् परिषस्वजे, यतो रोधस्तः सखीभिः प्रतिजलमीरिता । किमित्यालीभिस्तटात् तोये क्षिप्ता इत्याह—अमुना वोढ्रा साकं यतः सरस्यवतरीतुमनिच्छुः । कथमाश्लिक्षत्, भयचकितेक्षणं सकातरनयनम् । ननूपसखि स्वयमाश्लेषो लाघवायेत्याह—आपत्कालेऽतिभूमिर्मर्यादोल्लङ्घनं न दोषाय। सा भयचकिता चेत् तं नाश्लिक्ष्यत् ततो ब्रुडेत्, तस्मात् तस्या न स्वयमाश्लेषो दोषाय लाघवाय । आश्लिक्षदिति "श्लिष आलिङ्गने" इति क्सः । दूषितेति "दोषो णौ" इत्यूत्वम् ॥ २० ॥

**तिष्ठन्तं पयसि पुमांसमंसमात्रे तद्दघ्नं तदवयती किलात्मनोऽपि ।**
**अभ्येतुं सुतनुरभीरियेष मौग्ध्यादाश्लेषि द्रुतममुना निमज्जतीति२१**

काचित् कान्तं प्राप्तुमभिललाष । कीदृशमंसमात्रे स्कन्धप्रमाणे जले स्थितम् । सा कीदृशी, तत्पय आत्मनोऽपि किल मौग्ध्यात् तद्दघ्नमंसद्वयसं जानती । किल अलीके । किल मुग्धत्वादंसदघ्नं तदवगच्छति, तत्र मुग्धानामपि तद्दघ्नं जानाति । परमार्थतस्तु अभीर्निर्भयैव केवलमाश्लेषलो[1]भत्वात् तयैवं व्याजोऽकारि । तदाह—अमुना भर्त्रा ब्रुडती सती क्षिप्रमेवाश्लिष्टालिङ्गिता । अंसे प्रमाणमस्य, "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" । अवयतीतीणः शतृप्रत्ययः । "इणो यण् । उदितश्चे"ति ङीप् । आश्लेषीति कर्मणि लकारः । निमज्जतीति नुम्विभाषितः । "आच्छीनद्योर्नुम्" । एवमन्यत्र ॥ २१ ॥

**आनाभेः सरसि नतभ्रुवावगाढे चापल्यादथ सरसस्तरङ्गहस्तैः ।**
**उच्छ्रायिस्तनयुगमध्यरोहि लब्धस्पर्शानां भवति कुतोऽथवा व्यवस्था**

कयाचित् कुटिलभ्रुवा नाभिं यावज्जलाशयेऽवतीर्णे सति, अनन्तरं तदूर्मिकरैरुन्नतस्तनयुग्ममध्यरोहि आक्रान्तम् । किं वैतच्चित्रम् । यतो लब्धस्पर्शाः प्राप्ताङ्गसम्पर्काश्चपलाश्च ये तेषां कुतो व्यवस्था नियमो भवति । जलैश्च स्पर्शो नाम गुणो लब्धः । अध्यरोहीति कर्मणि लकारः ॥ २२ ॥

**कान्तानां कुवलयमप्यपास्तमक्ष्णोः शोभाभिर्न मुखरुचाहमेकमेव ।**
**संहर्षादलिविरुतैरितीव गायल्लोलोर्मौ पयसि महोत्पलं ननर्त ॥२३॥**

---

१ 'लोलभ' ग. पाठः ।

पयसि जले महोत्पलं पद्मं ननर्त चकम्पे, यतो लोलोर्मौ कम्प्रवीचिनि । उत्प्रेक्ष्यते–इत्यतो हेतोर्यः संहर्षश्चित्ततोषस्तत इव ननर्त, तमेव हेतुमाह–न केवलं सुदृशां वदनकान्त्याहमेवैकं जितं यावन्नेत्रयोर्दीप्त्या तासामुत्पलमपि तिरस्कृतमिति । यदा किल समानस्पर्ध्यपि केनचित् जीयते तदा लोकः पूर्वजितस्तुल्यव्यसनत्वात् माद्यति । कीदृशं महोत्पलं भृङ्गगुञ्जितैर्गायदि[1]व । गीयपूर्वं हि सर्वस्य नृत्तम् । यदुक्तम्—"न गेयेन विना वाद्यं न नृत्तं गेयवर्जितम्" इति । अत्र चानेकेषामूहानां सद्भावादिव पदान्यप्यनेकानि न्याय्यानि । संहर्षादिव गायदिव नृत्यदिवेत्यलङ्कारवि[2]शेषाः । तेषां तु गतार्थत्वादप्रयोगः । एवमन्यत्र । सङ्घर्षादिति पाठान्तरम् ॥ २३ ॥

त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रततमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः ॥ २४ ॥

काचित् मनोरमोरूर्विभ्रमस्यातिशयमाप विलासाधिक्यं लेभे, यतस्त्रस्यन्ती बिभ्यती । कुत इत्याह—यतश्चलन्मत्सीप्रहतोरूः । किं वैतच्चित्रम् । यच्चलशफरीघट्टनात् त्रस्ता । यतो विनापि निमित्तं विलासिन्यो लीलाभिर्हेतुभिः प्रततं क्षुभ्यन्ति अत्यर्थं क्षोभं यान्ति, किं पुनः सति कारणे न क्षुभ्येयुः । लीलावतीत्वात् कारणान्तरमनपेक्ष्यैव यास्त्रस्यन्ति तासां कारणसद्भावात् क्षोभो न चित्रमित्यर्थः । तासां च तिमिविघट्टनं कारणं विद्यते । अहो विस्मये । हेतोरिति "पृथग्विने" त्यादिना विकल्पात् पञ्चमी । वामावूरू यस्याः सा वामोरूः । "संहितशफलक्षणवामादेश्चे" ति ऊङ् ॥ २४ ॥

आकृष्टप्रतनुवपुर्लतैस्तरङ्गैस्तस्याम्भस्तदथ सरोमहार्णवस्य ।
अक्षोभि प्रसृतविलोलबाहुपक्षैर्योषाणामुरुभिरुरोजगण्डशैलैः ॥२५॥

अथ तस्य सरसीसमुद्रस्य तत् तोयं जलं योषाणां नारीणामुरोजगण्डशैलैः स्तनमहाश्मभिरक्षोभिश्चकम्पे । कीदृशैः, आकृष्टा ऊर्ध्वमिव नीता प्रकर्षेण तन्वी वपुर्लता यैस्तैराहृतकृशदेहवल्लीकैः, तरङ्गैरम्भोमध्यं प्रविशद्भिः तथा प्रसृता वितता विलोलाश्चटुला बाहवो भुजा एव पक्षाः पतत्राणि येषाम् ।

१ 'ति' ग. पाठः । २ 'विदः' ग. पाठः ।

उरुभिः पृथुलैः । यथा महोदधेस्तोयमाकृष्टलतैस्तरद्भिः प्रसृतचलपक्षैर्महद्भिः कुलशैलैः क्षोभितम्, एवं सरसः स्तनैरक्षोभीत्यर्थः । अक्षोभीति क्षुभेर्ण्यन्तात्कर्मणि लुङ् ॥ २५ ॥

**गाम्भीर्यं दधदपि रन्तुमङ्गनाभिः प्रक्षोभं जघनविघट्टनेन नीतः ।**
**अम्भोधिर्विकसितवारिजाननोऽसौ मर्यादां सपदि विलङ्घयांबभूव**

असौ अम्भोधिर्जलाशयः सपदि नारीक्षोभसमकालं मर्यादां सीमानं विलङ्घयांबभूवातिचक्राम, तटस्योपरि जलं जगामेत्यर्थः । यतो रिरंसया नारीभिः[1] कटिप्रेरणेन क्षोभितः । कदाचिदगम्भीरो भवेदित्याह—गाम्भीर्यमगाधत्वमुद्वहन्नपि । अन्यच्च कीदृशः, विकसितानि फुल्लानि वारिजानि पद्मान्येवाननानि मुखानि यस्य सः । अन्योऽपि यदि मनस्वी गाम्भीर्यं धैर्यमपि[2] धारयति यावत् कामिनीभिः क्रीडितुं प्रक्षोभं जघनघातेन नीतस्तत्सपद्येव प्रफुल्लवदनो मर्यादां नियमं लङ्घयति त्यजति । अम्भो धीयतेऽस्मिन्नित्यम्भोधिर्जलाशयो जलाधारमात्रम्, अवश्यं चैतत् "पेषंवासवाहनधिषु च" इति धिग्रहणाल्लिङ्गात् । यदि ह्यम्भोध्युदधिप्रभृतयः समुद्रे एव वाचकाः स्युस्तत्र धिग्रहणं स्यादनर्थकम् । "उदकस्योदः संज्ञाया" मित्यनेनैवोदभावसिद्धेः । रुद्रटस्त्वेतन्नेच्छति । यदाह–"शब्दप्रवृत्तिहेतौ सत्यप्यसमर्थमेव रूढिवशाद्यौगिकमर्थविशेषे पदं, यथा वारिधौ जलभृत् ॥ २६ ॥

**आम्रष्टुं दयितमिवावगाढमारा-**
**दूर्मीणां ततिभिरभिप्रसार्यमाणः ।**
**कस्याश्चिद्विततचलच्छिखाङ्गुलीको**
**लक्ष्मीवान् सरसि रराज केशहस्तः ॥ २७ ॥**

कस्याश्चित् कामिन्या जलमध्ये केशहस्तः कचपाशो[3] व्यद्युतत् । कीदृशः लक्ष्मीवान् शोभायुक्तस्तथा वितता दीर्घाश्चलन्त्यः शिखावल्लर्योऽङ्गुलयो यस्य, तथा कल्लोलावलिभिः समन्ताद्वितायमानः । उत्प्रेक्ष्यते—आरान्निकटेऽवगाढं ब्रुडितं वल्लभमाम्रष्टुं गवेषयितुमिवाभिप्रसार्यमाणः[4] । जलमग्नं हि वस्तु चलाङ्गुलिना हस्तेन गवेष्यते । आम्रष्टुमिति "अनुदात्तस्य चर्दुपधस्यान्यतरस्या"-मित्यमागमः । प्रशस्ताः केशाः केशहस्तः "प्रशंसावचनैश्चे" ति समासः ॥२७॥

१ 'नितम्बिनीभिः' ख. पाठः । २ 'पि मनसि' ख. पाठः । ३ 'केश' क. ग. पाठः । ४ 'षितुं' ग. पाठः ।

**उन्निद्रप्रियकमनोरमं रमण्याः**
**संरेजे सरसि वपुः प्रकाशमेव ।**
**युक्तानां विमलतया तिरस्क्रियायै**
**नाक्रामन्नपि हि भवत्यलं जलौघः ॥ २८ ॥**

प्रमदाया वपुस्तोयमध्ये प्रकटमेव व्यद्योतिष्ट । कीदृशम्, उन्निद्राणि फुल्लानि यानि प्रियकान्यसनपुष्पाणि तानी[1]व मनोरमं गौरम् । जलपिहितं प्रकटमेव कथं शोभते इत्याह–ये विमलतयाकालुष्येण युक्तास्तेषां जलौघो दुर्जनपूगः आक्रामन् अभिभवन्नपि खलीकाराय नालं भवति नालंभूष्णुः । तच्च वपुर्विमलं प्रियकगौरत्वात् । अतो जलौघस्तोयपूरः आच्छादयन्नपि तिरस्क्रियायै अदर्शनं नेतुम[2]समर्थः । रेजे इति 'राजृ दीप्तौ' स्वरितेत्त्वादात्मनेपदम् । "फणां च सप्ताना" मिति एत्वाभ्यासलोपौ । तिङ्पक्षे तु[3] रराजेति रूपम् ॥ २८ ॥

**किं तावत् सरसि सरोजमेतदारा-**
**दाहोस्विन्मुखमवभासते तरुण्याः ।**
**संशय्य क्षणमिति निश्चिकाय कश्चि-**
**द्बिब्वोकैर्बकसहवासिनां परोक्षैः ॥ २९ ॥**

कश्चित् तरुणः इतीत्थं क्षणं संशय्य संदिह्य निश्चिकाय भ्रान्तिं जहौ । कथं संशय्येत्याह–किमेतदाराद् दूरे सरसि पद्मं राजते, उत तरुण्या वदनमिति । अतिसादृश्यात् खलु संशयः । कथं तर्हि मुखमेवैतदिति विदामासेत्याह–बिब्वोकैर्भ्रूविलासैरिति । निश्चयान्तोऽयं संशयः । कदाचिदब्जानामपि ते संभवेयुस्तदनैकान्तिको हेतुरित्याह—बकसहवासिनां पद्मानां परोक्षैरसंभाव्यैः । ये हि बकैः सह वसन्ति ते[4]षां कुतो विलासा इति साभिप्रायमेतन्नाम । यद्यपि लीला–विलास–विच्छित्ति–विभ्रम–किलकिञ्चित-मोट्टायित–कुट्टमित–बिब्वोक–ललित–विहृतानि भरते भिन्नलक्षणानि तथापि काव्येषु विशेषैर्विलासमात्रसामान्यं लक्ष्यते, यथा 'काकेभ्यो दधि रक्ष्यतां' इति । इष्टार्थप्राप्तावनादरो हि बिब्वोकः । तदुक्तम्—"इष्टानां भावानां प्राप्तावतिमानहर्षसंभूतः । स्त्रीणामनादरकृतो बिब्वोकः स हि[5] विज्ञेयः" ॥ अत्र तु भ्रूविलासः । एवमन्यत्रापि । सं-

---

१ 'न्ये' ग. पाठः । २ 'न स' ग. पाठः । ३ 'च' क. पाठः । ४ 'तत्र' ग. पाठः । ५ 'नाम' ग. पाठः ।

शय्येति अयङ् यि क्ङिति" । निश्चिकायेति "विभाषा चे" रिति कुत्वम् ॥ २६ ॥

**शृङ्गाणि द्रुतकनकोज्ज्वलानि गन्धाः कौसुम्भं पृथुकुचकुम्भसङ्गि वासः।**
**मार्द्वीकं प्रियतमसंनिधानमासन्नारीणामिति जलकेलिसाधनानि॥३०॥**

तासां नारीणां तदा तोयक्रीडोपकरणानि इमानि वस्तून्यभूवन् । कानीत्याह—द्रुतेनासकृद्गलितेन काञ्चनेनोज्ज्वलानि शृङ्गाणि शृङ्गाकाराणि जलक्षेपभाण्डानि, गन्धाश्चन्दनादयस्तथा कौसुम्भं माहारजनं स्तनांशुकं, मार्द्वीकं मद्यं, तथा कान्तसङ्गः, एतैर्हि जलकेलिः पूर्णः । गन्धशब्दोऽत्र गन्धद्रव्ये वर्तते । कुसुम्भेन रक्तं कौसुम्भं "तेन रक्तं रागात्" । मृद्वीका द्राक्षा तस्या विकारो मार्द्वीकम् । आसन्निति लङ् । साधनानीति नपुंसकलिङ्गैकशेषः ॥ ३० ॥

**उत्तुङ्गादनिलचलांशुकास्तटान्ताच्चेतोभिः सह भयदर्शिनां प्रियाणाम् ।**
**श्रोणीभिर्गुरुभिरतूर्णमुत्पतन्त्यस्तोयेषु द्रुततरमङ्गना निपेतुः॥ ३१॥**

वनिता उन्नताद्रोधोभागात् जलमध्ये निपेतुः । कथं श्रोणीनां गुरुत्वात् द्रुततरं क्षेपीयः । महत्त्वादेव जघनानामतूर्णं चिरेणोत्पतन्त्य उत्प्लवमानाः । चिरोत्पतने क्षिप्रब्रुडने च श्रोणीगौरवं कारणम् । गुरुर्हि चिरेणोत्प्लुत्य त्वरितं मज्जति । तथा प्रेयसां चेतोभिः सह, कान्तमनांस्यपि पतितानि व्यथितानीत्यर्थः । यतो भयदर्शिनाम्, उच्चतटपातात् हि तासां बाधामाशङ्कन्ते । कीदृश्यस्ताः, पातवशादनिलेन वायुना चलानि कम्प्राणि अंशुकानि वासांसि यासाम् ॥ ३१ ॥

**मुग्धत्वादविदितकैतवप्रयोगा**
**गच्छन्त्यः सपदि पराजयं तरुण्यः ।**
**ताः कान्तैः सह करपुष्करेरिताम्बु-**
**व्यात्युक्षीमभिसरणग्लहामदीव्यन् ॥ ३२ ॥**

ता युवतयो वल्लभैः साकमदीव्यन् रेमिरे । किमदीव्यन्नित्याह—करपुष्करैः पाणिपद्मैरीरितं क्षिप्तं यदम्बु जलं तेन या व्यात्युक्षी परस्परसेकस्ताम् । कीदृशीम्, अभिसरणं समीपगमनं ग्लहः पणो यत्र । य एव जीयते स एव जेतृसकाशं यत्र यातीत्यर्थः । कीदृश्यस्ताः सपदि ग्लहानन्तरमेव पराजयं

गच्छन्त्यः, अबलत्वादिति भावः । तथा मुग्धत्वात् जाड्यादविदितकैतवप्रयोगाः अलक्षितधूर्तकलाः । यतस्तैस्ताभिः सह सङ्गमः साध्यः, ते च यदि जीयन्ते अथापि जयन्ति, सर्वथा सिध्यति । अभिसरणग्लहत्वाद्देवनस्यात एव पराजयं यान्त्यः । यः किल मुग्धः कैतवकलानभिज्ञः सोऽवश्यमेव क्षिप्रं जीयते । कितवो धूर्तस्तस्यायं कैतवः । प्रयोगो व्यवहारः । अन्योन्यस्योक्षणं व्यात्युक्षी । "कर्मव्यतिहारे णच् स्त्रियाम्" । सहि बाधकविषये क्वचिदिष्यते । "णचः स्त्रियामञ् । दिवः कर्म चे" ति करणस्य कर्मसंज्ञा । "अक्षेषु ग्लहः" ॥ ३२ ॥

**योग्यस्य त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराजलक्ष्म्याः ।**
**कान्तायाः करकलशोद्धृतैः पयोभिर्वक्त्रेन्दोरकृत महाभिषेकमेकः**

कश्चिन्नायकः प्रेयसीवदनशशिनः पाणिकलशक्षिप्तैर्जलैर्महाभिषेकं मङ्गलस्नानं व्यधात् । यतो हरनयनदहनज्वालाभस्मीकृतस्य कामस्य या सेनास्तस्या आधिराज्यलक्ष्मीः प्रभुत्वश्रीस्तस्या योग्यस्योचितस्य, यत्कामेन वश्यत्वादि कर्तव्यं तत्तु तदीयमेव मुखं करोतीत्यर्थः । अन्यस्यापि राजपुत्रस्याधिराज्यलक्ष्मीयोग्यस्य राजनि नष्टे अवश्यमेव प्रकृतयः कलशकुम्भैर्महाभिषेकं कुर्वन्ति । अकृतेति लुङ् । "उश्चे" ति सिचः कित्त्वम् "ह्रस्वादङ्गा" दिति सिचो लुक् । अभिषेचनमभिषेकः ॥ ३३ ॥

**सिञ्चन्त्याः कथमपि बाहुमुन्नमय्य**
**प्रेयांसं मनसिजदुःखदुर्बलायाः ।**
**सौवर्णं वलयमवागलत् कराग्रात्**
**लावण्यश्रिय इव शेषमङ्गनायाः ॥ ३४ ॥**

कस्याश्चिद्वनितायाः पाणिप्रान्तात् कनककटकमवागलत् प्राभ्रश्यत्, यतः कामदुःखकृशायाः सुरत[1]क्षामाया इत्यर्थः । सुरतासक्त्या हि कृशीभूयते, अत एव कृशत्वात् कथमपि कृच्छ्रेण भुजमुत्क्षिप्य कान्तं सिञ्चन्त्याः । अतश्चोत्क्षिप्य प्रेरणवशात् कार्श्याच्च रुक्माङ्गदमपतत् । उत्प्रेक्ष्यते–लावण्यश्रियः कान्तिसमृद्ध्याः शेषो भाग इव गलितः, अतिलावण्यनिर्भरत्वादिति भावः । अवागलत् बाहुमूलं प्राप[2]त्यन्ये । "अकर्तरि च कारके संज्ञाया" मिति घञ् ।

१ 'ताक्षमा' क. ख. पाठः । २ 'प्ये' क. ख. पाठः ।

संस्थितावपीति शेषमिति प्रयोगः । तद्यथा—"मन्दाकिन्याः पयः शेषं" इति कालिदासस्य । तथा च—"शेषाण्यतौषी" दिति भट्टेः ॥ ३४ ॥

**स्निह्यन्तीं दृशमपरा निधाय पूर्णां मूर्तेन प्रणयरसेन वारिणेव ।**
**कन्दर्पप्रवणमनाः सखीसिसिक्षालक्ष्येण प्रतियुवमञ्जलिं चकार ।३५।**

काचिन्मानिनी सखीसेकव्याजेन प्रतियुवं कान्तसंमुखमञ्जलिं बबन्ध । यतः कामोन्मत्तचित्ता, वयस्यासेकव्याजेन 'मां त्रायस्वे' ति सकामत्वात् कान्तस्य प्रार्थनार्थमञ्जलिमरचयदित्यर्थः । यः किल संमुखीक्रियते तस्याञ्जलिबन्धादि क्रियते । किं कृत्वा बबन्ध स्निह्यन्तीं प्रीतिस्निग्धामरूक्षां दृशं दृष्टिं निधाय कान्ते निक्षिप्य । यो हि प्राथ्र्यते तस्य स्निग्धदृष्टिदर्शनं क्रियते । स्निह्यन्तीति पाठे नारीविशेषणम् । स्निह्यन्ती तुष्यन्ती, मानं त्यजन्तीत्यर्थः । अत्र च कामवासितचित्तत्वमेव कारणम् । कीदृशम् अञ्जलिं, वारिणा पूर्णं व्याप्तम् । उत्प्रेक्ष्यते-मूर्तेन प्रणयरसेन प्रेमानुरागेणेवेति । इवशब्दोऽत्र भिन्नक्रमः । मूर्तं प्रणयरसं कान्ताञ्जलौ दर्शयन्तीवेत्यर्थः । पूर्णामिति तु पाठे दृग्विशेषणम् । प्रणयरसेन दृशं पूर्णां वारिणेवोदकेनेवेति बाहुल्योक्तिः । उदकबहुना प्रणयरसेन पूर्णामित्यर्थः । प्रणय इति "प्रनिरन्तःशरेदिव" ति णत्वम् । सेक्तुमिच्छा सिसिक्षा । लक्ष्यं व्याजः । प्रतियुवमिति "अनश्चे" ति टच् समासान्तः ॥ ३५ ॥

**आनन्दं दधति मुखे करोदकेन श्यामाया दयिततमेन सिच्यमाने ।**
**ईर्ष्यन्त्या वदनमसिक्तमप्यनल्पस्वेदाम्भःस्नपितमजायतेतरस्याः३६**

अन्यस्या भामिन्या वदनं स्नपितं क्षालितमभूत् । कदाचित् सिक्तं स्यात्, नेत्याह—असिक्तमपीति । अक्षालितं चेत् कथमार्द्रीभूतमित्याह-अनल्पेन स्वेदाम्भसा स्नपितमिति । घर्मोदकभरस्य कारणमाह-ईर्ष्यन्त्याः क्रुध्यन्त्याः । क्रोधेन चावश्यं स्वेदो जायते । ईर्ष्यायाः कारणमाह-श्यामायास्तरुण्या मुखे वल्लभेन करवारिणोद्यमाणे सति अत एवानन्दं हर्षमुद्वहमाने । अतश्च यदान्वक्षमेव कान्तः सपत्न्या सह जलकेलिं कुरुते तदेर्ष्या युक्तैव । असङ्गतिर्नामायमलङ्कारः । "यत्र कारणमन्यत्र कार्यं चान्यत्र" । यथा—"सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम् । साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यसमाश्रयैरपटवो जा-

ताः स्म इत्यद्भुत" मिति ॥ श्यामाप्रसूता । प्रधानेत्यन्ये । अजायतेति कर्तरि लकारः ॥ ३६ ॥

**उद्वीक्ष्य प्रियकरकुड्मलापविद्धैर्वक्षोजद्वयमभिषिक्तमन्यनार्याः ।**
**अम्भोभिर्मुहुरसिचद्वधूरमर्षादात्मीयं पृथुतरनेत्रयुग्ममुक्तैः ॥ ३७ ॥**

काचिन्नवोढा रोषाद्विशालनयनयुगलपतितैर्जलैः स्वं स्तनयुग्ममसकृदसिचत्[1] उत्तामास । कुतः, सपत्न्याः कान्तपाणिमुकुलप्रेरितैस्तोयैः कुचयुग्मं स्नापितमालोक्य । अतश्च मुग्धत्वात् तस्या अवमानेन रोदनमेव युक्तम् । यदुक्तम् "अन्यां निषेवमाने सा कुप्यति नायके ततस्तस्य । रोदिति केवलमग्रे मृदुनोपायेन तुष्यति च" । यथा—"सा पत्युः प्रथमेऽपराधसमये शिक्षोपदेशं विना नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् । स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पलै[2]र्बाला केवलमेव रोदिति लुठल्लोलो[3]दकैरस्रुभि" रिति ॥ अन्यापि यदि विपक्षस्य विभवं पश्यति तदा जिगीषुत्वादात्मनोऽपि तथा कुरुते । असिचदिति "लिपि सिचि ह्वश्च" ति च्लेरङ् ॥ ३७ ॥

**कुर्वद्भिर्मुखरुचमुज्ज्वलामजस्रं**
**यैस्तोयैरसिचत वल्लभां विलासी ।**
**तैरेव प्रतियुवतेरकारि दूरात्**
**कालुष्यं शशधरदीधितिच्छटाच्छैः ॥ ३८ ॥**

तैर्जलैः प्रतियुवतेः सपत्न्याः कालुष्यमकारि तमः पातितम् । कैस्तैरित्याह—यैः कामी कान्तामसिचतौक्षत् । कदाचिन्मलिनानि स्युरित्याह—शशधरदीधितिच्छटाच्छैः सितकरकिरणसन्ततिवलक्षैः ज्योत्स्नाधवलैरित्यर्थः । अत एव वल्लभाया मुखरुचमत्यर्थमुज्ज्वलां रम्यां कुर्वद्भिः, तस्यास्तु कालुष्यं दूराद्दूरं नितरामकारीति विषमाख्योऽलङ्कारः । तैरेवेत्येवशब्दो नियमं ब्रुवन् विस्मयमाह । असिचतेति स्वरितेत्त्वादात्मनेपदम् । पूर्वत्र त्वभावो विकल्पितत्वात् तस्य "आत्मनेपदेष्वन्यतरस्या" मित्यङ् ॥ ३८ ॥

**रागान्धीकृतनयनेन नामधेयव्यत्यासादभिमुखमीरितः प्रियेण ।**
**मानिन्या वपुषि पतन्निसर्गमन्दे भिन्दानो हृदयमसाहि नोदवज्रः**

---

1 'दासमन्तादु' ख. पाठः । 2 'ला' ख. ग. पाठः । 3 'लाल' ग. पाठः ।

उदकमेव पीडाकारित्वादुद्वज्रः स कयाचिद्भामिन्या देहे गलन् नासाहि न सोढः, यतो हृदयं भिन्दानो विदारयन् । किमिति तोयं हृदयं भिनत्तीत्याह-संज्ञाविपर्ययेन सपत्नीनामग्राहं कान्तेन यतोऽभिमुखं क्षिप्तम् । नामव्यत्यासे हेतुमाह-रागेण व्यसनेनान्धीकृते नयने यस्य, प्रियत्वात् तामेव पश्यतेत्यर्थः । अतश्च गोत्रस्खलना[1]क्षेपाद्वपुषश्च स्वभावकृशत्वादसहनं युक्तम् । नामैव नामधेयं "भागरूपनामभ्यः स्वार्थे धेयः" । असाहीति कर्मणि लकारः । उदवज्र इति "मन्थौदने" त्युदभावः ॥ ३९ ॥

**प्रेम्णोरः प्रणयिनि सिञ्चति प्रियायास्तत्तापं नवजलविप्रुषो गृहीत्वा।**
**उद्धूताः कठिनकुचस्थलाभिघातादासन्नां भृशमपराङ्गनामधाक्षुः ४०**

कांचित् सपत्नीं नवजलविप्रुषः शीततोयपृषतोऽत्यर्थमधाक्षुरोषामासुर्दग्धवत्यः, उद्वेजयांचक्रुरित्यर्थः । कदा, कान्तायाः प्रेयसि प्रीत्या वक्षः सिञ्चति सति । कीदृशो विप्रुषः, कर्कशस्तनतटप्रतिघातादुत्फालिताः तस्य कुचस्थलस्य तस्या वा नायिकायास्तापं यौवनोष्माणमिवादायाधाक्षुः । तप्तेन ह्यम्भसावश्यमेवाङ्गं दह्यते । अधाक्षुरिति दहेर्लुङ् । च्लेः सिच् । "वदव्रजे"ति वृद्धिः । "दादेर्धातोर्घः । खरि च । एकाचो बशो भष् झषन्तस्य स्ध्वो"रिति धः ॥ ४० ॥

**संक्रान्तं प्रियतमवक्षसोऽङ्गरागं**
**साध्वस्याः सरसि हरिष्यतेऽधुनाऽम्भः ।**
**तुष्ट्वैवं सपदि हृतेऽपि तत्र तेपे**
**कस्याश्चित् स्फुटनखलक्ष्मणः सपत्न्या ॥ ४१ ॥**

कस्याश्चित् नायिकायाः सपत्न्या तेपे उद्विग्नम् । कुतः, स्फुटं दृश्यं नखलक्ष्म करजचिह्नं ततः, सम्भोगसूचकान्नखक्षतादित्यर्थः । किं कृत्वा तेपे, पूर्वमेवमित्थं तुष्ट्वा धृतिं कृत्वा । कथमित्याह-आदौ हि तया वाल्लभ्यपिशुनं संक्रान्तं प्रतिबिम्बितं प्रियतमवक्षस्तोऽङ्गरागं चन्दनादिकं तस्या दृष्ट्वा धृतिरेवं बद्धा-साधु भद्रमिदानीमेतद्वल्लभोरस्तटसंलग्नं समालम्भनमस्याः सरस्यम्भो हरिष्यते क्षालयिष्यते । अनन्तरं यावन्नोत्पुंसितं तावत्तदपासनात् नखलक्ष्म प्रकटीभूतं, ततस्तत्क्षणमेवानर्थान्तरागमनात् प्रतियुवत्या सन्तप्तम् । स्फुटनखल-

१ 'न' ग. पाठः ।

क्षण इति नायिकाया वा विशेषणम् । वक्षस इति पञ्चमी । साध्विति लोकोक्तिः । हरिष्यते इति कर्तरि "ऋद्धनोः स्ये" । तेपे इति भावे ॥ ४१ ॥

हूतायाः प्रतिसखि कामिनान्यनाम्ना
ह्रीमत्याः सरसि गलन्मुखेन्दुकान्तेः ।
अन्तर्धिं द्रुतमिव कर्तुमश्रुवर्षै-
र्भूमानं गमयितुमीषिरे पयांसि ॥ ४२ ॥

कस्याश्चिन्मानिन्या अश्रुवर्षैर्जलानि भूमानं गमयितुं बाहुल्यं प्रापयितुमीषिरेऽभिलषितानि, इत्यतिशयोक्तिः । उत्प्रेक्ष्यते–तस्या एव सरोमध्ये अन्तर्धिमदर्शनमिव त्वरितं विधातुम् । किमिति तस्या अन्तर्धिः क्रियते इत्याह—ह्रीमत्या इति । कुतः सलज्जाया इत्याह–प्रतिसखि वयस्यासंमुखमेव कान्तेन सपत्नीनाम्नाकारिताया अत एव च भ्रश्यद्वक्त्रचन्द्रश्रियः । अतश्चाश्रुभिश्चिन्तितमदर्शनमिदानीमस्या वराक्या युक्तमिति तां व्रीडयितुमिव बह्वपतन् । बहोर्भावो भूमा "पृथ्वादिभ्य इमनिच् । बहोर्लोपो भू च बहोः" । गमयितुमिति "समानकर्तृकेषु तुमुन्" । ईषिरे इति कर्मणि ॥ ४२ ॥

सिक्तायाः क्षणमभिषिच्य पूर्वमन्या-
मन्यस्याः प्रणयवता वताबलायाः ।
कालिम्ना समधित मन्युरेव वक्त्रं
प्रापाक्ष्णो गलदपशब्दमञ्जनाम्भः ॥ ४३ ॥

कस्याश्चित् तन्व्या मन्युः क्रोध एव कालिम्ना काष्ण्र्येन करणेन मुखं समधितायोजयत् । अक्ष्णो नेत्रात् गलत् भ्रश्यत् पुनरञ्जनाम्भः कज्जलवारि अपशब्दमयशो व्यलीकं प्रापत् । यथा कज्जलाम्बुणा मलिनीकृतमिव व[1]स्तुतस्तु वैलक्ष्येणैव । मन्युकारणमाह—कीदृश्यास्तस्याः, प्रेयसा पूर्वं क्षणं सपत्नीमुक्षित्वा सिक्तायाः । वतेति खेदे । अक्ष्ण इति जातावेकवचनम् । अक्ष्णोरिति पाठान्तरम् । समधितेति धाञः कर्तरि लुङ् । "स्थाघ्वोरिच्च । ह्रस्वादङ्गा"दिति सिज्लुक् ॥ ४३ ॥

उद्वोढुं कनकविभूषणान्यशक्तः सध्रीचा वलयितपद्मनालसूत्रः ।
आरूढप्रतिवनिताकटाक्षभारः साधीयो गुरुरभवद्भुजस्तरुण्याः ॥४४॥

---

१ 'तत्त्व' ग. पाठः ।

कस्याश्चित् युवत्या बाहुः साधीयो गुरुरभवदुत्कृष्टः संजातः । यतः सध्रीचा सहचरेण वलयितं वलयरूपतामापादितं पद्मनालसूत्रं बिसतन्तुर्यस्य । कुतः, यतोऽतिसौकुमार्यात् कनकविभूषणानि काञ्चनाङ्गदादीनि धारयितुमसमर्थः । यतश्च सध्रीचा वलयितबिससूत्रोऽत एवारूढः पतितः प्रतिवनितायाः सपत्न्याः कटाक्षभारो यस्य[1] । यदा ह्यसौ कान्तग्रथितमृणालसूत्रस्तदा सपत्न्या मात्सर्यात् कटाक्षभारस्तत्र पातितः, अत एव गुरुरभवद् दुर्वहो जातः। यत् किलारूढभारं गौण्यादि तद्दुर्वहं भवति । सध्रीचेति सहाञ्चतीति क्विन्। नलोपश्च । "सहस्य सध्रिः" । टा । "अचः" इत्यकारलोपः । "चौ" इति दीर्घः । अतिशयेन साधु साधीय इति क्रियाविशेषणम् । ईयसुनि टिलोपः ॥ ४४ ॥

आबद्धप्रचुरपरार्ध्यकिङ्किणीको
रामाणामनवरतोद्गाहभाजाम् ।
आरावं व्यधित न मेखलाकलापः
कस्मिन् वा सजलगुणे गिरां पटुत्वम् ॥ ४५ ॥

योषाणां रशनादाम शिञ्जितं न व्यधित न चकार । कदाचित् स्वल्पा घण्टिकाः[2] स्युरित्याह-संयोजितबहलकनकघण्टिकः[3] । कीदृशीनां रामाणामित्यकाणे कारणमाह-अत्यर्थजलमज्जनसक्तानाम् । अतश्च तोयेन जडीकृतत्वान्मूकीभावः । किं वैतच्चित्रम्, यतः सजलगुणे जाड्ययुक्तसूत्रे कस्मिन्निव गिरां पटुत्वं वाग्मित्वम् । स च सजलगुणः, सजल आर्द्रो गुणस्तन्तुर्यस्येति कृत्वा। व्यधितेति लुङ् । उदकस्य गाह उदगाहः, पूर्ववदुदभावः । परार्ध्यं श्रेष्ठं "परावराधरोत्तमपूर्वाच्चे" ति यत् ॥ ४५ ॥

पर्यच्छे सरसि हृतेंऽशुके पयोभि-
र्लोलाक्षे सुरतगुरावपत्रपिष्णोः ।
सुश्रोण्या दलवसनेन वीचिहस्त-
न्यस्तेन द्रुतमकृताब्जिनी सखीत्वम् ॥ ४६ ॥

कस्याश्चिद्युवत्या नलिनी सखीत्वमभजत वयस्यात्वं गता । केन कल्लोलप्रेरितेन पद्मपत्रवस्त्रेण, किसलयं दत्त्वा सख्यं चकारेत्यर्थः । तदा समन्ता[4]न्नि-

१ 'त्र' क. पाठः । २ 'ल्पघण्टिका स्यात्' ग. पाठः । ३ का क. पाठः । ४ 'न्ततो' ग. पाठः ।

र्मले जलाशयमध्ये अद्भिर्वस्त्रेऽपहृते सति, अत एव सुरतगुरौ कान्ते लोलाक्षे दर्शनलम्पटे सति, अत एव तस्या अपत्रपिष्णोर्लज्जमानायाः, अतो द्रुतं तत्क्षणमेव जघनदेशे दलवसनं दत्त्वा पद्मिनी वयस्याभावं चक्रे । सख्याश्चैवंविधो व्यापारः ॥ ४६ ॥

**नारीभिर्गुरुजघनस्थलाहतानामास्यश्रीविजितविकासिवारिजानाम् ।**
**लोलत्वादपहरतां तदङ्गरागं संजज्ञे स कलुष आशयो जलानाम् ॥ ४७ ॥**

यत्र सरसि ताः क्रीडन्ति स जलानामाशयः स्थानमम्भोधिः कलुषः संजज्ञे आविलोऽभवत् । कीदृशानां जलानां योषाभिर्निबिडकटितटैः प्रेरितानाम्, तथा मुखकान्तितिरस्कृतफुल्लपद्मानाम्, तथा सकम्पत्वात् तासां समालम्भनमुत्पुंसयताम् । अत एव कालुष्योत्पत्तिः । ये किल जडास्ते यदा रिरंसया कामिनीजघनस्थलाहता भवन्ति तदा तेषामाशयश्चित्तं कलुषः मलिनं भवति, परदारगमनाकुलं भवतीत्यर्थः । कीदृशानां जडानां ताम्बूलदानेन यास्यश्रीस्तया विजितानि विकासीनि वारिजानि यैस्तथा चापल्यात् तासामङ्गरागमुत्पुंसयताम् ॥ ४७ ॥

**सागन्ध्यं दधदपि काममङ्गनानां दूरत्वाद्गतमहमाननोपमानम् ।**
**नेदीयो जितमिति लज्जयेव तासां लोलोर्मौ पयसि महोत्पलं ममज्ज ॥ ४८ ॥**

पयसि पानीयमध्ये महोत्पलं पद्मं ममज्ज बुब्रोड, यत आलोले कम्पिनि । उत्प्रेक्ष्यते—इत्यतो हेतोर्या लज्जा व्रीडा तयेव ममज्ज । तदेव लज्जानिमित्तमाह—सागन्ध्यं समानगन्धत्वमपि दधद् बिभ्रद् वनितावदनोपमानं काममत्यर्थमहं गतं, कुतो दूरत्वादनिकटत्वात् । तुल्येऽपि सौरभे समोपमानत्वं दवीयस्त्वात् । दूरवासो हि गौरवायेति स्थितिः । अपिर्भिन्नक्रमो विरोधे । सागन्ध्यमपि दधादित्यर्थः । अधिकगुणेन किलोपमानेन भाव्यम् । अथ च सागन्ध्यं सगोत्रत्वं विपक्षत्वं दधादित्यर्थान्तरप्रतीतिः । यः किल विरोधी कथमसावुपमानम् । अहं चैवंविधमपि दूरत्वादाननोपमानं गतम् । स्ववेश्मस्थानां

किलासां पद्ममुख्य इत्युच्यते । अधुना पुनर्नेदीयो नेदीयस्त्वात् समीपस्थाज्जितमभिभूतम् । एतन्मुखसन्निधौ हि न मे कान्तिरिति लज्जयेव ममज्ज । यः किल दूरस्थः केनचिद्गुणेन गुणवानिति प्रसिद्धोऽन्तिकमागतस्य च तस्य यदा स गुणोऽतिशय्यते तदा[1] सोऽवश्यमेव लज्जते । समानो गन्धो यस्य स सगन्धस्तद्भावः सागन्ध्यम् । "आमोदलेशयोर्गन्धो गन्धः सम्बन्धमात्रके" ॥ उपमा उपमानम्, उपमीयतेऽनेनेति वोपमानम् । अतिशयेनान्तिकं नेदीयः । "अन्तिकबाढयोर्नेदसाधौ" ॥ ४८ ॥

**प्रभ्रष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः ।**
**आबन्ध्यैः सरसि हिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि**

वधूनां जलमध्ये भ्रष्टैर्भूषणैर्व्यराजि शोभितम् । कथं पतितैः, साभिलाषं जलस्नानकेलिभिः । कीदृशैराबन्ध्यैर्विकसितह[2]रिणीकपिशैः, यतो हिरण्मयैः सौवर्णैरत एव वडवानलकान्तितुल्यैरित्युपमा । उत्प्रेक्षेति केचित् । व्यराजीति भावे ॥ ४९ ॥

**आस्माकी युवतिदृशामसौ तनोति**
**च्छायैव श्रियमनपायिनी किमेभिः ।**
**मत्वेव स्वगुणपिधानसाभ्यसूयैः**
**पानीयैरिति विदधाविरेऽञ्जनानि ॥ ५० ॥**

स[3]लिलैरञ्जनानि विदधाविरे सुतरां क्षालितानि । उत्प्रेक्ष्यते–स्वगुणपिधानसाभ्यसूयैः साद्भिरित्येवं विचार्यैव धौतानि । किमित्याह–असावस्मदीयैव च्छाया कान्तिः शौक्ल्यलक्षणा अङ्गनाचक्षुषां किल श्रियं शोभां तनोति विस्तारयति, एभिरञ्जनैः किं न किञ्चित्प्रयोजनमित्यर्थः । सिते हि नेत्रे रम्यतरे जलानां स्वच्छाया सिता, यतः सलिलं सदैव सितं वर्णान्तरापत्तिस्त्वनुरागवशात् स्फटिकस्येव । कीदृशी छाया, अनपायिनी नित्या अकृत्रिमत्वात् । नहि नेत्राणां शौक्ल्यमुपाधिः कृत्रिमं वा, इत्येवं मत्वेव विदधाविरे । यतस्तैः स्वगुणपिधानसाभ्यसूयैः, स्व[4]गुणः सितिमा तस्य पिधानं स्थगनं तेन साभ्यसूयैः सेर्ष्यैरिव । चक्षुषां हि धवलत्वं कज्जलैराच्छादितमभूत् अतस्तैस्तत्स्थगनात् सामर्षैस्तानि मनोह[5]राण्यपि क्षालितानि इति वाक्यार्थः । अथ यद्वर्णां

१ 'तः' क. पाठः । २ 'फणिनी' ख. पाठः । ३ 'पानीयैः' ग. पाठः । ४ 'स्वो' ग. पाठः । ५ 'रमा' ग. पाठः ।

सितत्वं तत्किमिति जलस्य स्वं शौक्ल्यमात्रस्य विवक्षितत्वाददोषः। अन्योऽपि निजगुणनाशनात् रोषितोऽवश्यमेवापरमपास्यति। अस्माकमियमास्माकी "युष्मदस्मदोरन्यतरस्यां खञ्च। तस्मिन्नणि च युष्माकास्माकौ"। विद्धाविरे इति धावेः कर्मणि लकारः॥ ५०॥

**निर्धौते सति हरिचन्दने जलौघैरापाण्डोर्गतपरभागयाङ्गनायाः।**
**अह्नाय स्तनकलशद्वयादुपेये विच्छेदः सहृदययेव हारयष्ट्या॥५१॥**

कस्याश्चित् तन्व्याः कुचकुम्भयुगान्मुक्ताकलापेन विच्छेदः उपेये त्रोटनं प्राप्तमभिमर्दनेति भावः। कदा तोयपूरैः रक्तचन्दने क्षालिते सति। कीदृश्या अङ्गनायाः, आपाण्डोः पाण्डुरायाः हरिचन्दनधावनाद्वा अतिस्नानाद्वा समन्मथत्वाद्वा, अत एव गतपरभागया नष्टशोभातिशयया हारयष्ट्या। नहि तुल्यौ वर्णौ राजेते। अतश्चोत्प्रेक्ष्यते—सहृदययेव सचेतनयेव। यः किल सहृदयो जनैरपास्तगौरवकारणत्वात् क्वचिद्गतपरभागो भवति सोऽवश्यमेव तत्क्षणं विश्लेषमुपैति। अह्नायेति निपातः सपद्यर्थः। उपेये इति इणः कर्मणि लकारः॥५१॥

**अन्यूनं गुणममृतस्य धारयन्ती संफुल्लस्फुरितसरोरुहावतंसा।**
**प्रेयोभिः सह सरसी निषेव्यमाणा रक्तत्वं व्यधित वधूदृशां सुरा च**

सा सरसी सुरा चाङ्गनाचक्षुषामरुणिमानं चकार। जले हि सेव्यमाने चक्षूंषि लोहितायन्ते हालया च। कीदृगुभयं, सरसीं तावदमृतस्योदकस्य गुणमच्छत्वशैत्यस्वादुत्वलक्षणमखण्डं बिभ्रती, तथा विकस्वराणि द्योतमानानि चाब्जानीवावतंसाः कर्णपूराः यस्याः, तथा कान्तैः सह समाश्रीयमाणा। सुराप्यमृतस्य पीयूषस्य सम्बन्धिनं गुणं स्वादुताख्यं सकलं दधाना, तथा संफुल्लस्फुरितोत्पला वल्लभैश्च साकं पीयमाना॥ ५२॥

**स्नान्तीनां बृहदमलोदबिन्दुचित्रौ रेजाते रुचिरदृशामुरोजकुम्भौ।**
**हाराणां मणिभिरिवाश्रितौ समन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ५३**

तासां मनोज्ञनेत्राणां मज्जतीनां कुचकुम्भौ व्यद्योतिषाताम्। कीदृशौ स्तनौ स्थूलैर्निर्मलैश्च जलकणैर्मनोहरौ। अतश्च तर्क्यते—उत्सूत्रैश्छिन्नतन्तुभिर्हाराणां मुक्ताकलापानां मणिभिर्मुक्ताभिरिव समन्तात् सर्वत आश्रितौ संभक्तौ, कि-

१ 'नाय' क. पाठः। २ 'रेषा' क. ख. पाठः। ३ 'सुगात्र्याः' ग. पाठः। ४ 'नेत्रानां' ग. पाठः। ५ 'सार्क' ग. पाठः।

मर्थं गुणवदुपन्नकाम्ययेव सगुणसमीपवासाभिलाषेणेव, छिन्नसूत्राणामस्माक-मतो महागुणात् कुचयुग्माद् गुणस्य तन्तोः प्राप्तिः कदाचिद्भविष्यतीत्याशये-त्यर्थः । स्तनौ हि सगुणावुच्छ्रायकाठिन्यस्थौल्यादियोगात् । येऽप्युत्सूत्रा निर्म-र्यादा अशरणास्ते प्रायशः सगुणमाश्रयमाश्रयन्ते । गुणवांश्चासावुपन्नो गुणवदु-पन्नस्तस्येच्छा गुणवदुपन्नकाम्या। "काम्यच्च' अ प्रत्ययात्" । उत्प्रेक्षाद्वयसङ्का-वादिवशब्दावपि द्वावेव न्याय्यौ । नहि हारमणिभिः श्रयणं तेषां वा गुणव-दुपन्नकाम्या तात्त्विकम् । अपाश्रिताविति तु पाठे एकस्यैकस्य शक्तिद्वयं बो-द्धव्यम् । यथा भारवेः—"बहुबर्हिचन्द्रकनिभं विदधे धृतिमस्य दानपयसां प-टलम् । अवगाढमीक्षितुमिवेभपतिं विकसद्विलोचनशतं सरितः" इति ॥ ५३ ॥

**आरूढः पतित इति स्वसम्भवोऽपि**
**स्वच्छानां परिहरणीयतामुपैति ।**
**कर्णेभ्यश्च्युतमसितोत्पलं वधूनां**
**वीचीभिस्तटमनु यन्निरासुरापः ॥ ५४ ॥**

ये स्वच्छा अकलुषचित्तास्तेषां स्वसम्भवोऽप्यङ्गजोऽपि नूनं त्याज्यत्वं या-ति । कुतः, आरूढः पतित इति । पूर्वमारूढो महत्पदं राजस्थानदेवद्विजाद्यधिकार-लक्षणं प्राप्तः स पश्चात्पतितः पातित्यमुपगतः[1] । कथं ज्ञायते इत्याह—यद्य-स्मात् नारीणां श्रोत्रेभ्यः पतितमुत्पलं पुलिनं प्रत्यम्भांसि निरासुश्चिक्षिपुः । उत्पलं ह्यद्भ्यो जातं ततस्ताभिरेव निरस्तम्, आरूढं च वधूभिः कर्णीकृत-त्वात्, ततः श्रवणाच्च[2] पतितम् । निरासुरिति लिट् ॥ ५४ ॥

**दन्तानामधरमयावकं पदानि**
**प्रत्यग्रास्तनुमविलेपनां नखाङ्काः ।**
**आनिन्युः श्रियमधितोयमङ्गनायाः**
**शोभायै विपदि सदाश्रिता भवन्ति ॥ ५५ ॥**

अधितोयं तोयस्थिताया नार्या अनलक्तकमोष्ठं दशनव्रणानि श्रियं शोभा-मानिन्युः प्रापयामासुः । तथा क्षालितसमालम्भनं देहं सरसानि च करजक्षता-नि श्रियमानीतवन्ति । अयावकत्वादकुङ्कुमत्वाच्च नष्टशोभमप्यधरं वपुश्च क्ष-

१ 'मागत' क. पाठः । २ 'च्यवनाच्च' ग. पाठः ।

तान्यभूषयन्नित्यर्थः । युक्तं चैतत्, यतो ये सदाश्रिताः सत्सेवकास्ते वि[१]पत्काले शोभायै आश्रीयमाणस्य भवन्ति, क्षतानि च सन्ति अनुद्वेगकारित्वादाश्रिताश्च तत्स्थत्वात् । आश्रयन्ते इत्याश्रिताः, सन्तश्च ते आश्रिताः सदाश्रिताः सत्सेवकाः । केचित्तु सदा नित्यमाश्रिता इत्याहुः । नयतेर्द्विकर्मकत्वादधरं तनुं च श्रियमानिन्युरिति प्रयोगः । यथा–"अजां नयति ग्रामं" इति । अयावकत्वमविलेपनत्वं चात्र जलकेलिवशात् । अधितोयमिति सप्तम्यर्थेऽव्ययीभावः ॥ ५५ ॥

**कस्याश्चिन्मुखमनु धौतपत्रलेखं व्यातेने सलिलभरावलम्बिनीभिः**
**किञ्जल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः ५६**

अन्यस्या नायिकाया ललाटस्थकेशप्रान्तसटाभिरत्यर्थमालेख्यलक्ष्मीर्व्यातेने कृता । क्व मुखमनु वक्त्रं प्रति । किं तत्र पत्रलता न सन्ति यत्तु[२] शोभा आभिरकारीत्याह–धौतपत्रलेखं क्षालितपत्रलतमिति । कीदृशीभिः वल्लरीभिर्जलभारलम्बमानाभिस्तथा परागसम्पर्ककपिलमध्याभिः । एवं मुखं पाण्डु[३]तानीलं किञ्जल्क[४]पिशङ्गमित्यनेकवर्णसंयोगात् चित्रनिष्पत्तिः । अलकाग्राणां वल्लर्यः कुञ्चिता भागाः । व्यातेने इति कर्मणि ॥ ५६ ॥

**वक्षोभ्यो घनमनुलेपनं यदूनामुत्तंसानहरत वारि मूर्द्धजेभ्यः ।**
**नेत्राणां मदरुचिरक्षतैव तस्थौ चक्षुष्यः खलु महतां परैरगम्यः॥ ५७॥**

वृष्णीनां गाढमुरःसमालम्भनं शिरोभ्यश्च शेखरानुदकमपासयत् । चक्षुषां पुनः क्षीबत्वरक्तता अखण्डैवाभवत् । कथमयं रागद्वेषप्रकार इत्याह—उन्नतानां यः चक्षुष्यः कान्तः स यः परैरगम्योऽनाक्रमणीयः । मदरुचिश्च चक्षुष्या, चक्षुषि भव इति कृत्वा शरीरावयवत्वाद्यः । खलुर्हेतौ । गन्तुं शक्यो गम्यः । परैरिति कर्तरि तृतीया ॥ ५७ ॥

**यो बाह्यः स खलु जनैर्निरासि रागो**
**यश्चित्ते स तु तदवस्थ एव तेषाम् ।**
**धीराणां व्रजति हि सर्व एव नान्तः-**
**पातित्वादभिभवनीयतां परस्य ॥ ५८ ॥**

---

१ 'आप' ग. पाठः । २ 'त्तच्छो' ग. पाठः । ३ 'कैश्यं नी' ख. पाठः । ४ 'ल्कं' ख. पाठः ।

तेषां यदूनां बाह्यो यो रागः समालम्भनकृतः स एव तोयैर्निरासि क्षालितः, यः पुनश्चित्ते रागः स्नेहा[१]ख्यः सतु तदवस्थोऽनष्ट एव । कथमेतत्, विपर्ययः कस्मान्नाभवत् उभावपि वा कथं न तैर्न निरस्तावित्याह–यस्मात् धीराणां सत्त्ववतां योऽन्तःपाती अन्तर्वर्ती स तत्त्वात्सर्व एव कश्चिदन्येषामनाक्रमणीयत्वं याति । स च रागोऽन्तःपाती चित्तस्थत्वात्, अत एव तदेव चोदितम् । खलुरवधारणे । निरासीति कर्मणि ॥ ५८ ॥

फेनानामुरसिरुहेषु हारलीला
चेलश्रीर्जघनतटेषु शै[२]वलानाम् ।
गण्डेषु स्फुटरचना च पत्रवल्ली
पर्याप्तं पयसि विभूषणं वधूनाम् ॥ ५९ ॥

अङ्गनानां तोयमध्ये निर्भूषणानामपीदमेव पर्याप्तमखण्डं विभूषणमलङ्करणम् । तथाहि–स्तनेषु फेनानामेव हारलीला मुक्ताविच्छित्तिः, यद्यपि मुक्ताहारास्त्रुटिताः तथापि तच्छोभा कुचेषु दिण्डीरैरेवाकारीत्यर्थः । तथा श्रोणिस्थलेषु शैवलानामेव चेलश्रीः, यद्यपि वासांसि जलैरपहृतानि तथापि तत्कार्यं शै[३]वलैरेवाजनि इत्यर्थः । तथा कपोलेषु या पत्रवल्ली पत्रप्रधाना लता सैव स्फुटरचनाऽखण्डविच्छित्तिः पत्रवल्ली पत्रलेखाभूदिति तन्त्रेण पत्रवल्लीशब्द उभयार्थः । यद्यपि पत्रलेखा जलैर्धौता तथापि तद्धर्माः पत्रवल्ल्यैव कृतेत्यर्थः । केचित्तु एवं व्याचक्षते–वधूनां पयसि फेनपिण्डेषु हार[४]लता पर्याप्तं विभूषणं, श्रोणिषु शैवालानां चेलश्रीः पर्याप्तं विभूषणं, गण्डेषु च पत्रवल्ली पर्याप्तं विभूषणमिति ॥ ५९ ॥

भ्रश्यद्भिर्जलमभि हेमभिर्वधूना-
मङ्गेभ्यो गुरुभिरमज्जि लज्जयेव ।
निर्माल्यैरथ ननृतेऽवधीरिताना-
मप्युच्चैर्भवति लघीयसां हि धाष्ट्यम् ॥ ६० ॥

नारीणामङ्गेभ्यः कर्णादिभ्यः पतितैर्हेमभिः कनकभूषणैर्गुरुत्वाज्जलेऽम[५]ज्जि ब्रुडितम् । उत्प्रेक्ष्यते–लज्जयेव । यः किल साधुमध्याज्जडमध्ये भ्रश्यति सो-

१ 'हरूपः' ग. पाठः । २ 'शे' ग. पाठः । ३ 'शेवालैः' ग. पाठः । ४ 'लीला' क. पाठः । ५ 'मग्नम्' क. पाठः ।

ऽवश्यमेव व्रीडया जलानां ब्रुडति । निर्माल्यैर्मृदितकुसुमैः कान्ताङ्गाज्जले भ्रष्टैर्ननृते नृत्तमुत्प्लुतमित्यर्थः । युक्तं चैतत् यस्माल्लघीयसां लघुप्रकृतीनामवधीरितानां तिरस्कृतानामप्युच्चैर्महत्वात् धार्ष्ट्यं निर्लज्जत्वं भवति । निर्माल्यानि च लघूनि लाघवयोगात् । हेमशब्देनात्राभेदात् तद्विकारा उच्यन्ते । भ्रमज्जि ननृते इति भावे । अभोग्यं माल्यं निर्माल्यं "सुप्सुपे" ति समासः ॥ ६० ॥

**आमृष्टास्तिलकरुचः स्रजोऽद्भिरस्ता**
**नीरक्तं वसनमपाकृतोऽङ्गरागः ।**
**कामः स्त्रीरनुशयवानिव स्वपक्ष-**
**व्याघातादिति सुतरां चकार चारूः ॥ ६१ ॥**

मन्मथो नारीः सुतरां चारूश्चकार अतिशयेन रम्या व्यधात् । उत्प्रेक्ष्यते–अनुशयवान् सद्वेष इव । अनुशयस्य कारणमाह–इतीत्थं यः स्वपक्षस्यात्मवर्गस्य व्याघातस्तिरस्कारस्ततः । तमेव व्याघातमाह–जलैर्विशेषकशोभाः क्षालिताः, मालाः क्षिप्ताः, वासो नीरागं, समालम्भनमपास्तमतश्च स्मरस्यानुशय उत्पन्नः । यथा मम यो वशीकरणोपायः स एभिर्जलैर्विरूपितः, भवत्वहमेवैता विभूषयामि इति स्वपक्षव्याघातादनुशयवानिव वधूश्चारूश्च[1]कार । नीरक्तमिति "रो रि, ढ्रलोपे पूर्वस्य दीर्घोऽणः" । चारूरिति "वोतो गुणवचना" दिति ङीष्विभाषितः ॥ ६१ ॥

**शीतार्तिं बलवदुपेयुषेव नीरैरासेकाच्छिशिरसमीरकम्पितेन ।**
**रामाणामभिनवयौवनोष्मभाजोराश्लेषि स्तनतटयोर्नवांशुकेन ॥६२॥**

नवांशुकेन पराध्योत्तरीयेण रामाणां स्तनतटयोराश्लेषि संलग्नम् । कीदृशोः अभिनवयौवनोष्मभाजोः प्रत्यग्रतारुण्यतापजुषोः । कीदृशेन नवांशुकेन शिशिरसमीरकम्पितेन शीतलमारुतोद्धूतेन । अतश्चोत्प्रेक्ष्यते–नीरैस्तोयैर्य आसेकः सेचनं ततो बलवन्महदत्यर्थं शीतार्तिं शीतपीडामुपेयुषेव प्राप्तेनेव उष्णयोः कुचयोः संलग्नम् । यः किल तोयसेकाच्छीतार्तिं प्राप्तो वायुनावधूतः सोऽवश्यमेवोष्णमभिलषति । बलवदिति क्रियाविशेषणम् । आसेचनमासेकः । रमयन्तीति रामाः, रमेरौणादिको डामच् ॥ ६२ ॥

---

[1] 'रकरोत्' ग. पाठः ।

श्च्योतद्भिः समधिकमात्तमङ्गसङ्गा-
ल्लावण्यं तनुमदिवाम्बु वाससोऽन्तैः ।
उत्तेरे तरलतरङ्गरङ्गलीला-
निष्णातैरथ सरसः प्रियासमूहैः ॥ ६३ ॥

अथानन्तरं प्रियासमूहैर्यौवतैर्जलाशयादुत्तेरे उत्तीर्णम् । कीदृशैस्तरलाः सहेलाश्चञ्चला ये तरङ्गाः कल्लोलास्तेषु यो रङ्गो रतिस्तत्र या लीला विलासस्तत्र निष्णातैः प्रवीणैर्जलकेलिकुशलैरित्यर्थः । तथा वाससोऽन्तैर्दशाभिरुपलक्षितैः । कीदृशैरन्तैः, समधिकं प्रभूतमम्बु श्च्योतद्भिर्जलं स्रवद्भिः । उत्प्रेक्ष्यते—तनुमत् मूर्तं लावण्यं सौन्दर्यमिव । तत्तेषां कुतस्त्यमित्याह—अङ्गसङ्गात् देहसम्पर्कादात्तं गृहीतम् । आदौतौ ? (आददातेः) निष्ठा, आतो लोपः । "अच उपसर्गात्तः" । उत्तेरे इति भावे । "तृफलभजत्रपश्च" । निष्णातैरिति "निनदीभ्यां स्नातेः कौशले" ॥ ६३ ॥

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥ ६४ ॥

पुरस्तादग्रे यदम्भस्तोयं तत उत्तरन्तीं कांचिन्नारीं दृष्ट्वा भगवान् विष्णुरुदधिविलोडनं सस्मार । यतः श्रियमिव लक्ष्मीतुल्यामत एव देवानामपि कृतविस्मयां रूपातिशययोगाज्जनितकौतुकाम्, तथा कान्तिमत्पद्मरम्यकराम् । श्रीरप्येवंविधैव । श्रीर्नार्या उपमानं, सरसः सागरः । सदृशदर्शनाच्च पूर्वानुभूतस्य स्मृतिरु[1]त्पद्यते इति स्मरणं नामालङ्कारः । दिवि भवा दिव्याः "द्युप्रागुदक्प्रतीचो यत्" । मन्थनस्येति "अधीगर्थदयेशां कर्मणि" ॥ ६४ ॥

श्लक्ष्णं यत्परिहितमेतयोः किलान्त-
र्धानार्थं तदुदकसेकसक्तमूरू ।
नारीणां विमलतरौ समुल्लसन्त्या
भासान्तर्दधतुरुरू दुकूलमेव ॥ ६५ ॥

---

[1] 'रुपपद्यते' ग. पाठः ।

तद् दुगूलं वासः प्रत्युत नारीणां सम्बन्धिनावुरू पीवरावूरू एव कर्तारौ अन्तर्दधतुः पिहितवन्तौ । केन स्फुरन्त्या रुचा, यतस्तौ विमलतरौ वर्णाढ्यौ । तद् दुगूलमित्युक्तं किं तदित्याह–यद् दुगूलमेतयोरूर्वोः किलाच्छादनार्थमाभिः परिहि[1]तं प्रावृतं, तथा श्लक्ष्णं तनु, अत एवोदकसेकेन सक्तमङ्गलग्नम् । किल विचारणायाम् ॥ ६५ ॥

**वासांसि न्यवसत यानि योषितस्ताः शुभ्राभ्रद्युतिभिरहासि तैर्मुदेव**
**अत्याक्षुः प्लवनगलज्जलानि यानि स्थूलास्रुस्रुतिभिररोदि तैः शुचेव**

स्नातास्ता नार्यो यानि धवलमेघकान्तीनि दुगूलानि न्यवसत परिदधुः तैर्मुदा तुष्ट्या अहासीव हसितमिव । सितत्वात्तु तर्कः, हर्षस्तु तदङ्गसङ्गात् । यः किल कामिन्याङ्गे गृह्यते सोऽवश्यमेव तोषाद्धसति । यानि पुनः स्नानस्रवत्तोयत्वात् जहुस्तैः शोकेनारोदीव रुदितमिव । केन स्थूलानि यान्यस्रूणि तेषां स्रुतिभिर्मोक्षैः, स्थूलास्रुस्रुतिर्येषामिति बहुव्रीहिर्वा । शोककारणं तु तत्त्याग एव । यः किल नार्या त्यज्यते सोऽवश्यमेव शोकाद्रोदिति । न्यवसतेति कर्तरि लङ् । अहास्यरोदीति भावे लुङ् ॥ ६६ ॥

**आर्द्रत्वादतिशयिनीमुपेयिवद्भिः**
**संसक्तिं भृशमपि भूरिशोऽवधूतैः ।**
**अङ्गेभ्यः कथमपि वामलोचनानां**
**विश्लेषो वत नवरक्तकैः प्रपेदे ॥ ६७ ॥**

वामे मधुरे लोचने यासां ता वामलोचनास्तासा[2]मङ्गेभ्यो देहेभ्यो नवरक्तकैः कौसुम्भवसनैः कथमपि वत विश्लेषः प्रपेदे प्राप्तः, यतः क्नूतत्वान्महतीं सक्तिं गात्रसंश्लेषमुपागतैः । कदाचिदचालितानि स्युरित्याह—भृशमत्यर्थं भूरिशोऽसकृदवधूतैः चालितैरपि[3] । अथचोक्तिः यः किल नवरक्तकः प्रथमव्यसनी स यद्यनेकशोऽपि तिरस्क्रियते[4] तथापि कथंचित् कामिनीकायाद्विश्लेषमुपैति, यत आर्द्रत्वात्सरसत्वादत्यर्थं सङ्गमुपेतः । अतिशयोऽस्या अस्ति इति अतिशयिनी । भूरिश इति बह्वल्पार्थाच्छस् ॥ ६७ ॥

**प्रत्यंसं विलुलितमूर्धजा चिराय स्नानार्द्रं वपुरुदवापयत् किलैका ।**
**नाजानादभिमतमन्तिकेऽभिवीक्ष्य स्वेदाम्बुद्रवमभवत्तरां पुनस्तत् ।**

१ 'वृ' ग. पाठः । २ 'कान्तानां' क. पाठः । ३ 'पीति' क. पाठः । ४ 'अवधूयते ग. पाठः ।

काचिन्मुग्धा देहं बहुकालमुद्वापयदशोषयत् परिवापयामास । यतः स्नानार्द्रं मज्जनक्नूतम् । कीदृगसौ, प्रत्यंसं स्कन्धे विलुलिता विकीर्णा मूर्धजा केशा यस्या यया वा । किलालीके । किल स्नानार्द्रं नतु तत्त्वतः स्नानार्द्रं, तदाह—अन्तिके निकटे प्रियतममालोक्य तद्वपुः कामवशात् पुनः पुनः स्वेदाम्बुना घर्मवारिणा द्रवमार्द्रतरमभवत्तरामतिशयेनाभूदिति नाजानान्न विवेद । यदि त्वेवं जानीयान्नोद्वापयेत् । उदवापयदिति वातेर्णिच् । पुगागमः । द्रवतीति द्रवं स्वेदाम्बुना द्रवं स्वेदाम्बुद्रवमिति तृतीयासमासः । स्वेदाम्बुनो द्रवमिति वा कर्मषष्ठीसमासः । अतिशयेनाभवदभवत्तराम् । "तिङश्चे" ति तरच्, ततः "किमेत्तिङव्ययघादाम्वि" ति आमुः ॥ ६८ ॥

**सीमन्तं निजमवबध्नती कराभ्यामालक्ष्यस्तनतटबाहुमूलभागा ।**
**भर्त्रान्या मुहुरभिलष्यता निदध्ये नैवाहो विरमति कौतुकं प्रियेभ्यः**

काचिन्नारी साभिलाषेण पत्यासकृत् निदध्ये[1] पेक्षि दृष्टा, यतः संलक्ष्यस्तनतटबाहुमूलभागा । किमिति दृश्यकुचमूलकक्ष[2]देशेत्याह—पाणियुग्मेन स्वं सीमन्तं केशपाशमवबध्नती । अत्रैव चित्रीयमाणोऽर्थान्तरमाह—नैवाहो विरमति कौतुकं प्रियेभ्य इति । ये प्रियाः पदार्थाः केचित् ततो हि कौतुकं कौतूहलं नैव विरमति निवर्तते । "सीमन्तः केशेषु" । बाहुमूलं कक्षः । अभिलष्यतेति "वा भ्राशभ्लाशे" ति श्यन् । निध्यानं दर्शनम् । विरमतीति "व्याङ्परिभ्यो रमः" । प्रियेभ्य इति "जुगुप्साविरामप्रमादार्थाना" मित्यपादानसंज्ञा ॥ ६९ ॥

**स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठस्ताम्बूलद्युतिविशदो विलासिनीनाम्**
**वासश्च प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न शून्यः**

स्नातानामेव नायिकानां वस्त्रग्रहणमेव "वासांसि न्यवसते"त्यादिना वर्णितं, नत्वाभरणादानम् । तत्कश्चिच्चो[3]दयेत् नतु अलंकाररहितत्वमविधवानामुचितं तत्कथं तदादानं न वर्णितमिति, तं प्रत्याह—तासां नारीणामिति इयानेवाकल्पो वेशो भवतु यदि कामेनारहितः । एतदेवास्माभिरभ्युपगतं नतु शृङ्गाररहितः कटककुण्डलादिकः कनकभार इत्यर्थः । किमित्याह—निर्मलोदकमज्जनमनोज्ञं वपुः, जातीफललवङ्गादिरागकषायश्चाधरस्तथा वासः सूक्ष्मं च मनोहरं च,

१ 'नेना' ग. पाठः । २ 'क्ष्या' ग. पाठः । ३ 'च्छा' क. पाठः ।

तस्मान्न बहुना प्रयोजनम् । केचित्तु वासः प्रतनु, विविक्तं च रह इत्याहुः । इदं परिमाणमस्येतीयान् ॥ ७० ॥

इति धौतपुरन्ध्रिमत्सरान्सरसि मज्जनेन
श्रियमात्तवतोऽतिशायिनीमविरलाङ्गभासः ।
अवलोक्य तदेव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे ॥ ७१ ॥

इति माघभट्टविरचिते शिशुपालवधकाव्ये जलविहारवर्णनं नामाष्टमः सर्गः ॥ ८ ॥

अथानन्तरं तदा शिशिरेतररोचिषापि अपरवारिराशेरपां ततिषु जलाशयापूरेषु मङ्क्तुमीषे ब्रुडितुमभिलषितमित्यपरसर्गार्थसूचनम् । उत्प्रेक्ष्यते—यादवान् वृष्णीन्सरसि जलाशये मज्जनेन स्नानेनैवंविधानवलोक्येव दृष्ट्वेव मङ्क्तुमीषे । कीदृशानिति पूर्वोक्तेन प्रकारेण धौतः क्षालितः पुरन्ध्रीणां नायिकानां मत्सरो मात्सर्यमीर्ष्या यैस्तान् धौतपुरन्ध्रिमत्सरान्, तथातिशायिनीं परार्ध्यां श्रियं शोभामात्तवतः प्राप्तान्, तथाविरला महती अङ्गभा वपुःकान्तिर्येषाम्, मज्जनेनेति प्रत्येकमभिसम्बध्यते । भगवता पर्यालोचितं—यदि मज्जनं सरसि एवंविधगुणं तत्कथमहमपि न स्नामीत्यवधानेनेव मङ्क्तुमीषे । आददातेः क्तवतौ आत्तवत इति । तदेवेतीवशब्दो भिन्नक्रमोऽवलोक्येत्यतोऽनन्तरं बोद्धव्यः । न केवलं यादवाः स्नाता यावद्रविणापि मङ्क्तुमिष्टमित्यपिशब्दार्थः । मङ्क्तुमिति "मस्जेरन्त्यात्पूर्वो नुम्" । ईषे इति इषेर्भावे लकारः । द्रुता वृत्तम् । "नृमणे नृरणे द्रुते मतिमतामर्यश्च (?) ससजा भजयुङ् मता द्रुता मतिमता गुरुला । उत्प्रेक्षालङ्कार इति भद्रम ॥ ७१ ॥

इति श्रीमहामहोपाध्यायाचार्यवर्य्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां जलविहारवर्णनं नाम अष्टमः सर्गः ॥ ८ ॥

अथ

# शिशुपालवधकाव्ये

## नवमः सर्गः ।



**अतितापसम्पदमथोष्णरुचिर्निजतेजसामसहमान इव ।**
**पयसि प्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ १ ॥**

अथानन्तरं भगवांश्चण्डरश्मिरस्ताद्रिमारोढुमभ्यपतत् तत्संमुखं जगामेत्यर्थः । अधिरोहणे हेतुमाह—पश्चिमोदधिजले प्रपित्सुर्निमङ्क्षुः । अब्धिं सूर्यो निशि यातीत्यागमः । पयसि प्रपाते निमित्तान्तरारोपरूपामुत्प्रेक्षामाह—स्वधाम्नामूष्मसमृद्धिं सोढुमशक्नुवन्निव । यः किलोष्णालुः स तोये मज्जति । प्रपतितुमिच्छुः प्रपित्सुः "सनि मीमे"ति इस् अभ्यासलोपश्च[1] ॥ सर्गेऽस्मिन् प्रमिताक्षरा वृत्तम् । "प्रमिताक्षरा सजयुतावथ सौ" इति ॥ १ ॥

**गतया पुरः प्रतिगवाक्षमुखं दधती रतेन भृशमुत्सुकताम् ।**
**मुहुरन्तरालभुवमस्तभुवः सवितुश्च योषिदमिमीत दृशा ॥ २ ॥**

काचिद्योषा, अस्ताद्रेर्भानोश्चान्तरालभुवं मध्यभूमिं दृष्ट्या मुहुर्मुहुरमिमीताच्छैत्सीत् । कियद्व्यवधानमनयोर्भवेत् कियता वा कालेन भगवानस्तमुपैष्यतीति । यतो रतेन सुरतेनात्यर्थमुत्कण्ठां बिभ्रती । कीदृश्या दृशा पुरोऽग्रे यद् गवाक्षमुखं वातायनजालकं तदभिमुखं गतया । एतेनास्तसूर्ययोर्दर्शने हेतुरुक्तः । निधुवनलालसत्वात् काचित्सूर्यास्तमयमाचकाङ्क्षेति वाक्यार्थः । रतेनेति "प्रसितोत्सुकाभ्यां चे"ति अधिकरणे तृतीया । अस्तस्य नगस्य भूः स्थानमस्तभूरस्तपर्वत एवोच्यते इति नात्र भूशब्दोऽधिकः । अमिमीतेति माङो लुङ् ॥ २ ॥

**विरलातपच्छविरनूष्मतनुः परितोऽतिपाण्डु दधदभ्रशिरः ।**
**अभवद्गतः परिणतिं शिथिलः परिमन्दसूर्यनयनो दिवसः । ३ ॥**

---

१ 'श्च उष्णं न सहते उष्णालुः इत्यधिकः' ख. पाठः ।

तदा वासरः शिथिलोऽभवत् अदृढ आसीत्, चटुलो बभूवेत्यर्थः । यतः परिणतिमवसानं गतः प्राप्तोऽत एव विरलातपच्छविस्तनुतेजःकान्तिरनूष्मतनुरनुष्णरूपः, तथा समन्तादतिपाण्डु धवलमभ्रमाकाशमेव शिरो दधत् बिभ्रत् । अस्तमयसमये हि पाण्डुरमाकाशं भवति । तथा परिमन्दोऽनुल्वणोऽपटुः सूर्य एव नयने यस्य स परिमन्दसूर्यनयनः । अथच परिणतिं गतो वृद्धत्वं प्राप्त इत्युक्त्याभिहितम् । यः किल वार्द्धकमाप्नोति स विरलकान्तिर्भवति, तथाघर्मदेहः पाण्डूत्तमाङ्गः शिथिलगात्रो मन्दनेत्रश्च । अभ्राणि विद्यन्ते यस्य तदभ्रं खम् "अर्शआदिभ्योऽच्" । केचित्तु अभ्रं मेघमेवाहुः ॥ ३ ॥

**अपराह्णशीतलतरेण शनैरनिलेन लोलितलताङ्गुलये ।**

**निलयाय शाखिन इवाह्वयते ददुराकुलाः खगकुलानि गिरः ॥ ४ ॥**

खगकुलानि पक्षिवृन्दानि गिरो वाच आकुलाः सत्वरा ददुरुदचारयन्निति दिनान्तस्वभावः। उत्प्रेक्ष्यते–शाखिने वृक्षायेव गिरो ददुरेतानि वयमागतानीति । यत आह्वयते आमन्त्रयमाणाय । किमर्थं निलयाय वसतये, आगच्छत वसतात्र रम्योऽयं प्रदेश इत्याकारयत इवेत्यर्थः । यो हि धार्मशालिको वासायाह्वयते तस्यावश्यमेव पान्थाः प्रतिवचनं ददते । कथमाह्वानं तदीयं ज्ञायत इति विशेषणद्वारेणाह–शनैरनिलेन वायुना लोलिताश्चालिता लता एवाङ्गुलयो यस्य । यश्चाह्वयते सोऽङ्गुलिभिरे[1]वाभिनयते । कीदृशेनानिलेन, अपराह्णशीतलतरेण दिनान्तवशादतिशीतलेनेति निवासरम्यत्वोक्तिः । शनैर्ग्रहणं वातस्य मार्दवप्रतिपादनार्थम् ॥ ४ ॥

**उपसंध्यमास्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः ।**

**करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥ ५ ॥**

उष्णांशोः करनिकरोऽस्ताद्रिशृङ्गेषु आस्त अतिष्ठत् । कदा, उपसंध्यं संध्यावेलायां संध्यासमीपे वा । कीदृक् करजालं, तत्क्षणं तस्मिन्काले तनु विरलम् । युक्तं चैतत् यत्तन्वपि उपर्यभूत् । यतो महतां न केवलं संपदि यावदवसानकालेऽप्यनीचमेव स्थानं युक्तम् । आस्तेति आसेः कर्तरि लङ् । अनुदात्तेत्त्वादात्मनेपदम् ॥ ५ ॥

---

१ 'रभि' ग. पाठः ।

**प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।**
**अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ६ ॥**

अहर्पतेरधो गच्छतः करसहस्रमप्याश्रया[1]य नाभूत् । अन्यस्य जन्तोः करद्वयमपि पततस्त्राणाय भवति, तेन तु सहस्रेणापि कराणां न किञ्चिदवलम्बितमित्यपिशब्दार्थः । यदि[2] स दिनपतिः सहस्रकरश्च तत् कथं पतित एवेत्याह—यस्माद् दैवे वामत्वं प्रा[3]प्ते सहायबाहुल्यमपि वैफल्यं याति, अतः स दिननाथोऽपि[4] सहस्रकरोऽपि तथापि पतित एव । अर्थान्तरन्यासोऽयमलङ्कारो नतु दृष्टान्तः समर्थकत्वात् । समर्थ्यसमर्थकभावो हि तत्रैव क्रियते न दृष्टान्ते । तत्र केवलं साध्यार्थप्रतिबिम्बोदाहृतिरेव । उक्तं च—"उक्तस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम् । यथेवादिपदैः शून्यं बुधैर्दृष्टान्त उच्यते" इति ॥ किं चार्थद्वयं यत्र विशेषरूपं स दृष्टान्तः, यत्र तु सामान्ये विशेषरूपं सोऽर्थान्तरन्यासः, इति रुद्रटः । तथा चाह—"अर्थविशेषः पूर्वं दृष्टाभावाद्विव (र्जि ? चि) तेतरयोः । तादृशमन्योन्यं स्याद्यत्र पुनस्तत्र दृष्टान्तः" इति ॥ ६ ॥

**नवकुङ्कुमारुणपयोधरया स्वकराग्रमुक्तरुचिराम्बरया ।**
**अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः ॥ ७ ॥**

वरुणस्य दिशा पश्चिमाशयातिसक्तिं गाढं संश्लेषं प्राप्यात्यर्थं रविरन्वरज्यदनुरक्तो लोहितो बभूव । कीदृश्या वारुण्या नवकुङ्कुममिवारुणाः पयोधरा मेघा यस्याम्, तथा भगवतो ये स्वकरा निजकिरणास्तैरवमुक्तं परित्यक्तं संबद्धं वा रुचिरं दीप्तिमदम्बरं खं यस्याम् । अथ चान्वरज्यत् रागीव बभूवेति वक्रोक्तिः । यः किल परनायिकयातिसक्तिमुपैति सोऽवश्यमेवानुरज्यते व्यसनी सम्पद्यते । कीदृश्या तया नवकुङ्कुमेनारुणौ पयोधरौ स्तनौ यस्याः, तथा रागिणा स्वह[5]स्तैरवमुक्तं निर्नीवि कृतं रुचिरमम्बरं दुगूलं यस्याः । अन्वरज्यदिति, रञ्जेर्दिवादित्वात् श्यन् । यदि वा "कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च" । "अनिदिता"मिति नलोपः ॥ ७ ॥

**गतवत्यराजत जपाकुसुमस्तबकद्युतौ दिनकरेऽवनतिम् ।**
**बहु[6]लानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥ ८ ॥**

---

१ 'यणाय' ख. पाठः । २ 'यदि तर्हि' क. पाठः । 'इति तर्हि' ख. पाठः । ३ 'गते' ख. पाठः । ४ 'पि तथा' ख. पाठः । ५ 'करैः' ग. पाठः । ६ 'हु' ख. पाठः ।

सूर्येऽवनतिं गते लम्बमाने सति दिग्वलयमाशाचक्रवालं शुशुभे । कीदृशे दिनकरे, जपा लताविशेषस्तस्याः कुसुमस्तबकः पुष्पगुच्छस्तस्येव द्युतिः कान्तिर्यस्य लोहिते इत्यर्थः । अतश्च दिग्वलयं कीदृशं, बहलानुरागं समुत्कटारुणिम यत् कुरुविन्ददलं पद्मरागविशेषखण्डं तेन प्रतिबद्धं स्यूतं मध्यं यस्य तदिव । वलये किल कुरुविन्दः क्रियते रविरेतत्स्थानीयः । दिनकर इति "कृञो हेतुताच्छील्यानुलोम्येषु" ॥ ८ ॥

**द्रुतशातकौम्भनिभमंशुमतो वपुरर्द्धमग्नवपुषः पयसि ।**
**व्यरुचद्विरिश्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥ ९ ॥**

द्रुतशातकौम्भनिभं गलितकनकसदृशं रवेर्बिम्बं व्यरुचत् व्यद्योतिष्ट । कीदृशस्य पयसि उदधिजलेऽर्धमग्नवपुषः सामिब्रुडितदेहस्य । किमिव व्यरुचदित्याह—विरिश्चिनखैर्ब्रह्मकरजैर्भिन्नं विदारितं बृहत्सर्वव्यापि यज्जगदण्डं ब्रह्माण्डं तस्यैकं खण्डं शकलमिव । व्यरुचदिति "द्युद्भ्यो लुङि" । एकमेवैकतरम् "एकाच्च प्राचाम्" ॥ ९ ॥

**अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।**
**निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ १० ॥**

अपर[1]दिक् पश्चिमाशा सैव [2]धर्मयोगाद् गणिका वेश्ययोषा सा रविं वियदालयात् गगनगृहात् निरकासयत् निष्का[3]सयामास । कीदृशं सूर्यमनुरागवन्तं रक्तं, तथा नेत्रयोः सुखकारि बिम्बमुद्वहन्तं, यतोऽतापकरमचण्डरश्मिम्, तथापेतवसुं भ्रष्टतेजस्कम् । यापि गणिका सा, कामुको यद्यनुरागवान् व्यसनी भवति लोचनसुखदो रम्यश्चानुद्वेजकश्च यावदपेतवसुस्तावत् क्षणादेव तं स्वालयान्निष्कासयति । अपिशब्दोऽर्थान्तरागमे सति विरोधप्रतिपादनार्थः। निरकासयदिति कासयतेर्लङ् । अतापाः करा यस्य तमतापकरम्, अथवा तापं न करोतीति अतापकरम् ॥ १० ॥

**अभितिग्मरश्मि चिरमा विषयादवधानखिन्नमनिमेषतया ।**
**विगलन्मधुव्रतकुलास्त्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥ ११ ॥**

अब्जं पद्ममेव नयनं नलिनी न्यमिमीलत् नि[4]मीलयामास । कीदृशमभितिग्मरश्मि सूर्याभिमुखं चिरं बहुकालमवधानेन दर्शनेन खिन्नमुद्विग्नमिव ।

१ 'रा' ख. पाठः। २ 'साधर्म्यं' ख. पाठः। ३ 'निष्क्रमयामास' ग. पाठः। ४ 'संकोचयामास' ग. पाठः।

कियच्चिरं दर्शनमित्याह–आ विषयात् आ दर्शनगोचरात् यावद्भगवान् दृष्टिपथेऽस्थादित्यर्थः । कथमवधानखिन्नमित्याह–अनिमेषतयासङ्कोचत्वेन । अन्यच्च कीदृशमञ्जनयनं, विगलद्भ्रश्यत् मधुव्रतकुलं भृङ्गवृन्दमेवाम्बुजलमञ्जनवाष्पवारि यस्य । संकुचिते हि पद्मे भ्रमरा अन्यतो यान्ति । अथ चोक्तिः–यस्याः किल पतिर्देशान्तरं याति सावश्यमेव तमादृष्टिविषयं[2] पश्यति, अनिमिषदर्शनखिन्नं पतदस्रु च नयनं निमीलयति । न्यमिमीलदिति मीलेरण्यन्ताल्लुङ् । च्लेश्चङ् । उपधाह्रस्वो विभाषितः ॥ ११ ॥

**अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः ।**
**विगतोरुतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः ॥ १२ ॥**

नभः खमभात् रेजे । कीदृशम्, अलक्ष्योडु अनुदितचन्द्रं नष्टरवि च, अपगतमहाप्रभं च । कथं तर्ह्येवमभादित्याह–अतमिस्रमसंजातध्वान्तं यतः । ननु यस्य सुगुणा न सन्ति केवलमेव दोषाभावस्तत्कथं भातीत्याह—यो विगुणो गुणरहितस्तस्य यस्मात् निर्दोषतैव गुणः । एतदुक्तं भवति, यस्य परोपकारितादयो गुणा न सन्ति यावदुपघातादिदोषं न करोति, एतावानेव तस्य महान् गुणः । अतश्च नभसो यद्यपि चन्द्रोदयादि न विद्यते तथापि तमोदोषाभावाच्छोभा युक्तैव । विगतोरुतापमिति गुणपक्षे एव वा योज्यम् ॥ १२ ॥

**रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ।**
**ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥१३॥**

रुचिधाम्नि तेजोनिलये भगवति भास्करे भर्तरि त्विषां पत्यौ परलोकं लोकान्तरं याते सति, तद्भासो निर्मला वह्निमविशन् । अग्नौ तेजो निक्षिप्य सवितास्तमेतीत्यागमः । कथं वान्यथा जन्मान्तरे स एव पतिः सुलभः । अतश्च ता यद्यग्निप्रवेशं न कुर्युस्तत्कथं प्रातः समागमस्तेन तासां स्यात् । यापि विमला भर्तृशरणा नारी सा भर्तरि मृते सत्यवश्यमेवाग्निं प्रविशति जन्मान्तरे च तमेव पतिं लभते । रुचीनां धाम स्थानं भास्करः । इवशब्दोऽसंभावनायाम् । यथा क्वेव भोक्ष्यसे, इति ॥ १३ ॥

**विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् ।**
**चिरमुज्झितापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः॥१४॥**

---

१ 'अवधान' ग. पाठः । २ 'यात्' ग. पाठः । ३ 'र' ग. पाठः । ४ 'र' ग. पाठ ।

असावात्मभुवो ब्रह्मणः सम्बन्धिनी पितृप्रसूः पितृजननी तनुर्मूर्तिः संध्यालक्षणा चिरं तेनोज्झितापि त्यक्तापि तस्य प्रकृतिं स्वभावं नौज्झत् न जहौ । तथाहि जनतया द्विजगणेन कृतनमस्कृतिः, तथा विकसत्फुल्लं यत् कुसुम्भकुसुमं तद्वदरुणतां रक्तत्वं बिभ्रती । ब्रह्मापि लोहितः सर्वलोकनमस्कृतश्च । पितृप्रसूस्तनुः संध्या । एवं किलानुश्रूयते–पुरा सिसृक्षया प्रजासृजा बह्वयस्तन्वस्त्यक्ताः । तत्र देवान् सृष्ट्वा या तनुस्त्यक्ता साऽहोरूपा संपन्ना, पुनर्दैत्यान् सृष्ट्वा या तनुस्त्यक्ता सा रात्रिरूपाजायत । भूयः पितॄन् निर्माय या तनुस्त्यक्ता सा संध्या समपद्यत । जनानां समूहो जनता । औज्झदिति उज्झेर्लङ् । पितॄन्प्रासोष्टेति पितृप्रसूः, क्विप् ॥ १४ ॥

**अथ सान्द्रसांध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः ।**
**पृथगुत्पपात विरहार्तिदलद्धृदयस्रुतासृगनुलिप्तमिव ॥ १५ ॥**

अथ संध्यानन्तरं पततोर्मिथुनं पक्षियुग्मं पृथगुत्पपात विश्लेषमाप । कतरन्मिथुनमित्याह—हरिहेतिहूतीति । हरिहेतिश्चक्रं सा हूतिराह्वानं यस्य तत् तथोक्तं चक्राह्वमित्यर्थः । चक्रवाकमिथुनं हि रामशापान्निशि वियुज्यते इत्यागमः । तथा गाढसन्धिवेलामयूखलोहितम् । अतश्चोत्प्रेक्ष्यते–विरहेण यासावार्तिः पीडा तया दलत् स्फुटत् यद्धृदयं ततः स्रुतं यदसृग्रुधिरं तेनानुलिप्तं छुरितमिव । संध्यायां भवः सांध्यः । सन्धिवेलादित्वादण् । हूतीति ह्वेञः क्तिनि यजादित्वादिग्यणः 'हल' इति दीर्घः । दलदिति "वर्तमानसामीप्ये" इति लट् । एवमन्यत्र ॥ १५ ॥

**निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म यया ।**
**दिवसात्ययात् तदपि मुक्तमसौ चपलाजनं प्रति न चोद्यमदः ॥ १६ ॥**

असौ श्रीर्जनं प्रति चपला चञ्चलेत्येतत् न चोद्यं न दोषः । यथैवंविधमपि कृतं तस्याः कियदेतद्युक्तमित्यर्थः । किं तया कृतमित्याह—यया श्रिया दिवसात्ययाद् दिनक्षयात् तदपि जलजन्माब्जं मुक्तमुत्सृष्टम्[1] । किं तदिति तच्छब्देन योऽस्या धर्मो विवक्षितस्तमाह–निलय इत्यादि । श्रियः पद्माया एतदेव सततमजस्रं निलयो वसतिरिति यत्प्रथितं लोके प्रसिद्धमतश्च, या निजमपि गृहं त्यजति सा लोके[2]ऽस्थिरेति कियत् तस्याश्चोद्यम् । निलीयतेऽस्मिन्निति

1 'रुत्सृष्टा' ग. पाठः । २ 'केष्व' ग. पाठः ।

निलयो निकायः । सततशब्दे "लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि । समो वा हिततततयोर्मांसस्य पचि युड्घञो"रिति ॥ १६ ॥

**दिवसोऽनुमित्रमगमद्विलयं किमिवास्यते बत मयाबलया ।**
**रुचिभर्तुरस्य विरहाधिगमादिति संध्ययापि सपदि न्यशमि ॥१७॥**

तत्क्षणं संध्ययापि सपदि न्यशमि नष्टम् । न केवलं दिनेन रविणा च शान्तं यावत्संधिवेलयापीत्यपिशब्दार्थः । उत्प्रेक्ष्यते–इत्यतो हेतोरिव न्यशमि । कुत इत्याह—अयं दिवसोऽनुमित्रं रविणा सह विलयं विनाशमगमत् प्राप्तवान्, अतश्च मयाबलया स्त्रियास्य रुचिभर्तुस्त्विषां पत्युर्विरहाधिगमात् वियोगावाप्त्या बत किमिवास्यते कुत इव स्थीयते । यदा किल नार्या भर्ता तन्मित्राणि च नश्यन्ति तदासावप्यवश्यमेव म्रियते । संध्या च रवेर्भार्यास्थानीया । यतस्तेजोरूपः कालविशेषः संध्या, स च रुचिभर्ता । बत विषादे । रुचिभर्तेति, अबलेति च साभिप्राये नामनी । न्यशमीति भावे लकारः । अनुमित्रमिति "तृतीयार्थे" इति कर्मप्रवचनीयसंज्ञा ॥ १७ ॥

**पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधिं[1]म् ।**
**अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे ॥ १८॥**

पतङ्गः सूर्यः स एव मृगराट् सिंहस्तस्मिन्नब्धिं याते सति करिघटानीलानि ध्वान्तानि भुवनं समन्तात्परितस्तरिरे व्यापुः[2] । कथमिवोदधिं सूर्ये पतिते इत्याह–निजप्रतिबिम्बरोषिते इवेति । यथा सिंहे स्वप्रतिबिम्बावलोकनकुपिते सिंहान्तराशङ्कयाम्भोधिं पतिते सति नागयूथानि विपक्षाभावाद्वनं व्याप्नुवन्ति, एवं तमोभिर्जगद्व्यानशे इति वाक्यार्थः । परितस्तरिरे इति परिपूर्वस्य स्तृणातेः कर्तरि लकारः । "ऋच्छत्यृता"मिति गुणः । द्वित्वम् । "शर्पूर्वाः खयः" । मृगेषु राजते इति मृगराट् ॥ १८ ॥

**व्यसरन् नु भूधरगुहान्तरतः पटलं बहिर्बह[3]लपङ्करुचि ।**
**दिवसावसानपटुनस्तमसो बहिरेत्य वाधिकमभक्त गुहाः ॥ १९ ॥**

**किमलम्बताम्बरविलग्नमधः किमवर्द्धतोर्ध्वमवनीतलतः ।**
**प्रससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ २० ॥**

---

१ 'धौ' ख. पाठः । २ 'सुः' ख. पाठः । ३ 'बहुल' ग. पाठः ।

युग्मकम् ॥

तमः प्रचुरीभवत् घनतां गच्छत्सद् इतीत्थं न निरधारि न निरचायि, कुत आगतमिति न निष्टङ्कितम् । तमेव निश्चयप्रकारमाह—व्यसरदित्यादि । एतद् दिनान्तोत्कटस्य तमसो घनकर्दमनीलं पटलं संघातो महीध्रकन्दरामध्यात् बहिर्बाह्यं व्यसरन्निर्जगाम, आहोस्विद्बहिर्वा बाह्यादागत्य गुहा दरीरभक्त व्याश्नुत, अम्बरविलग्नमाकाशस्थं सत् किमधो भुवि व्यलम्बत पपात, किंवा अवनीतलतो भूपृष्ठादूर्ध्वमाकाशं यावदवर्धत वृद्धिं जगाम, भूमेः खं किंस्वित्प्रससारेत्यर्थः । किंवा तिर्यक्तिरश्चीनं दिग्भ्यः सकाशात् प्रसृतमिति सर्वव्यापित्वादनिश्चयः । व्यसरदित्यङन्तः । निरधारीति कर्मणि लकारः ॥ १९–२० ॥

**स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति ।**
**दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ २१ ॥**

भरितनभोभुवि लोकनेत्राणि चान्धयति निष्फलीकुर्वति तमसि सति, निशाभिसारिकाः रसो राग एव तमोऽगणनादञ्जनं तद्यदा दधिरे बभ्रुः । अतो हेतोस्ताः कान्तचतुष्कमार्गं ददृशुः । तेन ता अपि कथं नान्धकारिता इति न चोद्यमिति भावः । रागेण हि न तमो न भयं न लज्जा न लाघवं वा गणयत इति तत्स्वभावः । अत एव तदपूर्वमञ्जनम् । नहि रागोऽञ्जनत्वेन क्वचित् प्रसिद्धः । अथ च रसाञ्जनमञ्जनविशेषं यदोहुस्तदा ददृशुरित्यर्थान्तरम् । यः किल तिमिरहतदृष्टित्वाद्रसाञ्जनं बिभर्ति सोऽवश्यमेव हारिदृष्टिर्भवति । अन्धेश्चौरादिकस्य शतरि अन्धयतीति रूपम् ॥ २१ ॥

**अवधार्य कार्यगुरुतामभवन् न भयाय सान्द्रतमसन्तमसम् ।**
**सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ २२ ॥**

कस्याश्चिदभिसारिकाया दयितोपगमे प्राणनाथाभिसरणे सान्द्रतमसन्तमसमतिघनं तिमिरं भयाय त्रासाय नाभवत् न जातम्, तमो भयं न चोदपादयदित्यर्थः । तथा स्तनौ तनुरोमराजिपथस्य मध्यस्य च वेपथवे कम्पाय नाभवतामिति विभक्तिपरिणामः । अभवन्निति वा बहुवचनं, तमसः कुचयोश्च बहुत्वात् । तमो भयाय कुचौ च मध्यकम्पाय न बभूवुरित्यर्थः । अबलानां हि नक्तमुभयमपि भवितुं युक्तं, कथं तर्हि नाभवन्नित्याह—कार्यगुरुतां प्रयोजनगौरवं प्रियोपकण्ठप्राप्तिलक्षणमवधार्य निश्चित्य । कार्यप्राप्तौ हि नैवंविधाश्चिन्ता मनः

स्पृशन्ति । अवधार्येति भिन्नकर्तृकत्वात् क्त्वोत्पत्तिश्चिन्त्या । अवधारणे हि सुतनुः कर्त्री, अभवने तु तमः कुचौ । दृश्यते चासौ प्रायशो भिन्नकर्तृकत्वेऽपि । यथा कालिदासस्य—"अवजानासि मां यस्मादतस्ते न भविष्यति । मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप से" ति ॥ यथा च भारवेः—"वीक्ष्य रत्नचषकेष्वतिरिक्तां कान्तदन्तपदमण्डनलक्ष्मीम् । जज्ञिरे बहुमताः प्रमदानामोष्ठयावकनुदो मधुवाराः" इति । "निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् । असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः" इति च ॥ तथा—"संचिन्त्य संचिन्त्य हि जीवलोके त्रयः पदार्थाः हृदयं प्रविष्टाः । इक्षोर्विकारा मतयः कवीनां मत्ताङ्गनापाङ्गविलोकितं चे" ति ॥ तथा—"कादम्बरीकथां श्रुत्वा नान्या मे रोचते कथा । तावद्धि मधुरा द्राक्षा यावत्कान्तावचोऽश्रुति" रिति ॥ एवमन्येऽपि । नचात्र हृदयङ्गमाः परिहारा विद्यन्ते । यदि वात्र तमः कुचावेवावधारणेऽपि कर्तारः । अचेतनानामपि चेतनव्यवहारोपचारो दृश्यते । यथा पुण्यं वर्धयते पापं हन्ति नरमिति । केचित्तु अभयापेक्षामुपगमापेक्षां वा समानकर्तृकतामाहुः । कार्यगुरुतामवधार्य यदभयं दयितोपगमो वेत्यर्थः । भयायेति तादर्थ्ये चतुर्थी । सन्ततं तमः सन्तमसम् "अवसमन्धेभ्यस्तमसः" । दयितोपगम इति कर्मषष्ठीसमासः । प्रियं प्रति यदभिसरणमित्यर्थः । तन्वी चासौ रोमराजिस्तनुरोमराजिः, तस्याः पन्थास्तत्पथो मध्यम् । "ऋक्पूरब्धूःपथामानक्षे" ॥ २२ ॥

**ददृशेऽपि भास्कररुचाह्नि न यः स तमीं तमोभिरधिगम्य तताम् ।**
**द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ २३ ॥**

स ग्रहगणस्तारानिकुरुम्बस्तिमिरव्याप्तां तमीं शर्वरीं प्राप्य द्युतिमग्रहीत् कान्तिमाददे पुस्फोर । कोऽसावित्याह–यो दिनेऽपि रवितेजसापि न दृष्टः । अहन्यपि यो नैक्षि स कथं तमसि दृश्यते इत्याह–ये लघवः प्राकृतास्ते मलिनाश्रयतः कलुषाधारवशात् नीचसेवया स्फुटा जायन्ते । ग्रहगणश्च लघुः स्वल्पप्रमाणत्वादणुतेजस्कत्वाच्च, निशापि मलिना तमोरूपत्वात् । ग्रहग्रहणं तारकोपलक्षणम् ॥ २३ ॥

**अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः ।**
**समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत ॥ २४ ॥**

तेन समयेन कालेनाबला नार्य इमानीमानि वस्तून्यबोधिषत कर्तव्यतया ज्ञापिताः । किं किमित्याह—अनुलेपनानि कुङ्कुमादीनि, कुसुमानि माल्यानि, दीपदशाः प्रद्योतकवर्तयो दीपावस्थाभेदा वा । किमिति तेन बोधिता ननु स्वयमबुध्यन्तेत्याह—पतिषु कृतमन्यवो विहितरुषः । ता हि मानिनीत्वात् स्वयं मण्डनं न कुर्वते । यदा हि स कालोऽतिदुःसहोऽतस्तेन बोधिताः । कथमबोधिषतेत्याह—सुचिरं दिनं शयितोऽनुद्भूतोऽनन्तरं क्षिप्रं बोधितः पटूकृतः स्मरः कामो यत्र, कामोऽपि तासां जनित इत्यर्थः। 'कृतसुप्तमनोभवबोधनं समवबोधिषते' ति पाठान्तरम् । अबला इति "गतिबुद्धि" इत्यादिना कर्मसंज्ञा । अबोधिषतेति बोधयतेः कर्मणि लकारः । च्लेः सिच् । "स्यसिच्सीयुट्तासिष्वि" ति चिण्वदिट् च । "असिद्धवदत्राभा" दिति चिण्वदिटोऽसिद्धत्वात् "णेरनिटी" ति णिलोपः । उक्तं च । इट् चासिद्धस्तेन मे (?) लोप्स्यते णिरिति । षत्वम् । "आत्मनेपदेष्वनत" इति झस्यादादेशः । अडागमः ॥ २४ ॥

**वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् ।**
**स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥ २५ ॥**

अथानन्तरं हिमरश्मेः करनिकरो माघवनीं ककुभमैन्द्रीमाशां समस्कुरुताभूषयत् । कीदृगंशुजालं स्फुरद् द्योतमानम् । उत्प्रेक्ष्यते—भूतलादुद्गतमिवानन्तशिरोरत्नदशशतीदीधितीनां पटलं निकुरुम्बम् । फणाशब्दः स्त्रीपुंसयोः स्मर्यते । समस्कुरुतेति "प्रतियत्ने" तङ् । "करोतौ भूषणे" इति सुट् । मघोन इयं माघवनी, "मघवा बहुल" मिति त्रादेशो विभाषितः ॥ २५ ॥

**विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः ।**
**मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ २६ ॥**

शक्रदिशः पूर्वाशाया मुखमा[1]रम्भो विबभौ व्यद्योतिष्ट । कीदृशं विशदयामलया प्रभया शशिभासा शनकैः परिगतं व्याप्तम्, तथोदयाद्रिणा व्यवहितमिन्दोर्वपुर्यत्र । किमिव विबभावित्याह—मुखं वदनमिवेति तन्त्रेण मुखशब्दस्यायमर्थः । कीदृङ्मुखं सह विलासहासेन विभ्रमस्मितेन वर्तते इति सविलासहासम्, अत एवाप्रकाशदशनमलक्ष्यदन्तम् । यथा कस्याश्चिन्नार्याः सस्मितं गूढदन्तं मुखं भाति, एवं शक्रदिशो निकटीभूतचन्द्रं सप्रभं मुखमाभादित्यर्थः । प्र-

---

१ 'प्रा' ग. पाठः ।

भाया हास उपमानं, शशिनो दशना, मुखस्य मुखं, शक्रदिशस्तु नायिका सामर्थ्याक्षिप्ता । उदयान्तरितचन्द्रायाः शक्रदिशो वपुर्मुखमिव बभावित्येवं वा योज्यम् ॥ २६ ॥

**कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् ।**
**क्षणमभ्यपद्यत जनैर्न मृषा गगनं गणाधिपतिमूर्तिरिति ॥ २७ ॥**

लोकैः खमष्टमूर्तिमूर्तिरिति क्षणं मृषा नाभ्यपद्यतालीकं न ज्ञातम् । हरस्याकाशं वपुरिति सत्यमविदुरित्यर्थः । कीदृग् गगनमित्यमृषा बोधकारणमाह–इन्दोर्लेखयाग्रभागे मृदु कृत्वा भिन्नं नाशितं मिश्रितं वा तमःपटलमेव जटा यस्य तत् तथोक्तम् । शशाङ्कमौलेरपि देहः शशिलेखयाच्छुरिततिमिरनिभजटः । भिन्नं विदारितं विशेषितं च, क्षणं यावच्छशी कलारूप इत्यर्थः । अभ्यपद्यतेति कर्मणि लकारः ॥ २७ ॥

**नवचन्द्रिकाकुसुमकीर्णतमःकवरीभृ[1]तो मलयजार्द्रमिव ।**
**ददृशे ललाटतटहारि हरेर्हरितो मुखस्य हिमरश्मिदलम् ॥ २८ ॥**

हरेरिन्द्रस्य या हरित्पूर्वा दिक् तस्या मुखं प्रारम्भस्तस्य हिमरश्मिदलं चन्द्रखण्डं ददृशे दृष्टम्, शशी किञ्चिदुदियायेत्यर्थः । कीदृग्दलं ललाटतटहारि अर्धोदितत्वादलिकस्थलसदृशम् । मुखे किल ललाटमवश्यंभावि । कीदृशस्य मुखस्य नवाम्लाना यासौ चन्द्रिका ज्योत्स्ना सैव कुसुमं तेन कीर्णं मिश्रितं यत् तमस्तदेव कवरी धम्मिल्लं तद्बिभर्ति यत्तस्य, अतश्च ज्योत्स्नासंपर्कान्मलयजार्द्रमिव चन्दनलिप्तमिव शशिदलम् । यथा नायिकायाः कुसुमकीर्णकवरीके मुखे चन्दनलिप्तं ललाटं शोभते, एवं शक्रदिङ्मुखं सचन्द्रकमभादिति वाक्यार्थः । ददृशे इति कर्मणि लकारः ॥ २८ ॥

**प्रथमं कलाभवदथार्धमथो हिमदीधितिर्महदभूदुदितः ।**
**दधति ध्रुवं क्रमत एव नतु द्युतिशालिनोऽपि सहसाभ्युदयम् ।२९।**

शशी उदितः सन्नादौ लेखामात्रोऽभूत्, ततोऽर्धं ततोऽपि महदभूत् संपूर्णः संपन्नः । प्रथममेव किं न महानभूत् क्रमः किमाश्चर्यीत्याह–ये प्रथितौजसस्तेजस्विनस्ते क्रमत एव परिपाट्या निश्चितमुपचयं वृद्धिं दधति प्राप्नुवन्ति नतु सहसा अप्रतर्कितमपि । परिपाट्या शनैः शनैः शुभमाप्यते किल । यथा–

१ 'कृतो' ग. पाठः ।

"आदावङ्कुर एव सर्वविकलो द्वित्राणुपत्रान्वितः पश्चात् तच्चरमं च निर्यदरुणश्लक्ष्णाल्पनालोन्नतिः । छायावांश्च ततस्ततोऽपि विटपी तुङ्गः फलाढ्यस्ततो गच्छन् वृद्धिमिति क्रमेण सुधियां वल्लीव नीतिं तरु" रिति ॥ समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः । अमहानेव महानिवाभूदिति महद्भूत् "अभूततद्भावे च्विः" । "आन्महत" इत्यात्त्वं न भवति, उत्तरपदाभावात् । गौणत्वात् महदर्थस्य च । आश्रितपूर्वावस्थ उपचरितोत्तरावस्थो हि च्व्यन्तेनार्थोऽभिधीयते इति नात्र महत्त्वं प्रधानम् ॥ २९ ॥

**उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा ।**
**प्रथमप्रबुद्धनदराजसुतावदनेन्दुनेव तुहिनद्युतिना ॥ ३० ॥**

कैटभाख्यं दानवं जिगायेति कैटभजिद्विष्णुस्तस्य शयनं शय्याब्धिस्ततः शशिना उदमज्जि उदितमिति भावे लकारः । कीदृशेनापनिद्रं विकसितं यत्पाण्डुरसरोजं श्वेतपद्मं तस्येव रुक् कान्तिर्यस्य, अतश्च प्रथमप्रबुद्धा हरेः प्रागुत्थिता यासौ नदराजसुता अब्धितनया लक्ष्मीस्तस्या वक्त्रचन्द्रेणेव । साऽपि कैटभारेः शयनादुत्तिष्ठति सितकमलकान्तिश्च । पश्चात् स्वपन्ति प्रथमं प्रबुध्यन्ते इति सन्महेलाचारः । वदनेन्दुनेवेतीन्दुशब्दः प्रशंसायाम् ॥ ३० ॥

**अथ लक्ष्मणानुगतकान्तवपुर्जलधिं व्यतीत्य शशिदाशरथिः ।**
**परिवारितः परित ऋक्षबलैस्तिमिरौघराक्षसबलं बिभिदे ॥ ३१ ॥**

शश्येव दाशरथिः स जलधिमुल्लङ्घ्य तिमिरौघमेव राक्षसबलं बिभिदे नुनोद । कीदृशो लक्ष्मणा शशेनानुगतं सम्बद्धं कान्तं वपुर्यस्य, तथा ऋक्षबलैरुडुनिकरैः समन्तादुद्वेष्टितः । यथा अब्धिमुलङ्घ्य ऋक्षबलैर्वानरसैन्यैः परिवारितो लक्ष्मणेन सौमित्रिणानुगतो रामो रक्षःसैन्यं बभञ्ज एवमिन्दुर्मृगेण चिह्नेनानुगतः ऋक्षबलैरुडुगणैः परिवारितस्तमो बभञ्जेति वाक्यार्थः ॥ ३१ ॥

**उपजीवति स्म सततं दधतः परिमुग्धतां वणिगिवोडुपतेः ।**
**घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाम् ॥३२॥**

अम्भसां निधिरुदधिः शशिनः कलां लेखामुपजीवति स्म बुभुजे । किमर्थमुपचयायोल्लासाय । शशिरुक्संस्पर्शाद्धि अब्धिर्वर्धते । कीदृशः उडुपतेः, सदा

१ 'गेनचशब्द' क. ख. ग. पाठः । २ 'त्याकार' ख. पाठः ।

परिमुग्धतां कान्तत्वं बिभ्रतः, तथा घनवेथिर्मेघमार्गः खं सैव वीथिर्हट्टमार्गस्तामवतीर्णवत आरूढस्य । क इवोपजीवतीत्याह–वणिगिव । यथा कस्यचित्परिमुग्धतां बा[1]लिशत्वं दधतो हट्टं गतस्य वाणिजको वृद्धये कलां लाभमुपजीवति ॥ ३२ ॥

**रजनीवशादुदयमाप शशी सपदि व्यभूषयदसावपि ताम् ।**
**अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥ ३३ ॥**

निशामासाद्य चन्द्रः कान्तिं लेभे तत्क्षणं सोऽपि तामलंचक्रे । अत्रैव विस्मयमानोऽर्थान्तरं न्यस्यति–अहो सज्जनानां चेष्टितमनपेक्षितपरिपाटि इतरेतरोपकृतिमत् परस्परोपकार्[2]युक्तम् । यावदेक उपकुरुते, तावदेवान्यः प्रत्युपकुरुते इत्यर्थः । इतरेतरस्योपकृतिर्विद्यते यस्य तदितरेतरोपकृतिमत् । सच्चेति पाठे, अहो महतां सत्साधु शोभनं चरितं, यतोऽविलम्बितमितरेतरस्योपकृतिर्यत्रेति योजना ॥ ३३ ॥

**दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः ।**
**मुहुरामृशन् मृगधरोऽग्रकरैरुदशिश्वसत् कुमुदिनीवनिताम् ॥ ३४ ॥**

कुमुदिन्येव वनिता तां शशी मुहुः कराग्रैः स्पृशन् उदशिश्वसत् व्याकोचयामास । कीदृशीं कुमुदिनीं, दिवसं समग्रमेव वासरं भृशमत्यर्थमुष्णरुचेश्चण्डांशोः पादैः किरणैर्हतां निःश्रीकां कृतामत एवाविच्छिन्नभृङ्गगुञ्जितैः रुदतीमिव । यदा किल परमहेला केनचित्पादताडिता भवति तदा सा परिभवाद्रोदिति, ततः पती रागतस्तां पाणिना स्पृशन् समाश्वासयति । दिवसमिति "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया । कराणामग्राण्यग्रकराः "राजदन्तादिषु परम्" । उदशिश्वसदिति श्वसेर्ण्यन्तात् "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्"। णिलोपः । उपधाह्रस्वः । द्वित्वम् । सन्वद्भावादित्वम् । इत्येष कार्याणां प्रवृत्तिक्रमः ॥ ३४ ॥

**प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्मघर्मपयसेव चिताम् ।**
**सुदृशोऽभिभर्तृ शशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ ३५ ॥**

अभिभर्तृ प्रियाभिमुखे या इन्दुमणिदारुवधूश्चन्द्रकान्तयन्त्रपुत्रिका तां नार्यः

[1] 'नालिकत्वं' क. ग. पाठः । [2] 'पकारं' क. पाठः ।

प्रतिकामिनीति ददृशुरपश्यन्, सपत्नीयमित्यैक्षन्त, विपक्षत्वेन शशङ्किरे इत्यर्थः । अत एव चकितास्त्रस्ताः साशङ्काः । कीदृशीं तां, चन्द्रकिरणैः स्रवन्तो जलबिन्दवस्तोयकणा यस्यास्तामत एव कामोत्थस्वेदाम्बुनेव व्याप्तामतश्च सपत्नीशङ्का युक्ता । दारुवधूर्यन्त्रपुत्रिकोच्यते । इन्दुमणीनां दारुवधूरिति षष्ठीसमासः । यदि वा इन्दुमणिरेव दारुस्तस्य वधूर्वधूप्रति[1]कृतिरिति व्याख्येयम् । चारुवधूरिति पाठान्तरम् । तदा इन्दुमणेश्चार्वी वधूरिति समासः ॥ ३५ ॥

**अमृतद्रवैर्विदधदब्जदृशामवमार्गमोषधिपतिः स करैः ।**

**परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥३६॥**

मान एव घातकत्वाद्विषं तदोषधिपतिः शशी मानिनीनां देहादवतारयति स्म न्यवर्तयत् । कीदृगोषधीशः करैः किरणैरवमार्गं स्पर्शं कुर्वन् । कीदृशैरमृतद्रवैः पीयूषस्राविभिरथवा अमृतेन द्रवैरार्द्रैरथवा अमृतं द्रवो रसो येषां तैरमृतद्रवैः । कीदृग् मानविषं परितो विसर्पि समस्तव्यापि, अत एवात्यर्थपरितापकरम् । अन्योऽप्योषधिपतिर्गारुडिकः पानीयद्रवैः करैरवमार्गं परिमार्जनं कुर्वन् कायाद्विषं निरस्यति ॥ ३६ ॥

**अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः ।**

**विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥३७॥**

शशिकरनिकरोऽतिघनं विससार प्रसृतः । कीदृशः आपाण्डुषु युवतिगण्डस्थलेष्वभित उभयतः प्रतिफलन्, अत एवाधिकप्रकाशीकृतदिक्त्वं ज्योत्स्नायाः । यदा हि दर्पणादौ तेजः प्रतिफलति तदा प्रकाशाधिक्यं जायते, अन्यस्मिन्नप्यमलात्मनि सत्पुरुषे क्वचिदन्तर्भावं कुर्वन्नवश्यमेव भृशं प्रसरति ॥ ३७ ॥

**उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि ।**

**रजनीकरः किमिव चित्रमदो यदि रागिणां गणमनङ्गलघुम् ॥३८॥**

शशाङ्कोदये जनतां कामयुक्तां दृष्ट्वा यो विस्मयं यायात्तं प्रत्याह—यथा सपानाथो गाम्भीर्ययुक्तं बहुजानिं समुद्रमप्यचुक्षुभदुल्लासयामास तदा किमिवाश्चर्यं यन्मन्मथकातरं कामिवृन्दमक्षोभयत् । गम्भीरक्षोभणाल्लघुक्षोभणस्य सुकरत्वादिति भावः । कीदृशं नदीपतिम्, अलघव ऊर्मय एव भुजास्तैरुपगूढवेलमा-

[1] 'प्रकृति' क. ख. पाठः ।

लङ्घितमर्यादम्। चन्द्रोदये हि वेलां यावदब्धिः प्रसरति। योऽपि कामी कामेन क्षोभ्यते स बाहुभ्यां कान्तामाश्लिष्यति ॥ ३८ ॥

**भवनोदरेषु परिमन्दतया शयितो लसत्स्फटिकयष्टिरुचः।**

**अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान् मदनः ॥३९॥**

इह दिने कार्यान्तरासक्त्या कामो न पटूभवति, चन्द्रोदयेऽपि सर्व उत्सुको भवतीति भावः। तत्राह—गवाक्षविवरप्रविष्टान् स्फुरत्स्फटिकदण्डसितान् चन्द्रकरान् वासवेश्मान्तरेष्ववलम्ब्य गृहीत्वेव स्मर उदतिष्ठत्, यतो दिने परिमन्दतयापटुत्वेन शयितः पतितो वा। यः किल मन्दत्वेन शेते स यष्टिमवलम्ब्य गृहान्तरुत्तिष्ठति। शयित इति "निष्ठा शीङ्" इति कित्त्वाभावः। उदतिष्ठदिति "अनूर्ध्वकर्मणी" ति निषेधात्तङभावः ॥ ३९ ॥

**अविभावितेषुविषयः प्रथमं मदनोऽपि नूनमभवत्तमसा।**

**उदिते दिशः प्रकटयत्यमुना यदधर्मधाम्नि धनुराचकृषे ॥ ४० ॥**

प्रथमं प्रदोषसमये तिमिरेण निश्चितं स्मरोऽपि अलक्षितलक्ष्योऽभूत्। कथमित्याह—यदमुना मदनेन शशिनि उद्गते सति, अत एवाशाः प्रकटयति सति धनुराचकृषे चापमाकृष्टम्। यदि चासौ तमस्यपि पश्येत् तत्पूर्वमेव कार्मुकास्फालनमकरिष्यत्। आचकृषे इति कर्मणि लः। इषोर्विषयः शरव्यम् ॥ ४० ॥

**युगपद्विकासमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत।**

**द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥ ४१ ॥**

शिलीमुखा भृङ्गाः शराश्च तेषां गणः पूगः स यथाक्रमं कुमुदे कामिनीचित्ते चावकाशमलभत प्रापत्। शशिन उदयात् तुल्यकालं विकासं व्याकोशतां प्रापिते। किं कृत्वा अलभत, पुष्पधनुषो धनुषः कामचापात् तूर्णमागत्य द्वयमपि तत्रस्थमभूत्। यत्र हि पुष्पाणि तत्र भ्रमराणां रतिः, यत्र च धनुस्तत्र शराः। पुष्पान्तराणि च सङ्कुचितत्वादपास्यालयः कुमुदेष्वातस्थुः, कामिन्यश्च सकामास्तदाभूवन्निति वाक्यार्थः। "अवकाशमाशु हृदये सुदृशां गमिते विकासमुदयाच्छशिनः। कुमुदे च पुष्पधनुषो धनुषश्चलितः शिलीमुखगणोऽलभते" ति पाठान्तरम् ॥ ४१ ॥

**ककुभां मुखानि सहसोज्ज्वलयन् दधदाकुलत्वमधिकं रतये ।**
**अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥ ४२ ॥**

इन्दुः शशी कुसुमेषुं काममदिदीपदवर्धयत् । कीदृक् शशी, अत्रिर्ब्रह्मर्षिस्तस्य नयनान्नेत्रात् प्रभवो यस्य सोऽत्रिनयनप्रभवो ब्रह्मर्षिनयनजन्मा । अत्रिनयनात् सञ्चारी इन्दुर्जात इत्यागमः । अत एवापरो दहनोऽपरो वह्निः । यतस्त्रिनयननयनोत्थेनाग्निना कामो दीप्तोऽभूत् अयं तु यदात्रिनयनप्रभवस्तदापूर्वत्वम् । अन्यच्च कीदृशः, ककुभां मुखानि दिगन्तराणि सहसा झगित्येवोज्ज्वलयन् प्रकाशयन्, तथा रतये रमणाय निधुवनार्थमाकुलत्वमुत्कण्ठां दधत् कुर्वन् । त्रिनयनाग्निरपि दिङ्मुखान्याभासयन् कामं चादिदीपत् । अत एव रतये तद्भार्यायै विह्वलतां चक्रे । अदिदीपदिति दीपयतेः "भ्राजिभासी" त्युपधाह्रस्वो विकल्पितः[1] ॥ ४२ ॥

**इति निश्चितप्रियतमागतयः सितदीधितावुदयवत्यबलाः ।**
**प्रतिकर्म कर्तुमुपचक्रमिरे समये हि सर्वमुपकारि कृतम् ॥ ४३ ॥**

अबलाः कामिन्यः प्रतिकर्म मण्डनं कर्तुमुपचक्रमिरे आरेभिरे । कदेति पूर्वोक्तेन प्रकारेण सितरश्मावुद्गते सति, यतस्तदा ताः सम्भावितवल्लभागमनाः । युक्तं चैतत् । यतोऽवसरे सर्वं किञ्चित् कृतमुपकारि गुणाय नान्यदा, स च तासामलङ्कर्तुं समयः कान्तागमनात् । उपचक्रमिरे इति "प्रोपाभ्यां समर्थाभ्या" मित्यात्मनेपदम् । इतिशब्दोऽत्र प्रतिकर्मणा सम्बध्यते ॥ ४३ ॥

तदेवाह[2]—

**सममेकमेव दधतुः सुतनोर्गुरुहारभूषणमुरोजतटौ ।**
**घटते हि संहततया जनितामिदमेव निर्विवरतां दधतोः ॥ ४४ ॥**

अङ्गनायाः कुचस्थले मुक्ताकलापमेकमेवोहतुः । किं पर्यायेणेत्याह—समं तुल्यकालं साधारणं च । युक्तं चैतत् । यतो यौ संहततया एकयोगक्षेमत्वेन जनितामुत्पादितां निर्विवरतां संश्लेषमभेदं धारयतः तयोरिदमेव घटते इदमेव युक्तं यदलङ्करणरशनादीनां साधारणत्वम् । स्तनौ च संहततया पीवरत्वेन निर्विवरतां नीरन्ध्रत्वं दधतः ॥ ४४ ॥

१ 'भाषि' ग. पाठः । २ 'व दर्शयितुमाह' ग. पाठः ।

**कदलीप्रकाण्डरुचिरोरुतरौ जघनस्थलीपरिसरे महति ।**
**रशनाकलापकगुणेन वधूर्मकरध्वजद्विरदमाकलयत् ॥ ४५ ॥**

काचिद्योषा काञ्चीकलापदाम्ना स्मरकुञ्जरमाकलयत् बबन्ध । क्व जघनस्थली श्रोणीतटी सैव परिसरः समभागस्तत्र । रशनालङ्कृतनितम्बदर्शनात् कामोत्पत्तेः । तत्र बद्ध इव बद्धः । कीदृशि परिसरे कदलीप्रकाण्डे इव रम्भास्तम्भाविव रुचिरौ श्लक्ष्णौ ऊरू एव तरू यत्र । द्विरदो हि वृक्षे बध्यते ॥ ४५ ॥

**अधरेष्वलक्तकरसः सुदृशां विशदं कपोलभुवि रोध्ररजः ।**
**नवमञ्जनं नयनपङ्कजयोर्विभिदे न शङ्खनिहितात्पयसः ॥ ४६ ॥**

तासां वामलोचनानामिदं शङ्खनिक्षिप्तात् पयसो दुग्धान्न विभिदे न विशेषमाप, शङ्खनिहितक्षीरतुल्यं बभूव । यथा शङ्खे निहितं क्षीरमेकवर्णत्वान्न तस्य विशेषमापादयति तद्वदिदमपीत्यर्थः । किं किमित्याह—स्वभावरक्तेष्वधरेष्वोष्ठेषु यावकरसः, पाण्डुगण्डस्थलेषु च सितरोध्रचूर्णं, रम्ययोश्च नेत्राब्जयोर्नवाञ्जनम् । रम्यत्वं तु नेत्राणां पङ्कजरूपणे सुदृशां ग्रहणेनाक्षिप्तम् । एतेन प्रकृतिचारुत्वं तासामुक्तम् । विभिदे इति कर्तरि लः ॥ ४६ ॥

**स्फुरदुज्ज्वलाधरदलैर्विलसद्दशनांशुकेसरभरैः परितः ।**
**धृतमुग्धगण्डफलकैर्व्यरुचन् विकसद्भिरास्यकुसुमैः प्रमदाः ॥४७॥**

नार्यो विकसद्भिः सहर्षैरास्यकुसुमैर्वक्त्रपद्मैर्व्यरुचन् अद्योतिषत । कीदृशैः स्फुरन्तः सकम्पा उज्ज्वला रक्ता अधरा ओष्ठा एव दलानि पत्राणि येषां, तथा समन्ताद्विलसन् दीप्यमानो दन्तांशूनामेव केसराणां भरो येषु, तथा धृता मुग्धा मनोज्ञा गण्डाः कपोला एव फलकानि गण्डफलकानि कपोलमण्डलानि यैर्धृतमुग्धगण्डफलकैः । कुसुममपि दलकेसरयुक्तं भवति । एकदेशिन्युपमेयम् । प्रमदानां लताभिरनुपमितत्वात् । सामर्थ्याच्च तत्प्रतीतिः । तेन यथा लताः कुसुमैर्विराजन्ते एवं मुखैस्ता बभूवुरिति वाक्यार्थः । यदि वा विशेषाभिधाने कुसुमान्यत्र पद्मानि बोद्धव्यानि उपमेयत्वात् । नहि मुखं पद्मादन्येन कुसुमेनोपमीयते । तस्य तु फलानि पद्माक्षाः । प्रमाद्यन्तीति प्रमदाः, प्रकृष्टो मदो वा यासाम् । व्यरुचन्निति "द्युद्भ्यो लुङि" ॥ ४७ ॥

**भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलः ।**
**मुखमिन्दुरुज्ज्वलकपोलमतः प्रतिमाच्छलेन सुदृशामविशत् ॥४८॥**

सुदृशां शशी स्वच्छगण्डप्रतिबिम्बव्याजेनातो हेतोरिवाविशत् । कुत इत्याह—यः कुशलः प्राज्ञः स बलवताभिभूतो यस्माद् देशान्तरं याति, अथवा तस्यैवानुप्रवेशं कुरुते । उक्तं च–"बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वे"ति । शशी च नारीकपोलैरुज्ज्वलतया विजित इति प्रतिमाच्छलेन तत्रैव प्राविशत् ॥ ४८ ॥

**ध्रुवमागताः प्रतिहतिं कठिने मदनेषवः कुचतटे महति ।**
**इतराङ्गवन्न यदिदं गरिमग्लपितावलग्नमगमत् तनुताम् ॥ ४९ ॥**

कामिनीकठोरपीवरपयोधरस्थले नूनं कामसायकाः प्रतिहतिमागताः कुण्ठत्वं प्राप्ताः, कुचयोर्महत्त्वात् कठिनत्वाच्च निश्चितमुत्फलिता इत्यर्थः । कथं जानीषे इत्याह–यद्यस्मादिदं कुचतटं बाह्वाद्यन्यावयववत् कार्श्यं न ययौ । यदि हि तैस्तद्भग्नं भवेत् तदन्याङ्गवत् तन्न भवेत् । नचैतत् । तस्मात् नूनं तत्र ते प्र[1]तिहताः । कीदृगिदं गरिम्णा स्थौल्येन ग्लपितं पीडितमवलग्नमुदरं येन तत् गरिमग्लपितावलग्नम् । गुरोर्भावो गरिमा "प्रियस्थिरे" ति गरादेशः । ग्लपितमिति "ग्लास्नावनुवमां चे" ति मित्संज्ञा ॥ ४९ ॥

**न मनोरमास्वपि विशेषविदां निरचेष्ट योग्यमिदमेतदिति ।**
**गृहमेष्यति प्रियतमे सुदृशां वसनाङ्गरागसुमनःसु मनः ॥ ५० ॥**

वल्लभे वासवेश्म गन्तुं प्रवृत्ते सति वनितानां चित्तं वस्त्रानुलेपनपुष्पेषु न निरचेष्ट निश्चयं नैव लेभे । कथं न निरचेष्टेत्यनिश्चयस्वरूपमाह–इदं योग्यमनुरूपं चैतद्वेति । कदाचित् ता अहृद्याः स्युर्नेत्याह–मनोरमास्वपि । कदाचित् ता अनभिज्ञा इत्याह–विशेषविदां विशेषज्ञानाम् । कथं तर्ह्यनिश्चय इति चेत् पत्युः प्रेयस्त्वाद्विशेष[2]तरेच्छया । स्वभावो हि अयं प्रेम्णो यथाकल्पेष्वसंभवः । उक्तं च–"सद्मनां विरचनाहितशोभैरागतप्रियकथैरपि दूत्यम् । सन्निकृष्टरतिभिः सुरदारैर्भूषितैरपि विभूषणमीषे" इति ॥ निरचेष्टेति कर्तरि लुङ् ॥ ५० ॥

**वपुरन्वलिप्त परिरम्भसुखव्यवधानभीरुकतया न वधूः ।**
**क्षममस्य बाढमिदमेव हि यत् प्रियसङ्गमेष्वनवलेपमदः ॥ ५१ ॥**

१ 'प्रहिता' क. ग. पाठः । २ 'रते' ग. पाठः ।

काचिद्वधूः प्रस्तुतेऽपि मण्डने देहं नान्वलिप्त न समालब्ध । कुतः आलिङ्गनसुखान्तरायभीरुत्वात् । सा हि मनुते यदि समालभे तत् कान्तालिङ्गनस्पर्शव्यवधानं ममोत्पद्यते इति । युक्तं चैतत् । यतोऽस्य वपुषो बाढं सत्यमिदमेव क्षमं साम्प्रतं यत् कान्तसम्पर्केष्वनवलेपमदः । अवलेप उत्सेकः । यदि वा एतद्वपुरनवलेपमनवद्यम् । यदि च ता अनुलिम्पेयुस्ततः सावलेपमदो भवेत् । सहानु[1]लेपेनेति कृत्वा । अन्वलिप्तेति च्लेः सिच् । अङादेशो हि तङि विभाषितः । "झलो झलि" ॥ ५१ ॥

**निजपाणिपल्लवतटस्खलनादभिनासिकाविवरमुत्पतितैः ॥**
**अपरा परीक्ष्य शनकैर्मुमुदे मुखवासमास्यकमलश्वसनैः ॥ ५२ ॥**

अन्या नायिका मुखवासमास्यसौरभं परीक्ष्यानुभूय शिङ्क्त्वा मुमुदे पिप्रिये । केन परीक्ष्य, आस्यकमलश्वसनैर्वक्त्रपद्ममारुतैः । कीदृशैरभिनासिकाविवरं नासिकानिरोकसंमुखं शनैरुत्पतितैः । कुतः स्वकरकिसलयस्य मध्यप्रतिघातात् । वासो भावना ॥ ५२ ॥

**विधृते दिवा सवयसा च पुरः परिपूर्णमण्डलविकासभृति ।**
**हिमधाम्नि दर्पणतले च मुहुः स्वमुखश्रियं मृगदृशो ददृशुः ॥ ५३ ॥**

सारङ्गाक्ष्यो मुहुर्निजवदनलक्ष्मीं शशिनि आदर्शबिम्बे च ददृशुरैक्षन्त, मुकुरदर्शनपूर्वं शशिनं दृष्ट्वा इन्दुमुखे तुल्यकान्तिनी विविदुरित्यर्थः । द्वयोरपि तुल्यत्वात् । कीदृशे द्वये यथाक्रमं सखीतुल्यया दिवा वियता सवयसा वयस्यया च विधृतेऽवलम्बिते, तथा परिपूर्णमखण्डं मण्डलस्याभोगस्य विकासं विस्तारं बिभर्ति यस्तस्मिन् अखण्डमण्डलधारिणि उभयस्मिन् ॥ ५३ ॥

**अधिजानु बाहुमुपधाय नमत्करपल्लवार्पितकपोलतलम् ।**
**उदकण्ठि कण्ठपरिवर्तिकलस्वरशून्यगानपरया परया ॥ ५४ ॥**

अन्यया जानुनि भुजमूर्ध्वं निधायोदकण्ठि उत्कण्ठितम्, प्रियं प्रत्यौत्सुक्यमभाजीत्यर्थः । कीदृशं बाहुं, नमद्यत् करपल्लवं तत्रार्पितं गण्डस्थलं यत्र । तया कीदृश्या, कण्ठ एव परिवर्ति भ्रमत् कलस्वरशून्यं मधुरध्वनिरहितं यद्गानं गेयं तत्परया तत्सक्तया, कण्ठपरिवर्तित्वाद् ध्वनेर्बहिः कलस्वररहितं गायन्त्येत्यर्थः । अथवा कण्ठपरिवर्ति कलस्वरशून्यं शुष्कं यद्गानं तत्परया । सुखदुःखाभ्यां

[1] 'लेपनेन वर्तते इति' ग. पाठः ।

विनालीकं यत्नेयं रुदितं वा[1] शुष्कं तदुच्यते । सा चोत्कण्ठया गायति नतु सुखेन । जानुन्यधिजानु । उदकण्ठीति भावे । स्वरो ध्वनिः षड्जादिर्वा ॥५४॥

**प्रणयप्रकाशनविदो मधुराः सुतरामभीष्टजनचित्तगृहः ।**
**प्रजिघाय कान्तमनु मुग्धतरास्तरुणीजनो दृश इवाथ सखीः ॥५५॥**

अथोत्कण्ठानन्तरं कामिनीलोकः कान्तं वल्लभमुद्दिश्य सखीः प्रजिघाय दूतीर्व्यसर्जयत् दृश इव । यथा प्रियं प्रति दृष्टीरागतो नवेति प्राहिणोदेवं ता[2] इत्यर्थः । कीदृशीरिति श्लेषः । प्रणयः प्रीतिस्तस्य प्रकाशनं प्रकटीकरणं विदन्तीति तद्विदः, मधुराः पेशलगिरोऽनुल्वणत्वात् । तथाभीष्टजनस्य नायकलोकस्य चित्तं गृह्णन्त्य आवर्जयन्त्य आकर्षयन्त्यश्चेत्यभीष्टजनचित्तगृहः । द्वितीयाबहुवचनम् । ग्रहेः क्विप् । सम्प्रसारणं, शस् । मुग्धतरा मनोज्ञाः । प्रजिघायेति "हेरचङि" इति कुत्वम् । कान्तमन्विति लक्षणे कर्मप्रवचनीयसंज्ञा ॥ ५५ ॥

**न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।**
**निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥ ५६ ॥**

काचित् नायिका अभिदूति दूत्यामितीत्थं संदिदिशे संदेशं ददौ । किमित्याह—एनं कान्तं प्राप्य तथा प्रवीणं त्वं कथयेर्यथा स कान्तो मम लघुतां लाघवं स्वयंप्रार्थनां नावगच्छति नैव जानीते, यथा च दयां मयि कुरुते इति । मध्यैषा नायिका बोद्धव्या, या मानं धारयितुं न शक्नोति नापि लाघवं गन्तुम् । एनमिति अन्वादेशे "द्वितीयाटौस्स्वेनः" ॥ ५६ ॥

**दयिताय मानपरयापरया त्वरितं ययावगदितापि सखी ।**
**किमचोदितप्रियहितार्थकृतः कृतिनो भवन्ति सुहृदोऽसुकृताम् ५७**

काचित् सखी दयिताय तूर्णं ययौ कान्तार्थं जगाम, दयितमानेतुं दूत्यं चकारेत्यर्थः । कदाचित्प्रेषिता स्यादित्याह–अपरयान्यया कयाचिन्नायिकया अगदितापि यतो मानपरया मनस्विन्या । यदि न संदिष्टा कथं तर्हि ययाविति वैधर्म्येणार्थान्तरन्यासमेतत्समर्थनार्थमाह–किमसुकृतामपुण्यव[3]तामेवंविधाः सुहृदो मित्राणि भवन्ति । किंभूता इत्याह–अचोदिता अनुक्ता एव प्रियमनुद्वेजकं हितं चानुकूलमर्थं कार्यं कुर्वन्ति ये तेऽचोदितप्रियहितार्थकृतः, अत एव कृ-

१ 'च' ग. पाठः । २ 'व तामि' क. पाठः । ३ 'कृतां' क. पाठः ।

तिनः प्रवीणाः, पुण्यभाजनां१नामेवंविधाः सहायाः संघटन्ते इति तात्पर्यार्थः । उक्तं च—"निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । शुभकर्माणमायान्ति सहायाश्च धनानि चे" ति ॥ सा च भाजनं यतो मानिनी, सागसि पत्यावकोपो लाघवाय, यतोऽगदितापि सखी ययौ । दयितायेति तादर्थ्ये, "गत्यर्थकर्मणी" ति वा कर्मणि चतुर्थी ॥ ५७ ॥

**प्रतिभिद्य कान्तमपराधकृतं यदि तावदस्य पुनरेव मया ।**
**क्रियतेऽनुवृत्तिरुचितैष ततः कलयेदमानमनसं सखि माम् ॥५८॥**
**अवधीर्य धैर्यकलिता दयितं विदधे विरोधमथ तेन सह ।**
**तव गोप्यते किमिव कर्तुमिदं न सहास्मि साहसमसाहसिकी॥५९॥**
**तदवेत्य मास्म तमुपालभथा नहि दोषमस्य किल विद्म वयम् ।**
**इति संप्रधार्य रमणाय वधूर्विहितागसेऽपि विससर्ज सखीम्॥६०॥**

( विशेषकम् )

काचिन्नायिका इत्येवं संप्रधार्य विचार्य कृतापराधायापि कान्ताय दूतीं प्राहिणोत् । किमित्याह–हे सखि यदि तावदागस्कारिणं प्रियं स्वयमेव प्रतिभिद्य दोषं प्रबोध्यापि भूयोऽस्य मयोचितानुवृत्तिर्योग्यं चित्ताराधनं क्रियते तत एष माममानमनसममानिनीं मुग्धां कलयेत् जानीयात् । दोषाविष्करणं प्रतिभेदः ॥–अथ चेद्धैर्यकलिता मानावष्टब्धा स२ती प्रियं तिरस्कृत्य तेन साकं वैरं करवै तत्तव किमपलप्यते । एतत् साहसं वैराख्यं कर्तुमक्षमा, यतोऽसाहसिकी अधीरा मृदुमनाः । प्राणेश्वरेण सह वैराचरणं महत्साहसम् । सहसा वर्तते इति साहसिकी "ओजःसहोम्भसः" इति ठञ् ॥ –तदेतदेवमवेत्य ज्ञात्वा तं धूर्तं मास्मोपालभथा मा प्रतिभैत्सीः । यद्येवं तल्लाघवं तवादूरस्थमेवेत्याह–नहीति । अस्य कान्तस्य किल वयं यस्माद् दोषमपराधं न जानीमः । किलालीके । तत्त्वतो विद्मः, तस्य त्वज्ञातमिव कुर्म इत्यर्थः । तेन न भवति पूर्वोक्तदोषावसर इति संप्रधार्य रमणाय वधूर्विहितागसेऽपि विससर्ज सखीम् । उपालभथा इति "स्मोत्तरे लङ्च" । उपालम्भो वाच्यता । विद्मेति "विदो लटो वे" ति मसोऽत्र मादेशः । त्रिभिर्विशेषकम् ॥ ५८ ॥ ५९ ॥ ६० ॥

---

१ 'पुण्यभा' ग. पाठः । २ 'सखी' क. पाठः ।

**ननु संदिशेति सुदृशोदितया त्रपया न किंचन किलाभिदधे ।**
**निजमैक्षि मन्दमनिशं निशितैः कृशितं शरीरमशरीरशरैः ॥ ६१ ॥**

कयाचित् मुग्धाद्या लज्जया न किञ्चिदपि किलाभिदधे प्रत्युक्तम् । कदाचिदपृष्टा स्यादित्याह–ननु संदिश संदेशं देहि किं तस्य वाच्यमित्युदितया । केनोदितयेति चेत् प्रकृतत्वाद् दूत्यैव । मूकेव तर्हि किमभूदित्याह–केवलमात्मीयमङ्गं तयैक्षि दृष्टम् । कीदृशं मन्दं सरुजं यतोऽनिशं सदा निशितैस्तीक्ष्णैरशरीरशरैः स्मरसायकैः कृशितं तनूकृतं पीडितम् । किलालीके । न किञ्चित् किलोक्तं, तनुकायदर्शनात्तु सर्वमेवोक्तमित्यर्थः । सुदृशेत्यभिधानापेक्षया कर्तरि तृतीया । लकारौ कर्मणि । कृशं करोति कृशयति "णाविष्ठवत्" कर्मणि "र-ऋतो हलादेर्लघो" रिति रादेशः । ततः कर्मणि निष्ठा ॥ ६१ ॥

**ब्रुवते स्म दूत्य उपसृत्य नरान् नरवत् प्रगल्भमतिगर्भगिरः ।**
**सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि ॥ ६२ ॥**

दूत्य आगत्य नायकान् नरवत्पुरुषवत् धाष्ट्र्येणाब्रुवन् । यतः प्रगल्भा धृष्टा मतिर्बुद्धिर्गर्भेऽभ्यन्तरे यासां तास्तथाविधा गिरो वाचो यासां ताः प्रगल्भमतिगर्भगिरः, सप्रतिभा यत इत्यर्थः । ननु निर्लज्जत्वं नाम कुलाङ्गनानां दोषस्तत्कथं नरवदूचुरित्याह–येऽजिह्मधियोऽमायिकास्तेषां स्वभावस्य विरुद्धमनुचितमपि चेष्टितं मित्रार्थे शोभते, जिह्मार्थे चेद्विरुद्धं नाचरन्ति तन्मित्रार्थम[1]दोषायैवेत्यर्थः । ताश्च सख्यर्थे धृष्टमूचुरिति न कश्चिद् दोषः ॥ ६२ ॥

ब्रुवते स्मेत्युक्तं तदेव वचनं सप्तभिः कुलकेनाह—

**मम रूपकीर्तिमहरद्भुवि यस्तमनुप्रसक्तहृदयेयमिति ।**

**त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ।६३।**

**तव सा कथासु परिघट्टयते श्रवणं यदङ्गुलिमुखेन मुहुः ।**

**घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ ६४ ॥**

**उपताप्यमानमलघूष्णिमभिः श्वसितैः सितेतरसरोजदृशः ।**

**द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलराशिरसः ॥ ६५ ॥**

---

१ 'तद' ग. पाठः ।

**दधति स्फुटं रतिपतेरिषवः शितताां यदुत्पलपलाशदृशः ।**
**हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ६६ ॥**
**कुसुमादपि स्मितदृशः सुतरां सुकुमारमङ्गमिति नापरथा ।**
**अनिशं निजैरकरुणः करुणं कुसुमेषुरुत्तपति यद्विशिखैः ॥ ६७ ॥**
**विषतां निषेवितमपाक्रियया समुपैति सर्वमिति सत्यमदः ।**
**अमृतस्रुतोऽपि विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः ॥ ६८ ॥**
**उदितं प्रियां प्रति सहार्दमिति श्रद्दधीयत प्रियतमेन वचः ।**
**विदितेङ्गिते पुरत एव जने समुदीरिताः खलु लगन्ति गिरः ॥ ६९ ॥**

( कुलकम् )

प्रियां प्रति सख्युद्देशेन यत्सख्या इत्युक्तेन प्रकारेण वच उदितमभिहितं यत् प्रेयसा सहार्दं सप्रीति श्रदधीयत समभावि अङ्गीकृतम् । किं तदि[1]त्याह–ममेत्यादि । तां भवत्कान्तां निर्घृणः कामोऽत्यर्थमुपतापयति, त्वद्विरहेणेतिभावः। उत्प्रेक्ष्यते–इत्यतो हेतोर्यस्त्वयि मत्सरो रोषस्तत इति क्षिणोति । तदेव रोष कारणमाह—रूपजनितां कीर्तिं लोके यो ममाखण्डयत् तमनु तं प्रति इयं प्रसक्तहृदया गतचित्तेति । यः किल यस्मै कुप्यति तं च बाधितुमशक्तः स तद्भर्यां[2]न् बाधते । "रिक्षिचिरिजिरिदाशदृ हिंसाया" मिति क्षिणोतीति रूपम्॥ –तवेत्यादि–तव च कथासु सतीषु यत्सा मुहुर्मुहुः कर्णं करशाखाग्रेण चालयति तेन निश्चितं त्वद्गुणनिकरभरितमप्यवैतृष्ण्येन तं घनतां प्रापयति । यत् किल वस्त्रादिकं धान्यादिपूरितं निर्भरं कर्तुमिष्यते तद्यष्ट्या परिघट्टयते। एतेन चानुरागसूचकं मोट्टायितं नाम प्रकार उक्तः । प्रियकथायां तल्लीलाभिदर्शने वा तद्भावभावितं मोट्टायितम् ॥ –उपताप्यमानमित्यादि–तस्याः सितेतरसरोजदृशो नीलोत्पलाद्याः नवनागवल्लिदलराशिरस अशुष्कताम्बूलीलतापत्रपूगनिर्यासोऽपि ओष्ठमार्द्रीकर्तुमशक्तः, यतोऽलघूष्णिमभिरत्युष्णैः श्वसितैरुच्छ्वासैरुपताप्यमानं शोष्यमाणम् ॥–दधतीत्यादि–स्फुटं निश्चितं स्मरसायकाः शिततां तैक्ष्ण्यं दधति धारयन्ति । कुतो निश्चय इत्याह–यदुत्पलपत्राद्याः एवंविधमपि हृदयमभिदन् बभञ्जुः । कीदृशं निरन्तरं नीरन्ध्रं बृहत् स्थूलं कठिनं कर्कशं यत् स्तनमण्डलं कुचाभोगस्तदेवावरणमाच्छादनं यस्य तत् तथोक्तम्। यद्येते शिता

१ 'द्भच इ' ग. पाठः । २ 'र्य्य' ग. पाठः ।

न स्युस्तत् कथमेवंविधं हृदयं भिन्द्युः । यद्धि कवचितं तच्छरैर्दुर्भेद्यम् ॥–कुसुमादपीत्यादि–तस्याः स्मितदृशो विकसिताक्ष्याः कुसुमात् मालत्यादि[1]कुसुमादपि सुकुमारं मृदु अङ्गमित्येतत् नापरथा नान्यथा, सत्यमेतदित्यर्थः । इति प्रतिज्ञा । अत्र हेतुमाह–यन्निर्दयः कुसुमशरः स्वैः कुसुममयैः पृषत्कैरत्यर्थमेतदङ्गं करुणं मन्दमुत्तपति बाधते । यदि चैतन्न स्यात् तत्कथं पुष्पमयाः शरास्तद्बाधेरन् । कुसुमेषुरित्यन्वर्थं नाम । उत्तपतीति सकर्मकत्वात् तङभावः ॥ –विषतामित्यादि । सत्यमिदमुच्यते यदपचारेणोपयुक्तं तत्सर्वमेव किञ्चिद्विषतामुपैति मारकत्वं याति । तद्यथा चरकाचार्यः—"प्राणः प्राणभृतामन्नं तदयुक्त्या निहन्त्यमून्" इति । कथं ज्ञायते इत्याह–यद्भवतो विरहात् त्वया विना निर्वृत्तिकारिणोऽपि शशिमयूखा अमूं सखीं दहन्ति तापयन्ति । प्रियं विना चन्द्रिकासेवनमपक्रिया ॥–उदितमिति । सख्योक्तं कान्तेन वचः अदधीयत सत्यं ज्ञातम् । वचनमात्रात् कथं श्रद्धानमित्याह–यस्मात्पुरत आदावेव विदितेङ्गिते ज्ञाताशये जने गिर ईरिता उक्ताः सत्यः सपदि तत्क्षणमेव लगन्ति हृदयं प्रविशन्ति । सदानुरक्ता सा ममेति विदितेङ्गितः, अतस्तत्संभावितवान् । यदि वा पूर्वं विदितमिङ्गितमाशयो यस्य तत्रेति (रागिणो ? गिरो) लगन्ति । तस्य च तयाशयो ज्ञातः यथा मां प्रत्ययमनुरक्त इति । अदधीयतेति कर्मणि लकारः । सप्तभिः कुलकम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

**दयिताहृतस्य युवभिर्मनसः परिमूढतामिव गतैः प्रथमम् ।**
**उदिते ततः सपदि लब्धपदैः क्षणदाकरेऽनुपदिभिः प्रयये ॥ ७० ॥**

शशिन्युद्गते सति तरुणैः प्रयये गतम् । उत्प्रेक्ष्यते–प्रेयसीमुषितस्य चेतसोऽनुपदिभिरन्वेष्टृभिरिव जग्मे । प्रदोषागमे हि तत् ताभिस्तेषां हृतं, तत्कालमेव तर्हि कथं न यातमित्याह—प्रथमं परिमूढतां मोहमुपगतैस्ततो निशानाथे उद्गते तत्क्षणमेव लब्धपदैः प्राप्तव्यवसायैः । प्रदोषे प्रेयसीनां सस्मरु[2]स्ततो मुहुर्मुहुर्मुमुहुः, ततः कामिनो ययुरिति वाक्यार्थः । अन्योऽपि निशि यदा चौरैर्हृतसर्वस्वो भवति, तदा प्रथमं मूढतां याति, ततः प्रकाशे जाते लब्धपदः सन् अन्वेष्टुं याति । पदं व्यवसायो गतिश्च । "अनुपद्यन्वेष्टा" । प्रयये इति भावे ॥ ७० ॥

इदानीं कान्तगृहप्राप्तिः प्रेयसीनां वर्ण्यते—

---

१ 'दिक' ग. पाठः । २ 'संमदः' ख. पाठः ।

**निपपात संभ्रमभृतः श्रवणादसितभ्रुवः प्रणदितालिकुलम् ।**
**दयितावलोकविकसन्नयनप्रसभप्रणुन्नमिव नीररुहम् ॥ ७१ ॥**

कस्याश्चित् कृष्णभ्रुवः कर्णादुत्पलं पपाताभ्रश्यत् । यतः संभ्रमभृतः प्रियप्राप्त्यादरातिशयधारिण्याः । कीदृगब्जं प्रणदितालिकुलं गुञ्जद्भ्रमरवृन्दम् । पतने निमित्तान्तरारोपरूपामुत्प्रेक्षामाह—दयितावलोकनेन प्रियदर्शनेन विकसत् प्रसरत् यन्नयनं तेन बलात् प्रणुन्नमिव प्रेरितमिव । यत् किल जनवृन्देन प्रेर्यते तत्पतति । अन्ये च पतितस्य शब्दायन्ते ॥ ७१ ॥

**उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसा कलिताम् ।**
**रभसोत्थितामुपगतः सहसा परिरभ्य कश्चन वधूमरुधत् ॥ ७२ ॥**

कश्चित् कान्तामालिङ्ग्य अरुधत् उपावेशयत् इति । लुङ् । यतो रभसोत्थिताम् । त्वरोत्थाने कारणमाह—सहसाप्रतर्कितमेव यतः समुपागतः प्राप्तः । कीदृशीं तां स्तनयुगेन कलितां संबद्धाम् । कीदृशेन, उन्नतिमतोच्चमुखेन । अत्रोत्प्रेक्षा—दिवमुपनेतुमिवोच्चेन, अत एव चारुधत् । यस्य किल कश्चित् कलयित्वा बद्ध्वा बलात् कान्तां निनीषति सोऽवश्यमेव तां रुणद्धि । इवशब्दो भिन्नक्रमः ॥ ७२ ॥

**अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता ।**
**मकुरेण वेपथुभृतोऽतिभरात् कथमप्यपाति न वधूकरतः ॥ ७३ ॥**

मकुरेण दर्पणेन वधूकरतो नवोढाहस्तात् कथमपि नापाति न पतितम् । न जाने केन निमित्तेनाधो न जग्मे इत्यर्थः । पाते कारणमाह–अतिभरादिति। कीदृशेनादर्शेनेत्यतिभरेऽपि[2] कारणमाह—अनुदेहं वपुषः पश्चादागतवतः प्राप्तस्य परिणायकस्योद्वोढुः संबन्धिनीं गुरुं गुर्वी गौरवास्पदं प्रतिमां प्रतिबिम्बमुद्वहता बिभ्रता । अत एव करा[3]द्वेपथुभृतः सकम्पात् । प्रियदर्शनाद्धि नवोढा कम्पते, सा किलात्मानमलङ्कृत्यादर्शे वीक्षते यावच्च कान्तोऽन्वगागतस्तावत् सा दर्पणे तं दृष्ट्वा मन्मथवशाच्चकम्पे । अतश्च मकुरस्य पातो युक्तः । यत्तु नापाति तद् दैववशात् । यः किल भारिको महाभारं गृह्णाति अत एव च कम्पते तस्यावश्यं पातेन भवितव्यम् । परिणयत्युद्वहतीति परिणायको भर्ता । णत्वम् "उपसर्गादसमासेऽपि" इति णत्वम् । अपातीति भावे ॥ ७३ ॥

१ 'मतो' क. पाठः । २ 'नेति भ' ग. पाठः । ३ 'भारा' ख. पाठः ।

**अवनम्य वक्षसि निमग्नकुचद्वितयेन गाढमुपगूढवता ।**
**दयितेन तत्क्षणगलद्रशनाकलकिङ्किणीरवमुदासि वधूः ॥ ७४ ॥**

केनचिद्वल्लभेन वधूरुदासि उत्क्षिप्ता । कीदृशेनावनम्य नम्रीभूय गाढमत्यर्थमुपगूढवताश्लिष्यता । पुरुषो ह्युन्नतो भवति नारी च ह्रस्वा । उच्चविषमत्वादालिङ्गनं दुर्घटमिति, नत्वालिङ्ग्योदासि, अत एवोरसि श्लिष्टस्तनयुगेन । कथमुदासि, प्रियसंसर्गात् तत्क्षणं गलन्ती त्रुट्यन्ती यासौ रशना तस्याः कलो मधुरः किङ्किणीरवो घण्टाध्वनिर्यत्र ॥ ७४ ॥

**कररुद्धनीवि दयितोपगतौ ह्रसितं त्वराविरहितासनया ।**
**क्षणदृष्टहाटकशिलासदृशस्फुरदूरुभित्ति वसनं ववसे ॥ ७५ ॥**

कयाचित् सीमन्तिन्या वसनं ववसे दुगूलं प्रावृतं, ग्रथितमित्यर्थः । यतः प्रियप्राप्तौ संभ्रमत्यक्तासनत्वात् ह्रसितं भ्रष्टमत एव कररुद्धनीवि हस्तावष्टब्धोच्चयम् । कथं ववसे, क्षणं दृष्टा हाटकशिलासदृशी कनकदृषद्गौरी स्फुरन्ती द्योतमाना ऊरुभित्तिर्यत्र । ववसे इति कर्मणि लः ॥ ७५ ॥

**पिदधानमन्वगुपगम्य दृशौ वदते जनाय वद कोऽयमिति ।**
**अभिधातुमध्यवससौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥७६॥**

काचिदचिरोढा जनाय सखीलक्षणाय कथय कोऽयमिति पृच्छते पश्चादेत्य नेत्रे स्थगयन्तं कान्तं लज्जावतीत्वाद्वाचा वक्तुं नाध्यवससौ न प्राभवत् । रोमोद्गमेन त्वाख्यत् प्रियोऽयमिति, कान्तस्पर्शादेव तदुत्पत्तेरिति भावः ॥७६॥

**उदितोरुसादमतिवेपथुमत् सुदृशोऽभिभर्तृ विधुरं त्रपया ।**
**वपुरादरातिशयशंसि पुरः प्रतिपत्तिमूढमपि बाढमभूत् ॥ ७७ ॥**

कस्याश्चिद्वध्वा अभिभर्तृ पतिं प्रति प्रतिपत्तिमूढमपि प्रत्युद्गमनादिपूजां कर्तुमशक्तमपि वपुर्बाढं नितरामादरातिशयशंसि संभ्रमविशेषाख्यापकमभूत् । पुरोऽग्रे भर्तुरेव । तदेव प्रतिपत्तिमूढत्वमाह—सञ्जातोरुस्तम्भं त्रपया च विह्वलमत एव चादरातिशयशंसि । नहि स्नेहेन विनैवंविधावस्था भवति । स्नेहेनैवादरः । बाढशब्दो निपातितः ॥ ७७ ॥

**परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ ।**
**स्खलिताभिरप्यनुपदं प्रमदाः प्रणयातिभूमिमगमन् गतिभिः॥७८॥**

ललना एवंविधाभिर्गतिभिः प्रणयस्य प्रीतेरतिभूमिं परां कोटिमगमन् आयन् । कीदृशीभिः पीवरोरुगौरवादलसाभिस्तथानुपदं क्रमे क्रमे स्खलिताभिः प्रतिहताभिः । कदागमन्, अधिवेश्म वासवेश्मनि यः पत्युरुपचारविधिर्भर्तृपूजासंपादनं तदा । ता हि तस्यागतस्य प्रत्युत्थानादिकं चिकीर्षन्त्यो यावच्च तद्दर्शनात् स्तम्भोत्पत्तौ स्खलनतश्चैवंविधाभिर्गतिभिर्महती प्रणयातिभूमिः प्रकाश्यते । अपिर्विरोधे । मन्दस्खलितया हि गत्यातिभूमिगमनं दुर्घटम् ॥ ७८ ॥

**मधुरोन्नतभ्रु ललितं च दृशोः सकरप्रयोगचतुरं च वचः ।**
**प्रकृतिस्थमेव निपुणागमितस्फुटनाट्यलीलमभवत् सुतनोः ॥ ७९ ॥**

कस्याश्चित् कल्याणगात्र्या दृशोर्ललितं नेत्रविभ्रमो वचनं च प्रकृतिस्थं सहजमपि निपुणागमितस्फुटनाट्यलीलमभवत्, निपुणात् प्रवीणादुपाध्यायादागमितमभ्यस्तं स्फुटं निर्दोषं यन्नाट्यमभिनयस्तस्य लीला विलासो यस्य तत् तथोक्तम्, नतु कृत्रिमस्य तस्येदृशी शोभा भवतीत्यर्थः, इति रूपवत्त्वोक्तिः । कीदृक् ललितं, मधुरे हृद्ये उन्नमिते च भ्रुवौ यत्र । वचः कीदृशं, सह करप्रयोगेन हस्तविक्षेपेण वर्तते इति सकरप्रयोगं चतुरं च विलासप्रवीणम् । वाचिकश्चाङ्गिकश्चाभिनयोऽत्र नाट्यशब्देन विवक्षितः । क्वचित्तु नृत्तलीलमिति पाठः ॥ ७९ ॥

**तदयुक्तमङ्ग तव विश्वसृजा न कृतं यदीक्षणसहस्रतयम् ।**
**प्रकटीकृता जगति येन खलु स्फुटमिन्द्रताद्य मयि गोत्रभिदा ॥ ८० ॥**
**न विभावयत्यनिशमक्षिगतामपि मां भवानतिसमीपतया ।**
**हृदयस्थितामपि पुरः परितः कथमीक्षते बहिरभीष्टतमाम् ॥ ८१ ॥**
**इति गन्तुमिच्छुमभिधाय पुरः क्षणदृष्टिपातविहसद्वदनाम् ।**
**सकरावलम्बनममुक्तगलत्कलकाञ्चि कांचिदरुणत् तरुणः ॥ ८२ ॥**

( विशेषकम् )

कांचिद्भामिनीं युवा अरुणत् नामुचत् । कीदृशीम् इत्येवमभिधायोक्त्वा गन्तुमिच्छुं जिगमिषुम् । किमित्याह–तदित्यादि । अङ्गशब्दोऽत्र मात्सर्यगर्भे प्रियाह्वाने । हे अङ्ग ! यत् तव विधात्रा चक्षुःसहस्रं न विहितं तदसाम्प्रतम् । कस्मादित्याह–येन त्वया मयि गोत्रभिदा सपत्नीनामाह्वायकेन लोके इन्द्रत्वमा-

विष्कृतम् । तव हि गोत्रभित्त्वादिन्द्रेण सादृश्यम्[1] । गोत्रं भिनत्तीति कृत्वा । स हि गोत्रान्पर्वतान् भिन्नवान्, त्वं तु गोत्रं नाम भिनत्सि, मयि विपक्षनामाह्वानात् । अतश्च तव यदि तावत् नयनसहस्रमकरिष्यत् तत्पूर्णं शक्रेण सारूप्यमभविष्यत्, यत्तु नाकरोत् तदयुक्तम् । सहस्रमवयवानां यस्य तत् सहस्रतयमिति षष्ठीसमासः ॥ -किंच त्वं यदि मामक्षिगतां चक्षुर्विषयं प्राप्तामतिसमीपतयातिनिकटत्वात् अञ्जनमिव न[2]पश्यसि तत् तामभीष्टतमामसत्सपत्नीं हृदयस्थितामपि बहिर्बाह्ये परितः सर्वत्र पश्यसि । अक्षितो हृदयस्य निकटतरत्वात्, हृदयस्य स्थगितत्वेन च दुर्लक्षत्वात् । यो हि निकटस्थं न विभावयेत् स कथं पिहितं पश्येत् । असदविभावनं तु गोत्रस्खलितात् सुज्ञानम् । अथचाक्षिगतां द्वेष्यां द्वेष्यत्वात् मां न पश्यसि, तां पुनरिष्टत्वात् पश्यसीति भङ्गिभणितिः ॥ -इत्युक्त्वा गन्तुमिच्छुं कांचित् तरुणोऽरुणत् । कीदृशीं क्षणं प्रियं प्रति यो दृष्टिपातः कटाक्षनिरीक्षणं तेन विहसत् प्रहर्षे प्रीतियुक्तं वदनं यस्यास्ताम् । कथमरुण[3]त्, सकरावलम्बनं हस्तमवष्टभ्य । अत एवामुक्तानपासितैव गलन्ती प्रियकरस्पर्शसुखानुभवेन शरीरोच्छ्वासात् त्रुट्यन्ती कला मधुरा काञ्ची रशना यत्र रोधने तदमुक्तगलत्कलकाञ्चि । रुधेर्लङि श्नमि अरुणत्, हल्ङ्याादिलोपः । चर्त्वणत्वे । त्रिभिर्विशेषकोऽयम् । प्रमिताक्षरा वृत्तम् ॥८०-८२॥

**अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या ।**
**कलयन्नपि सव्यथोऽवतस्थेऽशकुनेन स्खलितः किलेतरोऽपि ॥ ८३ ॥**

कयाचित् सारङ्गाक्ष्या कृतकं कृत्रिमं चुक्षुवे क्षुतं प्रियगमननिषेधार्थं, पश्चात्तापेनेति भावः । कदा कामिनि निःसरति सति । किमित्यसावागतोऽपि निर्यात इत्याह—यतः सरोषया तया निरस्तो निर्भर्त्सितः । इतरोऽपि कामी कलयन्नपि कृतकमनया क्षुतमिति जानन्नपि अवतस्थे न यातः । कुत इत्याह—अशकुनेनानिमित्तेन किल स्खलितः । अशकुनं व्याजमाश्रित्य ब्रूते स्खलितः । तत्त्वतस्तु सव्यथः विरहपीडितत्वात् तु निवृत्त इत्यर्थः । अपयातीति सप्तमी । चुक्षुवे इति भावे । अवतस्थे इति कर्तरि । "समवप्रविभ्यः स्थः" । औपच्छन्दसिकं वृत्तम् ॥ ८३ ॥

**आलोक्य प्रियतममंशुके विनीवौ यत् तस्थे नमितमुखेन्दु मानवत्या**
**तन्नूनं पदमवलोकयांबभूवे मानस्य द्रुतमपयानमास्थितस्य ॥ ८४ ॥**

---

१ 'मस्ति' ग. पाठः । २ 'नश्यते' क. पाठः । ३ 'अरुधत्' ग. पाठः ।

कान्तमवलोक्य त्रुटितोऽद्वये वाससि यन्मानिन्या वक्त्रचन्द्रं नम्रीकृत्यासितं तन्निश्चितं मानस्य तूर्णं पलायमानस्य पदं क्रमं स्थानं वा तथैति । तद्दर्शनादेव हि स तस्या व्यपगतः । अतश्च वीक्षते क्वासौ गतोऽवसरो ह्ययं रोषस्येति । विनीवाविति गालवमतेन पुंवद्भावः । प्रहर्षिणी वृत्तम् ॥ ८४ ॥

**सुदृशः सरसव्यलीकतप्तस्तरसा श्लिष्टवतः सयौवनोष्मा ।**
**कथमप्यभवत् स्मरानलोष्णस्तनभारो न नखम्पचः प्रियस्य ॥ ८५ ॥**

कस्याश्चिद्वामलोचनायाः कुचाभोगः कान्तस्य कथमपि नखम्पचः करजदाही नाभूत्, कथमपि तेन तस्य क्षतानि ददतो नखानि न पक्वानीत्यर्थः । पाके कारणमाह—प्रत्यग्रप्रियापराधसन्तप्तः । तस्य च तरसा स्वेच्छयैवाश्लिष्टवतः परिष्वजमानस्य । सापराधे हि स्वेच्छाकारिणि अधिको रोषो जायते । कारणान्तरमाह—सयौवनोष्मा कामाग्निसन्तप्तः । एवं कारणसामग्र्याद्दाहो युक्तः । नखानि पचतीति नखम्पचः "मितनखे च" ति खश् ॥ ८५ ॥

**दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशी तलम् ।**
**बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न ॥ ८६ ॥**

काचन काचिन्नायिका मुखेन रेजे । कीदृशी उरु महत् अशीतलं चोष्णमुरोजद्वयं स्तनयुगं दधती । तथा या रूपवत्त्वात् ज्ञायते भुवस्तलमवनीपृष्ठं स्वयमुर्वशीव अप्सरा गता प्राप्ता । कीदृशेन मुखेन, अप्रतिमेन अविद्यमाना प्रतिमा यस्य तेनाप्रतिमेनासदृशेन सर्वोत्कृष्टेनेत्यर्थः । अत एव तां नायिकां प्रति मेनका नाम दिव्यस्त्री श्रिया रूपलक्ष्म्या नाधिका नोत्कृष्टा । वंशस्थं वृत्तम् । तल्लक्षणं च "जतौ तु वंशस्थमुदीरितं जरा" विति ॥ ८६ ॥

**इत्थं नारीर्घटयितुमलं कामिभिः काममासन्**
**प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः ।**
**आचार्यत्वं रतिषु विकसन्मन्मथश्रीविलासा**
**ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम् ॥ ८७ ॥**

इति माघभट्टविरचिते शिशुपालवधकाव्ये प्रदोषवर्णनं नाम नवमः सर्गः ॥ ९ ॥

इत्थमुक्तेन प्रकारेण कामिभिर्नारीर्घटयितुं योजयितुं प्रालेयांशोर्हिमरश्मेः रुचयो भासः काममत्यर्थं सपदि तत्क्षणमलमासन् समर्था अभूवन्, यतः शान्तमानान्तरायाः । शशिमयूखदर्शनाद्धि मानो गलति । शीधवो मधूनि पुनस्तासां रतिषु निधुवनेषु आचार्यत्वमुपदेष्टृत्वं चक्रुरिति अपरसर्गार्थसूचनम् । कीदृशाः शीधवः, विकसन्तो बहलीभवन्तो मन्मथश्रियाः कामलक्ष्म्या विभ्रमा येषु ते तथोक्ताः । तथा ह्रिया लज्जया यः प्रत्यूहो विघ्नस्तस्य प्रशमे निवृत्तौ कुशलाः पटवः । अत एवाचार्यत्वं चक्रुः । शान्तेति शमेर्निष्ठा । "वा दान्तशान्ते"ति इडभावः । मन्दाक्रान्ता वृत्तम् । तल्लक्षणं तु "मन्दाक्रान्ता मभनततगा गः समुद्रर्तुलोकैरि"ति । वास्तवमलङ्कारः । इति भद्रम् ॥ ८७ ॥

इति श्रीमहामहोपाध्यायाचार्यवर्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां प्रदोषवर्णनं नाम
नवमः सर्गः ॥ ९ ॥

---

१ 'हु' ख. पाठः ।

अथ

# शिशुपालवधकाव्ये

## दशमः सर्गः ।



**सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि ।**
**आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥ १ ॥**

अथागमनादनन्तरं तरुणानां कान्तावक्त्राणि पात्रतां भाजनत्वमाययुः प्राप्तानि । पीयते एष्विति पात्राणि । अतः कस्य पात्रतां जग्मुरित्याह—सुराया हालायाः । प्रेयसीवदनपात्रेषु ते सुरां पपुरित्यर्थः । एवं च वदनानि पात्रतां यान्ति । यदि पात्रैस्तानि तुलां यान्ति, अतः कीदृशानि तानीति श्लेषः । सज्जितानि भूषितानि, तथा सुरभीणि ताम्बूलमुखवासादिना सुगन्धीनि । उल्लसन्ति विकसन्ति नेत्राण्येव वारिरुहाण्युत्पलानि येषु । सुघटितानि विधात्रा सुष्ठु निर्मितानि, सुरेखाणीत्यर्थः । चषकाण्यपि सज्जितानि निर्मलीकृतानि पानभूमौ वा रचितानि, सुरभीणि कर्पूरादियोगात् उल्लसन्नयनतुल्याब्जानि च, सुष्ठु च सुवर्णकारेण घटितानि । अथच पात्रतां पानयोग्यत्वं जग्मुरित्युक्तिश्लेषः । "षस्ज गता" वित्यस्य क्ते जश्त्वे च सज्जितानीति । अस्मिन्सर्गे स्वागता वृत्तम् । तल्लक्षणं तु "स्वागते'ति रनभैर्गुरुयुग्मम्" इति ॥ १ ॥

**सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन ।**
**ते मुहूर्तमथ मूर्तमपीप्यन् प्रेम मानमवधूय वधूः स्वाः ॥ २ ॥**

ते युवानोऽनुतर्षपदेन सरकव्याजेन मूर्तं वपुष्मदिव प्रेम स्नेहं निजा वधूश्चिरण्टीरपीप्यन् अपाययन्तेत्युत्प्रेक्षा । पाने पीते सुतरां यतस्तासां रागोऽभूदित्याशयः । कथमपीप्यन् सोपचारं सगौरवम् । तद्यथा–क्रियतां प्रसादः, पवित्रीक्रियतामिदमित्यादि । तथोपशान्तविचारं निवृत्तसदसद्विवेकम् । किं पिबामि नवेति मतिं कृतो विवेको नैव यत्रासीदित्यर्थः । सानुतर्षं सरसं, मुहूर्तं

---

१ 'ता रनभगैर्गुरुकान्ता' ग. पाठः । २ 'मान' क. ख. पाठः ।

मुहुर्मुहुरिति वीप्साप्रधानम् । कथं मानमवधूय रोषं परित्यज्य । अनुतर्षोऽ-भिलाषसरकौ । मूर्छेः क्ते "राल्लोप" इति छ्लोपे दीर्घे च मूर्तशब्दः । अपीप्य-न्निति पिबतेर्ण्यन्तात् लुङ् । "लोपः पिबतेरी चाभ्यासस्य" । प्रियशब्दादिम-निचि "प्रियस्थिरे" ति प्रादेशे च प्रेमशब्दः । "लिङ्गमशिष्यं लोकाश्रयत्वाल्लि-ङ्गस्ये" ति स्थितत्वादिति ॥ २ ॥

**क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।**
**स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥ ३ ॥**

वधूनामिन्द्रियवर्गो हृषीकपूगः पञ्चाक्षाणि नेत्ररसनानासाश्रोत्रत्वग्लक्षणा-नि, मधुनि मद्ये निर्ववार निर्वृतिमाप । कीदृशे प्रविष्टप्रियवक्त्रप्रतिमे इति च-क्षुर्निर्वृतिः । विदारितसरससहकारसुरभाविति घ्राणनिर्वृतिः । स्वादुनि मृष्टे इति जिह्वानिर्वृतिः । गुञ्जद्भृङ्गे इति कर्णनिर्वृतिः । शीतले इति त्वग्निर्वृतिः ॥ ३ ॥

**कापिशायनसुगन्धि विघूर्णन्नुन्मदोऽधिशयितुं समशेत ।**
**फुल्लदृष्टि वदनं वनितानामब्जचारु चषकं च षडङ्घ्रिः ॥ ४ ॥**

षट्पदः कान्तानां मुखं पानपात्रं चाधिष्ठातुं समशेत सादृश्यात् संदिदि-हे । अत एव विघूर्णन् भ्रमन्, अत एव सारूप्यमाह–कापिशायनेनासवविशेषेण सुगन्धि द्वयमपि । मुखं विकसिताक्षि, चषकं तु नीलोत्पलहृद्यम् । अतश्च किमिदं पताम्युतेदमिति संशिश्ये । अन्योऽपि मत्तो घूर्णन् कम्पमानोऽवश्य-मेव संदिग्धे । कपिश्यां दिशि भवं कापिशायनम् "कपिशात् ष्फक्" । 'का-ममासवसुगन्धी' ति त्वपपाठः । विघूर्णन्निति तौदादिकस्य घूर्णेः । उन्माद्य-तीत्युन्मदः, पचाद्यच् । समशेतेति लङ् । अङ्घ्रिश्चरणः ॥ ४ ॥

**बिम्बितं भृतपरिस्रुति जानन् भाजने जलजमित्यबलायाः ।**
**घ्रातुमक्षि मधुपः पतति स्म भ्रान्तिभाजि भवति क्व विवेकः ॥ ५ ॥**

चषकप्रतिबिम्बितं वधूनेत्रं शिङ्घितुं भ्रमरोऽपतत् । कुतः जलजमुत्पलमे-तत् नाक्षीति जानन् अवगच्छन् । कीदृशे भाजने, भृता ऊढा परिस्रुत् सुरा येन तस्मिन् भृतपरिस्रुति । किं वैतदाश्चर्यं यदसौ मुमोह, यतो भ्रान्तिभा-जि संशयाने क्व कस्मिन्निव विवेको विचारो जायते । स च भ्रान्तिमान्

संदिग्धत्वात् भ्रमणत्वाच्च । संशयो भ्रमणं भ्रान्तिः ॥ ५ ॥

**दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् ।**
**यत् सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥ ६ ॥**

प्रेयस्यार्पितं सत् पानमास्वादयतो बाढं भृशं सुष्ठु रसवत्तां स्वादातिशयमाप लेभे इत्यूहः । तत्र हेतुर्यदचेतनैः कनकमौलिमयूखैस्तत् पीतमभूत् । यदि च कान्तार्पणात् नातिमृष्टं तत् कथमचेतना अपि पिबेयुः । अथ च पीतं पिशङ्गितमिति परमार्थः । शब्दच्छलेन त्वेषोक्तिः ॥ ६ ॥

**स्वादनेन सुतनोरविचारादोष्ठतः समचरिष्ट रसोऽत्र ।**
**अन्यमन्यदिव यन्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥ ७ ॥**

अत्र मधुनि कान्ताधरादविचारात् निःसंशयं पानेन रसः समचरिष्टामृतं परिणतम् । कथमवगम्यते इत्याह–यत् तदेव मधु अन्यमिष्टमभिमतं स्वादं रसं तरुणस्यातनिष्टाजनयत् विस्तारयामास, अन्यदिव मध्वन्तरमिव । तस्यैव मधुनस्तादृशं स्वादान्तरं सम्पन्नं ज्ञायते येनान्यदेवैतत् पानमित्यर्थः । अतश्च कान्तोष्ठाद्यदि रागो न संचरितस्तत् कथं रसान्तरं तनुयात् । सुतनोरित्योष्ठापेक्षा सम्बन्धे षष्ठी । यून इति तु मध्वपेक्षा । अविचारादिति निपातः । समचरिष्टेति कर्तरि । "समस्तृतीयायुक्ता" दिति तङ् । स्वादनेन संचरितः । अन्यमिति स्वादविशेषणम् । अन्यदिति मधुनः । यदिति हेतुपदम् । अतनिष्टेति लुङ् । सिच्लुग्विभाषितः ॥ ७ ॥

**बिभ्रतौ मधुरतामधिपात्रं रागिभिर्युगपदेव पपाते ।**
**आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥ ८ ॥**

कामिभिरधिपात्रं चषकेषु सममेव द्वाभ्यां द्वौ पपाते पीतावुपभुक्तौ । काभ्यां कावित्याह–आस्यैरासवसारः, घ्राणैस्त्विन्दीवरसौरभम् । कीदृशौ रसगन्धौ माधुर्यं स्वादुत्वमनुल्वणत्वं च धारयन्तौ । कीदृग्भिर्नासाननैः, विकसद्भिः सोल्लासैः । "पुमान् स्त्रिया" । पपाते इति कर्मणि । यद्यपि चात्र रसगन्धौ पृथग्विभक्त्या निर्दिष्टौ तथापि पपाते इति बिभ्रताविति च द्विवचनं न विरुध्यते द्वित्वस्याक्षतेः । दृश्यन्ते चैवंविधाः प्रयोगाः । यथा—"चित्तनिर्वृतिविधायि विविक्तं मन्मथो मधुमदः शशिभासः । सङ्गमश्च दयितैः स्म नयन्ति प्रे-

म कामपि भ्रुवं प्रमदानाम्" ॥ इत्यादयः ॥ ८ ॥

**पीतवत्यभिमते मधु तुल्यस्वादमोष्ठरुचकं विदिदङ्क्षौ ।**
**लभ्यते स्म परितिक्ततयात्मा यावकेन वियतापि युवत्याः ॥ ९ ॥**

यावकेनालक्तकेनात्मा लभ्यते स्म स्वभावः प्राप्तः । कदाभिमते प्रेयसि मधु वक्त्रासवं पीतवति पीते सति, तथा तुल्यस्वादं प्रकृतत्वात् मधुनैवाभिन्नरसं मधुरमोष्ठरुचकं विदिदङ्क्षौ दंष्टुमिच्छौ पिपासौ । पाने हि दंशेन भाव्यम् । कीदृशेन यावकेन वियतापि अतिपानात् निर्गच्छतापि, मधुनापास्तेनापीत्यर्थः । कथं तर्ह्यात्मा लब्ध इत्याह–परितिक्तत्वेन । यावकरसो हि तिक्तो भवति, अधररसस्तु मधुरः । यदाह–तुल्यस्वादमिति । अतश्च भिन्नस्वादत्वादात्मलाभः । तुल्यरसो हि समानत्वात् नानुभूयते । अन्योऽपि कश्चित् क्षीयमाणोऽतितिक्ततया तैक्त्येनात्मानं लभते । यदुक्तम्—"यस्यास्ति स्फुरितं ध्रुवं स दिवसे कस्मिंश्चिदुन्मीलति" इति ॥ ९ ॥

**कस्यचित् समदनं मदनीयप्रेयसीवदनपानपरस्य ।**
**स्वादितः सकृदिवासव एव प्रत्युत क्षणविदंशपदेऽभूत् ॥ १० ॥**

कस्यचित् कामिन आसवः पानमेव प्रत्युत क्षणविदंशपदे अवदंशस्थाने अभवत् । अन्यस्य पानं पिबत आढ्यललनामण्डकादिरवदंशो भवति । तस्य त्वासव एवावदंशः कुत इत्याह–समदनं सकामं मदनीयप्रेयसीवदनपानपरस्य, मदनीया मत्ता यासौ प्रियतमा तस्या यद्वदनपानं मुखचुम्बनं तत्परस्य तल्लालसस्य । यद्वा मदनीयं मदकारि यत् प्रेयसीवदनपानं तत्परस्येति योज्यम् । आसवस्तु सकृदिवास्वादितो वदनपानापेक्षया एकवारमिव पीतः, अतश्चास्यपानमासवतुल्यम् । आसवस्तु विदंशस्थानीयः । अवदंशं हि सकृदास्वाद्य मदकारिपानपरम्परा क्रियते इति लोकस्थितिः । माद्यतीति मदयतीति वा मदनीया "कृत्यल्युटो बहुलम्" । विदश्यते इति विदंशो भक्ष्यः ॥ १० ॥

**पीतशीधुमदिरैर्मिथुनानामाननैः परिहृतं चषकान्तः ।**
**व्रीडया रुदिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ ११ ॥**

नीलनीरजमसितोत्पलमधस्तात् अगच्छदधोऽभ्रश्यत् । यत आस्वादितमद्यसुरैर्दम्पतीनां वक्त्रैश्चषकान्तः पात्रमध्ये परिहृतं क्षिप्तम् । सर्वव्यापित्वाद्धि

यावत् तन्न प्रेरितं तावत् पातुमेव न युज्यते । यदा तु पानं पीतं तदा रिक्तत्वाद्भाजनस्य तदधोगतम् । अत एव भृङ्गरुतैर्लज्जया रुददिव । यः किल बहूनां मध्ये परिह्रियतेऽसावधस्तात् गच्छन्नवश्यमेव रोदिति । चषकस्यान्तरिति "सुप्सुपे" ति समासः । अधस्तादिति अधरस्मिन् देशे "दिक्शब्देभ्य"- इति "अस्तातिश्चे" त्यधादेशः ॥ ११ ॥

**प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।**
**गूढसूचितरहस्यसहास्यः सुभ्रुवां प्रववृते परिहासः ॥ १२ ॥**

अथ ललनानां परिहासः प्रववृते केलिः प्रस्तुतः, यतस्त्रिसरकेण त्रिःपानेन प्रातिभं धृष्टत्वं गतानाम् । अत एव कीदृक् परिहासः, कुटिलोक्तिबन्धमनोहरः, तथा गूढमप्रकटं सूचितमीषदुक्तं रहस्यं यत्र, अत एव सहास्यः स्मितयुक्तः । ततः कर्मधारयः । प्रतिभैव प्रातिभम् । त्रयाणां सरकाणां समाहारस्त्रिसरकं "पात्रादि" । हास एव हास्यम् । प्रववृते इति कर्तरि । परिहासो नर्म ॥१२॥

**हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः ।**
**चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥ १३ ॥**

अतिमुग्धाया अपि चिरण्ट्याः तरुणेन मदेन प्रत्यग्रया क्षीबतया इमे भावाः कृताः । के इत्याह-हावरम्यो हासः, गिरां चातुर्यम्, चक्षुषि च कटाक्षेक्षितादयः । केनेवेत्याह-कामिनेवेति । तरुणकान्तदर्शनाद्धि हासादय उत्पद्यन्ते इति तस्य कर्तृत्वम् । "तत्राक्षिभ्रूविकाराढ्यः शृङ्गाराकारसूचकः । सुग्रीवारेचको ज्ञेयो हावो रत्यङ्गसम्भवः" इति ॥ चक्रिरे इति कर्मणि । ऋजोरिति "वोतो गुणवचनात्" ॥ १३ ॥

**अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् ।**
**क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः ॥ १४ ॥**

सागसि प्रेयसि एवंविधं हृदयं मधुवारैरेवंविधमिव कृतम् । अपराधित्वाद्धि पत्युस्तत्कलुषं च रोषसंधुक्षितं चाङ्गीकृतमानं चासीत्, पीते त्वासवे सर्वं तद्व्यपगतम्, अत उत्प्रेक्ष्यते-अप्रसन्नं सत् किंस्वित् क्षालितं, कोपदीप्तं सत् किं शमितम्, उररीकृतधैर्यं सत् किं द्रावितं गालितमिति । मलिनं हि क्षाल्यते, दीप्तं च शम्यते, कठिनं च गाल्यते । मधुना च रसरूपत्वात् श्री-

ण्यपि कर्तुं शक्यन्ते । मधुवारोऽतिसरकः । नुर्वितर्के संशये वा । क्षालितं किंवाक्षालितमित्यर्थः । एवमन्यत्र । उररीकृतमिति उररीशब्दोऽङ्गीकरणे । "ऊर्यादिच्विडाचश्चे" ति गतिसंज्ञा । "कुगतिप्रादयः" ॥ १४ ॥

**सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।**
**विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥ १५ ॥**

मधुमदो मद्यकृता क्षीबता वनितानां विभ्रममदिद्युतत् विलासमाविश्चकार । कीदृशमङ्गे देहे चिरकालं सन्तमप्यप्रकाशितमनुद्भूतम् । कुतोऽप्रकृतत्वादप्रस्तावात् । नहि गुरुजनसंनिधौ गृहव्यापारे वा विभ्रमस्यावसरः । को यथा किं द्योतयतीत्याह–धातौ तिष्ठतीत्यादिके लीनं स्थितं गत्यादिकमर्थं यथोपसर्गः प्रादिर्द्योतयति । द्योतका हि निपातोपसर्गाः । कीदृशमर्थमङ्गे प्रकृतौ चिरं सन्तमेवाप्रकृतत्वादप्रकाशितम् । यावत् किल प्रस्थानं नाभिधित्सितं तावत् तस्याप्रस्तावः । कथं तर्हीदमुच्यते–'धात्वर्थं बाधते कश्चि'दिति । स्थगितार्थप्रकाशनमेवात्र बाधा विवक्षितेत्यदोषः । अदिद्युतदिति द्युतेर्ण्यन्ताल्लुङ् । च्लेश्चङ् । द्वित्वम्, "द्युतिस्वाप्योः सम्प्रसारणम्" । अङ्गं वपुः, प्रत्ययाच्च पूर्वो भागः ॥ १५ ॥

**सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु ।**
**गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ १६ ॥**

वधूनामिमानि मदविभ्रममदिद्युतन् आविरबीभवन् । कानीत्याह—सावशेषाण्यूनानि पदानि यत्र तत् सावशेषपदमर्धोक्तपदमुक्तं वचनम्, तथा पतितानां पुष्पवस्त्रभूषणानामग्रहणम्, निष्प्रयोजनायैव गमनोत्थानम् । गमनमत्राकारणेन सम्बध्यते । एतानि दृष्ट्वा ज्ञायते मत्तेयमिति । "छेद एकपद एव कथायाः स्रस्तभर्मवसनस्रगुपेक्षे" ति पाठान्तरम् । भर्म कनकम् । मदः क्षीबता सैव विभ्रमः । मदेन वा विभ्रमो, विशेषेण भ्रमो [1]विभ्रम इति ॥ १६ ॥

**मद्यमन्दविगलत्त्रपमीषच्चक्षुरुच्छ्वसितपक्ष्म दधत्या ।**
**वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव ॥ १७ ॥**

अचिरोढया कान्तया पत्युर्मुखं शनैरधोमुखयैव वीक्ष्यते स्म ऐक्षिष्ट । कीदृश्या चक्षुर्बिभ्रत्या । कीदृशं मद्येन मन्दं कृत्वा विगलन्ती त्रपा यस्य, तथा

१ 'मदवि' क. ग. पाठः ।

किञ्चिदुच्छ्वसितपद्म उच्छ्वसितलोम ॥ १७ ॥

**या कथञ्चन सखीवचनेन प्रागभिप्रियतमं प्रजगल्भे ।**
**व्रीडजाड्यमभजन्मधुपा सा स्वां मदात्प्रकृतिमेति हि सर्वः॥ १८॥**

प्राक् पूर्वममत्ता सती या वयस्याप्रार्थनयापि कथञ्चित् क्लेशेनाभिप्रियतमं कान्तं प्रति प्रजगल्भे धृष्टत्वं भेजे, सा मत्ता सती व्रीडजाड्यं लज्जाकृतमप्रतिपत्तित्वं जगाम । ननु मत्तेन निर्लज्जेन भाव्यं तत्कथं सा जिह्रायेत्याह— यस्मात् सर्वः कश्चित् मदात् क्षीबतया स्वां प्रकृतिं स्वभावमेति प्राप्नोति । मदेनोचितमौचित्यं प्रकटयति, क्लीवः क्लैव्यं, शूरः शौर्यं, खलः क्रौर्यं, सलज्जो विनयमित्यादि । सा च सलज्जा यदाह या कथञ्चनेत्यादि । अतः क्षीबापि जिह्रयामास । अभिप्रियतममिति लक्षणे'ऽभिशब्दः । पिता प्रियो भ्रातापि पुत्रश्च, भर्ता त्वतिशयेनेति तमबुत्पत्तिः । प्रजगल्भे इति कर्तरि । मधु पिबतीति मधुपा "आतश्चोपसर्गे" इति कः । टक् तु सुराशीध्वोरेव ॥ १८ ॥

**छादितः कथमपि त्रपयान्तर्यः प्रियं प्रति चिराय तरुण्याः ।**
**वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥ १९ ॥**

अथ पानानन्तरं कान्तायाश्चक्षुषो नेत्राद्रागो लौहित्यमाविरभवत् प्रादुरभूत् । उत्प्रेक्ष्यते–असाविव राग आविर्भूतः । कोऽसावित्याह–यस्तया हृदये चिराय चिरं बहुकालं लज्जया कथञ्चित् कान्तमभि पिहितः स स्नेहाख्य इत्यर्थः । मद्यपानात् तदुत्पत्तेरिति भावः । यदि तर्हि मा मामेष रागिणीं ज्ञासीदिति यश्छादितः कथमिदानीं स आविरभवदित्याह–वारुणीमदविशङ्कमिति । आसवं हि पीत्वा क्षीबत्वात् नैवंविधा विचारा हृदये पदं कुर्वते । आविःशब्द उपसर्गप्रतिरूपको निपात इति व्यवहितप्रयोगः ॥ १९ ॥

**आगतानगणितप्रतियातान् वल्लभानभिसिसारयिषूणाम् ।**
**प्रापि चेतसि सविप्रतिसारे सुभ्रुवामवसरः सरकेण ॥ २० ॥**

अथ मानिनीनां मनसि सरकेणावसरः प्रापि समयो लब्धः । यत आसवपानस्य तदा कालोऽभवदित्यर्थः । कुत इत्यत आह–कान्तानभिसिसारयिषूणामानाययितुमिच्छन्तीनाम् । कीदृशान् वल्लभान्, पूर्वमागतान् पश्चादगणितानादृतान् अतः प्रतियातान् प्रतीपं गतान् । कीदृशे चेतसि, सविप्रतिसारे प-

१ 'णेनाभि' क. ख. ग. पाठः ।

आत्तापिनि । सागस्काः किल ते ताभिर्गृहानागता अप्यगणिता अत एव गताः, अतश्च ताः परितेपुः-किमेतदनालोच्यास्माभिः कृतमिति । यदि च पुनरानाययन्ति तल्लाघवभयमिति सरकेणावसरोऽलम्भि, प्रियानयने हेतुत्वं लब्धम् । नच लाघवम्. क्षीबया मयैतत् कृतमित्युत्तरदानात् । वल्लभा अभिसरन्ति तानभिसरतः ता अभिसारयन्तीति प्रयोज्यप्रयोजकविवक्षया णिजुत्पत्तिः । उपाध्यायप्रकाशवर्षस्त्वेवमादौ स्वार्थे तमिच्छति । यथा—"आशु कान्तमभिसारितवत्या योषितः पुलकरुद्धकपोलम्" इति । तथाह-"पडिवक्खविरोहे राहयमस्स हसरेणमानर्बेहिए । विद्धइ वालिहिअए राअसिरीइअहिसारई सुग्गीवे" ॥ इति । नह्यत्र णयर्थोऽस्ति । राजश्रियाभिसृते सुग्रीवे इत्यर्थः । अभिसारयितुमिच्छवोऽभिसिसारयिषवः । सन् द्वित्वम् । सर्तेर्घञि प्रतिसारशब्दः । पचाद्यचि अवसरशब्दः । कृञादिवुञि सरकशब्दः ॥ २० ॥

**मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचेताः ।**
**योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादपि मानः ॥२१॥**

काचित् मानिनीत्यतो हेतोः सुरां नाभिललाष नैच्छत् न पपौ । कुत इत्याह-तं धूर्तं व्यलीकविधायिनं क्षीबत्वनष्टहृदया सती मा भूयोऽभिसीसरम् आनीनयं, मा गमं वा । ननु प्रियसमीपं सुखायेति कस्मादसौ मानमेवाद्रियते स्मेत्याह-यस्मात् सुखादपि मानो दुःखेन त्यज्यते । सुखं तावत् दुस्त्यजं ततोऽपि मानः, अतो वरं सुखस्य खण्डनास्तु न मानस्येत्यसाववधार्य सुखं न चकमे । अभिसीसरमिति सर्तेर्ण्यन्ताल्लुङ् । मिपरः, अम् । च्लेश्चङ् । णिलोपः । "णौचङ्युपधाया ह्रस्वः । सन्वल्लघुनि चङ्परेऽनग्लोपे । दीर्घो लघोः" । माशब्द आशङ्कायाम् । यथा भारवेः—"मा गमन्मदविमूढधियो नः प्रोज्झ्य रन्तुमिति शङ्कितनाथाः । योषितो न मदिरां भृशमीषुः प्रेम पश्यति भयान्यपदेऽपि" इति ॥ आगस्कारिणमिति "अतः कृकमी"ति सुट् ॥ २१ ॥

**ह्रीविमोहमहरद् दयितानामन्तिकं रतिसुखाय निनाय ।**
**सप्रसादमिति सेवितमासीत् सद्य एव फलदं मधु तासाम् ॥ २२ ॥**

तासां भामिनीनां सप्रसादं मधु निर्मलं सेवितं पीतं सदितीत्थं तत्क्षणमेव फलदमभूत् । तथाहि-व्रीडाजाड्यं चिक्षेप रत्यर्थं चोपकान्तं प्रापयत् । अन्योऽपि सेवितः प्रसन्नोऽवश्यमेव फलदो भवति ॥ २२ ॥

**दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन ।**
**सस्वदे मुखसुरं प्रमदानां नाम रूढमपि च व्युदपादि ॥ २३ ॥**

मुखसुरं मदिरागण्डूषः सस्वदेऽभिलाषमजनयत् प्रकृतत्वात् प्रमदाभ्य एव। यतः कान्तेनात्तमदनं सकाममर्पितमत एव महता स्वादेन व्याप्तम् । उक्तं च- "स्वादितः स्वयमसेवितमानं लम्भितः प्रियतमैः सह पीतः । आसवः प्रतिपदं वनितानां नैकरूपरसितामिव भेजे" इति ॥ अथ तदेतत् मुखसुरं प्रमदानां रूढमर्थरहितं प्रमदा इति नाम व्युदपादि व्युत्पादितवदन्वर्थं चकारेत्यर्थः । प्रकृष्टो मदो यासामित्यर्थानुगमात् । पूर्वं तु तासां योषिच्छब्दवत् तदपि प्रवृत्तिनिमित्तरहितमासीत् । अतिशयनमतिशयः "एरच्" । तत्र भवमातिशायिकम् । "अध्यात्मादित्वाट्ठक्" । सस्वदे इति कर्तरि । मुखे सुरा मुखसुरम् । "विभाषा सेनासुरे"ति नपुंसकत्वम् । व्युदपादीति कर्तर्येव अन्तर्भावितण्यर्थश्च पदिर्बोद्धव्यः । "चिण् ते पदः" इति च्लेश्चिण्, णिचो लुक् । केचित्तु प्रमदानां नाम व्युदपादि व्युत्पन्नमित्याहुः ॥ २३ ॥

**लब्धसौरभगुणो मदिराया[1] अङ्गनास्यकमलस्य च गन्धः ।**
**मोदितालिरितरेतरयोगादन्यतामभजतातिशयं नु ॥ २४ ॥**

सुराया नारीमुखपद्मस्य च गन्धः सौरभं किमपूर्वतां भेजे आहोस्विदुत्कर्षम् । कीदृशो गन्धः इतरेतरयोगादन्योन्यभावनातः प्राप्तसौगन्ध्यातिशयः । अत एव प्रहर्षितमधुपः । मदिरया हि मुखगन्धो विशेषितस्तेनापि सा, अतश्च कामिनां भ्रान्तिः । किमन्य एवायं गन्धः, स एव लब्धोत्कर्षो वेति । इतरेतरशब्दोऽन्योन्यशब्दवत् । विशेषस्तु समासवत्त्वे ॥ २४ ॥

**मानभङ्गपटुना सुरतेच्छां[2] तन्वता प्रथयता दृशि रागम् ।**
**लेभिरे सपदि भावयतान्तर्योषितः प्रणयिनेव मदेन ॥ २५ ॥**

नार्यो मदेन लेभिरे क्षीबतया प्राप्ताः । कीदृशेन कोपनिरासचतुरेण रत्यभिलाषं च तन्वता, तथा दृष्टौ लौहित्यं विस्तारयता, तथान्तरभ्यन्तरे भावयता भावमवस्थानं बध्नता, अत एव कामिनेव कान्ततुल्येन । असौ हि मानभङ्गपटुर्निधुवनगर्धकृच्च दृष्टौ च प्रीतिजनकोऽन्तर्हृदये च भावनां वासनां करोति—अस्याहं प्रियेति । लेभिरे इति कर्मणि ॥ २५ ॥

---

१ 'मन्व' क. ख. पाठः । २ 'णां' क. पाठः ।

**पानधौतनवयावकपङ्कं सुभ्रुवो निभृतचुम्बनदक्षाः ।**
**प्रेयसामधररागरसेन स्वं किलाधरमुपालि ररञ्जुः ॥ २६ ॥**

कामिन्यो निजमोष्ठमुपालि सखीसंनिधौ कान्तौष्ठलावण्यद्रवेण किल ररञ्जुः । यत आसवक्षालितालक्तकविन्यासम् । कीदृश्यस्ताः, निभृतचुम्बनदक्षाः गुप्ताधरपानप्रवीणाः । किलालीके । रागव्याजेन निभृताधरपानं चक्रुरित्यर्थः । व्याजे तु सखीसंनिधिर्हेतुः । आल्याः समीपमुपालि । अधररागः स्वाभाविकं रक्तत्वं ताम्बूलकृतं वा, तस्य रसो द्रवः स एव वा रसः ॥ २६ ॥

**अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन ।**
**उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमपराथ ममाद ॥ २७ ॥**

काचिन्मानिनी मदमुज्झामास न मत्तेत्यर्थः । कदाचित्पानं नापिबदित्याह—मद्यं रसितवत्यपि । यदि मधु पपौ तत्कथं न मत्तेत्याह—कीदृशं मधु, कान्तेनान्ययुवतेर्नामग्राहं सपत्न्या नाम गृहीत्वा दत्तममुके पिबेति । अतश्च कथं माद्यति । इतरा पुनर्यदीयेन नाम्नार्पितं सा वीक्ष्यैव मधु ममाद मत्ता, गर्वं भेजे सौभाग्यप्रकाशनात् । कदाचित् पीतं तया स्यादित्याह—अप्यपिबन्तीति । रसिश्चौरादिकः । नाम गृहीत्वा नामग्राहम् "नाम्न्यादिशिग्रहोः" इति णमुल् । मदः क्षीबता गर्वश्च ॥ २७ ॥

**अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।**
**पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥ २८ ॥**

अन्यया भामिन्या न मेदे न मत्तम् । कदाचित्पानं न पीतं स्यादित्याह—पीतभूरिसुरयापि इति । यदि प्रभूता परिस्रुत् तया पीता कथं तर्हि न मत्तमित्याह—सपत्नीहृतहृदयं प्रणेश्वरमवबुध्यमानया । ननु यदि मधु पीतं तत् कारणसम्भवान्मदो युक्त एव तत्कथं न मेदे इत्याह—निर्वृतिर्हि मनसो मदहेतुरिति । प्रीतिः खलु चित्तस्य मदकारणं सा च नास्तीति किमित्यसौ माद्येत । मेदे इति भावे लकारः ॥ २८ ॥

**कोपवत्यनुनयानगृहीत्वा प्रागथो मधुमदाहितमोहा ।**
**कोपिनं विरहखेदितचेताः कान्तमेव कलयन्त्यनुनिन्ये ॥ २९ ॥**

काचिन्मानिनी कोपवतीत्वात् प्राङ्मधुपानात् प्रथममेवानुनयान् कान्त-

प्रार्थना अगृहीत्वा तिरस्कृत्याथोऽनन्तरं मधुमदाहितमोहा, मद्येन यत् क्षीबत्वं तेन जनितो मोहो यस्याः सा मत्ता सती कान्तमेवानुनिन्ये प्रत्यायितवती, यतस्तं कोपिनमसहनं कलयन्ती अवगच्छन्ती। सा च वियोगपीडितहृदया अतः क्षीबत्वव्याजमाश्रित्य तमेवातूतुषत् । यदि नानुनयेत् तस्या एव स्वार्थहानिः स्यात्, यतः स कोपित्वात् नूनमन्यां रमयेत् । सा च वियोगसन्तप्ता । क्षीबत्वं च सदा न भवति । यद्वा मधुमूढत्वादकुपितमेव कोपि[1]नं कलयन्ती शङ्कमानेति योज्यम् ॥ २९ ॥

**कुर्वता मुकुलिताक्षियुगानामङ्गसादमवसादितवाचा ।**
**ईर्ष्यतेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥ ३० ॥**

आसां नारीणां मदेन क्षीबतया लज्जां नाशयता तद्गुणः स्वयमेव कृतः । तमेव ह्रीगुणं विशेषणद्वारेणाह–तासां निमीलितनेत्रद्वयानां शरीरालस्यं विदधता, तथाऽपटूकृतगिरा । एतच्च त्रितयं लज्जया भवति मदेनापि । तद्गुणविधाने कारणमाह–ईर्ष्यतेवेति–मयि पुरुषे स्थिते कोऽस्या वराक्या अधिकार इत्यसूयमानेनेव तद्गुणः स्वयमकारि । यः किल मानी सोऽन्यमधिकारिणं न सहते । ईर्ष्यतेति शत्रन्तः । ईर्ष्ययेति पाठान्तरम् ॥ ३० ॥

**गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नाञ्चितदृशां प्रतिमेन्दुः ।**
**पानपाटलितकान्तिषु पश्चाल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ ३१ ॥**

अञ्चितदृशां वामलोचनानां पुरा पानात् प्राक् कपोलस्थलेषु प्रतिमेन्दुः प्रतिफलितः शशी न व्याञ्जि न व्यक्तो न प्रकटोऽभूत् । यतः सदृशीषु तुल्यवर्णासु, द्वयोरपि पाण्डुत्वात् । पश्चात् पुनः पाने पीतेऽसौ प्रतिमेन्दुः रोध्ररजस्तिलकसंस्थानोऽभूत्, यतो मदरक्तच्छविषु तासु । अतश्च विवर्णत्वात् ज्ञायते रोध्रचूर्णविशेषकोऽयमिति । व्याञ्जीति व्यञ्जेः कर्मकर्तरि णिच् । अञ्चितशब्दे "अञ्चेः पूजायाम्"इतीट् । "नाञ्चेः पूजाया" मिति नलोपनिषेधः॥ ३१॥

**उद्धतैरिव परस्परसङ्गादीरितान्युभयतः कुचकुम्भैः ।**
**योषितामतिमदेन जुघूर्णुर्विभ्रमातिभवपूंषि वपूंषि ॥ ३२ ॥**

ललनानां गात्राण्यतिक्षीबत्वात् जुघूर्णुश्चकम्पिरे । कीदृशानि, विभ्रमेण विलासेन योऽभिभव आक्रान्तिराश्रयणं वा तं पुष्णन्ति रक्षन्तीति विभ्रमाभि-

१ 'प' ग. पाठः ।

भवपूंषि, सुतरां सुविभ्रमाणीत्यर्थः । घूर्णने तर्कमाह–उद्धतैरुन्नतैः कुचकुम्भैरन्योन्यसंपेषवशादुभयतः पार्श्वद्वयेऽपि पीडितानि सन्ति जुघूर्णुः । यत्र किल प्रमादादु[1]द्धतौ मल्लौ परस्परसंसक्तौ श्रमं कुर्वाते तत्रावश्यमेव तत्प्रेरणया घूर्णते । उभयस्मिन्नुभयतः आद्यादित्वात्तसिः । जुघूर्णुरिति तौदादिकस्य । अभिभवोऽत्राश्रयणमाक्रान्तिर्वा । यथा—"चत्वारि ते तात ! गृहे वसन्तु श्रियाभिभूतस्य गृहस्थधर्मे । वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्ये"ति ॥ विभ्रमातिशयेति पुराणपाठो रम्यतरः ॥ ३२ ॥

**चारुता वपुरभूषयदासां तामनूनवयौवनयोगः ।**
**तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥ ३३ ॥**

आसां वधूनां देहं रामणीयकमभूषयत्, नहि विरूपः काम्यः । चारुतामपि अखण्डप्रत्यग्रतारुण्यव्यतिकरोऽलंचक्रे, वृद्धया हि रूपवत्या किं प्रयोजनम् । यौवनमपि मन्मथसम्पदभूषयत्, अशृङ्गारं हि तारुण्यं वार्धकतुल्यम् । काममपि मदोऽमण्डयत्, क्षीबत्वरहितं हि सुरतं द्वेवाकः । कीदृङ्मदो, दयितसङ्गमः कान्तसंपर्को भूषालङ्करणं यस्य स दयितसङ्गमभूषः, मदमपि वल्लभसमागमो भूषयामासेत्यर्थः । विना हि कान्तेन सामग्री पूर्वोक्ता भस्मनि हुतसदृशी । आदिदीपकाख्योऽयमलङ्कारः । 'उपमानोपमेयत्वं च वाक्यार्थानां बोद्धव्यम्' इति भामहादयः । प्राकरणिकत्वान्मद उपमेयः, चारुत्वादीनि तूपमानानि । यथा चारुता वपुरभूषयत्, तं च यौवनं, तदपि कामः, एवं मदः काममित्यर्थः । रुद्रटस्तु औपम्ये दीपकं नेच्छति विनापि तेन दर्शनात् । यथा— "कान्ता ददाति मदनं मदनः सन्तापमसममनुपशमम् । सन्तापो मरणमहो तथापि शरणं नृणां सैवे"ति ॥ यथा वा—"अहणअ गेसुपतरि संकसे सुपवङ्गबङ्गिअं जअसदम् । सेसम्मिअ अहिसीअं पल्हत्थेइ हिअएअसे अनुराअं" इति ॥ तस्मादत्र यस्यौपम्यमिष्यते तन्मतेनोपमासमुच्चयाख्योऽयमलङ्कारः, अन्यथा तु दीपकमेव ॥ ३३ ॥

**क्षीबतामुपगतास्वनवेलं तासु रोषपरितोषवतीषु ।**
**अग्रहीन्नु सशरं धनुरुज्झामास नूज्झितनिषङ्गमनङ्गः ॥ ३४ ॥**

तासु महेलासु क्षीबत्वं प्राप्तासु अत एवानुवेलं भूयोभूयः कुपितप्रस-

[1] 'दावु' क. ख. ग. पाठः ।

ष्वासु सतीषु कामः किं शरसहितं धनुरग्रहीत् किंवा औज्झत् । कथं जहौ-उज्झितस्त्यक्तो निषङ्गस्तूणीरो यत्र, तूणमपि तत्याजेत्यर्थः । यदा हि ताः कुप्यन्ति तदा स्मरो धनुः संधत्ते अहमेता वशीकरिष्ये इत्याशयेन, यदा तु तुष्यन्ति तदा धनुः शराः शरधिरिति सर्वं त्यजति । "यदस्माभिरनुष्ठेयं गन्धर्वैस्तदनुष्ठित"मिति हृदि कृत्वा । अनुवेलमिति वीप्सा । नुर्वितर्के । उज्झामासेति, "इजादेश्च गुरुमतोऽनृच्छः" ॥ ३४ ॥

**शङ्कयान्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव ।**
**न क्षमं भवति तत्त्वविचारे मत्सरेण हृतसंवृति चेतः ॥ ३५ ॥**

सपत्नीविषयया शङ्कयाङ्गनाभिः कान्तो निर्मन्दाक्षमेव प्रत्यभेदि उपालब्धोऽपराधं बोधितः । ननु तत्त्वमबुद्ध्वा शङ्कामात्रेण वाच्यता न युक्तेत्याह-ईर्ष्यया हृतसंवृति नष्टधैर्यं चित्तं परमार्थगवेषणसमर्थं न भवति । प्रत्यभेदीति कर्मणि । संवृतिः स्नेहो गाम्भीर्यं च ॥ ३५ ॥

**आननैर्विचकसे हृषिताभिर्वल्लभानभि तनूभिरभावि ।**
**आर्द्रता हृदयमाप च रोषो लोलति स्म वचनेषु वधूनाम् ॥ ३६ ॥**

अबलानां तदा मुखैर्विकसितम्, गात्रैश्च रोमाञ्चितैः संपन्नम् । प्रियान् प्रति चार्द्रता कर्त्री हृदयं लेभे, कान्तेषु मानस्त्यक्त इत्यर्थः । केवलं रोषः सर्वतो निवृत्य वचनेषु लोलतिस्म पुस्फोर । विचकसे इति, अभावीति च भावे । हृषिताभिरिति 'हृषि तुष्टा' वित्यस्मादिडागमः ॥ ३६ ॥

**रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेक्ष्य विकासि ।**
**चाटु चाकृतकसंभ्रममासां कार्मणत्वमगमद्रमणेषु ॥ ३७ ॥**

तरुणीनां रूपप्रेमप्रियवचनैस्ताभिस्ते वशीकृता इत्यर्थः । कीदृशं रूपम्, अप्रतियत्नमनोहरं स्वभावरम्यमित्यर्थः । प्रेम कीदृशं प्रयोजनमनालोच्य विस्तृतं तात्त्विकमित्यर्थः । चाटु कीदृशम् अकृतकसंभ्रममकृत्रिमत्वरम् अनुपचारमित्यर्थः । कार्मणशब्दो वशीकरणपर्यायः । अण्प्रत्ययः शेषलक्षणेन संग[1]ते कस्मिंश्चिदर्थे कार्यः । "तद्युक्तात् कर्मणोऽण्" इत्येतत्तु शब्दान्तरम् । वाचिकं श्रुत्वा यत्कर्म क्रियते तत्कार्मणम् ॥ ३७ ॥

---

१ 'गच्छते' ख. पाठः ।

**हेलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावणिकेन ।**
**मानवञ्चनविदा वचनेन क्रीतमेव हृदयं दयितस्य ॥ ३८ ॥**

अङ्गनाया[1]ः चाटुवचसा कान्तस्य हृदयं क्रीतमावर्जितमेव । किं कृत्वा गौरवाढ्यमपि पूज्यमपि तदेव हेलया तुलयित्वा परिच्छिद्य यथास्वरूपं ज्ञात्वेत्यर्थः । कीदृशेन वचनेन लावणिकेन लवणमेव लावणं 'प्रज्ञादित्वादण्' । लवणस्य भावो वा लावणम् । "युवादित्वादण्" । लावणं विद्यते यस्य तल्लावणिकम् "अत इनिठनौ" । तेन लावणिकेन लावण्ययुक्तेनेत्यर्थः । तथा मानवञ्चनविदा कान्तरोषविनाशचतुरेण । अथ चोक्तिः—यः किल लावणिको लवणजीवी वाणिजकः स गौरवाढ्यमपि बृहद्विक्रेयवस्तु हेलयैव लीलयैव तुलयित्वा परिच्छिद्य क्रीणाति । कीदृशेन लावणिकेन मानस्य परिमाणस्य पलादेर्वञ्चनं छलं वेत्ति यस्तेन, तुलायां प्रवीणेनेत्यर्थः । लवणेन चरतीति लावणिकः । यदि वा लवणं पण्यमस्य "तदस्य पण्यं । लवणाट्ठञ्" ॥ ३८ ॥

**स्पर्शभाजि विषदच्छविचारौ कल्पिते मृगदृशां सुरताय ।**
**संनतिं दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥ ३९ ॥**

अथ हरिणाक्षीणां दृष्टयः कान्ते तल्पे च निपेतुर्जग्मुः, शयनं प्रति कान्तान् दृशैवाचूचुदन्नित्यर्थः । कीदृशे प्रियतमे शयने च, प्रिये तावत् स्पर्शभाजि सुकुमारे, विषदच्छवौ विविक्तकान्तौ चारौ च हृद्ये, तथा सुरताय कल्पिते एतेन सह रन्तव्यमिति रत्यर्थं चिन्तिते, सदा च सन्नतिं बिभ्रति प्रणतिपरे । शयने च स्पर्शभाजि कोमले, विषदच्छविनि उज्ज्वलवर्णे धवले वा, चारुणि परार्ध्ये सुरतार्थं कल्पिते आस्तृते, सन्नतिं दधति मार्दवान्नतमध्ये ॥ ३९ ॥

प्रियतमे दृष्टयः पेतुरित्युक्तं ता एव वर्णयितुमाह—

**यूनि रागतरलैरपि तिर्यक् पातिभिः श्रुतिगुणेन युतस्य ।**
**दीर्घदर्शिभिरकारि वधूनां लङ्घना न नयनैः श्रवणस्य ॥ ४० ॥**

अङ्गनानां नयनैर्नेत्रैः श्रवणस्य कर्णस्य लङ्घना क्रमणं नाकारि न विदधे । कर्णं यावत् तानि प्रसृतानीत्यर्थः । कीदृशैर्नयनैः यूनि कान्ते रागेण प्रीत्या त-

[1] 'नानां' क. ख. ग. पाठः ।

रलैश्चटुलैः, रागवशाद्यानि चटुलं प्रियमीक्षन्ते इत्यर्थः । तथा तिर्यक्पातिभिः सामिदर्शिभिर्यून्येव कटाक्षेक्षिभिः, तथोपकर्णप्रसृत्या दीर्घं बहु पश्यन्तीति दीर्घदर्शिभिः । कीदृशस्य श्रवणस्य, श्रवणं श्रुतिः सैव गुणस्तेन युतस्य सम्बद्धस्य । कर्णेन हि श्रूयते । अथ चोक्तिः—यः किल दीर्घदर्शी विचक्षणः स यदि रागतरलो भवति तिर्यक्पाती च, वक्रमार्गोन्मुखस्तिर्यग् बाधको वा तथापि बहुश्रवणस्य बहुश्रुतस्य मीमांसकादेर्लङ्घनामपमानं न कुरुते, यतोऽसौ श्रुतिगुणेन वेदोक्तधर्मेण युक्तः । श्रवणः कर्णौ, बहुश्रुतश्च ॥ ४० ॥

इदानीं सुरतव्यापारवर्णनम्—

**संकथेच्छुरभिधातुमनीशा संमुखी च न बभूव दिदृक्षुः ।**

**स्पर्शनेन दयितस्य नतभ्रूरङ्गसङ्गचपलापि चकम्पे ॥ ४१ ॥**

काचिन्नवोढा विवक्षुरपि वक्तुं न शक्ताभूत्, कान्तं च दिदृक्षुरपि तदभिमुखी नाभूत्, प्रियदेहस्पर्शलालसापि तदामर्शेन चकम्पे । एवंविधो ह्येष मुग्धाव्यापारः ॥ ४१ ॥

**उत्तरीयविनयात् त्रपमाणा रुन्धती किल तदीक्षणमार्गम् ।**

**आवरिष्ट विकटेन विवोढुर्वक्षसैव कुचमण्डलमन्या ॥ ४२ ॥**

काचिदंशुकापहरणेन जिह्रियती विशालेन पत्युरुरसैव स्तनाभोगमावरिष्ट पिदधे । किल कान्तनयनप्रसरं निवर्तयन्ती । किल व्याजे । नेत्ररोधव्याजेनाश्लेषमेव कुर्वतीत्यर्थः । नहि वक्षःस्थगनात् कुचमण्डलं न दृश्यते स्पर्शनाद्वा, दर्शनमिति लज्जाकरम् । आवरिष्टेति लुङ् । "लिङ्सिचोरात्मनेपदेषु" इति इडागमः ॥ ४२ ॥

अथालिङ्गनम्—

**अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा ।**

**भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसादचिरोढा ॥ ४३ ॥**

काचित् नवपरिणीता विवोढ्रा बलात् पर्यरम्भि आश्लेषि । कीदृशेन पत्या वासो नयता । अत एव कीदृशी वधूः तनुभ्यां बाहुभ्यां यः स्वस्तिको बन्धविशेषस्तेनापिहिते च्छादिते मुग्धयोर्मनोहरयोः कुचयोरग्रे यया । वामदक्षिणयोः कुचयोर्दक्षिणवामकरन्यासः स्वस्तिकः । भिन्नानि रभसाश्लेषवशात् स्फु-

टितानि शङ्खवलयानि यत्र ॥ ४३ ॥

**संजहार सहसा परिरब्धप्रेयसीषु विरहय्य विरोधम् ।**
**संहितं रतिपतिः स्मितभिन्नक्रोधमाशु तरुणीषु महेषुम् ॥ ४४ ॥**

कामो युवतिषु सन्धितमपि शरं संजहार । यतः सहसाविचार्यैव मानं हित्वा परिरब्धाः प्रेयांसो याभिस्तासु परिरब्धप्रेयसीषु । अतश्च यत्तेन कार्यं तत्ताभिः स्वयमेव कृतम् । "ईयसश्चे" ति कबभावः । "उगितश्च" इति ङीप् । नहि तत्रानुपसर्जनादित्यधिकृतम् । तदन्तविधिश्चास्तीति "अमहत्पूर्वे" ति निषेधेन ज्ञापितम् । कीदृशं विरोधम् आशु शीघ्रमेव स्मितेन निजहसेन[1] भिन्नो मिश्रितो नाशितो वा क्रोधो यत्र तं स्मितभिन्नक्रोधं, हासेनैव यत्र क्रोधस्त्यक्त इत्यर्थः । हासस्तु कुतोऽपि कारणादनुरागाच्च । तरुणेष्विति पाठे परिरब्धाः प्रेयस्यो यैरिति विग्रहः पूर्ववत् कब्निषेधः । उपसर्जनह्रस्वत्वमपि न भवति । "ईयसो बहुव्रीहौ प्रतिषेधः" इति वचनात् । हासस्य त्वत्र प्रियाकृतगाढालिङ्गनमेव हेतुः । संहितमिति "दधातेर्हिः" । विरहय्येति रहिश्चुरादावदन्तः "ल्यपि लघुपूर्वादि" त्ययादेशः ॥ ४४ ॥

**स्रंसमानमुपयन्तरि वध्वाः श्लिष्टवत्युपसपत्नि रसेन ।**
**आत्मनैव रुरुधे कृतिनेव स्वेदसञ्जि वसनं जघनेन ॥ ४५ ॥**

कस्याश्चिद्वध्वाः स्वयमेव जघनेनांशुकं रुरुधेऽवष्टब्धम् । कीदृशं स्रंसमानं चलितम् । कथं तर्हि रोधितमित्याह—स्वेदेन सज्जते लगतीति स्वेदसञ्जि । कदा रुरुधे भर्तरि रागेण विपक्षसंनिधावालिङ्गितवति । एतेन स्रंसिते स्वेदे च कारणमुक्तम् । कीदृशेन जघनेन कृतिनेव प्रवीणेनेव । वासःपातात् सपत्नीसंनिधौ मास्या लज्जालाघवे भूतामिति जानानेनेवेत्यर्थः । यः किल कृती सखीजनस्तस्यैवंविधो व्यापारः ॥ ४५ ॥

**पीडिते पुर उरःप्रतिपेषं भर्तरि स्तनयुगेन युवत्या ।**
**स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद् हृदयस्य ॥ ४६ ॥**

कयाचित् तरुण्या कुचयुग्मेनोरः प्रतिपेष्य पत्यौ पीडिते सति सपत्न्या हृदयस्य स्फुटं निःसंदेहमेव कान्तमयत्वमभूत् । यदि हि तन्मयमस्या हृदयं

---

१ 'हा' क. ख. पाठः ।

न भवेत् तत्कथं तस्मिन्पीडिते तदस्फुटत् । उरःप्रतिपेषमिति "परिक्लिश्यमाने चे" ति णमुल् । दलत इवेत्येवार्थोऽत्र बोद्धव्यः, अन्यथा तु बीभत्सत्वं स्यात् ॥ ४६ ॥

**दीपितस्मरमुरस्युपपीडं वल्लभे घनमपि स्वजमाने ।**
**चक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन ॥ ४७ ॥**

कान्ते गाढमाश्लिष्यति कस्याश्चित् तरुण्याः कुचकुम्भौ चक्रतां पारिमाण्डल्यं न जग्मतुः । कथं कठिनतातिशयेनातिकार्कश्येन । कथं स्वजमाने दीपितो वृद्धिं नीतः स्मरः कामो यत्र तत् दीपितस्मरं, तथोरस्युपपीडं वक्षसि निष्पीड्य । अन्योऽपि भक्तो यदि पीड्यते तथापि चक्रतां चाक्रिकत्वं न गच्छति । कथं कठिनतातिशयेन दृढप्रतिज्ञत्वेन कुलपुत्रत्वाभिमानेनेत्यर्थः । उरस्युपपीड्य उरस्युपपीडम् "सप्तम्यां चोपपीडरुधकर्षः" इति णमुल् । "तृतीयाप्रभृतीनी" ति समासो विभाषितः ॥ ४७ ॥

**संप्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् ।**
**आत्मनः सततमेव तदन्तर्वर्तिनो न खलु नूनमजानन् ॥ ४८ ॥**

कामिन्यः कान्तानामालिङ्गितानां हृदयं संप्रवेष्टुमिवाभिलेषुरिति कामस्वभावः । ताश्च मुग्धाः सदैव कान्तहृदयस्थान् स्वदेहान् निश्चितं खलु नाजानन् नैव विविदुः । यो ह्येवं बुध्यते नासौ निविशते पिष्टपेषणतुल्यत्वात् । अजानन्निति लङ् "ज्ञाजनोर्जा" ॥ ४८ ॥

**स्नेहनिर्भरमधत्त वधूनामार्द्रतां वपुरसंशयमन्तः ।**
**यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु ववृषे यदनेन ॥ ४९ ॥**

चिरण्टीनां शरीरं निश्चितं स्नेहपूर्णत्वादभ्यन्तरे आर्द्रतां सरसत्वमधत्त दध्रे । प्रीत्या किल मार्दवम् । कुतोऽयं निर्णयः-यदनेन वपुषा तरुणे गाढमालिङ्गति चेलक्नोपमम्बु ववृषे, यावता वसनं क्नोप्यते तावत् स्वेदवारि वृष्टम् । "चेले क्नोपेः" णमुल् । यदि चान्तरार्द्रता न स्यात् तत्कथं गाढपीडनेन जलं मुञ्चेत् । यत्किल स्नेहेन जलेनान्तरार्द्रं पटादि तत्पीडितं सदम्बु मुञ्चति । ववृषे इति कर्मणि ॥ ४९ ॥

**न स्म माति वपुषः प्रमदानामन्तरिष्टतमसङ्गमजन्मा ।**
**यद्बहुर्बहिरवाप्य विकासं व्यानशे तनुरुहाण्यपि हर्षः ॥ ५० ॥**

सीमन्तिनीनां प्रेयःसम्पर्कोत्थो हर्षो निश्चितं हृदये न माति स्म न ममौ । कुत इत्यत आह—यद्बहुत्वात् बाह्ये विकासं प्रसरमवाप्य रोमाण्यपि व्यानशे व्याप्तवान् । यदि चान्तर्वर्तेत तद्बहिर्नैव विकसेत् । यत् किल तोयादि घटाद्यन्तरे न माति तद्बहिर्निर्याति । व्यानशे इति "अश्नोतेश्च" इति नुट् । तनौ रोहन्ति जायन्ते इति तनुरुहाणि रोमाणि "मूलविभुजादित्वात्कः" ॥५०॥

**यत् प्रियव्यतिकराद्वनितानामङ्गजेन पुलकेन बभूवे ।**
**प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥५१॥**

कान्ताश्लेषात् यद्वधूनां गात्रोत्थेन रोमाञ्चेन बभूवे जातं, तेन हेतुनात्यर्थं विकसिताभिर्नीविभिरुच्चयैस्तत्क्षणमेव बन्धनमोक्षो निर्ग्रन्थित्वं प्राप्तं देहस्योच्छ्वासात् । अथ चोक्तिः--यदा किल पतिसंयोगात् महादेव्या अङ्गजेन पुत्रेण भूयते, तदा सोच्छ्वासाभिर्वन्दीभिर्बन्धनमोक्षो दुर्गनिर्याणं प्राप्यते । राजपुत्रजन्मनि हि बद्धमोक्षभूर्जदाहादि क्रियते । बभूवे इति भावे । प्रापीति कर्मणि । नीविरुच्चयः । वन्द्यपीति केचित् ॥ ५१ ॥

अथ चुम्बनम्—

**ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य ।**
**अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥ ५२ ॥**

कश्चिद्रागी केशेष्वाकृष्य कामिन्या वक्त्राब्जमधासीदधात् पपौ । कीदृशं मुखम्, आश्लेषे सति लज्जावशान्नम्रमत एव च केशग्रहः । तथा अर्पितं कान्तया दत्तमधरकिसलयं यस्य, मुकुलिते च सुखानुभवान्निमीलिते अक्षिणी यत्र । अधासीदिति धेटो लुङ् । च्लेः सिच् । चिण्विभाषितः, ईट् । "यमिरमिनमातां सक्" इति सगिटौ, "इट ईटि" सवर्णदीर्घः । अवटुः कृकाटिका तत्र जाताः केशाः ॥ ५२ ॥

**पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।**
**पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ ५३ ॥**

कान्ते रक्तौष्ठं चुम्बति सति युवत्याः शिञ्जानचञ्चलकटकेन पाणिना पर्यकूजि रणितम् । उत्प्रेक्ष्यते–सरुजेव दुःखितेनेव । कीदृगधरबिम्बमिति रुजायां कारणमाह–पल्लवेन किसलयेन या उपमितिरुपमा तया यत्साम्यं सादृश्यं ह-

स्तस्याधरस्य च तेन सपत्नं मित्रम् । ओष्ठो हि रक्तत्वात् पल्लवेनोपमीयते क-रोऽपि च । ओष्ठपल्लवः करपल्लव इत्येतावतैव तयोः सपत्नत्वम् । अतश्च यदौष्ठो दश्यते तदा तेन सरुजेवाराणि । यथा सपत्नः केनचित् सर्पादिना द-श्यते तदावश्यमेव सुहृत् तत्पीडया पीडितः पूत्कुरुते ॥ ५३ ॥

**केनचिन्मधुरमुल्वणरागं वाष्पतप्तमधिकं विरहेषु ।**
**ओष्ठपल्लवमपास्य मुहूर्तं सुभ्रुवः सरसमक्षि चुचुम्बे ॥ ५४ ॥**

अन्येन कामिना अधरपल्लवं हित्वा क्षणं नार्या नेत्रं चुचुम्बे पपे । पर्या-यपानस्य सुखकारित्वादिति भावः । कीदृशमोष्ठपल्लवं, मधुरं मनोज्ञं समधु वा, उल्वणरागमतिरक्तं, तथा वियोगेषु सत्स्वत्यर्थं वाष्पतप्तमुच्छ्वासपीडितं, सरसं साम्प्रतम् । अक्षि कीदृशं मधुरं हृद्यम्, उल्वणरागं प्रियं प्रति अति-स्निग्धं, पानजादराभ्यामतिलोहितं, विरहेषु नितरां वाष्पतप्तमश्रुपीडितं, सरसं सरागम् । रागः संभोगाभिलाषः । चुचुम्बे इति कर्मणि ॥ ५४ ॥

**रेचितं परिजनेन महीयः केवलाभिरतदम्पति धाम ।**
**साम्यमाप कमलासखविश्वक्सेनसेवितयुगान्तपयोधेः ॥ ५५ ॥**

धाम वासवेश्म कर्तृ पद्मासहायोपेन्द्राधिष्ठितकल्पान्तमहाब्धेस्तुलां लेभे, यतः परिजनेन पीठमर्दादिना वर्जितं, महीयोऽतिदीर्घम्, केवलावेव चाभिरतौ दम्पती स्त्रीपुंसौ यत्र तत् केवलाभिरतदम्पति । कल्पावसानोदधिरपि शून्यो विस्तीर्णश्च । दम्पत्योर्लक्ष्मीवासुदेवावुपमानम् । जाया च पतिश्च दम्पती, दं-भावो निपात्यते । कमलायाः सखा कमलासखः श्रीसहित इत्यर्थः ॥ ५५ ॥

**आवृतान्यपि निरन्तरमुच्चैर्योषितामुरसिजद्वितयेन ।**
**रागिणामित इतो विमृशद्भिः पाणिभिर्जगृहिरे हृदयानि ॥ ५६ ॥**

कामिनां करैरितस्ततो विमृशद्भिः स्पृशद्भिरबलानां हृदयानि मनांसि ज-गृहिरे हृतानि, किंकर्तव्यतामूढाः समपद्यन्त । अथच हृदयदेशे प्रथमं स्प-र्शः क्रियते इति स्थितिः । कीदृंशि हृदयानि उच्चैरुन्नतेन स्तनयुग्मेन नीरन्ध्रं पिहितान्यपि । यत्किल वस्त्वन्तरेण स्थगितं तद् दुर्ग्रहमित्यर्थः । अन्योऽपि चौरादिरदृश्यमपि वस्तु इतस्ततः परामृशन् गवेषयन् गृह्णाति । जगृहिरे इति कर्मणि ॥ ५६ ॥

**कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाग्रैः ।**
**अक्रियन्त कठिनेषु कथञ्चित् कामिनीकुचतटेषु पदानि ॥ ५७ ॥**

नारीस्तनसैकतेषु कान्तनखकोटिभिः खण्डान्यपि क्षतानि कथञ्चिदक्रियन्त कृतानि । कीदृशैः करजाग्रैरिति क्लेशकारणमाह–कुचानां कठिनत्वाद्विभुग्नैः कुण्ठितैस्तथा स्वेदाम्बुना कोमलैः । अतश्च भुग्नानि तानि मृदूनि कथं कठोरव्रणं कुर्युः । अन्योऽप्यध्वगः कठिनेषु तटेषु कोमलैः स्विन्नैश्च पादैः कथंचिन्मन्दानि पदानि ददाति ॥ ५७ ॥

**सोष्मणः स्तनशिखाशिखराग्रादात्तघर्मसलिलैस्तरुणानाम् ।**
**उच्छ्वसत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥ ५८ ॥**

यूनां पाणिभिः स्तनशिखाशिखराग्रात् कुचचूचुकशृङ्गात् निम्ननाभिष्वेव सरसीषु निपेते निपतितम् । स्तनौ मृदित्वा नाभिदेशमस्प्राक्षुरित्यर्थः । कीदृशादग्रात् सोष्मण उष्णात् । कीदृशैर्हस्तैः, आत्तघर्मसलिलैर्गृहीतस्वेदाम्बुभिः । कीदृशीषु नाभिसरसीषु, उच्छ्वसन्ति विकसन्ति सरसानि कमलानि तेष्विव चारुषु रम्यासु । अन्योऽपि तप्ताद्रिशिखरस्थो लब्धघर्मः सन् पद्मचार्व्यां गम्भीरायां च सरस्यां निपतति । स्तनशिलाशिखराग्रादिति क्वचित्पाठः । शिलाः शिखराणि येषां ते शिलाशिखराः पर्वता उच्यन्ते । कठिनत्वात् महत्त्वाच्च स्तना एव शिलाशिखरास्तेषामग्रं प्रान्तम् । निपेते इति भावे ॥ ५८ ॥

**आमृशद्भिरभितो वलिवीचीर्लोलमानविततांङ्गुलिहस्तैः ।**
**सुभ्रुवामनुभवात् प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टैः ॥ ५९ ॥**

तनूदरीणां कान्तैर्मुष्टिग्राह्यं मध्यमित्यनुभवात् प्रतिपेदे ज्ञातम् । पूर्वं हि तैस्तर्कात् प्रतिपन्नमासीत् अधुना तूपलब्ध्यैवेत्यर्थः । कुत इत्याह–अभितः पार्श्वद्वये वलीरेव वीचीस्तरङ्गान् स्पृशद्भिस्तथा लोलमानाश्चपला वितता दीर्घा अङ्गुलयः करशाखा येषां तैर्लोलमानविततांङ्गुलिहस्तैः, अङ्गुलीभिः समन्तादुदरं परामृशद्भिरित्यर्थः । अतश्च मुष्टौ मध्यस्य प्रवेशात् तन्मेयं तदिति सुज्ञानम् । लोलमान इति ताच्छील्ये शानच् । लुलदलपिलादयो धातुष्वपठिता अपि क्रियावाचित्वाद्धातवो ज्ञेयाः ॥ ५९ ॥

**प्राप्तनाभिनदमज्जनमाशु प्रस्थितं निवसनग्रहणाय ।**
**औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम् ॥६०॥**

काचिदबला कान्तस्य करं स्वहस्ताभ्यामरुन्ध रुरोध, यत औपनीविकं जघनप्रदेशं प्राप्तं, तथा प्राप्तं नाभावेव नद्यां मज्जनं ब्रुडनं येन । तत्क्षणमेव दुकूलापहाराय गतमतः किल वराङ्गदेशस्थं तं किलारुधत् । किलालीके । तत्त्वतस्तु सुखोत्पादाद्विषेहे एवेत्यर्थः । अन्योऽपि नदीं स्नात्वावश्यमेव वाससी गृह्णाति । नीव्याः समीपमुपनीवि, तत्र भव औपनीविकः "उपजानूपकर्णोपनीवेष्ठक्"। अरुन्धेति रुधेर्लुङ् सुरितेत्त्वात्तङ् "श्नसोरल्लोपः"। एकः करो द्वाभ्यामरोधीत्यबलात्वं हेतुः । एवमुत्तरत्र ॥ ६० ॥

**कामिनः कृतरतोत्सवकालक्षेपमाकुलवधूकरसङ्गि ।**
**मेखलागुणविलग्नमसूयां दीर्घसूत्रमकरोत् परिधानम् ॥ ६१ ॥**

कस्यचित् कामिनः कान्तादुगूलमसूयांचक्रे रोषमजनयत्, यतो विहितनिधुवनमहसमयापहारं, यतो विह्वलवनिताहस्तलग्नं, तथा रशनाकलापसंश्लेषि । एतदपि कुतः यतो दीर्घसूत्रं लम्बमानदशम् । स हि यदा उज्जिहीर्षति तदासौ करमवष्टभ्नाति, अतश्च तदादानान्मेखलालग्नत्वात् चिकीर्षितविघ्नोत्पादादसूयोत्पत्तिः । अन्योऽपि दीर्घसूत्रश्चिरकारी कालक्षेपकारित्वादवश्यमेव खेदयति । असूया रोषः । असुञः कण्ड्वादित्वाद्यक् । करोतिरुत्पादनार्थोऽत्र । परिधीयत आच्छाद्यते इति परिधानं "कृत्यल्युटो बहुलम्" ॥ ६१ ॥

**अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः कलहस्य ।**
**वारणामिव विधातुमभीक्ष्णं कक्ष्यया च वलयैश्च शिशिञ्जे ॥ ६२ ॥**

कान्तकरस्याबलाहस्तयोश्चान्योन्यमंशुकमपहरतां काञ्चया वलयैश्च तारं शिशिञ्जे पर्यकूजि । उत्प्रेक्ष्यते–कलहस्य युद्धस्य वारणां निषेधमिव कर्तुम् । यदा वस्त्रजिहीर्षया केचिदन्योन्यं कलहायन्ते तदा पार्श्वस्था निवारणार्थं रणन्ते–मा मा कलहं कार्षुरिति ॥ ६२ ॥

**ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः ।**
**भ्रूयुगेन सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥ ६३ ॥**

प्राणनाथे दुगूलं वस्त्रं नीविं श्लथयितुं स्पृशति सति मानिन्यास्तत्क्षणमेव भ्रूयुगेन तनूरुहैश्च भङ्गो हर्षश्च प्रतिपेदे प्रापि । मानित्वाद्धि भ्रूभङ्गः प्रियसङ्गमाद्धि रोमहर्षः । "श्नान्नलोपः" इति योगविभागादुद्ग्रथयितुमिति नलोपः ।

योगविभागो हि तत्रेष्टसिद्ध्यर्थमाश्रित एव ॥ ६३ ॥

**आशु लङ्घितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या ।**
**रक्तवैणिकहताधरतन्त्रीमण्डलक्वणितचारु चुकूजे ॥ ६४ ॥**

अनन्तरं प्रियकराग्रे सहसैव नीविमुच्चयमपहरति सति सुखादीषन्निमीलिताक्ष्या च प्रौढया चुकूजे मणितम् । कथं रक्तं मधुरं वैणिकेन गान्धर्विकेण हतं बोधितं यदधरतन्त्रीमण्डलमधोभवस्वरसप्तकं तस्य यत् क्वणितं चङ्कारस्तदिव चारु मनोहरम् । त्रिस्थानगता हि स्वराः । तत्राधस्तान्मधुरतरास्ताराश्च तन्त्र्यो भवन्ति–इत्यधरग्रहणम् । वीणावादनं शिल्पमस्य वैणिकः । चुकूजे इति भावे ॥ ६४ ॥

**आयताङ्गुलिरभूदतिरिक्तः सुभ्रुवां कृशिमशालिनि मध्ये ।**
**श्रोणिषु प्रियकरः पृथुलासु स्पर्शमाप सकलेन तलेन ॥ ६५ ॥**

तनूदराणामवलग्ने कान्तपाणिरतिरिक्तोऽधिको बभूव, एकदेशेन स्पर्शमापेत्यर्थः । यतोऽसौ दीर्घाङ्गुलिः, तच्च कृशिमशालि । तानवगर्भस्वल्पे च महदवश्यमधिकं भवति । जघनेषु तु विपुलेषु समग्रेण तलेन पृष्ठेन स्पर्शं लब्धवान्, पृथुलत्वादेवेतिभावः । कृशस्य भावो कृशिमा "र ऋतोर्हलादेर्लघोः" ॥६५॥

**चक्रुरेव ललनोरुषु राजीः स्पर्शलोभवशलोलकराणाम् ।**
**कामिनामनिहितान्यपि रम्भास्तम्भकोमलतरेषु नखानि ॥ ६६ ॥**

यूनां करजान्यदत्तान्यपि अबलोरुषु राजीः रेखाश्चक्रुरेव ननु न व्यदधुः । आक्षेपाद्वा करणं प्राप्तं कथं तर्हि चक्रुरित्याह–कीदृशानां कामिनां सिस्पृक्षाचलपाणीनाम् । कीदृशेषु ऊरुषु च कदलीप्रकाण्डमृदुषु । मृदुनि चाङ्गे स्पर्शमात्रेणैव करजराजयो जायन्ते ॥ ६६ ॥

**ऊरुमूलचपलेक्षणमघ्नन् यैर्वतंसकुसुमैः प्रियमेताः ।**
**चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥ ६७ ॥**

तानि माल्यानि पुष्पेषोः कुसुमायुधनाम यथार्थमर्थानुगतं चक्रिरे व्यदधुः । कानीत्याह–यैर्वतंसकुसुमैः शेखरदामभिरेताः कामिन्यः कान्तमघ्नन् अताडयन् । यत ऊरुमूले चपलेक्षणं वराङ्गदेशलोलाक्षम्, अतश्च कुसुमताडनात्

कुसुमान्यायुधान्यस्येति कुसुमायुधमित्यन्वर्थं नाम, अन्यथा तु व्युत्पत्तिमात्रमेवैतत् । कामिनीमुखेन पुष्पेषुरेव हन्तीति तस्यैव कर्तृत्वमत्र न नारीणाम् इति कुसुमायुधस्यान्वर्थत्वम् । अघ्नन्निति हन्तेर्लङ् । वतंसशब्दे "वष्टि भागुरिरल्लोपं" । चक्रिरे इति कर्तरि । अर्थमनुगतं यथार्थमित्यव्ययीभावः ॥ ६७ ॥

**धैर्यमुल्वणमनोभवभावा वामतां च वपुरर्पितवत्यः ।**

**व्रीडितं ललितसौरतधाष्ट्यास्तेनिरेऽभिरुचितेषु रमण्यः ॥ ६८ ॥**

एवंविधा अपि रमण्यः कान्तेषु इदमिदं तेनिरे चक्रुः । कीदृश्यः किं किमित्याह—उल्वणमनोभवभावा धैर्यं, देहं ददत्योऽपि वामतां प्रातिकूल्यं, तथा ललितं रम्यं सौरतं निधुवनविषयं धाष्ट्यं वैयात्यं यासां ता व्रीडितं चक्रुः । कामव्यापारं कुर्वत्योऽपि विजिह्रियुरित्यर्थः । विरुद्धस्वभावो हि मन्मथः । तेनिरे इति कर्तरि ॥ ६८ ॥

**पाणिरोधमनिरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।**

**कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥ ६९ ॥**

काचित् करभोरूः कान्तस्येदमिदमेवंविधं कुरुते स्म व्यधत्त । किं किं कीदृशमित्याह—पाणिरोधमनिरोधितवाञ्छं चिकीर्षितं तस्य न विघ्नयन्ती अथ चोरुमूलात् तस्य करं रुणद्धि । तथा तर्जना मनोहारिहसितमिश्राः, तथा सुखे हारि मनोहरं शुष्करुदितमनस्रुरोदनं, सुखमनुभवत्यपि रम्यमरुददिति कुट्टमिताख्योऽयं प्रकारः । स्तनादिग्रहणे दुःखवदुपचारः कुट्टमितम् । पाणेराकनिष्ठकरभागः करभं तत्तुल्यौ श्लक्ष्णावूरू यस्याः सा करभोरूः । "ऊरूत्तरपदादौपम्ये" ॥ ६९ ॥

**वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च ।**

**कुर्वते स्म सुदृशामनुकूलं प्रातिकूलिकतयैव युवानः ॥ ७० ॥**

तरुणा वधूनां प्रातिकूलिकतयैवाननुकूलाचरणेनैवानुकूलं प्रियं चक्रुः । यान्येव तासां नैर्लज्ज्याचरणानि वर्जनीयानि तान्येवाथैररमयन्नित्यर्थः । कलहरूपत्वात् सुरतस्य वामत्वाच्च कामस्येति भावः । कीदृशीनां सुभ्रुवां, मात्सर्येण ह्रिया च वारणार्थपदगद्गदवाचाम् । प्रतिकूलं वर्तते प्रातिकूलः । "तत्प्र-

त्यनुपूर्वमीपलोमकूलमि" ति ठक् ॥ ७० ॥

**अन्यकालपरिहार्यमजस्रं तद्द्वयेन विदधे द्वयमेव ।**
**धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥ ७१ ॥**

तद् द्वयेन द्वयं विदधे कृतम् । केन द्वयेन किं वा द्वयमित्याह–ताभिरबलाभिरेकान्ते कान्तेषु धृष्टता वैयात्यमितरैर्भर्तृभिस्तासु निर्दयत्वम् । कीदृक् द्वयम्, अजस्रं सर्वदैव सुरतादन्यस्मिन् काले परिहार्यं वर्ज्यम् । नहि व्यापारान्तरे नार्यो निर्लज्जत्वेन वर्तन्ते । ते वा तासु नैर्घृण्येन, यतस्ता अबलाः । सुरते तु निर्लज्जत्वं शस्तम् । उक्तम् च—"अन्यदा भूषणं पुंसः शमः" इत्यादि ॥ ७१ ॥

**बाहुपीडनकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः ।**
**बोधितस्तनुशयस्तरुणीनामुन्मिमील विशदं विषमेषुः ॥ ७२ ॥**

विषमेषुः पञ्चशरो युवतीनाममीभिर्भावैर्बोधित उद्दीपितः सन् विशदं स्पष्टमुन्मिमील प्रससार जजागार । केन बोधित इत्याह–भुजाश्लेषेण, केशाकर्षणेन चाहतेनाष्टविधताडनेन, नखदन्तनिपातैः करजदशनकृतैः । कीदृक् काम इति बोधहेतुमाह–तनौ शेते इति तनुशयस्तासां तरुणीनां तनौ यतः शयितोऽनुद्दीपितो मन्द इत्यर्थः । यः किल विषमेषुः कुपितेन्द्रियसंनिपातलुब्धः क्वचित्सुप्तः स बाहुपीडनकेशग्रहणादिभिर्बोधितः सन् उन्मीलति । तथा च चरकाचार्यः—"अञ्जनान्यवपीडश्च धूमः प्रधमनानि च । सूचिभिस्तोदनं तत्र शस्त्रैर्पीडा नखान्तरे ॥ लम्बनं केशलोम्नां च दन्तैर्दशनमेव च । आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने" इति ॥ ७२ ॥

**कान्तया सपदि कोऽप्युपगूढः प्रौढपाणिरपनेतुमियेष ।**
**संहतस्तनतिरस्कृतदृष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ ७३ ॥**

अन्यः कश्चित् प्रिययालिङ्गितः सन् अधोवासो लोलकरत्वाद्धर्तुमैच्छत् । स च तद्भूमौ भ्रष्टं नैवादर्शत्, यतो निर्विवरपयोधरान्तरीकृतदर्शनः । यदि ह्यद्रक्ष्यन्नैवाहरिष्यत् । वासःपातस्य प्रियसम्पर्क एव कारणम् ॥ ७३ ॥

**आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात ।**
**त्रुट्यतः प्रियतमोरसि हारात् पुष्पवृष्टिरिव मौक्तिकवर्षः ॥ ७४ ॥**

युवत्याः सुरतव्यापारेण छिद्यमानान्मुक्ताकलापात् कान्तवक्षसि मुक्तानिकरः पपाताभ्रश्यदिति पुरुषायतोक्तिः । पुष्पवृष्टिरिव । कुसुमवृष्टिपाते कारणमाह–अमुना वक्षसा कुचतटेन स्तनस्थलेन तत्कर्तृकं यदाहतं ताडितं तत् साधु सोढमुपोढमित्यतो हेतोः । यः किल रणे प्रहारान् सहते तस्य खात्पुष्पवृष्टिः पतति । आहतमिति "नपुंसके भावे क्तः" । वर्षशब्दोऽर्धर्चादिः ॥ ७४ ॥

**सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि ।**
**हासभूषणरवाश्च रमण्या कामसूत्रपदतामुपजग्मुः ॥ ७५ ॥**

एतानि वस्तूनि कामस्य सूत्रपदतां सूत्रस्थानीयतां जग्मुः । कामस्य सूचितत्वात्सूचना सूत्रम् । कानीत्याह–सीत्कृतानि सीत्कारः, मणितं हिक्कारणितं वा मारुतं वा, करुणोक्तिः–त्रायस्व मा वधीरिति दीनभाषितं, स्निग्धमुक्तं त्वं मे प्रेयांस्त्वं मे प्राणनाथ इत्यादिप्रियवचनम्, अलमर्थवचांसि वारणार्थानि पदानि मा बाधिष्ठा निवर्तस्वेदानीमित्यादीनि, हासः स्मितं, भूषणरवा रशनानूपुरशिञ्जितानि । एतानि च श्रुत्वा ज्ञायते महदत्र रतिचक्रं प्रवृत्तमिति कामसूत्रपदतामुपजग्मुः ॥ ७५ ॥

**उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।**
**श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ ७६ ॥**

हरिणाक्षीणां मणितं मधुररशनामञ्जीररणितैरनन्तरितमेव कान्तैरश्रावि आकर्णितम्, तद्गतचित्तत्वादेव तदावर्जयामासेत्यर्थः । कदाचिदुत्तारमनेकमविच्छिन्नं च भवेत् । भूषणध्वनयस्तु विपरीता इत्याह–कीदृशैर्ध्वनिभिरुद्धतैस्तारैरनेकैः ससहायैर्बहुत्वादाबन्ध्यानामविरामैरच्छिन्नैः । मणितं तु कीदृशं, निभृतं मृदु एकमसहायं छेदवत् खण्डं सविरामम्, अतोऽन्योऽपि निभृतो विनीत एकोऽप्यनेकैर्वाचालै (राक्षिप्तो ? रक्षतो) ऽतिरस्कृत इव श्रूयते संसत्सु कीर्त्यते । अनेकैरित्येकशेषेण बहुवचनम् । यथा "प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषा"-मिति पातञ्जले । यथा च—"कथं न्वमी सन्ततमस्य सायका भवन्त्यनेके जलधेरिवोर्मयः" इति भारवेः ( १४–६१ ) । यथाच—"शैशवोचितानि तान्यनेकानि चपलान्याचरन्" इति बाणस्य ॥ ७६ ॥

**ईदृशस्य भवतः कथमेतल्लाघवं मुहुरितीव रतेषु ।**
**क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ ७७ ॥**

काञ्चिदाम रशनाकलापो जघनस्य महत्त्वं प्रथिमानमदर्शयत् ज्ञापितवदिव । यत उर्व्यां क्षिप्तं सरभसप्रयोगवशाद्भूमौ निरस्तं, तथायतं महाभोगम् अतश्चावनौ दृष्ट्वा एतावदेव जघनमिति कथमिवादर्शयत् इतीवानेनैव प्रकारेण । य एवेतिशब्देन प्रकारो विवक्षितस्तमाह–ईदृशस्येत्यादि । ईदृशस्येत्यभिनयनिर्देशः । यत् त्वमीदृशं महाप्रमाणं तस्य तव कथमेतत् सुरतेषु निधुवनप्रयोगेषु मुहुर्मुहुर्लाघवं चातुर्यं, यद्वयमुर्व्यां क्षिप्तानि । लाघववशाद्धि रते भूषणानि भूमौ पतन्ति । कथमिति विरोधे । यत् किल महत् तत्कथं लघु भवेत् । उत्प्रेक्षाविरोधसङ्करोऽयमलङ्कारः ॥ ७७ ॥

**प्राप्यते स्म गतचित्रकचित्रैश्चित्रमार्द्रनखलक्ष्म कपोलैः ।**
**दध्रिरे च रभसच्युतपुष्पाः स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ ७८ ॥**

कपोलैर्गण्डफलकैः रभसवशाद्गतचित्रकचित्रैर्नष्टतिलकालेख्यैरपि रमणकरजाङ्कमेव चिह्नं प्रापि । तथालकान्ता राभस्यपतितमाल्या अपि स्वेदबिन्दूनेव कुसुमानि दध्रिरे दधुः[1] । यद्यपि रतसंभ्रमात् कपोलेषु चित्रकान्युत्सृष्टानि, अलकेभ्यश्च पुष्पाणि भ्रष्टानि तथापि[2] नखपदानां स्वेदबिन्दूनां च तिलककुसुमरूपत्वमभूदिति वाक्यार्थः । दध्रिरे इति धृङः कर्तरि ॥ ७८ ॥

**यद्यदेव रुरुचे रुचितेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् ।**
**आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि रमण्यः ॥ ७९ ॥**

इष्टेभ्यो यद्यद्वस्तु रुरुचेऽभिलाषमजनयत् तत्तदेव रहसि रमण्यश्चक्रुः । ननु यत् तेषां रुचितं तत् तासां त्रपाकरं तत् कथं तदेव व्यधुरित्याह—यस्मान्नार्यो नराणामनुकूलचरणेनैव मनांस्यपहरन्ति आवर्जयन्ति, अतस्तत्तदकुर्वन् । यद्यदिति कर्तृपदम् । रुरुचे इति कर्तरि रुचितेभ्य इति "रुच्यर्थानां प्रीयमाणः" इति संप्रदानसंज्ञा । अनुकूलं वर्तते आनुकूलिकः । रमयन्तीति रमण्यः । "कृत्यल्युटो बहुलम्" । अकुर्वन्निति लङ् ॥ ७९ ॥

**प्राप्य मन्मथमदादतिभूमिं दुर्वहस्तनभराः सुरतस्य ।**
**शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ ८० ॥**

असिता नीला आयता दीर्घाः केशाः कचा यासां ता असितायतकेश्यः शश्रमुः श्रान्ताः । कुतो मन्मथात् मदाच्च । सुरतस्यातिभूमिं प्रकर्षं प्राप्य

१ 'धुः' ग. पाठः । २ 'च' क. ख. पाठः ।

यतो दुर्वहस्तनभराः । कथं शश्रमुः । श्रमजलेनार्द्रे यत् ललाटं तत्र लग्नाः केशा यत्र । योऽपि भारं गृहीत्वातिभूमिं प्राप्नोति सोऽवश्यमेव श्राम्यति ॥८०॥

**सङ्गताभिरुचितैश्चलितापि[1] प्रागमुच्यत चिरेण सखीव ।**
**भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥ ८१ ॥**

सुरतान्ते निधुवनसमाप्तौ ह्रीर्लज्जा समगंस्त सङ्गता, कार्यान्ते स्वां प्रकृतिमापद्यन्तेत्यर्थः । कीदृशी ह्रीः, अभिरुचितैर्वल्लभैः प्राक् सुरतारम्भकाले च[2]लितापासिता त्याजितापि या ताभिश्चिरेणामुच्यत त्यक्ता । यतः सङ्गता नित्यस्था[3] सहजा । यदि त्यक्ता किमिति भूयोऽपि समागतेत्याह—यतो विरहस्यासहा वधूभिः साकं विरहं सोढुं न शक्नोति अत एव सखीव वयस्यातुल्या । सा किल रिरंसया प्रियैश्चलितापि सङ्गतत्वात् नारीभिः क्लेशा[4]त्यज्यते । रतसमाप्तौ च विरहासहा असहत्वात्पुनरप्यायाति । चलितेति क्तः । अमुच्यतेति कर्मणि । समगंस्तेति लुङ् "समो गम्यृच्छिभ्या" मित्यात्मनेपदम् । च्लेः सिच् । "वा गमः" कित्त्वविकल्पः । "मोऽनुस्वारः" । सहते इति सहा ॥८१॥

**प्रेक्षणीयकमिव क्षणमासन् ह्रीतभङ्गुरविलोचनपाताः ।**
**संभ्रमद्रुतगृहीतदुगूलच्छाद्यमानवपुषः सुरतान्ताः ॥ ८२ ॥**

निधुवनावसानानि प्रेक्षणीयकमिवासन् नाट्यमिव समपद्यन्त । कीदृशा इति कारणमाह–ह्रीताः सलज्जा अत एव च भङ्गुरा विच्छिन्ना विलोचनपाता दृष्टिनिक्षेपा यत्र, तथा संभ्रमेण भयेन द्रुतं त्वरितं गृहीतं यद् दुगूलं जघनाम्बरं तेन च्छाद्यमानं वपुर्येषु । प्रेक्षणीयकेऽपि ह्रीतभङ्गुराः कटाक्षा भवन्ति । दुगूलेन जवनिकयान्तरितानि वधूवपूंषि भवन्ति । प्रेक्ष्यते इति प्रेक्षणीयकम् । "तव्यत्तव्यानीयरः" । ततः संज्ञायां कन् । आसन्निति अस्तेर्लङ् ॥ ८२ ॥

**अप्रभूतमतनीयसि तन्वी काञ्चिधाम्नि पिहितैकतमो[5]रुः ।**
**क्षौममाकुलकरा विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥ ८३ ॥**

काचित् तन्वी क्षौमं दुगूलं विचकर्षाजहार । यतः कान्तेन क्रान्तपल्लवमाकृष्टान्तम् अत एवातनीयसि विशाले काञ्चिधाम्नि जघनेऽप्रभूतमपर्याप्तम् । कीदृशी क्रान्तपल्लवत्वात् पिहित आच्छादित एकतम ऊरुर्यस्याः यया वा । अत

१ 'चालिता या' ख. पाठः । २ 'चा' ख. पाठः । ३ 'निस्त्यक्ता' ख. पाठः । ४ 'शे' ग. पाठः । ५ 'रो' ख. पाठः ।

एव विकर्षणम् । तथा[1]कर्षवशादाकुलौ चञ्चलौ करौ यस्याः साकुलकरा ॥८३॥

**मृष्टचन्दनविशेषकभक्तिर्भ्रष्टभूषणकदर्थितमाल्यः ।**
**सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोगः ॥ ८४ ॥**

सुदृशां मनोज्ञचक्षुषामुपभोगः सुरतसंमर्द एवंविधोऽप्यात्मनैव स्वयमेव मण्डनमासीत् भूषणं बभूव । कीदृशो मृष्टमुत्पुंसितं चन्दनं समालम्भनं विशेषकभक्तिश्च तिलकविच्छित्तिर्येन यत्र वा, तथा भ्रष्टानि भूषणानि यत्र स भ्रष्टभूषणः, कदर्थितानि मृदितानि माल्यानि येन स कदर्थितमाल्यः । ततो विशेषणसमासः । एवंविधोऽपि संभोगस्ता अभूषयत् । उपभुक्ता हि रमण्यो रम्यतरा भवन्ति । उत्प्रेक्ष्यते–सापराध इव मृष्टचन्दनादित्वात् कृतागा इवासां स्वयं मण्डनमासीत् । यः किल भृत्यो भृत्यान्तरापासनया सापराधः स तत्कार्यं स्वयं करोति । कदर्थित इति कुत्सितोऽर्थः कदर्थः "कोः कत्तत्पुरुषेऽचि" ॥ ८४ ॥

**योषितः पतितकाञ्चनकाञ्चौ मोहनातिरभसेन नितम्बे ।**
**मेखलेव परितः स्म विचित्रा राजते नवनखक्षतलक्ष्मीः ॥ ८५ ॥**

कस्याश्चित् नार्याः समन्ताद्या श्रोण्यां प्रत्यग्रकरजव्रणश्रीः सा रशनेव रेजे । कीदृशे नितम्बे सुरतदर्पेण भ्रष्टकनकरशने, अतश्च मनोहरकररुहपद्मालैव रशनास्थानीयाभवदिति वाक्यार्थः ॥ ८५ ॥

**भातु नाम सुदृशां दशनाङ्कः पाटलो धवलगण्डतलेषु ।**
**दन्तवाससि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥ ८६ ॥**

इह कामिभिः कान्तानां गण्डेषु ओष्ठेषु च दत्तानि दन्तपदान्यतितरां विराजन्ते, तत्र कविर्विचारयति–रम्याक्षीणां पाण्डुगण्डपृष्ठेषु दशनाङ्कः प्रवालमणिसंज्ञो दन्तव्रणलक्ष्म भातु नाम सत्यं राजताम् । नैवाश्चर्यमभ्युपगतमेतदस्माभिरित्यर्थः । यतः स पाटलो लोहितः तेषु च धवलेषु, पाण्डुरेषु भिन्नौ वर्णाववश्यमेव शोभेते । इदं त्वतिचित्रं यदसौ बिन्दुर्दन्तवाससि दशनच्छदेऽधरे परभागमवाप शोभातिशयं लेभे । कस्मादाश्चर्यमित्याह—यतोऽसौ समानगुणश्रीः समाना अभिन्ना गुणा यस्य लौहित्यस्य धर्मस्य श्रीः कान्तिर्यस्य स तथो-

---

१ 'तथाकुलौ विकर्षवशात् सकम्पौ करौ' ग. पाठः ।

क्तः । तुल्यौ न वर्णौ तथा भातः । कथं तद्वेराजदिति चेत् प्रत्यग्रत्वेनैव रम्यत्वोपलब्धेः । अन्यश्च कीदृशौऽसौ संमुखोऽभिमुखो मध्यरेखादेशस्थ इत्यर्थः । विरुद्धं चैतत् यः किल संमुखः स कथं परभागमवाप्नुयात्, अविरोधस्तु परभागस्य शोभार्थत्वात् । अपिर्विस्मयपूर्वके विरोधे । नामशब्दोऽभ्युपगमे प्राकाश्ये वा । भात्विति प्राप्तकाले लोट् । समानया गुणश्रिया संमुखः स्पर्धीति एकपदपाठे विग्रहः ॥ ८६ ॥

**सुभ्रुवामधिपयोधरपीठं पीडनैस्त्रुटितवत्यपि पत्युः ।**
**मुक्तमौक्तिकतनुर्गुणशेषा हारयष्टिरभवद्गुरुरेव ॥ ८७ ॥**

योषाणां मुक्तालता गुरुरेवाभवत् । कदाचित् स्थूलमुक्तायुक्ता स्यादित्याह–मुक्तमौक्तिकतनुरिति । मुक्तमौक्तिका भ्रष्टमुक्ताफला तनुर्देहो यस्याः सा । अथवा मुक्तमौक्तिका भ्रष्टमुक्ताफला चासौ तनुश्च छिन्नमौक्तिकत्वात् तन्वीत्यर्थः । अत एव गुणशेषा तन्तुमात्रमयी । कथं मुक्तमौक्तिकतनुरित्याह–यतस्त्रुटितवती । कथं छिन्नेत्याह–भर्तुः पीडनैराश्लेषैः । क्व त्रुटितेत्याह–अधिपयोधरपीठं स्तनपृष्ठे । अपिर्विरोधे । या किल तन्वी सा कथं गुरुर्भवेत्, अथ च गुरुर्गौरवयुक्ता श्लाघनीयाभवत् । कान्तेन त्रुटितत्वादित्यविरोधः । अन्योऽपि कश्चित् निबिडत्वात् तनुरपि सगुणत्वाद् गुरुरेव भवति । त्रुट्यति स्म त्रुटितवती । क्तवतुः ॥ ८७ ॥

**विश्रमार्थमुपगूढमजस्रं यत्प्रियैः प्रथमरत्यवसाने ।**
**योषितामुदितमन्मथमादौ तद् द्वितीयसुरतस्य बभूव ॥ ८८ ॥**

इह रात्रिमध्येऽनेकशो निधुवनमासेव्यते, तत्रादावन्ते चालिङ्गनचुम्बने क्रियेते इति स्थितिः, तत्र कविराह–प्रथमरत्यवसाने आद्यसुरतान्ते विश्रमार्थं यत् प्रियैर्वल्लभैः कर्तृभिरजस्रमसकृत् नारीणामुपगूढमालिङ्गनं तदेव द्वितीयसुरतस्य काकाक्षिन्यायेनादावभूत् । अथ किमिति प्रथमसुरतसमनन्तरमेव सुरतान्तरमारम्भि, यावता विश्रमार्थमित्युक्तमित्याह—उदित उत्पन्नो मन्मथः कामो यत्र तदुदितमन्मथमुपगूढम् । एतदुक्तं भवति—विश्रमेच्छया रतान्ते यदाश्लेषि तावत् तेनैवाश्लेषेण भूयो रिरंसाजनि, इति तदेवालिङ्गनमुभयार्थं जातम् । विश्रमेति "नोदात्तोपदेशस्य मान्तस्यानाचमे" रिति वृद्धिप्रतिषेधः । उपगूढमिति भावे क्तः । प्रियैरिति कर्तरि तृतीया ॥ ८८ ॥

**आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारतरताभिरताभ्यः ।**
**दीयते स्म शयितुं शयनीये न क्षणः क्षणदयापि वधूभ्यः ॥ ८९ ॥**

कामिनीनां क्षणदयापि रात्र्यापि शयनीये निद्रातुं क्षणोऽवसरो न दीयते स्म न दत्तः । क्षणं व्यापारान्तरनिवृत्तिं ददातीति क्षणदा रात्रिः । दिने हि सर्व एव कार्यासक्तः । यदि क्षणदा सा कथं क्षणं नादादित्याह—अनारतमविच्छिन्नं यद्रतं तत्राभिरताभ्यः सक्ताभ्यः । कीदृशे तल्पे इति सक्तावपि कारणमाह—प्रत्यग्रकिसलयकुसुमैरास्तृते च्छादिते । रम्यैर्हि पदार्थैः काम उद्दीप्यते । प्रथमोऽपिशब्दो विस्मयमभिदधत् निशागमनकारणसामग्रीं प्रतिपादयति । अभिनवपल्लवपुष्पैरप्यास्तृते निर्मिते हि शयने निद्रा नायाति । द्वितीयस्तु विरोधे ॥ ८९ ॥

**योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ।**
**क्षोभमाशु हृदयं नयदूनां रागवृद्धिमकरोन्न यदूनाम् ॥ ९० ॥**

अङ्गनानां वपुर्यदूनां वृष्णीनां रागवृद्धिमूनां नाकरोत्, रताभिलाषं स्वल्पं न व्यधात् अपितु बह्वेव । यत उज्ज्वलतया रामणीयकेन[1] न खलु ऊनं खण्डं, मनोहरं यत इत्यर्थः । तथातितरामतिशयेन नखलूनं करजक्षतमत एव यदूनां हृदयमाशु प्रागेव क्षोभमाकुलत्वं नयत् प्रापयत् । अत एव च रागवृद्धिजनकत्वम् । सर्गेऽत्र स्वागता वृत्तम् ॥ ९० ॥

**इति मदमदनाभ्यां रागिणः स्पष्टरागा-**
**ननवरतरतश्रीसङ्गिनस्तानवेक्ष्य ।**
**अभजत परिवृत्तिं साथ पर्यस्तहस्ता**
**रजनिरवनतेन्दुर्लज्जयाधोमुखीव ॥ ९१ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये सुरतवर्णनं नाम दशमः सर्गः ॥ १० ॥



---

१ 'न न' क. ग. पाठः ।

अथानन्तरं रजनिर्निशा परिवृत्तिं विपर्ययमभजत दिनरूपेण परिणनामे-त्यर्थः । कीदृशी रजनिः, पर्यस्तः पतितः प्रेरितो हस्तो नक्षत्रं यत्र । हस्तो हि सदास्तमेति । तथा अवनतेन्दुर्लम्बमानचन्द्रा । उत्प्रेक्ष्यते—रागिणः कामिनो मिथुनानि एवंविधान् वीक्ष्य लज्जयाधोमुखीव नम्रमुखीव । कीदृशानित्युक्तप्र-कारेण यौ मदमदनौ क्षीबत्वमन्मथौ ताभ्यां स्पष्टरागान् प्रकटीकृतप्रीतीन् । क्षीबतया हि स्नेहाविर्भावो भवति कामेन च । अत एवानवरतमविच्छेदेन या रतश्रीः सम्भोगलक्ष्मीस्तत्र सक्तान् । या किल नायिका स्पष्टरागं रतलालसं च नायकं पश्यति सा तस्मिन् चुम्बनाभ्युद्यते लज्जयाधोमुखी स्रंसमानकरा च भवति । इन्दोर्मुखमुपमानम्, रजन्यास्तु नायिका प्रतीयते । उत्प्रेक्षासङ्कराल-ङ्कारः । मालिनी वृत्तमितिभद्रम् ॥ ९१ ॥



इति श्रीमहामहोपाध्यायवर्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविर-चितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां सुरतवर्णनं नाम दशमः सर्गः
॥ १० ॥



## समाप्तमिदं पूर्वार्धम्



# शिशुपालवधम् ।



## माघभट्टविरचितम् ।



### संदेहविषौषध्याख्यया व्याख्ययोपेतम् ।

### एकादशः सर्गः ।



श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम् ।
अभिजगदुरकाकिश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय ॥ १ ॥

---

अथ भगवतो विष्णोर्मागधा नग्नाचार्या इति वक्ष्यमाणेन प्रकारेण रात्रेः परिणतिं निशाविपर्ययमभिजगदुः पेठुः । कथमुच्चैस्तारम् । किं कृत्वा षड्जं षड्जग्रामं भिन्नकीकृत्य भिन्नरूपतां प्रापय्य, भिन्नषड्जं कृत्वेत्यर्थः । कीदृशा वन्दिन इति भिन्नषड्जस्वरूपमाह–पञ्चमं स्वरं पीडयन्तो वर्जयन्तः । कीदृशं श्रुत्या ध्वनिविशेषेण समधिकं बहुलं, चतुःश्रुतिकमित्यर्थः । आधिक्यं तु मध्यमग्रामापेक्षया तत्र हि असौ त्रिश्रुतिकः षड्जे तु चतुःश्रुतिकः, एतच्च पूर्वमेव दर्शितम् । कीदृशं षड्जं सततं सदैव ऋषभस्वरेण हीनं वर्जितम् । औडुवितो ह्यसौ यार्ष्टीकादिभिरिष्यते । सततग्रहणेन लक्ष्यानुरोधात् कदाचित् पञ्चमस्वरस्य सद्भावः सूच्यते सततमृषभेण हीनं, पञ्चमस्तु कदाचिद्भवेदेवेत्यर्थः । यदा चैवं तदा पञ्चमं पीडयन्तो मन्दमुच्चारयन्त इत्यर्थः । कीदृशास्ते अकाकी गेयदोषवर्जितः श्रावकः संवाही विपुलः स्निग्धोऽरूक्षः कण्ठो गलो येषां तेऽकाकिश्रावकस्निग्धकण्ठाः । मागधविशेषणत्वे त्वकाकीत्यस्य

विशेषणसमासः । भिन्नमेव भिन्नकम् "अनत्यन्तगतौ क्ता"दिति कन् । अभिन्नकं भिन्नकं कृत्वा भिन्नकीकृत्य "अभूततद्भावे च्विः" ऊर्यादि-च्विडाचश्च" कुगतिप्रादयः, समासेऽनञ्पूर्वे क्त्वो ल्यप्, अस्य च्वौ" । एवमन्यत्र । श्रावयतीति श्रावकः । परिणतिर्दिनरूपेण धर्मान्तरापत्तिः । माधवायेति"क्रियाग्रहणमपि कर्तव्य"मिति संप्रदानसंज्ञा । मालिनी वृत्तम् । "वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः" ॥ १ ॥

अभिजगदुरिति यदुक्तं तदेवाह—

**रतिरभसविलासाभ्यासतान्तं न याव-**
**न्नयनयुगममीलीत्तावदेवाहतोऽसौ ।**
**रजनिविरतिशंसी कामिनीनां भविष्य-**
**द्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २ ॥**

यावन्नयनयुगं नामीलीन्न निमिषितं तावदेवासौ मृदङ्गः पटहस्ताडितः । कीदृङ् नेत्रयुग्ममिति निमीलने कारणमाह—रते निधुवने रभसेनौत्सुक्येन विलासो व्यापारस्तस्य योऽभ्यासो भूयोभूयःकरणं तेन तान्तं खिन्नम् । कीदृङ् मृदङ्गः रजनिविरतिशंसी निशावसानसूचकः । प्रभाते हि तूर्यं वाद्यते । कथमाहतः कामिनीनां भाविना विरहेण विहितो निद्राभङ्गः स्वापनाशो येन । नहि चिन्तया निद्रायाति, रतमासेव्य श्रान्ताः कामिनो यावदक्षि स्थगयन्ति तावदेवालोकीभूतमिति वाक्यार्थः । अमीलीदिति लुङ् । अमीलदिति पाठे लङ् । उच्चैर्वेगेन ॥ २ ॥

**स्फुटतरमुपरिष्टादल्पमूर्तेर्ध्रुवस्य**
**स्फुरति सुरमुनीनां मण्डलं व्यस्तमेतत् ।**
**शकटमिव महीयः शैशवे शार्ङ्गपाणे-**
**श्चपलचरणकाब्जप्रेरणोत्तुङ्गिताग्रम् ॥ ३ ॥**

एतत् सुरमुनीनां सप्तर्षीणां मण्डलं वलयं ध्रुवस्यौत्तानपादेरुपरि स्फुटतरमतिप्रकटं स्फुरति द्योतते । ध्रुवो हि सर्वं ताराचक्रं वहति । कीदृशस्य ध्रुवस्य अल्पमूर्तेस्तनुतनोर्दुर्बलस्य । मण्डलं कीदृशं व्यस्तं व्यस्तृतम्, व्यासो हि विस्तारः अत

एव स्फुटतरं स्फुरणम् । केचित्तु व्यस्तं पश्चिमादालम्बमानमित्याहुः । कस्योपरि को यथा स्फुरतीत्याह—अल्पमूर्तेर्बालस्य शार्ङ्गपाणेर्हरे[1]रुपरिष्टाच्छकटमनो यथा पुस्फोर । कीदृशं महीयो बृहत्, तथा व्यस्तं परिवृत्तम् । यतश्चपलेन कम्प्रेण चरणकाब्जेन पादपद्मेन यत्प्रेरणं क्षेपस्तेनोत्तुङ्गितमूर्ध्वीकृतमग्रं पूर्वभागो यस्य तत्तथोक्तम् । देवर्षिमण्डलस्य शकटमुपमानं, ध्रुवस्य हरिः । [2]चरतीति चरणः । "चलनशब्दार्थादकर्मकाद्युच्" । ततोऽल्पे कप् । शकटशब्दस्त्रिलिङ्गः ॥ ३ ॥

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
ददद‌पि खलु वाचं बुध्यते नो मनुष्यः ॥ ४ ॥

कश्चित् स्थानवारिकः पुनःपुनर्गिरं ददद‌पि नैव बुध्यते न विनिद्राति । कीदृशोऽसाविति वाग्दाने कारणमाह—केनचिदन्येन जागरकेण स्वं प्रहरकं याममपनीय जागरित्वा निदिद्रासता सुषुप्सता सता प्रतिपदं नामग्राहमुच्चैरुपहूतः शब्दितः । किमर्थं जागृहीति । मयात्मीयः प्रहरोऽतिवाहितः, आगच्छ रे माणवक त्वमपि स्वकीयं प्रहरमतिवाहयेत्येतदर्थम् । वारैरीश्वरगृहेषु नरा जाग्रति, अतश्च सोऽयमागतोऽस्मीत्यादि ब्रुवन्नपि नैव बुध्यते । कीदृशीं वाचं निद्रयाविशदवर्णामव्यक्ताक्षराम्, अत एव शून्यशून्यां निरभिधेयप्रायामलक्षितार्थामित्यर्थः । प्रहरशब्दः पचाद्यजन्तो घप्रत्ययान्तो वा, ततः कप् । यदि वा "कृञादिभ्यः संज्ञायां वुञ्" । निद्रातुमिच्छति निदिद्रासति । पदमत्र नाम तदनतिक्रमेण प्रतिपदं नामग्राहमित्यर्थः । शून्यशून्यामिति प्रकारे द्वित्वम् । खलुर्विस्मये ॥ ४ ॥

विपुलतरनितम्बाभोगरुद्धे रमण्याः
शयितुमनधिगच्छञ्जीवितेशोऽवकाशम् ।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथञ्चि-
द्गमयति शयनीये शर्वरीं किं करोतु ॥ ५ ॥

---

[1] 'केशवस्य' ग. पाठः । [2] 'चलतीतिचलनश्चरणः' क. ख. ग. पाठः ।

कश्चित् कामी शय्यायामेव कथञ्चित् क्षपां गमयति नैव शेते इत्यर्थः । यतो निद्रार्थं स्थानमवकाशमनाप्नुवन् । कुत इत्याह–नितम्बिन्याः सम्बन्धिना विशङ्कटकटीतटविस्तारेण यतस्तल्पे व्याप्ते, स च निधुवनाभ्यासवशान्नश्यन्नैद्रतन्द्रो[1] व्यपगतस्वापालस्यः । अतश्चैवमापतिते किमसौ वराकस्तपस्वी करोतु, जागर्यातो विना नैवास्योपायान्तरं विद्यते इत्यर्थः । अवकाशशब्दो घञन्तः । "कृदभिहितो भावो द्रव्यवद्भवति क्रियावच्चे"ति क्रियार्थतेति । शयितुमिति तुमुनुत्पत्तिः । एवमन्यत्र । निद्रात आगता नैद्री । तन्द्राशब्द अकारान्तोऽप्यस्ति । करोत्विति विधौ प्राप्तकाले वा लोट् । यथा "किं ददातु किमश्नातु भर्तव्यभरणाकुलः । उपारमति नाप्तेऽपि त्रिजगत्त्रयमात्रके" ॥ इति ॥ ५ ॥

क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-
नुदधिमहति राज्ये काव्यवद् दुर्विगाहे ।
गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम् ॥ ६ ॥

राजानोऽर्थजातं कार्यं धनं वाधुना चिन्तयन्ति आलोचयन्ति । कीदृशाः पूर्वं क्षणं मनाक् शयिताः सुप्तास्ततो विबुद्धा उन्निद्रास्तथा प्रयोगान् सामादीन् कल्पयन्तो विमृशन्तः । क राज्ये राष्ट्रे, कीदृशि उदधिमहति अब्धाविव विपुले, अत एव दुर्विगाहे कृच्छ्रप्राप्येऽतिविषमे । कस्मिन्निव दुर्विगाहेऽतिविषमे इत्याह–काव्ये इव काव्यवत् । काव्यं ह्युदधिमहद् दुर्विगाहं च । नृपाः कीदृशाः अपररात्रे क्षपान्ते प्राप्तो बुद्धेः प्रसादो नैर्मल्यं पाटवं च यैः । अत एव तदर्थजातालोचनमतश्च तद्गहनं दुर्विज्ञानम् । क इव चिन्तयन्तीत्याह–कवय इवेति । यथा याममात्रं शयित्वा विबुद्धाः प्राप्तप्रज्ञापाटवाः पश्चाद्रात्रे कवयो दुर्विगाहे महाकाव्ये प्रयोगान् विशेषलक्षणान्वितान् शब्दान् कल्पयन्तो गहनमविरुद्धमर्थजातं चिन्तयन्ति, एवं नृपा राज्यमिति वाक्यार्थः । काव्यस्य च पश्चाद्रात्रः प्रायशः कालः । तथा च मेधाविरुद्धः "आस्थाय योगं प्रविबुद्धचेता जघन्यरात्रेष्वपनीतनिद्रः । संधाय पूर्वं मनसार्थमिष्टं नित्यं क्रियायां प्रयतेत सेति (?)" ॥ शयित इति "निष्ठा शीङि"ति कित्त्वाभावः । ततः "पूर्वकाले"ति विबुद्धशब्देन सह

---

१ 'ष्टनै' क. ख. ग. पाठः ।

समासः । प्रयुज्यन्ते इति प्रयोगाः शब्दाः सामादयश्च । रात्रेरपरो भागोऽपररात्रः । "पूर्वापराधरोत्तर"मिति समासः । "अहःसर्वैकदेश"इति अच्समासान्तः । शोभनोऽर्थोऽर्थजातम् । "प्रशंसावचनैश्च" । केचित्तु प्रकारार्थं जातशब्दमाहुः, अन्ये तु समूहार्थम् ॥ ६ ॥

**क्षितितटशयनान्तादुत्थितं दानपङ्क-**
**प्लुतबहलशरीरं शाययत्येष भूयः ।**
**मृदुचलदपरान्तोदीरितान्दूनिनादं**
**गजपतिमधिरोहः पक्षकव्यत्ययेन ॥ ७ ॥**

अधिरोहो निषादी महेभं पक्षकव्यत्ययेन पार्श्वद्वयपरिवर्तनेन भूयः शाययति स्वापयति । कीदृशं क्षितितटमिव तदाकारेण कृतत्वात् तदेव शयनं शय्या तस्यान्त एकदेशस्तत उत्थितं विबुद्धम्, तथा दानपङ्केन मदकर्दमेन प्लुतं व्याप्तं समग्रं वपुर्यस्य, तथा मृदु चलन्त्यौ ये अपरे खुरगुल्फौ तयोर्योऽन्तो भागस्तेनोदीरितः कृत उत्थापितोऽन्दूनां शृङ्खलानां निनादो ध्वनिर्यत्र । शाययतीति "अणोऽकर्मकादि"ति परस्मैपदम् । अधिरोहतीत्यधिरोहो हस्तिपकः । पक्षकः पार्श्वम् ॥ ७ ॥

**द्रुततरकरदक्षाक्षिप्तवैशाखशैले**
**दधति दधनि धीरानारवान् वारिणीव ।**
**शशिनमिव सुरौघाः सारमुद्धर्तुमेते**
**कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥ ८ ॥**

एते वल्लवा गोपाः कलशिं कुम्भीं लोडयन्ति मथ्नन्ति । गर्गरिकास्थस्य दध्नो मथनात् सा विलोडितेत्युच्यते । किमर्थं सारं नवनीतमुद्धर्तुम् । कीदृशीं कलशिमुदधिमिव गुर्वीं महतीम् । कदा लोडयन्ति वारिणीव जलबहुले दध्नि धीरान् मन्थरानारवान् घोषान् बिभ्रति । मन्थरान् सशब्दानित्यर्थः । कीदृशे दध्नि द्रुततरा गतागतवशादतित्वरिता ये कराः पाणयस्तैर्दक्षं चतुरमाक्षिप्त आकृष्टो वैशाखो मन्थ एव शैलो मन्दराद्रिर्यत्र । के यथा किमुद्धर्तुं ममन्थुरित्याह–शशिनमिव यथा वारिणि गम्भीरानारवान्दधति देवपूगाः शशिनमुद्धर्तुमब्धिं ममन्थुः

एवं गोपाः सारमादातुं कलशिमिति वाक्यार्थः । कीदृशि वारिणि द्रुततरैः करैर्दत्तमाक्षिप्तो वैशाखतुल्यः शैलो मन्दराद्रिर्यत्र । वैशाख इति "विशाखाषाढादण् मन्थदण्डयो"रित्यण् । दधनीति "विभाषा ङिश्योः" । यथा चानेकेषामिवानां साफल्यं तथा पूर्वमेवोक्तम् ॥ ८ ॥

अनुनयमगृहीत्वा व्याजसुप्ता पराची
स्वरमथ कृकवाकोस्तारमाकर्ण्य काले ।
कथमपि परिवृत्ता निद्रयान्धा किल स्त्री
मुकुलितनयनैव श्लिष्यति प्राणनाथम् ॥ ९ ॥

काचिद्भामिनी निमीलल्लोचनैव कान्तमालिङ्गति । कीदृशी पूर्वं प्रार्थनां तिरस्कृत्य पराची पराङ्मुखी सती व्याजसुप्ता अलीकशयिता । अत्र च मानित्वं कारणम् । अनन्तरं च काले प्रभातसमये कृकवाकोः कुक्कुटस्य तारं रुतं श्रुत्वा कथमपि मानित्वात् परिवृत्ता संमुखी निद्रावशेन किलान्धा निद्राव्यामोहव्याजेन स्थगिताक्षीव प्रियं परिष्वजते । यदि ह्यसौ व्याजं न कुर्यात् । तत् लाघवं प्राप्नुयात् । यदि च नाश्लिष्येत्तत्सुरताद्वञ्चिता स्यादिति निद्रयान्धा किल प्राणेश्वरमाश्लिष्यति । अत्र च मागधमुखेन कविरेव प्रभातस्वरूपवर्णनमेव कुरुते । तेन वन्दिनः कथमेवं दम्पतिव्यवहारं जानते इति न चोद्यम् । पराञ्चतीति पराची । "अञ्चतेश्चोपसंख्यान"मिति ङीप् ॥ ९ ॥

गतमनुगतवीणैरेकतां वेणुनादैः
कलमविकलतालं गाथकैर्बोधहेतोः ।
असकृदनवगीतं गीतमाकर्णयन्तः
सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः ॥ १० ॥

नृपाः स्वापं भजन्ते निद्रायन्ते इत्यर्थः । कीदृशा गीतं गेयमाकर्णयन्तः शृण्वन्तोऽत एव सुखेना[1]क्लेशेन मुकुलितनेत्रा निमीलितनयना निद्रां प्राप्ता इत्यर्थः । कीदृशं गीतं वेणुनादैर्वंशध्वनिभिरेकतामभेदं गतं प्राप्तम् । कीदृशैरनुगतवीणैरनुवर्तितविपञ्चीवाद्यैरेतेन त्रयाणामपि साम्यं प्रतिपाद्यते । तथा [2]कलं मधु-

१ 'आश्लेषेण' क. ख. पाठः । २ 'यथाकालं कलं' ग. पाठः ।

रमविकलतालं संपूर्णतालं, तालेनाभ्रष्टमित्यर्थः । गीतमानः कलात्मकः[1] तालश्चश्चत्पुटादिकः । अनवगीतमश्रुतपूर्वमनिन्द्यं वा, बहुकृत्वः श्रुतं दृष्टमवगीतमुदाहृतम् । तथा गाथकैर्गायनैर्बोधहेतोर्निद्रामोक्षार्थमसकृद् भूयोभूयो गीतमुच्चारितमिति तन्त्रेण गीतशब्दस्यायमर्थः । यदि वा यत्तच्छब्दावध्याहार्यौ । गाथकैर्यद्गीतं तदाकर्णयन्त इत्यर्थः । यदि वा गाथकैर्गाथककर्तृकं गीतं शृण्वन्त इत्यर्थः । गायन्तीति गाथकाः । "गः स्थकन्" ॥ १० ॥

परिशिथिलितकर्णग्रीवमामीलिताक्षः
क्षणमयमनुभूय स्वप्नमूर्ध्वज्ञुरेव ।
रिरसयिषति भूयः शष्पमग्रे विकीर्णं
पटुतरचपलौष्ठ[2]प्रस्फुरत्प्रोथमश्वः ॥ ११ ॥

अयमश्वः पुरो निक्षिप्तं शष्पं घासं पुनरपि रिरसयिषति जिघत्सति । किं कृत्वा ऊर्ध्वज्ञुरेवोर्ध्वजानुरुपविष्ट एव किञ्चित्स्वप्नं निद्रामनुभूय सेवयित्वा । कथं परिशिथिलितमस्तब्धं कर्णग्रीवं यत्र । तथामीलिते अक्षिणी यत्र येन वा । कथं बुभुक्षते पटुतरं चतुरं चपलौ कम्प्रौ ओष्ठौ यत्र । प्रस्फुरच्च प्रोथं घोणारन्ध्रं यत्र । स्वापः स्वप्नः "स्वपो नङ्" । ऊर्ध्वे जानुनी यस्यासावूर्ध्वज्ञुः "ऊर्ध्वाद्विभाषे"ति जानुशब्दस्य ज्ञुरादेशः । "रस आस्वादनस्नेहनयो"रित्यस्य चौरादिकस्य रिरसयिषतीति रूपम् ॥ ११ ॥

उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति नवरमिन्दुः सोऽपरामेष गत्वा ।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ॥ १२ ॥

एषा पूर्वकाष्ठाङ्गनाया वासवाशायुवत्या विशदं प्रकटं प्रभा स्फुरति कान्तिः प्रसरति । उत्प्रेक्ष्यते—इत्यतो हेतोः साभ्यसूयं सेर्ष्यं स्मितरुचिरिव हासच्छविर्यथा । तमेव हेतुमाह—योऽयं शशी मे सङ्गतौ अस्मत्संपर्के उदितदीप्तिर्जातकान्तिः सन्नुदयं याति प्राप्नोति स एवैषोऽधुनापरां पश्चिमां प्राप्य नवरं केवलं पतति

१ 'मानका' ख. पाठः । २ 'ष्ठं' क. ख. पाठः ।

भ्रश्यतीति । यदा किल परां नारीं प्राप्य नायको भ्रंशमाप्नोति तदा प्रधाननायिका ईर्ष्यया हसति । उदयोदितशब्दाविणो रूपे । नवरशब्दः[1] केवलार्थे देशीपदम्, अत्र तु कविना बलात्प्रयुक्तः ॥ १२ ॥

**चिररतिपरिखेदप्राप्तनिद्रासुखानां**
**चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।**
**अपरिचलितगात्राः कुर्वते न प्रियाणा-**
**मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ १३ ॥**

युवतयः कान्तानां गाढबाहुवलयालिङ्गनत्यागं नैव विदधति यतोऽनवरतसुरतश्रमसंप्राप्तस्वापसुखानाम् । ताः कीदृश्यः पश्चादपि सुप्ता आदावेव विनिद्रा इति सन्महेलाचारः । तथाकम्पितदेहा प्रियनिद्राभङ्गभयादिति भावः ॥ १३ ॥

**कृतधवलिमभेदैः कुङ्कुमेनेव किंचि-**
**न्मलयरुहरजोभिर्भूषयन् पश्चिमाशाम् ।**
**हिमरुचिररुणिम्ना राजते रज्यमानै-**
**र्जरठकमलकन्दच्छेदगौरैर्मयूखैः ॥ १४ ॥**

एष शीतांशुर्वारुणीं दिशमंशुभिरलंकुर्वन् शोभते । कीदृशैर्जरठं कठोरं पक्कं यत्कमलकन्दं पद्ममूलं मृणालं तस्य यश्छेदो भङ्गस्तैरिव धवलैः स्फुटितबिसशुभ्रैरित्यर्थः । तथा किंचिदरुणिम्ना लौहित्येन रज्यमानैः रक्तीक्रियमाणैः । उदयास्तसमये हि रक्तता जायते । अत एव मलयरुहरजोभिरिव चन्दनरेणुतुल्यैः । कीदृशैः रजोभिः कुङ्कुमेन कश्मीरजेन किंचित्कृतो धवलिम्नः सितत्वस्य भेदोऽन्यथात्वं येषाम् । अयमत्रार्थः—यथा कश्चिद्विलासी कुङ्कुमच्छुरितचन्दनरजोभिर्नायिकामलङ्कुर्वाणो राजते तथा सितरक्तैः किरणैः पश्चिमाशां भूषयन्निन्दुरित्यर्थः । मयूखानां मलयरज उपमानं रक्तानां तु काश्मीरम् । इवशब्दो भिन्नक्रमः । उपमालङ्कारोऽयम्, उत्प्रेक्षेति तु केचित् । मलयरुहशब्दे मूलविभुजादित्वात्कः ॥ १४ ॥

---

१ 'नवरशः' ख. ग. पाठः ।

दधदसकलमेकं खण्डितामानमद्भिः
श्रियमपरमपूर्णामुच्छ्वसद्भिः पलाशैः।
कलरवमुपगीते षट्पदौघेन दत्तः
कुमुदकमलषण्डे तुल्यरूपामवस्थाम् ॥ १५ ॥

कुमुदकमलषण्डे कैरवपद्माकरावधुना तुल्यरूपां सदृशात्मिकामवस्थां धत्तो बिभ्रतः। कीदृशे षण्डे इति साम्यमाह—एकं कुमुदषण्डमानमद्भिः संकुचद्भिः पलाशैः पत्रैरसकलमीषत्खण्डितामूनीकृतां श्रियं शोभां दधदुद्वहत्, अपरं तु पद्मषण्डं तैरसकलमुच्छ्वसद्भिर्विकसद्भिरपूर्णामसमग्रां श्रियं दधत्। तथा द्वे अपि षट्पदौघेन भृङ्गसार्थेनोपगीते गातुमारब्धे, बन्धभीत्या कुमुदे सौरभाकृष्टत्वाच्च कमले मुखरत्वम्, अतश्च सर्वथा तुल्यावस्थत्वम्। धत्त इति धाञस्तस्, द्वित्वम्। "श्नाभ्यस्तयोरातः"। दधस्तथोश्च। खरि च"। षण्डशब्दः पुंस्त्रियोः ॥ १५ ॥

मदरुचिमरुणेनोद्गच्छता लम्भितस्य
त्यजत इव चिरावस्थायिनीमाशु लज्जाम्।
वसनमिव मुखस्य स्रंसते संप्रतीदं
सितकरकरजालं वासवाशायुवत्याः ॥ १६ ॥

पूर्वकाष्ठाङ्गनाया मुखस्य प्रारम्भस्यैतच्छिशिरकिरणकिरणनिकुरुम्बं स्रंसते भ्रश्यति। तदा हि तत् पश्चिमाशादिगवलम्बि भवति। कीदृशस्य अरुणेनोद्गच्छतोद्यता मदसम्बन्धिनीं रुचिं लौहित्याख्यां लम्भितस्य प्रापितस्य, अत एव तमोनाशाद् दीपप्राकाश्येन चिरावस्थायिनीं सहजां ह्रियं संत्यजत इवेत्युत्प्रेक्षा। किमिव स्रंसते इत्याह—वसनमिवेति। यथा कस्याश्चित्कामिन्या मत्तायाः कान्तेन मदरुचिं लम्भिताया मुखादाश्वेव व्रीडानाशे सति वासः पतति तथैन्द्र्याः शशिकरा इत्युपमा, उत्प्रेक्षेति केचित्। करजालस्य वसनमुपमानं, लज्जायास्तु तमः प्राभातिकम्। मुखस्येति सम्बन्धविवक्षायां षष्ठी। मदस्य नवा रुचिर्लौहित्यम्। अवश्यं चिरमवतिष्ठते इति चिरावस्थायिनी ॥ १६ ॥

अविरतरतलीलायासजातश्रमाणा-
मुपशममुपयान्तं निःसहेऽङ्गेऽङ्गनानाम् ।
पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य
ज्वलयति मदनाग्निं मालतीनां रजोभिः ॥ १७ ॥

मातरिश्वा गन्धवह उषसि प्रगे मालतीनां रजोभिर्जातीरेणुभिर्वनितानां वपुषि पुनरपि मदनाग्निं स्मरानलं ज्वलयत्युद्दीपयति, यत उपशमं नाशमायान्तम् । कुत इत्याह–अनवरतं या रतलीला निधुवनव्यापारस्तया य आयासः खेदस्तेन जातश्रमाणां श्रान्तानामत एव निःसहे स्वकार्याक्षमेऽङ्गेऽतो वायुर्मालतीनां रजांस्यवचूर्ण्य निक्षिप्य तैः कामवह्निं ज्वलयति । कथमन्यथा कुसुमरेणुवासितवातव्यतिकरात् ताः सकामा इति भावः । कीदृग्भिः रजोभिर्विविक्तैरनुपहतैः । अवचूर्णनमत्र निक्षेपः[१] । एतच्च प्रकृतत्वाद्रजसामेव । अन्योऽप्यग्निं शाम्यन्तं गोमयादिरजोऽवचूर्ण्य तेन ज्वलयति । उपशममिति "नोदात्तोपदेशस्ये"ति वृद्धिप्रतिषेधः ॥ १७ ॥

अनिमिषमविरामा रागिणां सर्वरात्रं
नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य ।
इदमुदवसितानामस्फुटालोकसम्प-
न्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १८ ॥

एतद् दैपं दीपसम्बन्धि अर्चिः शिखा घूर्णते कम्पते । क्षपाक्षये हि तैलक्षयाद्वातवशाद्वा प्रशाम्यन्तो दीपाः कम्पन्ते । कीदृगर्चिः, अस्फुटालोकसम्पदप्रकटिततेजःपुञ्जप्रसरम् । उत्प्रेक्ष्यते–उदवसितानां वेश्मनां नयनमिव सनिद्रत्वाद् घूर्णते । किं कृत्वेति सनिद्रत्वे कारणमाह–दम्पतीनां समग्रामेव रात्रिमविच्छिन्ना अपूर्वसुरतक्रियाः कुतूहलादालोक्य, अत एवानिमिषं न निमिषतीत्यनिमिषमनिमीलनम् । "इगुपधत्वात्कः" । यः किल कौतुकाद्रात्रावनिमिषनेत्रः किंचिद्गोष्ठ्यादिकं वीक्षते तस्यावश्यमेव प्रत्युषसि निद्रयापटुदृष्टिनी नयने घू-

---

१ 'वि' क. पाठः ।

र्णेते । रागिणामिति "पुमान् स्त्रिया" । सर्वा चासौ रात्रिः सर्वरात्रः "अहःसर्वै"ति टच् । लीला क्रिया । उदवसितशब्दे उदवपूर्वात्सिनोतेः क्तः । दीपस्येदं दैपम् ॥ १८ ॥

विकचकमलगन्धैरन्धयन् भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वायुः[1] ।
समदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेदस्वेदविच्छेददक्षः ॥ १९ ॥

एष वातो मन्दं याति । कीदृशः फुल्लपद्मामोदैरिन्दिन्दिररिञ्छोलीरन्धयन् आकुलीकुर्वन्, तथा समदमदना माद्यन्त्यो हृष्यन्त्यो यौवनोद्दामास्तारुण्यनिरुच्छृङ्खला या रामाः कामिन्यस्तासां यद्रमणं सुरतकेलिस्तत्र यो रभसोऽविचार्यप्रवृत्तिस्तेन यः खेदस्ततो यः स्वेदस्तस्य यो विच्छेदो विनाशस्तत्र दक्षश्चतुरः, निधुवनश्रमघर्मितकामिनीसेवानिपुण इत्यर्थः । कथं वाति सुरभितं मकरन्दं मधु यत्र वातवहने, विकासवशाद्धि कुसुमरसः सुगन्धिर्भवति । कवलितमकरन्दमिति तु पाठे कवलितं ग्रस्तं गर्भीकृतम् । तथा मन्दं मृदु । अन्धं करोत्यन्धयति । मदयतीति मदनः "नन्द्यादिभ्यो ल्युः" ॥ १९ ॥

ललितनयनताराः क्षामवक्त्रेन्दुबिम्बा
रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः ।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ २० ॥

एता वारविलासिन्यो राजवेश्मभ्यो यान्ति निःसरन्ति रजनय इव, रात्रयोऽपि गच्छन्तीत्यर्थः । इति सहोक्तिः । तयोः श्लेषः । कीदृश्यो विलासिन्यः, लुलितानि मृदितानि कम्प्राणि वा नयनान्येव तारा यासाम् । अथवा लुलिता नयनेषु ताराः कनीनिका यासाम् । तथा क्षामं जागर्यावशात् कृशं वक्त्रमेवेन्दुबिम्बं यासां, निद्रया क्लान्तानि नीलोत्पलान्येवाक्षीणि यासां, तथा कार्ष्ण्यात्तिमिरमिव तमस्तुल्यान् स्रंसिनश्च लम्बमानान् केशपाशान् कवरीर्दधानाः । रज-

---

१ 'तः' ग. पाठः ।

न्यः कीदृश्यः, लुलितनयननिभतारकाः क्षामवक्त्रतुल्यचन्द्रबिम्बाः सङ्कोचक्लान्तनीलोत्पलाढ्यः, तथा क्षीयमाणतिमिरधारिण्यः । लिङ्गवचनभेदेऽपि सामान्यपदस्य दधाना इत्यस्याभेदात् न तिमिरमिव केशपाशान्दधाना इत्यौपम्यं विरुध्यते ॥ २० ॥

**शिशिरकिरणकान्तं वासरान्तेऽभिसार्य**
**श्वसनसुरभिगन्धिः सांप्रतं सत्वरेव ।**
**व्रजति रजनिरेषा तन्मयूखाङ्गरागैः**
**परिमलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २१ ॥**

एषा क्षपा सांप्रतं सत्वरेव व्रजति । किं कृत्वेति त्वराकारणमाह—हिमकर एव कान्तस्तं दिनक्षयेऽभिसार्याभिसृत्य गत्वेति स्वार्थे णिच् । कीदृशी रजनिः श्वसनेन वायुना सुरभिर्गन्धो यस्याः । यदा हि वायुर्वहति तदा कुसुमरजःप्रबोधात्सा सुरभिर्भवति । तथा शशिनो ये मयूखास्त एवाङ्गरागा अनुलेपनानि तैरनिन्द्यैः श्लाघ्यैरम्बरान्तं नभोऽन्तं परिमलितमिव परिमलितं व्याप्तं वहन्ती अत एव सत्वरेव । या किलाभिसारिका प्रदोषसमये कान्तमभिसरति, सा रात्रौ प्रियाङ्गरागेण परिमलितं सुरभीकृतमम्बरान्तं वस्त्रपल्लवं वहन्ती सत्वरं प्रातर्गृहं याति । श्वसने श्वासे सुरभिर्गन्धो यस्याः सा श्वसनसुरभिगन्धिः । संप्रत्येव सांप्रतम् ॥ २१ ॥

**नवकुमुदवनश्रीहासकेलिप्रसङ्गा-**
**दधिकरुचिरशेषामप्युषां जागरित्वा ।**
**अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः**
**शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥ २२ ॥**

अयं चन्द्रो वारुणीहरिदुत्सङ्गे वपुर्निक्षिपति । कीदृशः स्रस्तहस्तो लम्बितकिरणः । कीदृशमात्मानं पाण्डुं पाण्डुरं तथा म्लानं विच्छायम् । किं कृत्वा मुञ्चति नवा सरसा यासौ कुमुदवनश्रीः कैरवषण्डसंपत् तस्या यो हासो विकासः स एव केलिः क्रीडा तदवसरात् समग्रामेव निशामधिकदीप्तिः सन् जागरि-

त्वा द्योतित्वा । अतश्चोत्प्रेक्ष्यते—शिशयिषुरिव सुषुप्सुर्यथा । यः किल नवया कान्तया सह सितकेलिप्रसङ्गाद्वृद्धाभिलाषो निशां जागर्ति स प्रभाते नायिकान्तराङ्के करौ प्रसार्य पाण्डुग्लानमात्मानं निदिद्रासुर्मुञ्चति । रुचिर्दीप्तिरभिलाषश्च ॥ २२ ॥

**सरभसपरिरम्भारम्भसंरम्भभाजो**
**यदधिनिशमपास्तं वल्लभेनाङ्गनायाः ।**
**वसनमपि निशान्ते नेष्यते तत्प्रदातुं**
**रथचरणविशालश्रोणिलोलेक्षणेन ॥ २३ ॥**

यत् कान्तेन प्रियाया निशायां दुगूलमपहृतं तदपि क्षपाक्षयेऽपि दातुं नेष्यते, यतश्चक्रविपुलकटितटलुम्पटनेत्रेण । कीदृश्या वध्वाः सरभसं यः परिरम्भस्तस्य य आरम्भ उपक्रमस्तत्र संरम्भं ग्रहमाकुलत्वं वा भजते या तस्याः सरभसपरिरम्भारम्भसंरम्भभाजः । "भजो ण्विः" । आलिङ्गनपूर्वं हि उत्थीयते । निशायामधिनिशम् । वस्यते इति वसनम् ॥ २३ ॥

**सपदि कुमुदिनीभिर्मीलितं हा क्षपापि**
**क्षयमगमदपेतास्तारकास्ताः समस्ताः ।**
**इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दु-**
**र्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ २४ ॥**

साम्प्रतं शशी तनु नष्टकान्ति च सकलं वपुर्वहति बिभर्ति । उत्प्रेक्ष्यते—प्रियभार्यत्वादित्थं चिन्तयन् शुचा दुःखेनेव । तामेव चिन्तामाह—कष्टमिदानीमेव कुमुदिनीभिर्मीलितं संकुचितं विच्छायीभूतम् । निशापि नाशमाप, सर्वाश्च तारका भ्रष्टाः, तस्य ह्येता नायिकाः । यदुच्यते "कुमुदिनीप्रियो निशानाथस्तारापति"रिति । यस्यापि गृहिण्यो नश्यन्ति सोऽवश्यमेव शोकेन कृशो विच्छायश्च भवति ॥ २४ ॥

**व्रजति विषयमक्ष्णामंशुमाली न यावत्**
**तिमिरमखिलमस्तं तावदेवारुणेन ।**

परपरिभवि तेजस्तन्वतामाशु कर्तुं
विभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २५ ॥

यावदेव रविर्नेत्रगोचरं न याति तावदेवारुणेन सारथिना समस्तं ध्वान्तं क्षिप्तम् । युक्तं चैतत् । यतो ये रिपूच्छित्तये प्रभावं विस्तारयन्ति तेषां पुरोयाय्यपि शत्रून्मूलनं विधातुं शक्नोति । भगवांस्तिमिररिपूच्छित्तये तेजस्तनोति, अरुणोऽपि पुरःसरः । अंशून्मलतेऽभीक्ष्णमित्यंशुमाली । यद्वा अंशुमाला यस्य सन्ति "व्रीह्यादित्वादिनिः" । परिभवतीति "जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्चे"ति इनिः । अग्रे सरतीत्यग्रेसरः "पुरोऽग्रतोऽग्रेषु सर्तेः" ॥ २५ ॥

विगततिमिरपङ्कं पश्यति व्योम यावद्
धुवति विरहखिन्नः पक्षती यावदेव ।
रथचरणसमाह्वस्तावदौत्सुक्यनुन्ना
सरिदपरतटान्तादागता चक्रवाकी ॥ २६ ॥

रथचरणसमाह्वश्चक्रवाको यावन्नष्टध्वान्तकर्दमं खं वीक्षते यावच्च वियोगोद्वेगात्पक्षमूले चालयति तावदेवापरसैकतादुत्कण्ठाप्रेरिता चक्रवाकी प्राप्ता तेन सह प्राप्ता, दिने हि तयोः समागमः ॥ २६ ॥

मुदितयुवमनस्कास्तुल्यमेव प्रदोषे
रुचिमदधुरुभय्यः कल्पिता भूषिताश्च ।
परिमलरुचिराभिर्न्यक्कृतास्तु प्रभाते
युवतिभिरुपभोगान्नीरुचः पुष्पमालाः ॥ २७ ॥

प्रदोषे रात्रिमुखे उभय्यः स्रजो नार्यश्च तुल्यं सममेव रुचिमदधुः कान्तिं बभ्रुः । तथाहि-उभय्योऽपि मुदितयुवमनस्काः प्रीणिततरुणचित्ताः, कल्पिताः सुरताय चिन्तिता उम्भिताश्च, भूषिताः कुङ्कुमादिनालंकृताः, अतः प्रदोषे तासां साम्यमभूत् । प्रत्यूषे तु तरुणीभिः कुसुमस्रजो न्यक्कृताः पराजितास्त्यक्ताश्च, यतस्ताभिः परिमलेनोपभोगेन संमर्देन रुचिराभिर्मनोहराभिः । उपभुक्ता हि नारी रम्यतरा भवति, ताः पुनरुपभोगसंमर्दान्नीरुचो म्लानाः ।

उभाववयवौ यासां ता उभय्यः "उभादुदात्तो नित्य"मिति तयस्यायच् । सत्यपि बहुत्वे प्रातिपदिकार्थस्य राश्यपेक्षं ह्यवयवत्वं विद्यते एव । क्षेपः पराभवश्च न्यक्कारः ॥ २७ ॥

**विलुलितकमलौघः कीर्णवल्लीवितानः**
**प्रतिदिशमवधूताशेषशाखिप्रसूनः ।**
**क्वचिदयमनवस्थः स्थास्नुतामेति वायु-**
**र्मधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २८ ॥**

अयं समीरणः क्वचिदनवस्थो न क्वचित् स्थायी सर्वत्रैवास्थिरोऽपि वेश्मान्तरेषु निशान्ताभ्यन्तरेषु स्थास्नुतां भजते स्थिरत्वमेति, सर्वतो निवृत्य तत्रैव भ्रमतीत्यर्थः । कीदृशेषु मधुकुसुमानां पानपुष्पाणां यो विमर्द उपभोगः परिमलस्तेनोद्गन्धिषूत्कटेषु । ततो विशेषणसमासः । कीदृशो वायुः उपमृदितसरसिजषण्डः, विक्षिप्तलताजालकः, सर्वस्यां च दिशि कम्पितनिखिलपादपकुसुमः, अतश्च सर्वकुसुमसुरभिर्भूत्वा परिमलसुरभिषु वासवेश्मसु चिरं कामिनां चाटुकारोऽभूदिति वाक्यार्थः । तिष्ठति तच्छीलः स्थास्नुः "ग्लाजिस्थश्च ग्स्नुः" ॥ २८ ॥

**नखपदवलिनाभीसंधिभागेषु लक्ष्यः**
**क्षतिषु च दशनानामङ्गनायाः सशेषः ।**
**अपि रहसि कृतानां वाग्विहीनोऽपि जातः**
**सुरतविलसितानां वर्णको वर्णकोऽसौ ॥ २९ ॥**

अयं वर्णकश्चन्दनं निर्जनेऽपि कृतानां निधुवनलीलानां वर्णको जातः कथकः संपन्नः । महान् रतिरणः कामिभिरकारीति समालम्भनेनाख्यायीत्यर्थः । कदाचिदसौ सजिह्वो भवेत् तत्किं चित्रमित्याह—वाग्विहीनोऽपि । तर्हि कथमाख्यदित्याह—नखपदेषु त्रिवलौ नाभौ संधिभागेषु च यतो लक्ष्यो न नष्टः, तथा दन्तव्रणेषु किंचिद्ध्रियमानः, अन्यत्र तु स्तनादावुत्पुंसित एव । अतश्च तेषु प्रदेशेषु सख्यस्तं दृष्ट्वा बुध्यन्ते—महानतिरतिव्यापारोऽभूद्येन करजक्षतादावेव

समालम्भनं शिष्टमन्यत्र नेति, वर्णको वर्णको जातः । अपिशब्दो विस्मयपूर्वके विरोधे । यत् किलैकान्ते क्रियते तस्य कथं वक्ता भवेत् तत्रापि वाग्विकलः । सन्धिभागाः पर्वस्थानानि ॥ २६ ॥

प्रकटमलिनलक्ष्मा मृष्टपत्राङ्गुलीकै-
रधिगतरतिशोभैः प्रत्युषः प्रोषितश्रीः ।
उपहसित इवासौ चन्द्रमाः कामिनीनां
परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥ ३० ॥

अयं शशी तरुणीकपोलफलकैकदेशैरुषस्युपहसित इव विडम्बित इव । यतोऽसौ निस्तेजस्त्वाल्लक्ष्यमलिनाङ्कः, तैश्चोत्पुंसितमलरूपपत्रलतैः । तथा संनिवृत्तलक्ष्मीकः, तैस्तु प्राप्तोपभोगकान्तिभिरित्युपहासो युक्तः । कथं ज्ञायते उपहसित इवेत्याह—परिणता जरढा ये शरकाण्डाः शरास्तद्वत् तैरिव आपाण्डुभिर्गौरैः । पाण्डुत्वमत्र हासरूपम् । उषसि प्रत्युष इत्यव्ययीभावः । प्रोषितेति "वसतिक्षुधोरिट्" । पत्राङ्गुलिः पत्रलता ॥ ३० ॥

अथ कुलकम्—

सकलमपि निकामं कामलोलान्यनारी-
रतरभसविमर्दे भिन्नवत्यङ्गरागम् ।
इदमतिमहदेवाश्चर्यमाश्चर्यधाम्न-
स्तव खलु मुखरागो यन्न भेदं प्रयातः ॥ ३१ ॥

प्रकटतरमिमं मा द्राक्षुरन्या रमण्यः
स्फुटमिति सविशङ्कं कान्तया तुल्यवर्णः ।
चरणतलसरोजाक्रान्तसंक्रान्तयासौ
वपुषि नखविलेखो लाक्षया रञ्जितस्ते ॥ ३२ ॥

तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद् दुगूलं द्धानः।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ३३ ॥

नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
वद परिमलगन्धः केन शक्यो वरीतुम् ॥ ३४ ॥

इति कृतवचनायाः कश्चिदभ्येति बिभ्यद्
गलितनयनवारेर्याति पादावनामम्।
करुणमपि समर्थं मानिनां मानभेदे
रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥ ३५ ॥

कस्याश्चिन्मानिन्याः कश्चित् कामी पादावनामं चरणावनतिं याति प्राप्नोति पादयोः पततीत्यर्थः। यतो बिभ्यत् त्रस्यन्। कीदृश्यास्तस्या इति भये कारणमाह–इतीत्थं कृतवचनाया विहितवाच्यतायाः। कथमित्याह–सकलमित्यादि। निकाममत्यर्थं कामलोला सुरतगृध्नुर्यान्यनारी प्रतियुवतिस्तस्या यो रतिरभस औत्सुक्यं तेन यो विमर्दः संपेषस्तस्मिन्नशेषमप्यङ्गरागं कुङ्कुमादिकं भिन्नवत्युत्पुंसितवति सति यत्तवाद्भुतनिधानस्य मुखरागो वक्त्रप्रसादो भेदं विनाशं न गतो वैलक्ष्यं न जातं महदेतदाश्चर्यमद्भुतम्। यदा हि सुरतमर्देन सर्व एवाङ्गरागो नाश्यते तदा मुखरागस्यापि नाशो न्याय्यः, मुखस्याप्यङ्गत्वात्, यत्तु न नष्टस्तदाश्चर्यमतस्त्वमाश्चर्यधाम। स हि तत्सपत्नीं निशि रमयित्वा प्रातस्तत्सकाशं हृष्ट आगतोऽत एवंविधा वाच्यता। भिनत्ति स्म भिन्नवानिति विमर्दः कर्ता। केचित्तु अन्यनारी अङ्गरागं भिन्नवतीत्याचक्षते। अङ्गं रज्यतेऽनेनेत्यङ्गरागः कुङ्कुमादिकः॥

किंच तवायं नखविलेखः करजक्षतं तया प्रियया स्फुटं निश्चितमित्यतो हेतोर्लाक्षया रञ्जितः । कुत इत्याह–इमं नखविलेखमतिस्फुटमन्यनार्यो मा द्राक्षुः द्रक्ष्यन्तीति । माङाशङ्कायाम् । कथं रञ्जितः सविशङ्कं साशङ्कम् । सा ह्येवमाशङ्कते यद्यहमेनं न पिदधे तद्व्यसनिनीं मां सपत्न्यो बुध्येरन्, अनुरागसूचकानि हि क्षतानि, स्त्रीणां तु तत्सौभाग्यं यत्तास्वङ्गे प्रियक्षतानि नतु विपर्ययः । अन्ये त्वाहुः–अतिप्रकटं क्षतं ग्राम्यत्वं सूचयेदित्येषात्राशङ्का । अथ कथमसौ लाक्षारागेण न लक्ष्यते इत्याह–तुल्यवर्ण इति । कीदृश्या लाक्षया पादपद्मताडनलग्नया । सा हि रतिकलहकुपिता सुरतविशेषवशाद्वा सालक्तकेन पादेन तदाचक्राम । द्राक्षुरिति "सृजिदृशोर्झल्यमकिती"ति वृद्धिः । विलेख इति भावे घञ् । रञ्जित इति रञ्जेर्ण्यन्तात्कर्मणि क्तः । रक्षित इति क्वचित्पाठः । रक्षितः पिहितः ॥

किंच यत् त्वमेवमभिहितवान् यत् त्वं मम प्रियेष्टेति तत्सत्यम् । कस्मादित्याह–यद्रमणीनिवसितमम्बरं त्वं वसानोऽस्मद्गृहमागाः संप्राप्तः । अथ यदि प्रियासेवितं दुगूलं प्रावृत्य त्वत्समीपमागतस्तत्किमित्येतावता त्वं प्रियेत्याह–यस्माद्रागिणां मण्डनश्रीः सुवेशता प्रियजनदर्शनेन सफलत्वं प्राप्नोति, तदेव ह्याकल्पस्य सफलत्वं यत्प्रियजनः पश्यति । यदि चाहं रुचिता न स्यां तत्किमिति नवं वास आच्छाद्य मम निवासमागतोऽसि, तस्मान्निश्चितं तवाहं प्रियेत्युल्लुण्ठना । आगा इति "इणो गा लुङि" । सिपो रुत्वम् ॥

किंच सरसकरजक्षतं वपुः सत्यं वाससा पिधत्से, करेण च दशनदष्टमोष्ठं सत्यं पिदधासि, एतत्पुनः सरसपरिमलं सौगन्ध्यं केन गोपयितुं शक्यं यतः सर्वस्यां दिशि प्रसारि, तथा प्रतिनारीव्यतिकरसूचकम् । परिमलेन पुष्पाद्युपभोगेन गन्धः परिमलगन्धः । वरीतुमिति "वृतो वे"ति दीर्घः ॥

इति प्रियं प्रतिभिद्य सा रुरोद, अतः स बिभ्यत्पादयोः पपात । ननु यदि सन्धित्सुस्तत्प्रकटमेव कथं न प्रार्थयते किं रोदनेनेत्याह–करुणमपीत्यादि । विग्रहेषु कलहेषु सत्सु योषितां रुदितं रोदनमस्त्रं वशीकरणमुदितमुक्तम्, इत्यतोऽसावरुदत् । कीदृग्रुदितं करुणं दीनमपि मानिनां रुषितानां मानभेदे वैरनिरासे स्तब्धतात्यागे समर्थं शक्तम् । अपिर्विरोधे । यः किल करुणः सदयो बुद्धादिकः स कथं भेदे घाते समर्थो भवेत् । अन्ये तु द्वौ पूर्वपक्षौ द्वे च समर्थकवचसी व्याचक्षते । अथ किमिति स पादावनतिं यातः सा वा रुरो-

देत्याह—मानिनामपि करुणं दैन्यमेव यस्मान्मानभेदे मानिनीनां रोषनिरासे समर्थमतः स पादयोरपतत् । तथा विग्रहेषु योषितां यस्माद्रुदितमस्त्रमुदितमतः सारोदीदिति । अपिर्भिन्नक्रमः, उन्नतानामपीति भावः । रुदितमिति भावे, उदितमिति वदतेः कर्मणि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

(इति पञ्चभिः कुलकम्)

**मदमदनविकासस्पष्टधाष्ट्योंदयानां**
**रतिकलहविकीर्णैर्भूषणैरश्चितेषु ।**
**विदधति न गृहेषूत्फुल्लपुष्पोपकारं**
**विफलविनययत्नाः कामिनीनां वयस्याः ॥ ३६ ॥**

सख्यो वासवेश्मसु विकचकुसुमप्रकरं न कुर्वन्ति, यतः कामिनीनां सुरतसमरविक्षिप्तैराभरणैरश्चितेषु भूषितेषु । कीदृशीनां स्त्रीणां मदमदनयोर्यो विकासः प्रसर उल्वणत्वं तेन स्पष्टः प्रकटो धाष्ट्योंदयो वैयात्याविर्भावो यासाम् । अत एव भूषणच्छेदः । कीदृश्यो वयस्याः, विफलो निरर्थको विनये आचारे विचये वा पुष्पोच्चये यत्नो यासां ता विफलविनययत्नाः। प्रभातपुष्पप्रकरो हि निशान्तेष्वाचारः स च तासां निरर्थको भूषणैरेव तत्कार्यस्य कृतत्वात् । विनय आचारो विशेषाधानमिति केचित् । मदमदनविकासो धृष्टत्वे कारणं, तद्भूषणक्षेपे सोऽपि पुष्पोपकाराभावे विनययत्नवैफल्ये च । एवमन्यत्र हेतुहेतुमद्भावो योज्यः । उपकार प्रकरः, वयसा तुल्या वयस्या "नौवयोधर्मे"ति यत् ॥ ३६ ॥

**करजदशनचिह्नं नैशमङ्गेऽन्यनारी-**
**जनितमिति सरोषामीर्ष्यया शङ्कमानाम् ।**
**स्मरसि न खलु दत्तं मत्तयैतत् त्वयैव**
**स्त्रियमनुनयतीत्थं व्रीडमानां विलासी ॥ ३७ ॥**

कश्चित् कामी इत्थमनेन प्रकारेण नारीमनुनयति प्रत्याययति यतः सरोषाम् । कुतः कुपितामित्याह—यत ईर्ष्यया मत्सरेणेत्येवं शङ्कमानां संभावय-

न्तीम् । किमित्याह—एतद् देहस्य नखदन्तपदं सपत्नीदत्तमिति । कदाचित्तत्त्वमेतत् स्यादित्याह—नैशमिति । तस्यामेव निशायां भवम् । कथमनुनयतीत्याह—चित्रं न स्मरसि एतत्क्षतं नैशं भवत्यैव क्षीवया कृतमिति अत एव तां लज्जमानाम् । खलुर्विस्मये । साधु विलसतीति विलासी "वौ कसलसे"ति घिनुन् । अनेन प्रकारेणेत्थं "इदमस्थमुः, एतेतौ रथोः" ॥ ३७ ॥

कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ
परिशिथिलितगात्रे गन्तुमापृच्छमाने ।
विगलितनवमुक्तास्थूलवाष्पाम्बुबिन्दु
स्तनयुगमबलायास्तत्क्षणं रोदितीव ॥ ३८ ॥

प्रिये यातुमापृच्छमाने ज्योत्कुर्वति सति वध्वास्तत्क्षणं सपदि कुचयुग्मं रोदितीव । यतस्तत् विगलितनवमुक्तास्थूलवाष्पाम्बुबिन्दु, विगलिता भ्रष्टा नवाः प्रत्यग्राः स्वच्छा या मुक्ता मुक्ताफलानि ता एव स्थूला वाष्पाम्बुबिन्दवोऽश्रुजलकणा यस्य । कीदृशे कान्ते आलिङ्ग्य परिशिथिलितगात्रे मुक्तवपुषि । आश्लेषपूर्वं ह्यामन्त्रणम् । कथमालिङ्ग्य कृतो गुरुतराणां हाराणां छेदो यत्र, अत एव स्तनयुगं तथाविधम् । आपृच्छमाने इति "आङि पृच्छेरुपसंख्यान"मित्यात्मनेपदम् ॥ ३८ ॥

बहु जगद पुरस्तात्तस्य मत्ता किलाहं
चकर च किल चाटु प्रौढयोषिद्वदस्य ।
विदितमिति सखीभ्यो रात्रिवृत्तं विचिन्त्य
व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥ ३९ ॥

कयाचिन्मुग्धवध्वा नवोढया क्षीवत्वापगमे निशाव्यापारमित्येवं विचिन्त्याहनि व्रीडितं ह्रीतम् । यद्यसौ क्षीवाभूत्तत्कथं तत् स्मरतीत्याह—वयस्याभ्यः सकाशादवगतम् । तमेव चिन्ताप्रकारमाह—तस्य कान्तस्याग्रतोऽहं किल क्षीवा बहु जगद रराट, तथास्य प्रगल्भवनितेव चाटु प्रियं चकर । किलागमे, सख्यो हि मामाहुः—त्वयाद्य निशि मत्तया रटितं चाटु चाकारीति । इतिशब्दश्चिन्तया सम्बध्यते । चकर—जगदेति "परोक्षे लिट" । उत्तमविषये हि चित्तव्याक्षेपात्

परोक्षता संभवतीत्युक्तमेव। "णलुत्तमो वे" ति णित्त्वविकल्पः। प्रौढशब्दे "प्रादूहोढोढ्येषैष्येष्वि"ति वृद्धिः। सखीभ्य इत्यपादाने पञ्चमी। बुद्धिकृत एवमादावपायः॥ ३९॥

अरुणजलजराजीमुग्धहस्ताग्रपादा
बहलमधुपमालाकज्जलेन्दीवराक्षी।
अनुपतति विरावैः पत्रिणां व्याहरन्ती
रजनिमचिरजाता पूर्वसंध्या सुतेव॥ ४०॥

एषा पूर्वसंध्या रजनिमनुपतत्यनुयाति रात्र्या सह क्षीयते इत्यर्थः। कीदृशी अरुणा लोहिता जलजराज्यः पद्मावलय एव मुग्धे मनोज्ञे हस्ताग्रे पादौ च यस्याः। तथा बहला दीर्घदीर्घा या मधुपमालालिपङ्क्तिः सैव कज्जलं येषां तानीन्दीवराण्येवाक्षीणि यस्याः। तथा वयसां रुतैर्व्याहरन्ती संभाषमाणेव। तथाचिरजाता तदैवोदिता अत एवाचिरजाता सुतेव। बाला किल रक्तकरचरणा अञ्जनरञ्जितनेत्रा च क्व गतासि गृहाण मामिति व्याहरन्ती जननीमनुयाति। अनुपततीति अनुशब्द उपसर्गः पश्चादर्थः सहार्थो वा कर्मप्रवचनीयः। अचिरं जाता याचिरजाता "कालः परिमाणिने"ति समासः। सुताशब्दे "वयसि प्रथमे" इति ङीप् न भवति। नह्येष श्रुत्या प्रथमवयोवाची अपित्वचिरशब्दसंनिधानात्॥ ४०॥

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु सान्नाय्यमग्निः॥ ४१॥

अयं हुताशनः सांनाय्यं हविरुपलीढे भक्षयति। कीदृशोऽग्निरशीर्णज्योतिरनाहतार्चिः समृद्धार्चिः। कीदृशं हविरग्न्याहितानामाहिताग्नीनां प्रतिशरणं शालायां शालायामध्वर्युवर्यैर्वेदविद्रूपैः साधु विधिवद्धुतं प्रास्तम्। किं कृत्वेति साधुत्वमाह–सामिधेनीर्धाय्या अधीत्योच्चार्य तथा विधिना वेदोक्तविधानेन विहित

१ 'बहुल' ग. पाठः।

उच्चारितो विरिब्ध उदात्तादिस्वरो यैस्तैर्विधिविहितविरिब्धैः । अत एव विहितसाश्रितपापपूरत्तयं हविः । एष चात्र पार्वणो होमविधिरुपन्यस्तः पूर्वं पौर्णमास्या वर्णितत्वात् । आहित उत्पादितोऽग्निर्यैस्ते अग्न्याहिताः "वाहिताग्न्यादिषु" । विरिब्धः स्वरे निपातितः । समिधामाधानमन्त्रः सामिधेनी "समिधामाधाने षेण्यण्" षित्वात् ङीष् "यस्येति च, हलस्तद्धितस्य" । अधीत्येति षत्वतुकोरसिद्ध "इति सवर्णदीर्घः । वरे साधुर्वर्य्यः । उपलीढे इति लिहः कर्तरि लकारः । सांनाय्यमिति निपातितम् ॥ ४१ ॥

**प्रकृतजपविधीनामास्यमुद्रश्मिदन्तं**
**मुहुरपिहितमोष्ठ्यैरत्तरैर्लक्ष्यमन्यैः ।**
**अनुकृतिमनुवेलं घट्टितोद्धट्टितस्य**
**व्रजति नियमभाजां मुग्धमुक्तापुटस्य ॥ ४२ ॥**

नियमभाजां संध्यावन्दिनामास्यं मनोज्ञशुक्तिकवाटस्यानुकारं सादृश्यं याति । यतस्तेषां जपे प्रस्तुतत्वात् तत् ओष्ठ्यैर्वर्णैरुपूपध्मानीयैरपिहितं स्थगितम्, पुनश्चान्यैर्दन्त्यादिभिर्लक्ष्यं विवृतम्, अत एवोद्रश्मय उच्चकिरणा दन्ता यस्य तदुद्रश्मिदन्तमुदंशुदशनम् । कीदृशस्य मुक्तापुटस्य अनुवेलं मुहुर्मुहुर्घट्टितस्य पुनश्चोद्धट्टितस्य विकसितस्य । जपो मनोमन्त्रः । अस्यतेऽनेनान्नपानादिकमित्यास्यम् । अनुवेलमिति वीप्सा । मुक्तानां पुटो मुक्तापुटः शुक्तिकवाटः ॥ ४२ ॥

**नवकनकपिशङ्गं वासराणां विधातुः**
**ककुभि कुलिशपाणेर्भाति भासां वितानम् ।**
**जनितभुवनदाहारम्भमम्भांसि दग्ध्वा**
**चलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ ४३ ॥**

एतद् दिनपतेः संबन्धि कार्तस्वरभासुरं रुचिनिकुरुम्बमैन्द्र्यां दिशि राजते । उत्प्रेक्ष्यते–महोदधेर्जलानि भस्मीकृत्य त्रिलोकीं दिधक्षु वडवाग्नितेज उपरिष्टात्प्रवृत्तमिव । और्वाग्निः कोपजोऽब्धिशायी जलेन्धनोऽग्निरौर्वानलो वडवावक्त्राकारः ॥ ४३ ॥

वितताधृथुवरत्रातुल्यरूपैर्मयूखैः
कलश इव गरीयान् दिग्भिराकृष्यमाणः ।
कृतकलकलविङ्गालापकोलाहलाभि-
र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥ ४४ ॥

एष रविर्दिग्भिरब्धिजलमध्यात् कनककुम्भ इवोत्तार्यते उत्क्षिप्यते इति समस्तमेव वाक्यमूहारूपम् । तस्याश्च समुद्राद्भगवत उदयो निमित्तम् । कीदृशोऽर्को मयूखैराकृष्यमाणः । कीदृशैर्विततःः प्रसारिताः पृथवो दीर्घा या वरत्रा रज्जवस्ताभिस्तुल्यं रूपं येषां तैः रज्जुनिभैरित्यर्थः । कीदृशीभिर्दिग्भिः, कृतः कलो मधुरः कलविङ्कालापश्चटकध्वनिरेव कोलाहलः कलकलो याभिः । यदा किल वारस्त्रीणां कूपादौ कनककलशं पतति तदा ताः कलकलं कुर्वत्यो रज्जुभिस्तमाकर्षयन्ति ॥ ४४ ॥

पयसि सलिलराशेर्नक्तमन्तर्निमग्नः
स्फुटमनिशमतापि ज्वालया वाडवाग्नेः ।
यदयमिदमिदानीमङ्गमुद्यन् दधाति
ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ ४५ ॥

रात्रावब्धिजलमध्ये मग्नो रविर्नूनमौर्वानलार्चिषात्यर्थमतापि तापितः। कुतो निश्चयोऽयमित्याह—यदयमधुना रविरुद्गच्छन् दीप्तखदिरदारुविस्फुलिङ्गसदृशं शरीरमुद्वहति । यद्यसौ नौर्वाग्निसन्तप्तः स्यात् कुतो लौहित्यस्यागमः । अतितप्तं ह्ययःपिण्डादि लोहितं भवति । अतापीति तापयतेः कर्मणि लकारः ॥ ४५ ॥

अतुहिनरुचिनासौ केवलं नोदयाद्रिः
क्षणमुपरिगतेन क्ष्माभृतः सर्व एव ।
नवकरनिकरेण स्पृष्टबन्धूकसून-
स्तबकरचितमेते शेखरं बिभ्रतीव ॥ ४६ ॥

---

१ 'स्प' ग. पाठः ।

न केवलं भगवतारूढेनायमुदयाचलो रक्तबन्धुजीवगुच्छोम्भितमवतंसकमिव वहति यावत् समग्रा एव भूधराः । सर्वेषामेव तदंशुसम्बन्धादिति भावः । लोकस्तु वक्ति—उदयशिखरिशेखरभूतो भगवान् भास्कर इति । कीदृशेन रविणा नवस्तरुणो लोहितः करनिकरो रश्मिपुञ्जो यस्य तेन नवकरनिकरेण । क्षणं, यावद्रागं न मुञ्चन्ति रश्मय इत्यर्थः । अतुहिनरुचिनेति करणे तृतीया । बिभ्रतीति बहुवचनम् । उदयाद्रिसम्बन्धे तु वचनपरिणामः ॥ ४६ ॥

**उदयशिखरिशृङ्गप्राङ्गणेष्वेष रिङ्गन्**
**सकमलमुखहासं वीक्षितः पद्मिनीभिः ।**
**विततमृदुकराग्रः शब्दयन्त्या वयोभिः**
**परिपतति दिवोऽङ्कं लीलया बालसूर्यः ॥ ४७ ॥**

अयं बालसूर्यः प्रौढरविर्लीलया दिवोऽङ्कं परिपतति वियत उत्सङ्गमारोहति । कीदृशः उदयशिखरिशृङ्गेषु उदयाद्रिशिखरेष्वेव प्राङ्गणेष्वजिरेषु रिङ्गन् भ्रमन्, तथा कमलिनीभिः पद्मिनीभिरालोकितः । कथं कमलान्येव मुखानि तेषां हासो विकासः सह तेन वर्तते यत् । तथा विततानि प्रसृतानि मृदून्यतीक्ष्णानि कराग्राणि रश्मिकोटयो यस्य स विततमृदुकराग्रः । कीदृश्या दिवः, वयोभिः पिपतिषद्भिः (?) शब्दयन्त्याः कृतशब्दायाः । योऽपि बालः सोऽङ्गने स्खलन् सहासं नारीभिरीक्षितः प्रसारितकोमलकराग्र आह्वयन्त्या मातुरुत्सङ्गं हेलयाधिरोहति । रिङ्गन्निति "रिगि गत्यर्थः" ॥ ४७ ॥

**क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः**
**प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् ।**
**भुवनतलमशेषं प्रत्यवीक्षिष्यमाणः**
**क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ ४८ ॥**

असौ सप्तसप्तिः सप्ताश्व उदयाद्रिस्थलविष्टरादुत्थित उद्स्थात्, गगनं पतित इत्यर्थः । कीदृशः क्षणं तत्रोपविष्टो विलम्बितः, तथोर्वीपृष्ठनिहितकिरणः । किमर्थमुत्थितः समग्रं जगतीपृष्ठं प्रत्यवेक्षिष्यमाणो लक्षिष्यमाणो रक्षि[1]ष्यन् प्रतिजागरितुम् । किं कृत्वा लोकमवेक्ष्य दृष्ट्वा । कीदृशं प्रणतिपरं प्रह्वम्,

१ 'लक्षि' ग. पाठः ।

तथा प्रीतं भगवदुदयात् प्रीतम्, अह्नाय द्रागुपवेशानन्तरमित्यर्थः । योऽपि राजा स पादपीठनिहितचरणः क्षणं सिंहासने उपविश्य प्रीतिप्रणतस्य लोकस्य दर्शनं दत्त्वा ततो भुवं गवेषयितुमुत्तिष्ठति । प्रत्यवेक्षिष्यमाण इति क्रियायां क्रियार्थायां "लृट् शेषे चे"ति लृट् ॥ ४८ ॥

परिणतमदिराभं भास्करेणांशुबाणै-
स्तिमिरकरिघटायाः सर्वदिक्षु क्षतायाः ।
रुधिरमिव वहन्त्यो भान्ति बालातपेन
च्छुरितमुभयरोधोवारितं वारि नद्यः ॥ ४९ ॥

अमूः सरितो वारि वहन्त्यो राजन्ते । कीदृशमुभाभ्यां रोधोभ्यां वारितमुभयरोधोवारितं तटद्वयनिषिद्धम्, तथा बालातपेन रञ्जितम्, अत एव सुजातहालानिभम् । अतश्चोत्प्रेक्ष्यते–रुधिरमिव । किमीयमित्यसृज आगममाह–रविणा रश्मिशरैर्दशस्वाशासु विदारितायास्तिमिरकरिघटायाः संबन्धि । उभयरोधोवारितमिति किम्? सर्वदिक्षु क्षतत्वात् तमोगजताया अतिभरेण रुधिरस्य सर्वसंप्लवो मा भूत् । वहतिर्धारणार्थः सकर्मको यथा वहति भारं चैत्र इति ॥ ४९ ॥

दधति परिपतन्त्यो जालवातायनेभ्य-
स्तरुणतपनभासो मन्दिराभ्यन्तरेषु ।
प्रणयिषु वनितानां प्रातरिच्छत्सु गन्तुं
कुपितमदनमुक्तोत्तप्तनाराचलीलाम् ॥ ५० ॥

एता बालरविरुचो जालप्रधानेभ्यो वातायनेभ्यो वेश्ममध्यं प्रविशन्त्यः सत्यः प्रगे यियासुषु[1] प्रियेषु क्रुद्धस्मरक्षिप्ताग्निसन्तप्तसायकवैदग्धीं बिभ्रति । कुपितेन कामेन नायकानां गमननिषेधार्थं नाराचा एते क्षिप्ता इति ज्ञायते इत्यर्थः । सर्वायसः शरो नाराचः । वनिताग्रहणं विस्पष्टार्थम् ॥ ५० ॥

---

१ 'सिषु' क. ख. पाठः ।

अधिरजनि वधूभिः पीतमैरेयरिक्तं
कनकचषकमेतत् प्रातरालोहितेन ।
उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्त-
र्मधुन इव तथैवापूर्णमद्यापि भाति ॥ ५१ ॥

एतत् चामीकरपानभाजनं प्रभाते राजते । अधिरजनि रात्रौ पीतमैरेयमत एव रिक्तमास्वादितेन कापिशायनेन शून्यमित्यर्थः । तथा उदयत अहिमरोचिषस्तीक्ष्णांशोरालोहितेन रक्तेन ज्योतिषा तेजसान्तर्मध्ये आक्रान्तमधिष्ठितम् । अतश्चोत्प्रेक्ष्यते–अद्यापि प्रातस्तथैव निशायामिव मधुनः आपूर्णं मैरेयेण भरितम् । उदयदिति "ई गतौ" वित्यस्य भौवादिकस्य शतरि रूपम् । केचिद्वा "अय गतौ" विति स्वरितेतं पठन्ति । मधुन इति "क्तस्य च वर्तमाने" इति षष्ठी ॥ ५१ ॥

सितरुचि शयनीये नक्तमेकान्तमुक्तं
दिनकरकरसङ्गाव्यञ्जकौसुम्भकान्ति ।
निजमिति रतबन्धोर्जानतीमुत्तरीयं
परिहसति सखी स्त्रीमाददानां दिनादौ ॥ ५२ ॥

कांचिद्वधूं वयस्या परिहसति । यतो रतबन्धोः सुरतगुरोर्वासोऽहरादौ गृह्णानाम् । कुतो, निजमिति जानतीमस्मदीयमेतादित्यवगच्छन्तीम् । कीदृगुत्तरीयं सितरुचि धवलच्छवि, तथा रात्रौ शय्यायां रिरंसया एकान्तेन निश्चयेन एकान्ते वा एकदेशे मुक्तमुत्सृष्टम् । ननु यदि तत्सितरुचि तदस्थान एव तस्या भ्रान्तिर्यतो महेला रक्तधारिण्य इत्याह–शिशुरविकिरणव्यतिकरेणाव्यङ्गा परिपूर्णा कौसुम्भी कुसुम्भकेसरसम्बन्धिनी कौसुम्भस्येव वा वस्त्रस्य कान्तिश्छविर्यस्य तत् दिनकरकरसङ्गाव्यङ्गकौसुम्भकान्ति । अतश्च सारूप्यात्संशयो युक्तः । रतबन्धोरिति पञ्चमी । क्रीडापूर्वको हासः परिहासः । स्त्रीमिति "वाम्शसोः" ॥ ५२ ॥

प्लुतमिव शिशिरांशोरंशुभिर्यन्निशासु

स्फटिकमयमराजद् राजताद्रिस्थलाभम् ।

अरुणितमकठोरैर्वेश्म कश्मीरजाम्भः-

स्नपितमिव तदेतद्भानुभिर्भाति भानोः ॥ ५३ ॥

तदेतत् स्फटिकवेश्माधुना कश्मीरजाम्भःस्नपितं कुङ्कुमजलक्षालितमिव राजते । किं तदित्याह–यच्छशिकिरणैः क्षपासु प्लुतं क्षालितमिव सत् रूप्यनगकटकनिभमलक्ष्यत दृष्टम् । यदि तर्हि तत् स्फाटिकं तत्कथं लोहितमैक्षीत्याह–अकठोरैरप्रौढैरपि करैर्यतोऽरुणितं रक्तीकृतम् । बाहुल्येन कश्मीरेषु जायते इति कश्मीरजं कुङ्कुमम् । रजतस्य विकारो राजतम् ॥ ५३ ॥

सरसनखपदान्तर्दृष्टकेशप्रमोकं

प्रणयिनि विदधाने योषितामुल्लसन्त्यः ।

विदधति दशनानां सीत्कृताविष्कृताना-

मभिनवरविभासः पद्मरागानुकारम् ॥ ५४ ॥

योषितां ये दन्तास्तेषां तरुणतपनरुचय उल्लसन्त्यः स्फुरन्त्यः पद्मरागानुकारमरुणमणिसादृश्यं विदधति कुर्वन्ति, पद्मरागरूपान् दशनान् संपादयन्तीत्यर्थः । उल्लसन्त्यः श्लिष्यन्त्यः स्फुरन्त्यो वा दशनेष्वेव । कीदृशानां दशनानामिति रुक्संपर्के कारणमाह–सीत्कृतेनाविष्कृतानां प्रकटितानाम् । कदेति सीत्कृतकारणमप्याह–सरसमभिनवं यन्नखपदं करजक्षतं तस्यान्तर्मध्ये दृष्टस्य लग्नस्य केशस्य वालस्य प्रमोकं मोक्षं प्रेयसि कुर्वाणे, अतश्च पीडावशात् सीत्कृतं कणनम्। दृष्टं लग्नमिति देशीपदम् । प्रमोचनं प्रमोकः । भावे घञ् । "चोः कुः" ॥ ५४ ॥

अविरतदयिताङ्गासङ्गसंचारितेन

च्छुरितमभिनवासृक्कान्तिना कुङ्कुमेन ।

कनकनिकषलेखाकोमलं कामिनीनां

भवति वपुरवाप्तच्छायमेवातपेऽपि ॥ ५५ ॥

सीमन्तिनीनां गात्रमातपेऽप्यवाप्तच्छायं भवति, कान्तिमत् संपद्यते इत्यर्थः। अपिर्विरोधे। नहि यत्रातपस्तत्र च्छाया भवति परस्परपरिहारेण तयोरवस्थानात्। अविरोधस्तु छायाशब्दस्य शोभार्थत्वात्। कीदृग्वपुः कुङ्कुमेन च्छुरितम्। कुतस्त्येनेत्याह–अविरतं दयितेन सह योऽङ्गसङ्गस्तेन संचारितेन लगितेन, अभिनवासृक्कान्तिना तत्क्षणस्रुतास्रलोहितेन। कीदृग्वपुः कनकस्य निकषे परीक्षोपले या रेखा राजिस्तस्याः कोमलं सदृशं, तद्वद्वा कोमलं मनोज्ञमिति त्वन्ये। सुवर्णगौरमित्यर्थः। निकष्यतेऽस्मिन्निति निकषः। घः॥ ५५॥

सरसिजवनकान्तं बिभ्रदभ्रान्तवृत्तिः<br>
करनयनसहस्रं हेतुमालोकशक्तेः।<br>
अखिलमतिमहिम्ना लोकमाक्रान्तवन्तं<br>
हरिरिव हरिदश्वः साधु वृत्रं हिनस्ति॥ ५६॥

हरिदश्वो नीलसप्तिः सूर्यः साधु सम्यक् वृत्रं ध्वान्तं हिनस्ति क्षपयति। क इव हरिरिव, यथा हरिरिन्द्रो वृत्रं वृत्रासुरमतृणेद् एवं रविस्तमस्तृणेढि इत्यर्थः। इदानीं श्लेषः। कीदृशो हरिदश्वः कराः किरणा एव नयनानि तेषां सहस्रं बिभ्रदुद्वहन्। कीदृशं सरसिजवनस्य पद्मषण्डस्य कान्तमभिमतं विकासोत्पादकत्वात्। तथालोकशक्तेर्दर्शनसमर्थ्यस्य हेतुं कारणम्, भगवति खलूद्गते सर्वं किंचिदालोक्यते। भगवान् कीदृशः, अभ्रान्ते नभोभागे वृत्तिरवस्थानं यस्यासावभ्रान्तवृत्तिः। कीदृशं वृत्रम् अतिमहिम्ना पाटवातिशयेन समग्रं भुवनमाक्रान्तवन्तं व्यश्नुवानम्। वृत्रासुरोऽपि माहात्म्येन रोधसी व्याप्यास्थात्। हरिः कीदृशः अभ्रान्ता भ्रान्तिरहिता संवादिनी वृत्तिर्व्यापारो यस्य, तथा नयनसहस्रं दधत्। कीदृशं सरसिजवनवत् कान्तं, तथालोकशक्तेर्हेतुम्। नेत्रसद्भावेन हि दृश्यते। अभ्राणि विद्यन्ते यस्य तदभ्रमाकाशम्। वृत्रं तमोऽसुरश्च। अन्यत्र हि "वृत्रामित्रपुत्रमन्त्रेभ्य" इत्यविशेषाभिधानात् तमस्यप्ययं पुंलिङ्ग एवेति, आक्रान्तवन्तमिति प्रयोगः। ये तु तत्र स्थितावित्याहुस्तेषामाक्रान्तवदिति भाव्यम्॥ ५६॥

अवतमसभिदायै भास्वताभ्युद्गतेन<br>
प्रसभमुडुगणोऽयं दर्शनीयोऽप्यपास्तः।

निरसितुमरिमिच्छोर्ये तदीयाश्रयेण
श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥ ५७ ॥

भगवता तिमिरविदारणार्थमुदितेन रम्यं भचक्रमपि बलान्नाशितम्। यस्माद्विपक्षं जिघांसोस्तेऽपि घात्यवर्गे ये रिपुसमाश्रयप्राप्तसमृद्धयस्तानप्यसौ हिनस्तीत्यर्थः । उडुभिश्च संतमसवशाद् दीप्तिरधिगता । अवतमस इति "अवसमन्धेभ्यस्तमस" इत्यच् ॥ ५७ ॥

प्रतिफलति करौघे सम्मुखावस्थितायां
रजतकटकभित्तौ सान्द्रचन्द्रांशुगौर्याम् ।
बहिरभिहतमद्रेः संहतं कन्दरान्त-
र्गतमपि तिमिरौघं घर्मभानुर्भिनत्ति ॥ ५८ ॥

उष्णांशुर्बहिर्विनाश्यापि गिरिदरीविवरस्थितमपि तिमिरनिकरं क्षपयति । कदा अद्रेरेव संमुखावस्थिता या शशिकरनिकरधवला रजतकटकभित्तिः सुवर्णसारकुड्यं तत्र यः करौघः किरणपुञ्जस्तस्मिन् प्रतिफलति कन्दरामध्यप्रतिबिम्बिते सति । कीदृशं तिमिरौघं बहिर्बाह्यदेशे सर्वत्राभिहतं नष्टम् । नन्वयमेवार्थः पूर्वं निबद्धो 'दर्पणनिर्मलास्वि'ति (४ । ६७) तत्कस्माद्भूयोऽपि कृतः । का क्षतिरुच्यताम् । आत्मीयं हि वस्तु भङ्ग्यन्तरेणासकृदुच्यते, तद्भवतां का हानिः, अन्यकविवस्तुचौर्ये हि दोषः ॥ ५८ ॥

बहिरपि विलसन्त्यः काममानिन्यिरे यद्
दिवसकररुचोऽन्तं ध्वान्तमन्तर्गृहेभ्यः ।
नियतविषयवृत्तेरप्यनल्पप्रताप-
क्षतसकलविपक्षस्तेजसः स स्वभावः ॥ ५९ ॥

गृहेभ्यो बाह्येऽपि प्रसरन्त्यो रविभासो यत् तेष्वभ्यन्तरे ध्वान्तं तमोऽन्तं क्षयमानिन्यिरेऽलम्भयन् स तेजसः स्वभावो, धाम्नः सा प्रकृतिः। कीदृशस्यैकदेशावस्थितस्यापि । भूयिष्ठप्रतापविनाशिताशेषसपत्न एकदेशस्थोऽपि पार्थिवः

प्रतापेन पृथिवीं वशीकुरुते, अतो रविरुचोऽन्यत्रापि स्थिता अन्यदपि प्रकटीचक्रुः । प्रकृष्टस्तापः प्रतापस्तेजोमयश्च शब्दः । आनिन्यिरे इति कर्तरि लकारः । द्वित्वं "एरनेकाच" इति यणादेशः । अन्तर्गृहेभ्य इति द्वे पदे । गृहेभ्य इति बहिःशब्दयोगे पञ्चमी "अपपरिबहिरञ्चवः पञ्चम्या" इति ज्ञापकात् । केषामन्तरिति चेद् गृहाणामेवान्तरित्याधारप्रधानमव्ययम् । काममत्यर्थम् ॥ ५९ ॥

चिरमतिरसलौल्याद्बन्धनं लम्भितानां
पुनरयमुदयाय प्राप्य धाम स्वमेव ।
दलितदलकवाटः षट्पदानां सरोजे
सरभस इव गुप्तिस्फोटमर्कः करोति ॥ ६० ॥

सरोजे पद्मे या अलीनां गुप्तिर्बन्धनं तस्याः स्फोटं भङ्गमयमर्कः करोति पद्मकोशात् तान्मोचयतीत्यर्थः । तस्मिन् उदितेऽब्जानां विकासात् । कीदृशानां षट्पदानाम् अतिशयेन रसे मधुनि यल्लौल्यं रुचिस्तेन चिरं बन्धनं प्रापितानाम् । रसासक्त्या हि बन्धनं ते न चेतयन्ति । किं कृत्वा करोति भूयो निजं तेज आसाद्य । किमर्थं पुनरुदयाय उदेतुम् । कीदृशोऽर्कः, दलितानि विकसितानि दलानि पत्राण्येव कवाटानि द्वाराणि पिधानानि येन स दलितदलकवाटः । अतश्च सरभस इव सप्रहर्षो यथा । यः किल राजानं दृष्ट्वा पुनरुदयाय स्वं धाम तेजो गृहं वा प्राप्नोति स तत्प्राप्यैव सरभसत्वात् कवाटदलनं कृत्वा मद्यपिपासालालसया नगरपतिबद्धानां शौण्डानां बन्धनस्फोटं करोति ॥ ६० ॥

युगपदयुगसप्तिस्तुल्यसंख्यैर्मयूखै-
र्दशदलशतभेदं कौतुकेनाशु कृत्वा ।
श्रियमलिकुलगीतैर्लालितां पङ्कजान्त-
र्भवनमधिशयानामादरात् पश्यतीव ॥ ६१ ॥

एष सप्ताश्वो दशदलशतभेदं सहस्रपत्रविकासमाशु कृत्वा श्रियं पश्यति लक्ष्मीमीक्षते, पद्मस्य शोभामवलोकयतीत्यर्थः । केन भेदं कृत्वा मयूखैरुस्रैः, कथं युगपदेकवारं, तथाशु शीघ्रम् । ननु यस्य पत्राणां सहस्रं तस्य कथमेककालं मङ्क्षु भेदः शक्यते इत्याह—तुल्यसंख्यैः सहस्रगणनैः । एवं च सर्वेषामेवैकैकं

पत्रं भागादेतीति साधूक्तं युगपद् आश्विति । कीदृशीं श्रियं पङ्कजमेवान्तर्भवनमन्तःपुरमधिशयानामन्तर्वसन्तीम्, तथालिकुलगीतैर्लालितां विनोदिताम् । दर्शने तु ऊहमाह–आदराद्बहुमानात् यत् कौतुकं कुतूहलं तेनेव पश्यति । यस्य किल बलिनोऽन्तःपुरस्थायां कन्यायां दिदृक्षा भवति स बहून्यपि द्वाराणि आशु अशनैर्भित्त्वा तामादरात् पश्यति, सापि गीतवाद्यलालिता भवति । समस्तमेव वाक्यमुत्प्रेक्षारूपं व्याख्येयम् । एषोऽर्को युगपत्करसहस्रेण सहस्रपत्रमाशु भित्त्वा आदरात् कौतुकेन श्रियं पश्यतीवेत्यर्थः । कथमन्यथा त्वरा स्यादिति भावः । दशशतानि दलानि यस्य तद् दशशतदलं पुण्डरीकम् । पाठान्तरे तु दशदलानां शतानि दलानि यस्य तद् दशदलशतं तदेव । केचित्तु किल दशदलशतान्येव दशदलशतं ब्रुवते दशशतानि दलशतानीति कृत्वा । एवं च समासो दुर्लभः स्यात् । दिक्संख्ये हि संज्ञायां समस्येते । पङ्कजस्यान्तर्भवनं पङ्कजान्तर्भवनमिति समासव्याख्यायामन्तर्भवनं शुद्धान्तम्, अन्तर्मध्ये भवनमिति कृत्वा "सुप्सुपे"ति समासः । "अधिशीङ्स्थासा"मिति कर्मसंज्ञा । ये तु पङ्कजस्यान्तरुदरं तदेव भवनमिति ब्रुवते तदयुक्तम्, यतः पङ्कजस्यान्तारित्यनेन सह षष्ठी न समस्यते–इति समासनिषेधः स्यात् । अथापि पङ्कजान्तरिति "सप्तमी शौण्डै"रिति समासः क्रियेत, एवमपि पङ्कजान्तरे भवनमिति विरुध्यते, यतोऽन्तःशब्दोऽधिकरणप्रधानम् । य एवार्थः पङ्कजमध्ये स एवार्थः पङ्कजान्तरिति । अत्र च प्रथमोऽर्थो विवक्षित इत्याद्यमेव वाक्यं साधु ॥ ६१ ॥

अदयमिव कराग्रैरेष निष्पीड्य सद्यः
शशधरमहरादौ रागवानुष्णरश्मिः ।
अवकिरति नितान्तं कान्तिनिर्यासमब्द-
स्रुतनवजलपाण्डुं पुण्डरीकोदरेषु ॥ ६२ ॥

इह भगवत्युदिते शशी विच्छायो भवति, श्वेतपद्माश्चातिसिता इति । तत्र कविरूहते–एष घर्मांशुर्दिनमुखे किरणाग्रैः शशिनमिव पीडयित्वा पुण्डरीकोदरेषु कान्तिनिर्यासं द्युतिनिःष्यन्दमवकिरति क्षिपति । कथमन्यथा तेषां सश्रीकत्वं, तस्य च विच्छायत्वमिति भावः । कीदृशो भगवान् रागवानतिलोहितः । योऽपि रागवान् रोषवान् सोऽनेनैषां श्रीर्हृतेति ततस्तामाक्षिप्य तेषु कुरुते । कीदृशं

कान्तिनिर्यासम्, अब्दस्नुतनवजलपाण्डुं मेघवृष्टनूतनजलधवलं मेघवृष्टनवपाण्डुजलमिवेत्यर्थः । योऽपि रागवान् रजकः सोऽन्यत्किंचिद्बलेनात्यर्थं कराग्रैः पीडयित्वा तत्तोयनिर्यासं सद्यो वस्त्रान्तरे कुरुते । रागो लौहित्यं रोषश्च । रागाश्च हरिताल-मञ्जिष्ठ-कुसुम्भादयः । अह्न आदिः अहरादिः । "रोऽसुपि" ॥ ६२ ॥

प्रविकसति चिराय द्योतिताशेषलोके
दशकरशतमूर्तावह्निणीव द्वितीये ।
सितरुचिवपुषासौ लक्ष्यते संप्रति द्यौ-
र्विगलितकिरणेन न्यङ्गितैकेक्षणेव ॥ ६३ ॥

जनेनैषा द्यौरधुना नष्टकान्तिना शशिना न्यङ्गितैकेक्षणेव स्थगितैकनेत्रेव लक्ष्यते, काणेव प्रतिभातीत्यर्थः । कदा द्वितीयाह्नितुल्ये दर्शितसप्तद्वीपे भगवति रवौ बहुकालं प्रविकसति सति, स्फुटमुद्यतश्च रवेस्तेजस्वित्वादिन्दोश्च निस्तेजस्त्वात् काणेव दृश्यते । दशकराणां शतानि मूर्तिर्मूर्तौ वा यस्य स दशकरशतमूर्तिः सहस्रांशुः । न्यङ्गितं गर्हितम् ॥ ६३ ॥

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयति दिननाथो याति शीतांशुरस्तं
वंत[1] विधिललितानां ही विचित्रो विपाकः ॥ ६४ ॥

इदानीं कुमुदवनमपश्रि निर्लक्ष्मीकं निशापगमात्, पद्मवनं सश्रीकं दिनप्रवृत्तेः । तथा कौशिकः खिन्नो नष्टदृष्टित्वात्, चक्राह्वश्च हृष्टो वियोगक्षयात् । तथा रविरुदेति शशी चास्तमेति कालवशात् । अत्रैव विस्मयखेदवशादर्थान्तरन्यासमाह—वं[2]त विधिललितानां ही विचित्रो विपाक इति । चित्रं विधिललितानां दैवचेष्टितानां कष्टं कीदृग्विचित्रो नानारूपो विपाकः परिणामः कस्यचित्सुखमन्यस्य दुःखम् । वत खेदे । ही विस्मये । विचित्रत्वाच्च विस्मयः, परदुःखाच्च खेदः । हतविधीति पाठान्तरम् । पर्यायोऽलङ्कारोऽर्थान्तरन्यासश्च ॥ ६४ ॥

१ 'हु' क. ख. पाठः । २ 'ह' क. ख. पाठः ।

क्षणमतुहिनधाम्नि प्रोष्य भूयः पुरस्ता-
　दुपगतवति पाणिग्राहवद् दिग्वधूनाम् ।
द्रुततरमुपयातः स्रंसमानांशुकोऽसा-
　वुपपतिरिव नीचैः पश्चिमान्तेन चन्द्रः ॥ ६५ ॥

असौ शशी स्रंसमानांशुको भ्रश्यत्किरणः सन् पश्चिमान्तेन वारुणीदिग्भागेन द्रुततरं नीचैरधोऽपयातो गतः पतित इत्यर्थः । कदा चण्डांशौ क्षणं प्रोष्य पर्वा[1]न्तरं गत्वा पुरः पुरस्तात् पूर्वस्यां दिशि उपगतवति प्राप्ते । कीदृशे दिश एव वध्वस्तासां पाणिग्राहे इव पाणिग्राहवत्पतितुल्ये सति, तस्मिन्कान्ति प्राप्ते। क इव गत इत्याह–उपपतिर्जार इव । यदा किल कश्चिद्बहुजानिः प्रोष्य पुनः पुरस्तात् प्रधानद्वारेण याति तदा स्रस्ताम्बर उपपतिः पश्चिमान्तेन पश्चाद् द्वारेण नीचैस्तूर्णं द्रुततरं भयात्पलायते । प्रवसतेर्ल्यपि प्रोष्येति । पाणिं गृह्णातीति पाणिग्राहः पतिस्तस्मिन्निव पाणिग्राहवत् "तत्र तस्येवे"ति वतिः ॥ ६५ ॥

प्रलयमखिलतारालोकमह्नाय नीत्वा
　श्रियमनतिशयश्रीः सानुरागां दधानः ।
गगनसलिलराशिं रात्रिकल्पावसाने
　मधुरिपुरिव भास्वानेष एकोऽधिशेते ॥ ६६ ॥

एष भास्वान् वियदुदधिं निशाकल्पान्ते एक एवाधिशेतेऽध्यास्ते ।समस्ततारका एव लोकस्तमह्नायाश्वेव प्रलयं नीत्वा नाशं प्रापय्य । कीदृक् भास्वान् अनतिशयानश्वरी परार्ध्या श्रीर्लक्ष्मीः प्रभुत्वं यस्य सोऽनतिशयश्रीः । अतिशेते इत्यतिशयः, अविद्यमानोऽतिशय उत्कृष्टोऽन्यो यस्या इत्यनतिशया । तथा सानुरागां लोहिनीं श्रियं शोभां बिभ्रत् । उदये हि लोहितायन्ते ग्रहाः । क इवाधिशेते इत्याह–मधुरिपुरिवेति । यथा समग्रं जगत् क्षपयित्वा सर्वसमृद्धियुक्तो भगवान् पद्मासहितो विष्णुः कल्पावसाने समुद्रमध्यमध्यास्ते । तथा रविः खम् । उक्तं च–"संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् । बालः

[1] 'पारा' क. ख. ग. पाठः ।

स्वपिति यश्चैकस्तस्मै मायात्मने नमः" ॥ इति ॥ मालिनीवृत्तम् । उपमाश्लेषोऽलङ्कारः ॥ ६६ ॥

अन्यच्च किमवोचन्नित्याह—

**कृतसकलजगद्विबोधोऽविधूतान्धकारोदयः**
**क्षपितकुमुदतारकश्रीर्वियोगं नयन् कामिनः ।**
**गुरुतरगुणदर्शनादभ्युपेताल्पदोषः कृती**
**तव वरद करोतु सुप्रातमह्नामयं नायकः ॥ ६७ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये प्रभातवर्णनं नाम
एकादशः सर्गः ॥ ११ ॥

हे वरद ! अभिमतदायिन् ! अयमह्नां नायको दिननाथो भगवान् सूर्यस्तव सुप्रातं करोतु । शोभनं प्रातःकाले कर्म यत्र तत् सुप्रातं दिनं प्रकृतत्वाद्वा प्रयाणं करोतु । "सुप्रातसुश्वसुदिवे"त्यच् । ये तु प्रातःशब्दस्यैव करोतिना सम्बन्धमाचक्षते शोभनं प्रातःकालं करोत्विति तदयुक्तम्, तस्याधिकरणविशिष्टे कालविशेषे प्रवृत्तेः । कीदृशोऽहर्पतिः कृतः सकलस्य जगतो विबोधो निद्रातमोपहारो येन । तथा विधूतः क्षिप्तोऽन्धकारस्य ध्वान्तस्योदय आविर्भावो येन । तथा क्षपिता हृता कुमुदानां तारकाणां च श्रीः कान्तिर्येन । तथा दम्पतीन् विरहं प्रापयन् वियुञ्जानः । ननु चैवं सति विरहपीडाकारित्वं रवेरभिहितं भवेत्तदयुक्तमिदं विशेषणमित्याह—गुरुतरा गुणा जगद्विबोधादयस्तद्दर्शनादभ्युपेता अङ्गीकृता अल्पे दोषा येन सोऽभ्युपेताल्पदोषः । एतदुक्तं भवति—यदपि कुमुदताराश्रीहारकत्वं कामिवियोगकरणं च दोषस्तथापि सकलजगद्विबोधस्तिमिरक्षयश्च महागुणः । अल्पदोषागमनचिन्ता च न बहुगुणकरणविघ्नकारिणीति नीतिविदः । यतोऽसौ देवः कृती नीतिज्ञः । विचक्षणा हि नान्तरीयकं दोषलेशमूरीकृत्य गुणनिचयकारिणः । तारकशब्दोऽकारान्तोऽपि दृश्यते यथा तारकराज इति । निशानाम वृत्तम् ॥ स्वयमिह यदि नाञ्सोऽयं खयेयं निशा द्वे लगौ (?) । आशीरलङ्कारः । इति भद्रम् ॥ ६७ ॥

इति श्रीमहामहोपाध्यायवर्य-आनन्ददेवायनि-वल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां प्रभातवर्णनमेकादशः सर्गः ॥ ११ ॥

अथ

# शिशुपालवधकाव्ये

## द्वादशः सर्गः ।



इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ १ ॥

अथान्तरं नृपाणां गणो राजकं भगवन्तमच्युतं हरिं तोरणाद्बहिरुदैक्षत प्रत्यपालयत्, दर्शनाकाङ्क्षी बभूवेत्यर्थः । कदा इत्थमुक्तेन प्रकारेण यः प्रगः प्रभातं तस्मिन् । कीदृशानां नृपाणां रथाश्चाश्वाश्चेभाश्चेति रथाश्वेभम् । पूर्वनिपातलक्षणं व्यभिचारि । तत्र साधु निषीदन्ति ये तेषां रथाश्वेभनिषादिनां यानारूढानाम् । कीदृशमच्युतमिति उदीक्षणे कारणमाह—प्रस्थानकालक्षमः प्रयाणयोग्यो यो वेष आकल्पस्तस्य या कल्पना रचना तया कृतः क्षणक्षेपः[1] समयापहारो यस्य । वंशस्थं वृत्तम् । जतादि वंशस्थमनन्तरं जरौ । जतावादी यस्य तत् जतादि ॥ १ ॥

स्वक्षं सुपत्रं कनकोज्ज्वलद्युतिं
जवेन नागाञ्जितवन्तमुच्चकैः ।
आरुह्य तार्क्ष्यं नभसीव भूतले
ययावनुद्घातसुखेन सोऽध्वना ॥ २ ॥

स भगवानच्युतः सुपत्रं रथमारुह्य भूतलेऽवनिपृष्ठेऽध्वना ययौ पथा जगाम । भूतलग्रहणमौपम्यार्थम्, अध्वग्रहणं विशेषणयोगार्थम् । कीदृशेनाध्वना

---

१ 'कालक्षेपः' क. ख. ग. पाठः ।

अनुद्धातसुखेनाविद्यमान उद्धातः स्खलनं यत्र सोऽनुद्धातः, ततो विशेषणसमासः । कीदृशं सुपत्रं शोभना अक्षा अवयवविशेषा यस्य तत् स्वक्षम् । कनकेन सुवर्णभूषणेनोज्ज्वलद्युतिं मनोज्ञकान्तिम् । द्विविधो हि रथः सांपरायिको यात्रिकश्च । तत्र कनकरचितश्चित्तक्रीडानिमित्तः स यात्रिकः, इतरः सांग्रामिकः । किंच जवेन वेगेन नागान्गजान् जितवन्तं जि[१]ष्णुम्, उच्चकैरुन्नतम् । एवंविधं रथमारुह्य भूतले ययौ । किमिव केत्याह–तार्क्ष्यं नभसीवेति । यथा खे नभसि तार्क्ष्यं गरुडमारुह्यासौ यातीति रथस्य लाघवोक्तिः । कीदृशं तार्क्ष्यं शोभने अक्षिणी यस्य तं स्वक्षं, सुपत्रं रम्याङ्गरुहं कनकोज्ज्वलद्युतिं सौवर्णत्वात्पक्षाणां रंहसा च नागान् सर्पान् जिष्णुम् । उच्चकैः प्रांशुम् । शोभनानि पत्राणि वाहा यस्येत्यन्वर्थपरिकल्पनया सुपत्रशब्देनात्र प्रथमेऽर्थे रथ उच्यते, तद्विशेषणानि स्वक्षादीनि । उपमानपक्षे तु विशेषणपदमेतत् । दृश्यते चैकस्य विशेषणत्वं विशेष्यत्वं च । यथा—"मत्स्यप्रीत्यातिनिभृतैः कङ्कादिभिरुपासिताम् । करेणुरिव सन्तप्तस्तां बृहन्नलिनीं ययौ"विति । केचित्तु तार्क्ष्यं रथमित्याहुः ॥ २ ॥

हस्तस्थिताखण्डितचक्रशालिनं
द्विजेन्द्रकान्तः श्रितवक्षसं श्रिया ।
सत्यानुरक्तं नरकस्य जिष्णवो
गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥ ३ ॥

शार्ङ्गिणं हरिं नृपा अन्वयासिषुरनुजग्मुः । किं भयेन नेत्याह–गुणैर्विनयादिभिर्भगवद्गुणावर्जितास्ते यत इत्यर्थः । अथ च गुणैः साधारणैर्धर्मैरमुमन्वयासिषुरनुचक्रुरित्यर्थान्तरप्रतीतिः । एवं चानुकारो भवति यदि विभागोक्तविशेषणानामुभयतोऽपि योगो भवति, स चैवं भवति यदि विभक्तिवचनपरिणामो भवतीति नैयायिकोऽयं शब्दानामनुनयः[२] । तत्र देवं कीदृशम् हस्तस्थितेनाखण्डितेनापरिभूतेन चक्रेण सुदर्शनेन श्लाघितं, द्विजेन्द्रस्य गरुडस्य कान्तं प्रियं द्विजेन्द्रो वा कान्तो यस्य । श्रिया पद्मया श्रितवक्षसमधिष्ठितोरस्कम् । सत्या सत्यभामा तस्यामनुरक्तं रागिणम् । सन्ति पदेषु पदैकदेशलोपा वाक्येषु च

१ जवि' क. पाठः । २ 'न्वयः' क. पाठः ।

वाक्यैकदेशलोपाः । तेन सत्यभामेति सत्येत्युच्यते । तथा नरकस्य भौमासुरस्य जिष्णुं परिभाविनम् । राजानः कीदृशाः, हस्ते स्थितेनायत्तेनाखण्डितेन चक्रेण राष्ट्रेण शालिनः । यदि वा हस्तस्थितेनानूनेन चक्रेण रेखादिचिह्नेन शालिनः । द्विजेन्द्रकान्ताः ब्राह्मणप्रियाः सम्यक् प्रजापालनात् । श्रिया राजलक्ष्म्या श्रितवक्षसः सम्बद्धाः । सत्ये परमार्थेऽनुरक्ताः सक्ताः । नरकस्यावीच्यादेर्जिष्णवः धर्माचरणेन पराजेतारः । नरकस्येति शेषविवक्षायां षष्ठी, तेन "न लोकाव्ययनिष्ठाखलर्थतृना"मिति तन्निषेधो न भवति, स हि कृत्षष्ठ्या निषेधः ॥ ३ ॥

शुक्लैः सतारैर्मुकुलीकृतैस्थुलैः
कुमुद्वतीनां कुमुदाकरैरिव ।
व्युष्टं प्रयाणं च वियोगवेदना-
विदूननारीकमभूत् समं तदा ॥ ४ ॥

तदा व्युष्टं प्रभातं प्रयाणं च गमनं समं युगपद्बभूव, यदैवालोकीभूतं तदैव सेना चचालेत्यर्थः । अथ च समं सदृशमभूदित्यर्थान्तरम् । इदानीं विशेषणमुखेन साम्यमाह—कुमुद्वतीनां थुलैः सेनानां पटमण्डपै[1]रुपलक्षितम् । कैरिव कुमुदाकरैरिव कैरववृन्दैर्व्युष्टमुपलक्षितमेवं प्रयाणं थुलैरित्यर्थः । कीदृशैः शुक्लैर्धवलैः सतारैः सचन्द्रकैर्मुकुलीकृतैः संवेष्टितैः, कुमुदाकरैरपि शुक्लैस्तथा मुकुलीकृतैः सङ्कुचितैः । किं केवलैर्नेत्याह—सतारैस्तारकाभिः सह मुकुलीकृतैरित्यर्थः । एवं च साम्यम् । तथा वियोगवेदनया विरहव्यथया विदूनाः सन्तप्ता नार्यः कामिन्यो यत्र तद्वियोगवेदनाविदूननारीकमुभयमपि । थुलमिति देशीपदं दूष्यवाचकम् । देशीषु तु थुलशब्दं बाहुल्येन पठन्ति ॥ ४ ॥

उत्क्षिप्तगात्रः स्म विडम्बयन्नभः
समुत्पतिष्यन्तमगेन्द्रमुच्चकैः ।
आकुञ्चितप्रौहनिरूपितक्रमं
करेणुरारोहयते निषादिनम् ॥ ५ ॥

---

1 'कैः' क. ख. पाठः ।

करेणुः करी निषादिनं यन्तारमारोपयति स्म आरूरुहत् । निषादी आरोहति तमारोहन्तमनुकूलाचरणेनारोहयति इति प्रयोज्यप्रयोजकविवक्षायां हेतुमण्णिचि "णिचश्चे"त्यात्मनेपदम् । "णेरणौ यत्कर्म णौ चेत्स कर्ते"त्यस्य तु यत्र कर्मान्तरं न विद्यते स विषयः । यथा आरोहयते हस्ती स्वयमेवेति । तथा च तत्रोक्तं 'यत्सग्रहणमन्यकर्मकार्थमिति । इह तु निषादी कर्मान्तरं विद्यते । कीदृशः करेणुरुत्क्षिप्तगात्र ऊर्ध्वीकृतपूर्वकायः, उच्चकैरुन्नतः, अत एव नभः समुत्पतिष्यन्तं खमुत्पित्सुमगेन्द्रं महाद्रिं विडम्बयन्ननुकुर्वन् । कथमारोहयते आकुञ्चितेन नम्रीकृतेन प्रौहेण पश्चाज्जानुभागेन निरूपितः सूचितः क्रमः पदविन्यासो यत्र । नम्रीकृतोऽयं प्रह्वः, एतेन मामारोहेति य आरोढारं वक्तीवेत्यर्थः । यदि वा निषादिविशेषणमेतत् । आकुञ्चिते प्रौहे निरूपितः क्रमो येन तम् । प्रौहशब्दे "प्रादूह" इत्यादिना वृद्धिः ॥ ५ ॥

स्वैरं कृतास्फालनलालनान् पुरः
स्फुरत्तनून् दर्शितलाघवक्रियाः ।
वङ्कावलग्नैकसवल्गपाणय-
स्तुरङ्गमानारुरुहुस्तुरङ्गिणः ॥ ६ ॥

तुरङ्गिणोऽश्ववारास्तुरङ्गमान् आरुरुहुरधिरूढवन्तः । कीदृशान् पुरः पूर्वं स्वैरं शनैः कृतास्फालनेन कराघातेन लालना चोदना प्रीतिर्येषाम् अत एव स्फुरत्तनून् कम्प्रदेहान् । कीदृशास्तुरङ्गिणः, दर्शिता लघवक्रिया आरोहणादिना प्रावीण्यकर्म यैः । तथा वङ्के पर्याणपूर्वभागकाष्ठेऽवलग्नः स्थित एको वामः सवल्गो हस्तो वभ्रयुक्तः पाणिः करो येषां ते तथोक्ताः, वल्गाग्रहणपूर्वं हि वङ्कामवष्टभ्याश्वारोहणं क्रियते ॥ ६ ॥

अहाय यावन्न चकार भूयसे
निषेदिवानासनबन्धमध्वने ।
तीक्ष्णोत्थितास्तावदसह्यरंहसो
विश्रृङ्खलं श्रृङ्खलकाः प्रतस्थिरे ॥ ७ ॥

निषेदिवान्निषादी यन्ता यावद्भूयसेऽध्वने दीर्घं मार्गं गन्तुमह्नाय क्षिप्रमासनबन्धमवस्थानधैर्यं न व्यधत्त न चक्रे तावदेव शृङ्खलकाः करभा विशृङ्खलं निर्बन्धनं प्रतस्थिरेऽधावन्। कीदृशाः तीक्ष्णं वेगेनोत्थिताः। उपविष्टो ह्युष्ट्र आरुह्यते। तथासह्यरंहसो महावेगाः। निषीदतीति निषेदिवानारोहः। "भाषायां सदवसश्रुव"इति लिटः क्वसुः। एत्वाभ्यासलोपौ। "वस्वेकाजाद्घसा"मितीट्। शृङ्खलकशब्दे "शृङ्खलमस्य बन्धनं करभे"इति कन्॥ ७॥

गण्डोज्ज्वलामुज्ज्वलनाभिचक्रया
विराजमानां नवयोदरश्रिया।
कश्चित् सुखं प्राप्तुमनाः सुसारथी
रथीं युयोजाविधुरां वधूमिव॥ ८॥

कश्चित्सुसारथिः प्रवीणसूतो रथीं गन्त्रीं युयोज व्यरचयत्। यतः सुखमक्लेशेन प्राप्तुमना जिगमिषुः। पद्भ्यां हि विघटितेन यानेन दुःखं गम्यते। कीदृशीं रथीं गण्डेनादेशेणोज्ज्वलां, तथा उज्ज्वलनाभि मनोज्ञरन्ध्रं चक्रं शकटं यस्यां, तथा नवया तत्क्षणं रचितया उदरश्रिया मध्यप्रदेशशोभया विराजमानां भान्तीं, तथा अविनष्टा धूरङ्गविशेषो यस्यास्तामविधुरां सधुराम्। 'काश्मीरा वयं रथानभिज्ञा विशेषतस्तदवयवान्न विद्मः'। कामिव युयोजेत्याह—वधूमिव। यथा कश्चित् सुखेच्छुर्वधूं जनीं योजयति उद्वहति। कीदृशीं गण्डाभ्यां कपोलाभ्यामुज्ज्वलां हृद्यां, तथोज्ज्वलं नाभिचक्रं नाभिमण्डलं यस्याः। तथा नवयोदरश्रिया मध्यलक्ष्म्या राजन्तीम्, अविधुरामनुकूलामुभयमपि युयोजेति। सहार्थे इवशब्दः। रथशब्दः स्त्रीपुंसलिङ्गः। प्राप्तुमना इति "तुं काममनसोरपी"ति मलोपः॥ ८॥

उत्थातुमिच्छुर्विधृतः पुरो बला-
न्निधीयमाने भरभाजि यन्त्रके।
अर्द्धोद्धृतोद्गारविजर्जरस्वरः
स्वनाम निन्ये रवणः स्फुटार्थताम्॥ ९॥

रवण उष्ट्रः स्वनाम रवण इति संज्ञां स्फुटार्थतामभिधेयसद्भावेन व्यक्तार्थत्वं निन्येऽलम्भयत्। कीदृशः भरभाजि गरीयसि यन्त्रके आवपने निधीयमान आरोप्यमाणे सति उत्तिष्ठासुरत एव बलादग्रे विधृतोऽवष्टब्धः, अत एव चार्धोद्धृतेन किञ्चिदीरितेनोद्गारेण चर्वितचर्वणेन विजर्जरः खरः स्वरो यस्य, अतश्चात्यर्थं रवतीति रवण इति स्फुटार्थत्वम् । "चलनशब्दादकर्मकाद्युच्" । उद्गार इति "उन्न्योर्ग्रः" ॥ ९ ॥

नस्याग्रहीतोऽपि धुवन् विषाणयो-

र्युगं सशूत्कारविवर्तितत्रिकः ।

गोणीं जनेन स्म निधातुमुद्धृता-

मनुक्षणं नोक्षतरः प्रतीच्छति ॥ १० ॥

उक्षतरस्तनुवृषभो जनेन गोणीं निधातुमुद्धृतामुत्क्षिप्तामनुक्षणमसकृन्न प्रतीच्छति स्म नागृह्णात्, पुनः पुनश्चिक्षेपेत्यर्थः । कीदृशोऽसौ नस्यया नासारज्ज्वावष्टब्धोऽपि शृङ्गद्वयं धुवन् कम्पयन् । तथा सशूत्कारं नादपूर्वं विवर्तितो वलितस्त्रिकः पृष्ठकटीसन्धिर्येन । नासिकायां भवा नस्या रज्जुः "नस्नासिकाया" इति यदन्तः । धुवन्निति "धू विधूनने" । शूदित्यव्यक्तानुकरणम् । गोणीति "जानपदा"दिसूत्रेण ङीप् । तनुरुक्षा उक्षतरः "वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे"। तरुणो दान्त उक्षा तस्य तनुत्वं तृतीयवयःप्राप्तिः ॥ १० ॥

नानाविधाविष्कृतसामजस्वरः

सहस्रवर्त्मा चपलैर्दुरध्ययः ।

गान्धर्वभूयिष्ठतया समानतां

स सामवेदस्य दधौ बलोदधिः ॥ ११ ॥

स बलोदधिर्माधवस्य बलमेव सागरः सामवेदस्य साम्यमाप । कुतः गान्धर्वभूयिष्ठतया अश्वीयबाहुल्येन । कीदृग्बलाब्धिः, नानाविधा आविष्कृताः सामजैर्गजैः स्वरा बृंहितानि यत्र । सामवेदोऽपि गान्धर्वेण गेयेन भूयिष्ठः स हि गीयते । तथा सहस्रवर्त्मा बहुमार्गो, विस्तृतत्वात् । तथा चपलैः कातरैर्दु-

खेनाधिगन्तुं प्राप्तुमुपरि यातुं शक्यते इति दुरध्ययो दुर्गमः। इणः खल्। सामवेदोऽपि नानाविधा आविष्कृताः सामजाः सामसमुत्थाः स्वराः षड्जादयो यत्र सः। तथा चपलैरनभियुक्तैर्दुरध्ययः दुष्पठः। अधीङः खल्। सहस्रवर्त्मा सहस्रशाखः। सामजा हस्तिनः साम गायतो ब्रह्मणो जाता इति कृत्वा। सामानि वाक्यविश्लेषस्था गीतयस्तत्प्रधानो वेदः सामवेदः। गन्धर्वा अश्वास्तेषां समूहो गान्धर्वम्। तथा गन्धर्वेभ्य आगतं गान्धर्वं गीतम्। अतिशयेन बहु भूयिष्ठम्। "बहोर्लोपो भू च बहो, रिष्ठस्य यिट्च" ॥ ११ ॥

प्रत्यन्यनागं चलितस्त्वरावता
निरस्य कुण्ठं दधतान्यमङ्कुशम्।
मूर्धानमूर्ध्वायतदन्तमण्डलं
धुवन्नरोधि द्विरदो निषादिना ॥ १२ ॥

कश्चित् कुञ्जर आरोढ्रा अरोधि रुद्धो वशीकृतः। रोधे हेतुमाह–अन्यनागं प्रति प्रतिदन्तिसंमुखं चलितो धावन् अत एवाकुलेन यन्त्रा कुण्ठं भुग्नं सृणिं त्यक्त्वा अन्यं तीक्ष्णं बिभ्रतात एव मस्तकं कम्पयन्। कीदृशमूर्ध्वमुच्चमुखमायतं दीर्घं दन्तमण्डलं यस्य। करमूर्ध्वीकृत्य रोषवशाच्छिरश्चालयन्नरोधीत्यर्थः। अरोधीति कर्मणि ॥ १२ ॥

संमूर्छदुच्छृङ्खलशङ्खनिःस्वनः
स्वनः प्रयाते पटहस्य शार्ङ्गिणि।
सत्त्वानि निन्ये नितरां महान्त्यपि
व्यथां द्वयेषामपि मेदिनीभृताम् ॥ १३ ॥

भगवति चलिते पटहस्य ध्वनिर्दुन्दुभेः शब्द उभयेषामपि मेदिनीभृतां भूभृतां नृपाद्रिनाम्नां सत्त्वानि धैर्यसिंहादीनि व्यथां निन्ये पीडयामास। राजानश्चात्र विपक्षा बोद्धव्याः। तेषां व्यथा आस्कन्दाशङ्कया, सिंहादीनां तु जनोपद्रवात्। कदाचित्तान्यल्पानि स्युर्नेत्याह–नितरां महान्त्यपि। कीदृक् ध्वनिः संमूर्छन् प्रसरन् उच्छृङ्खलः सर्वव्यापी शङ्खध्वनिर्यत्र। "स्वनहसोर्वा। नौ गदनदपठस्वनः" द्वयेषामिति सुडागमश्चिन्त्यः ॥ १३ ॥

कालीयकक्षोदविलेपनश्रियं
दिशद् दिशामुल्लसदंशुमद्द्युति ।
खातं खुरैर्मुद्गभुजां विपप्रथे
गिरेरधः काञ्चनभूमिजं रजः ॥ १४ ॥

कनकोर्वीसमुत्थं रजो रेणुर्गिरेरधस्तात् प्रससार । यतोऽश्वशफैर्विदारितम्, अंशुमद्द्युति रविपिशङ्गम्, उल्लसत् स्फुरत् अत एव दिशां रक्तचन्दनचूर्णसमालम्भनशोभां कुर्वत् । कालीयकं जापकम् । मुद्गान् भुञ्जते इति मुद्गभुजोऽश्वाः, दान्ता इत्यन्ये ॥ १४ ॥

मन्द्रैर्गजानां रथमण्डलस्वनै-
र्निजुह्नुवे तादृशमेव बृंहितम् ।
तारैर्बभूवे परभागलाभतः
परिस्फुटैस्तेषु तुरङ्गहेषितैः ॥ १५ ॥

मन्द्रैर्मन्थरैः रथमण्डलस्वनैः स्यन्दनचक्रशीत्कारैर्गजगलगर्जितं निजुह्नुवेऽपलपितम् । यतस्तादृशं मन्द्रमेवातः सादृश्यादश्रवणम् । ये त्वश्वस्वनास्तैस्तेषु रथचक्रस्वनेषु मध्ये परिस्फुटैर्व्यक्तैर्बभूवे सम्पन्नम्, परमश्वहेषितानि श्रुतानीत्यर्थः । कथं परभागलाभतोऽतिशयप्राप्तेः । एतदपि कुतः, यतस्तारैरुल्वणैरुदात्तैः । अथ चोक्तिः—यः किल तारः खरः सुतीक्ष्णः स मण्डलेन समूहेन नाभिभूयते, प्रत्युत तत्र परभागं लभते, अन्ये तु जीयन्ते एव। निजुह्नुवे इति कर्मणि । बभूवे इति भावे ॥ १५ ॥

अन्वेतुकामोऽगणिताङ्कुशग्रह-
स्तिरोगतं साङ्कुशमुद्वहन् शिरः ।
स्थूलोच्चयेनागमदन्तिकागतां
गजोऽग्रयाताग्रकरः करेणुकाम् ॥ १६ ॥

कश्चिद्गजो हस्ती स्थूलोच्चयेन मध्यया गत्यायासीत्। यतोऽन्तिकाद्गतां निकटायातां करेणुकां वशामनुजिगमिषुरत एवागणितनिषादी, तथा तिरश्चीनं ससृणित्वान्मस्तकं दधत्, अग्रयाताग्रकरः प्रसारितपुष्करः। जातिरलङ्कारः। अङ्कुशं गृह्णातीत्यङ्कुशग्रहो हस्तिपकः। "शक्तिलाङ्गूलाङ्कुशे"त्यच्। अह्रस्वदीर्घा गतिः स्थूलोच्चयः। वशागमनवशाच्चमन्दगमनं, यन्तृताडनात्त्वदीर्घगतित्वम् ॥ १६ ॥

यान्तोऽस्पृशन्तश्चरणैरिवावनिं
जवात् प्रकीर्णैरभितः प्रकीर्णकैः।
अद्यापि सेनातुरगाः सविस्मयै-
रलूनपक्षा इव मेनिरे जनैः ॥ १७ ॥

चमूवाजिनो लोकैरधुनाप्यच्छिन्नाङ्गरुहा इव ज्ञाताः, पूर्वं हि ते सपक्षा आसन्। यदि ते च्छिन्नपक्षास्तत्कथं सपक्षा इत्याह—यतो रयाद्धावन्तोऽतश्च भुवं खुरैरस्पृशन्त इव, तथा जवगमनादभितः पार्श्वद्वये प्रकीर्णैर्विक्षिप्तैः प्रकीर्णकैश्चामरैरुपलक्षिताः, तैर्वा अलूनपक्षा ज्ञाताः। अतश्च पक्षनिभचामरसद्भावाल्लाघवगमनाच्च सपक्षत्वावबोधः। अत इव जनैः सविस्मयैः कौतुकिभिः। मेनिरे इति कर्मणि ॥ १७ ॥

ऋज्वीर्दधानैरवतत्य कन्धरा-
श्चलावचूलाकुलघर्घरारवैः।
भूमिर्महत्यप्यविलम्बितक्रमं
क्रमेलकैस्तत्क्षणमेव चिच्छिदे ॥ १८ ॥

क्रमेलकैरुष्ट्रैर्दवीयानपि पन्था मंक्ष्वेव द्रुतपदं चिच्छिदे लङ्घितः। कीदृशैः प्रसार्य ग्रीवा ऋज्वीः स्पष्टा वहद्भिः, तथा चलेनावचूलेन चिह्नचामरेणाकुलः सत्वरः खण्डो वा घर्घरश्चान्तरेव भ्रमन्नारवो ध्वनिर्येषां तैश्चलावचूलाकुलघर्घरारवैः। केचित्त्वाहुः चलावचूलैराकुला व्याप्ता या घर्घरा घण्टिकास्तासां रवैरुपलक्षिताः कन्धराः। यदि वा पृथक् पदे, चला अवचूलैश्चाकुला

घर्घरा घण्टिका यासां ताश्चलावचूलाकुलघर्घराः, रवैश्चोपलक्षिता इति स एवार्थः । चिच्छिदे इति कर्मणि ॥ १८ ॥

तूर्णं प्रवेत्रा कृतनादमुच्चकैः
प्रचोदितं वेसरयुक्तमध्वनि ।
आत्मीयनेमिक्षतसान्द्रमेदिनी-
रजश्चयाक्रान्तिभयादिवाद्रवत् ॥ १९ ॥

वेसरयुक्तं खरशकटीनाम यानमुच्यते, वेसरैरश्वतरैर्युक्तमिति कृत्वा, तन्मार्गे तूर्णमद्रवत् त्वरितमयात् । यतः प्रवेत्रा सूतेन चोदितम् अत एव कृतारवमुच्चकैरुन्नतम् । वेसरा ह्युच्चा भवन्ति । तूर्णगमने निमित्तान्तरारोपामुत्प्रेक्षामाह—आत्मीयनेमिभिः स्वचक्रधाराभिः क्षतं खातं यत् सान्द्रभूरेणुवृन्दं तेन या आक्रान्तिरध्यासनं ततो यद्भयं तत इव । पादधूलिं किल परिजिहीर्षवो मार्गे वेगेन यान्ति ॥ १९ ॥

व्यावृत्तवक्त्रैरखिलैश्चमूचरै-
र्व्रजद्भिरेव क्षणमीक्षिताननाः ।
वल्गद्गरीयःकुचकम्प्रकञ्चुकं
ययुस्तुरङ्गाधिरुहोऽवरोधिकाः ॥ २० ॥

अवरोधिका निशान्तनार्यो ययुर्जग्मुः । कीदृश्यः तुरङ्गेष्वधिरोहन्तीति तुरङ्गाधिरुहोऽश्वारूढा अश्वानारुह्यायन्नित्यर्थः । कथं ययुः । वल्गन्तो नृत्यन्तो ये गरीयांसः पीवराः स्तनास्तैस्तेषु वा कम्प्रं चञ्चलं कञ्चुकमुत्तरासङ्गो यत्र, अत एव गच्छद्भिरेव सैनिकैर्व्यावृत्त्य मुखानि कौतुकात् क्षणमीक्षितवक्त्राः । अवरोधोऽन्तःपुरम् ॥ २० ॥

पादैः पुरः कूवरिणां विदारिताः
प्रकाममाक्रान्ततलास्ततो गजैः ।
भग्नोन्नतानन्तरपूरितानता
बभुर्भुवः कृष्टमतीकृता इव ॥ २१ ॥

भुवो रेजुः । कीदृश्यः पुरः पूर्वं कूवरिणां रथानां पादैश्चक्रैरत्यर्थं विदारिताः पाटितास्ततो द्विपैरधिष्ठितपृष्ठा अत एव भग्नोन्नताः क्षतोच्चभागा अनन्तरं पूरितानता भरितरन्ध्रप्रदेशा गजाक्रान्तत्वात् साम्यमापादिताः । अतश्चोत्प्रेक्ष्यते—कृष्टमतीकृता इव पूर्वं कृष्टा विलिखिताः पश्चान्मतीकृताः समीकृताः । मतो दारवो दण्डविशेषस्तेन समीकृता भुवो मतीकृता उच्यन्ते । पूर्वकालत्वादत्र समासः ॥ २१ ॥

दुर्दान्तमुत्प्लुत्य निरस्तसादिनं
सहासहाकारमलोकयज्जनः ।
पर्याणतस्त्रस्नुमुरोविलम्बिन-
स्तुरङ्गमं प्रद्रुतमेकया दिशा ॥ २२ ॥

कंचिदश्वं जन ऐक्षत । कथं सहासो हाकारो हाहाशब्दो यत्र । कीदृशं दुर्दान्तं दुर्मदमशिक्षितम्, तथोरोविलम्बिनो वक्षसि लम्बमानात्पर्याणतः पल्ययनात् त्रस्तं भीतमत एवोत्प्लुत्योड्डीय निरस्तसादिनं क्षिप्ताश्ववारमत एव चैकया दिशा पलायितम्, अतश्च जनः सहासहाकारमीक्षामास । आरोहक्षेपाद्धासः, किं पीडितो भवेदेष इति हाकारः ॥ २२ ॥

भूभृद्भिरप्यस्खलिताः खलून्नतै-
रपह्नुवाना सरितः पृथूरपि ।
अन्वर्थसंज्ञैव परं त्रिमार्गगा
ययावसंख्यैः पथिभिश्चमूरसौ ॥ २३ ॥

असौ विष्णुचमूरसंख्यैः पथिभिर्ययौ बहुभिर्मार्गैर्जगामेति बाहुल्योक्तिः । कीदृशी उन्नतैस्तेजस्विभिरपि नृपैरस्खलितापराभूता । तथा महापगा अप्यपह्नुवाना स्थगयन्ती धूल्या जनभरात् तटलोठनेन कर्दमीभावाच्च, स्यादेतत् त्रिपथगाप्येवंविधा । तथा हि असावपि भूभृद्भिर्नगैरस्खलिता अनिषिद्धप्रसरा तथा महानदीरप्यपलपन्ती तत्सन्निधानात्तासामल्पत्वेनालक्ष्यत्वात् । तत्कोऽयं तस्या विशेष इत्याह—त्रिमार्गगा गङ्गा परं केवलमन्वर्थसंज्ञैवार्थानुगतनामैव त्रिभिर्मार्गै-

गच्छतीति कृत्वा, असौ त्वसंख्यमार्गगेति व्यतिरेकालङ्कारः । साम्यं पूर्वार्धेनोक्तं, विशेषस्तूत्तरार्धेन । खलुर्वाक्यालङ्कारे ॥ २३ ॥

त्रस्तौ समासन्नकरेणुशूत्कृता-
न्नियन्तरि व्याकुलमुक्तरज्जुके ।
क्षिप्तावरोधाङ्गनमुत्पथेन गां
विलङ्घ्य लक्ष्मीं करभौ बभञ्जतुः ॥ २४ ॥

उष्ट्रावमार्गेण भुवमाक्रम्य लक्ष्मीं गन्त्रीं बभञ्जतुरस्फोटयताम् । उष्ट्रयुग्मयोजितचक्रात्तादिकं लक्ष्मी । केचित्तु पर्यासनकाष्ठं पर्याणफलं लक्ष्मीत्याहुः । भङ्गस्य निमित्तमुत्पथगमनं तस्यापि कारणमाह—कीदृशौ करभौ सविधस्थद्विपबृंहिताद्भीतौ । अत एव सादिनि सत्वरशिथिलितरज्जुके । अतोऽपि च निरस्तनिशान्तनारीको भङ्गः ॥ २४ ॥

स्रस्ताङ्गसंधौ विगताक्षपाटवे
रुजा निकामं विकलीकृते रथे ।
आप्तेन तक्ष्णा भिषजेव तत्क्षणं
प्रचक्रमे लङ्घनपूर्वकः क्रमः ॥ २५ ॥

रथे स्यन्दने रुजा भङ्गेनात्यर्थं विकलीकृते सति आप्तेनायत्तेन तक्ष्णा स्थपतिना तस्मिन्नेव क्षणे क्रम उपायः परिपाटी प्रचक्रमे प्रारेभे । कीदृशः क्रमः लङ्घनमङ्गविशेषस्तत्पूर्वं प्रथमं यत्रासौ लङ्घनपूर्वकः, आदौ लङ्घनं युयोजेत्यर्थः । केचित्तु लङ्घनमाक्रमणमाहुः । आक्रम्य प्रववृते इत्यर्थः । कीदृशे रथे रुजाश्मादिभङ्गेन सुष्ठु विकलीकृते स्फोटितेऽत एव स्रस्ताङ्गसन्धौ विघाटतचक्रादिरचने, तथा नष्टाक्षचातुर्ये । केनेव प्रचक्रमे इत्याह—भिषजेवेति । यथा रथे शरीरे रोगेणात्यर्थं विकलीकृतेऽवसादितेऽत एव स्रस्ताङ्गसंधौ निःसहजान्वादिके नष्टेन्द्रियसामर्थ्ये चातुरे आप्तः प्रत्ययितो भिषग्वैद्यस्तत्क्षणं लङ्घनपूर्वकमुपवासपूर्वकं क्रमं चिकित्सामारभते । 'अजीर्णप्रभवा रोगा' इति ! प्रचक्रमे इति कर्मणि ॥ २५ ॥

धूर्भङ्गसंक्षोभविदारितोष्ट्रिका-
गलन्मधुप्लावितदूरवर्त्मनि ।
स्थाणौ निषङ्गिण्यनसि क्षणं पुरः
शुशोच लाभाय कृतक्रयो वणिक् ॥ २६ ॥

वणिग्वाणिजकः शुशोच दुःखायते स्म । कदा पुरोऽग्रवर्तिनि स्थाणौ अर्धच्छिन्नशुष्कवृक्षेऽधिकरणभूते अनसि शकटे निषङ्गिणि सम्बद्धे सति । अथ यद्यनः स्थाणौ लग्नं किमेतावता शोचतीत्याह—कीदृशेऽनसि, धुरः शकटस्य यो भङ्गः स्थाण्वभिघातात् स्फोटस्तेन यः संक्षोभः स्वस्थानाच्चलनं तेन विदारिताश्चूर्णीकृता या उष्ट्रिका मृण्मयमद्यभाण्डानि ताभ्यो गलत्स्रवद्यन्मधु मद्यं तेन प्लावितं भरितं दूरमत्यर्थं वर्त्म पन्था येन तस्मिन् । कीदृग्वणिक् लाभाय वृद्धये कृतः क्रयो येन स कृतक्रयः । तेन ह्येतदर्थं मध्वन्यतः क्रीतं [1]यदेतद्विक्रीय मम लाभो भविष्यतीति, याव[2]द्वीक्ष्यते मूलद्रव्यमेव विनष्टमतोऽवश्यं दुःखायते । मूलादतिरिक्तद्रव्यं लाभः । कृतव्यय इति पाठान्तरम् । व्ययो धनत्यागः ॥ २६ ॥

भेरीभिराकृष्टगुहामुखो मुहु-
र्ध्वजांशुकैस्तर्जितकन्दलीवनः ।
उत्तुङ्गमातङ्गजितालघूपलो
बलैः स पश्चात् क्रियते स्म भूधरः ॥ २७ ॥

असौ भूधरो रैवतकाचलः सैन्यैः पश्चात् क्रियते स्मातिचक्रमे उल्लङ्घितः, अथ च पश्चात्कृतोऽभिभूत इत्यर्थान्तरम् । कीदृशोऽसावित्यभिभवमाह—भेरीभिर्दुन्दुभिभिराकृष्टानि व्याप्तानि गुहामुखानि दरीविवराणि यस्य । ध्वजांशुकैश्चिह्नपटैस्तर्जितान्युच्चत्वाद्भर्त्सितानीव कन्दलीवनानि कन्दलीकाननानि यत्र । उत्तुङ्गैर्मातङ्गैर्जितास्तिरस्कृता अलघूपला गण्डशैला यत्र । भुवं धारयतीति भूधरः । पचादित्वादच् । "रोदेर्णिलुक् च । बहुलमन्यत्रापि संज्ञाच्छन्दसो"रिति णिलुक् ॥ २७ ॥

---

१ 'यद्ये' क. ख. पाठः । २ 'च्च वी' ग. पाठः ।

वन्येभदानानिलगन्धदुर्द्धराः
क्षणं तरूच्छेदविनोदितक्रुधः ।
व्यालद्विपा यन्तृभिरुन्मदिष्णवः
कथञ्चिदारादपथेन निन्यिरे ॥ २८ ॥

दुष्टद्विपा हस्तिपकैरुन्मार्गेणारात् निन्यिरे दूरं नीताः, यत उन्मदिष्णवो मत्ताः । मदे कारणमाह—वानेयकरिमदमिश्रो योऽनिलस्तस्य यो गन्धः सौरभं तेन दुर्द्धराः काननकरिमदवासितसमीरणसौरभदुर्निवाराः, प्रतिगजमदवासितं वातमाघ्राय कुप्यन्त इत्यर्थः । अत एव वृक्षानुन्मूल्य क्षणं शमितकोपाः । वने साधुर्वन्यः । निन्यिरे इति कर्मणि । भस्येरिच् । प्रथम"मिको यणची"ति यणादेशः प्राप्तः स क्त्वादियङा बाधितस्तमपि बाधित्वा "एरनेकाच"इति यणादेशः । एवमन्यत्र । आरादिति कर्मपदम् ॥ २८ ॥

निम्नानि दुःखादवतीर्य सादिभिः
सयत्नमाकृष्टकशाः शनैःशनैः ।
उत्तेरुरुत्तालखुरारवं द्रुताः
श्लथीकृतप्रग्रहमर्वतां व्रजाः ॥ २९ ॥

अर्वतामश्वानां व्रजाः संघास्ते उत्तेरुरुत्तीर्णाः । कीदृशा द्रुता वेगवन्तोऽत एव श्लथीकृतः शिथिलितः प्रग्रहो रश्मिर्यत्र उत्तरणे । आरोहे ह्यश्व[1]वारैर्वल्गा श्लथीक्रियते । तथा उत्ताल उद्भटः[2] सतालो खुरस्वः पादपातध्वनिर्यत्र । किं कृत्वा उत्तेरुः निम्नान्यधोभागान् कृच्छ्रेणावतीर्योल्लङ्घ्य । अत एव मन्दमन्दमश्वारोहैः सावधानैराकृष्टाः पश्चान्नीताः कशा आकर्षणरज्जवो येषाम् । श्लथीकरणे ह्यधः पातः स्यादित्याकर्षणम् । अर्वन्तोऽश्वाः । "अर्वणस्त्रसावनञः" । प्रग्रहः "प्रे रश्मौ चे"ति घञि विभाषिते पक्षे यथाप्राप्तं ग्रहवदच् ॥ २९ ॥

अध्यध्वमारूढवतैव केनचित्
प्रतीक्षमाणेन जनं मुहुर्धृतः ।

१ 'श्वलगा' ग. पाठः । २ 'उत्क्रान्त' ख. पाठः ।

दार्ढ्यं हि सद्यःफलदं यदग्रत-
श्चखाद शाखादयुवा वनावलीः ॥ ३० ॥

नूनं दार्ढ्यं चातुर्यं सद्य एव फलदमुपकारि । कुत इत्याह-यच्छाखादयुवा नवकरभोऽग्रतः पौरस्त्या वनावलीः काननराजीश्चखाद जघास । कीदृशोऽसा-वारूढवतारोहेण अध्यध्वमध्वन्येव सहायान् प्रतिपालयता क्षणं धृतो रोधितः । यदि च दार्ढ्यं सद्यःफलदं न स्यात् तत्कथमुपर्यारोहे सत्यपि क्षणं रोधमात्रेणै-वासौ तरुशाखा भक्षयेत्, तस्मान्निश्चितं दार्ढ्यं सद्यःफलदम् । हिशब्दो नूनमित्य-र्थे । अत्रानेकार्थत्वान्निपातानां प्रथमं चैतदेव योजनीयम् । अध्वन्यध्यध्वमिति सप्तम्यर्थेऽव्ययीभावः । उपसर्गादध्वन" इत्यच् । अस्य च प्रतीक्षमाणेनेति सम्बन्धः । आरोहति स्मेत्यारूढवान् निषेदिवान् यन्ताभिधीयते । एवशब्दो भिन्नक्रमः । अध्वन्येव जनं प्रतीक्षमाणेन धृत इत्यर्थः । शाखा अत्तीति शाखाद उष्ट्रः । "कर्मण्यण्" । स चासौ युवा । वनावलिशब्दे वनशब्देन लतादयो गृह्यन्ते तन्मयत्वाद्वनस्य ॥ ३० ॥

तैर्वैजयन्तीवनराजिराजिभि-
र्गिरिप्रतिच्छन्दमहामतङ्गजैः ।
बहूव्यः प्रसर्पज्जनतानदीशतै-
र्भुवो बलैरन्तरयांबभूविरे ॥ ३१ ॥

तैर्बलैर्यादवसैन्यैरनेका अरण्यभूमयोऽन्तरयांबभूविरे अन्तरिता उल्लङ्घिताः । अथ चान्तरिताः सदृशीकृता इत्यर्थान्तरम् । तथाह-कीदृशैर्बलैर्वैजयन्त्यः पता-का एव वनराजयः काननलेखास्ताभिर्मनोहरैः, तथा गिरिप्रतिच्छन्दा अद्रिनि-भा महामतङ्गजाः करीन्द्रा यत्र । प्रसर्पन्ति वहन्ति जनता एव नदीनां शतानि येषाम् । अन्तरयांबभूविरे इति कर्मणि लकारः । अत्र चानुप्रयोगस्य न कश्चि-दामन्तादधिकोऽर्थः केवलमाचार्यवचनादसौ प्रयुज्यते, तथा कषादिषु लोटो वा (?) तेन य एव पूर्वभागस्यार्थः स एवानुप्रयोगस्य । एवमन्यत्र ॥ ३१ ॥

तस्थे मुहूर्तं हरिणीविलोचनैः
सदृंशि दृष्ट्वा नयनानि योषिताम् ।

मत्वाथ सत्रासमनेकविभ्रम-

क्रियाविकाराणि मृगैः पलायत ॥ ३२ ॥

मृगैर्मुहूर्तं तस्थे आसितं सामर्थ्यान्नारीनिकटे । कुतः सुदृशां मृगीनेत्रै-स्तुल्यानि अक्षीण्यालोक्य । अतः स्वजातिभ्रान्त्या विश्वासः । अनन्तरं सचकितं तैः पलायत जवाज्जग्मे । कुतस्तानि नयनानि अनेकविभ्रमक्रियाविकाराणि मत्वा, अनेकविभ्रमक्रिया विलासविधयो विकाराश्च भ्रूभङ्गा येषां तानि तथोक्तानि, न चैतद्वनचराणां संभवतीति मनुष्यजातिभयाद् द्रुतम् । लकारो भावे ॥ ३२ ॥

शौरेः प्रतापोपनतैरितस्ततः

समागतैः प्रश्रयनम्रमूर्तिभिः ।

एकातपत्रा पृथिवीभृतां गणै-

रभूद् बहुच्छत्रतया पताकिनी ॥ ३३ ॥

सा हरिसेना राजकैः करणै[१]र्बहुच्छत्रतया हेतुभूतया एकातपत्रा च्छत्रमयी आसीत् । य[२]दा हि च्छत्रिणो बहवो राजानो मिलितास्तदा सैकातपत्रा, एकानि केवलानि प्रधानानि वा आतपत्राणीति कृत्वा, छत्रवर्जं यत्र न किञ्चिद्दृश्यतेत्यर्थः । विरुद्धं चैतत्—यस्यां बहूनि छत्राणि सा कथमेकातपत्रा स्यादिति संख्यावाचि[३]त्वेनैकशब्दस्य विरोधः, अविरोधस्तु केवलार्थत्वेन प्रधानार्थत्वेन वा । कीदृशैर्नृपगणैरितस्ततो मिलितैर्यतो हरेः प्रतापवशीकृतैरत एव विनयप्रणतोत्तमाङ्गैः । बहुच्छत्रग्रहणमेकशब्दस्य संख्यावाचित्वनिषेधार्थं विरोधालङ्कारार्थं वा । पृथिवीभृद्गणग्रहणं बहुच्छत्रत्वे हेतुत्वार्थम् । शूरस्यापत्यं शौरिः । तेजसा कीर्तिः प्रतापः ॥ ३३ ॥

आगच्छतोऽनूचि गजस्य गण्डयोः

स्वनं समाकर्ण्य समाकुलाङ्गनाः ।

दूरादपावर्तितभारवाहणाः

पथोऽपसस्रुश्चपलं चमूचराः ॥ ३४ ॥

१ 'णभूतैः' ख. पाठः । २ 'त' क. ख. ग. पाठः । ३ 'चक' ख. पाठः ।

सैनिकाः पथो मार्गात् चपलं तूर्णमपसस्रुः पलायांचक्रुः । कुतः पश्चादागतस्येभस्य घण्टाशब्दमाकर्ण्यात एव विह्वलनारीकाः । दूरादेवापावर्तितमवतारितं त्यक्तं भारवाहणं गोण्यादिकं यैः । उह्यतेऽस्मिन्निति वाहनं, ल्युट् सौत्रत्वाद् दीर्घः । भारस्य वाहनं भारवाहणमिति कर्मषष्ठीसमासः । "वाहनमाहितादि"ति णत्वम् । यत्र भाण्डमुह्यते भस्त्रादिकं रथादिकं वा तद्भारवाहणमभिधीयते । अनूचीत्यञ्चेः क्वौ रूपम् । पथ इति पञ्चमी ॥ ३४ ॥

**ओजस्विवर्णोज्ज्वलवृत्तशालिनः**
**प्रसादिनोऽनुज्झितगोत्रसंविदः ।**
**श्लोकानुपेन्द्रस्य पुरः स्म भूयसो**
**गुणान् समुद्दिश्य पठन्ति वन्दिनः ॥ ३५ ॥**

वन्दिनो नग्नाचार्या बहून् गुणानुद्दिश्य भगवतोऽग्रे श्लोकान् पेठुर्जगदुः, निजचरितानि देवमश्रावयन्नित्यर्थः । श्लोकग्रहणं पद्योपलक्षणं गाथाद्यपि पेठुरेव । कीदृशान् श्लोकान् ओजस्वि दीर्घसमासवचनं वर्णैश्चाक्षरैरुज्ज्वलं चारु यद्वृत्तं वसन्ततिलकादिकं तेन शालन्ते[1] इति ओजस्विवर्णोज्ज्वलवृत्तशालिनः, प्रसादिनः प्रसन्नान् सुबोधान्, यदि वा कांश्चित्समासरहितान् । उक्तं च–"माधुर्यमभिवाञ्छन्ति प्रसादं च सुमेधसः । समासवन्ति भूयांसि न पदानि प्रयुञ्जते । केचिदोजो विधित्सन्तः समस्यन्ति बहून्यपी"ति । तथानुज्झिता गोत्रसंविन्नामाख्यानं येषु, मध्ये मध्ये भगवन्नाम यत्र कीर्तितमित्यर्थः । भूयसो बहून् गुणान् । कीदृशान् ओजस्वी तीक्ष्णो यो वर्णः क्षत्रियाख्यस्तस्य तेन वा यदुज्ज्वलमनुरूपं वृत्तं व्यवहारः शौर्यादिकस्तेन शालिनः, प्रसादिन आह्लादकान्, अनुज्झितगोत्रसंविदोऽत्यक्तकुलाचारान् । गोत्रं नाम कुलं च । संवित्संभाषणं व्यवस्था च ॥ ३५ ॥

**निःशेषमाक्रान्तमहीतलो जलै-**
**श्चलन् समुद्रोऽपि समुज्झति स्थितिम् ।**
**ग्रामेषु सैन्यैरकरोद्वारितैः**
**किमव्यवस्थां चलितोऽपि केशवः ॥ ३६ ॥**

---

१ 'श्लाघन्ते' क. ग. पाठः ।

हरिश्चलितः प्रस्थितोऽपि अवारितैरनिषिद्धैरपि सैन्यैः किं ग्रामेष्वव्यवस्थामुपद्रवमकरोत् नैव चकारेति नीतिप्रधानत्वोक्तिः । ग्रामेष्वपि उत्संस्थां यो न करोति स स कथं संसत्सु कुर्यादित्यर्थः । स्याच्चैतदन्येऽप्येवंविधा एव तत्को नामायं देवस्य विशेष इत्याह—चलन्नित्यादि । आसतामन्ये तरलाः, योऽपि गम्भीरप्रकृतिरुदधिः सोऽपि चलन्नुल्लसन् स्थितिं मर्यादां समुज्झत्युल्लङ्घयति वेलामतिक्रामतीत्यर्थः । कीदृशोऽब्धिर्जलैर्वेगवद्भिर्व्याप्ताखिलभूपृष्ठः, देवस्तु सैन्यैः । प्रथमोऽपिशब्दोऽब्धेर्गाम्भीर्यख्यापनार्थः, द्वितीयो विरोधार्थः । यः किल चलितो गन्तुं प्रवृत्तः स कथं व्यवस्थां स्थितिमगमनं कुर्यात्, गमनावस्थानयोर्युगपदनुष्ठातुमशक्यत्वात् । यो वा चलितो वचनान्निवृत्तः स कथं व्यवस्थाकारी स्यात् "व्यवस्थायामसंज्ञाया"मिति वचनाद् व्यवस्थाशब्दे "स्थागापापचो भावे" इति क्तिनभावः ॥ ३६ ॥

कौशातकीपुष्पगुलुच्छकान्तिभि-
र्मुखैर्विनिद्रोल्वणबाणचक्षुषः ।
ग्रामीणवध्वस्तमलक्षिता जनै-
श्चिरं वृतीनामुपरि व्यलोकयन् ॥ ३७ ॥

तं देवं ग्रामनार्यो वृतीनामुपरि वृतिकापृष्ठसंस्थाः सत्यश्चिरं व्यलोकयन् नेत्रैः पपुर्जनैरलक्षिताः । कीदृश्यस्ता इत्यदर्शने कारणमाह—मुखैरुपलक्षिताः । कीदृशैः कौशातकीपुष्पगुलुच्छकान्तिभिर्धातकीलताकुसुमस्तवकद्युतिभिर्गौरत्वात् । तथा विनिद्रोल्वणबाणचक्षुषः प्रफुल्लोत्कटगन्धबाणप्रसूननिभनयनाः अतश्च सादृश्यादलक्षणम्, आरामवृतीनामपि बाणकौशातकीयोगात् । ग्रामे भवा ग्रामीणाः । "ग्रामाद्यखञौ" । वृतीनामिति "षष्ठ्यतसर्थप्रत्ययेन" । ऊर्ध्वायां दिश्युपरि, ऊर्ध्वस्योपभावो रिश्च प्रत्ययः ॥ ३७ ॥

गोष्ठेषु गोष्ठीकृतमण्डलासनान्
सनादमुत्थाय मुहुः स वल्गतः ।
ग्राम्यानपश्यत् कपिशं पिपासतः
स्वगोत्रसङ्कीर्तनभावितात्मनः ॥ ३८ ॥

स भगवान् गोष्ठेषु घोषेषु ग्रामेयकान् मुहुर्मुहुरदर्शत् । कीदृशान् कपिशं मधु पिपासतः पिबतोऽत एव गोष्ठ्यां केलिवशात् कृतं मण्डलासनं मण्डलिकारूपं वलयाकारं परिणाह्यवस्थानं यैः । तथा सनादं हुङ्कारपूर्वं मध्यादुत्थाय वल्गतः क्रीडतः प्लवमानान् । तथा स्वस्य गोत्रस्य नाम्नोऽन्वयस्य वा यत्सङ्कीर्तनमन्येन ग्रहणं तत्र भावितात्मनो दत्तचित्तान् । क्षीवस्य हि यदा कश्चिन्नाम कुलं वा कीर्तयति तदा किं मामेष वक्ष्यति इति समानत्वं भवति । स्वयं वा गोत्रकीर्तनमत्र । क्षीवो हि निजकुलमहत्तां प्रायेण कथयति । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठः । 'घञर्थे कविधानम्' । "अम्बाम्बगोभूमिसव्यापे"ति षत्वम् ॥ ३८ ॥

पश्यन् कृतार्थैरपि वल्लवीजनो
जनाधिनाथं न ययौ वितृष्णताम् ।
एकान्तमौग्ध्यादविबुद्धविभ्रम-
प्रसिद्धविस्तारगुणैर्विलोचनैः ॥ ३९ ॥

तं लोकेश्वरं गोपीसमूहो नेत्रैः पिबन्न तृप्तिमगादतिप्रियत्वादिति भावः । कीदृशैर्नेत्रैः कृतार्थैर्विहितविधेयैः सफलैरपीत्यर्थः । एतदेव हि चक्षुषां फलं यत् साक्षाद्भगवदवलोकनम् । अपिर्विस्मये । कृतार्थस्य हि वैतृष्ण्यं युक्तम् । तथा एकान्तेन निश्चितेन सहजेन मौग्ध्येनावैदग्ध्येनाविबुद्धा अज्ञाता विलासा यैः, केवलं प्रसिद्धः प्रकटो विस्तारो विशालत्वमेव गुणो येषां, ततो विशेषणसमासः । अक्षिणी प्रसार्य निर्विकारमेव प्रीतिस्निग्धं तास्तमैक्षन्तेत्यर्थः ॥ ३९ ॥

प्रीत्या नियुक्ताँल्लिहतीः स्तनन्धयान्
निगृह्य पारीमुभयेन जानुनोः ।
वर्धिष्णुधाराध्वनि रोहिणीः पय-
श्चिरं निदध्यौ दुहतः स गोदुहः ॥ ४० ॥

स हरिर्गोदुहो गोपांश्चिरं निदध्यावद्राक्षीत् । कीदृशान् रोहिणीर्गाः पयो दुग्धं दुहतः क्षारयत इति द्विकर्मको दुहिः । कीदृशीर्गाः, नियुक्तान् मुक्तान्

१ 'धान्' क. ग. पाठः ।

निकटेऽवस्थापितान् स्तनन्धयान् वत्सान् प्रीत्या स्नेहेन लिहतीः। किं कृत्वा दुहतः, जानुनोरुभयेन जानुमध्ये पारीं गोदोहनीं निगृह्यावष्टभ्य । कीदृक् पयो वर्धिष्णुर्महान् धाराध्वनिर्धारापातशब्दो यत्रेति बाहुल्योक्तिः । स्तनं धयतीति स्तनन्धयस्तर्णकः । "नासिकास्तनयोर्ध्माधेटोः" ॥ ४० ॥

अभ्याजतोऽभ्यागततूर्णतर्णकां
नियानहस्तस्य पुरो दुधुक्षतः ।
वर्गाद्गवां हुङ्कृतिचारु निर्यती-
मरिर्मधोरैक्षत गोमतल्लिकाम् ॥ ४१ ॥

मधुरिपुर्गोमतल्लिकां साध्वीं गामपश्यत् । कीदृशीं गोयूथान्निर्यतीं[१] पृथग्भवन्तीम्। क दुधुक्षतो गोदुहः पुरोऽग्रे। कीदृशोऽभ्याजतः एह्येहि मातरित्याह्वयतः । अत्र च दोहः कारणम् । तथा नियानहस्तस्य रज्जुपाणेः। कीदृशीं गाम्, अभ्यागतो निकटं प्राप्तस्तूर्णमुत्सुकमानस्तर्णको वत्सो यस्याः । अत एव हुङ्कृतिर्हुङ्कारस्तेन चारु रम्यं निर्याणमत एव चि[२]रेक्षणम् । अभ्याजनमाकारणमत्र वत्सबन्धनरज्जुर्नियानम् । दोग्धुमिच्छुर्दुधुक्षुर्गोपः । "हलन्ताच्च" । प्रशस्ता गौर्गोमतल्लिका । "प्रशंसावचनैश्च" । निर्यतीमितीणो यत् ॥ ४१ ॥

स व्रीहिणां यावदपासितुं द्रुताः
शुकान् मृगैस्तावदुपद्रुतश्रियाम् ।
कैदारकाणामभितः समाकुलाः
सहासमालोकयति स्म गोपिकाः ॥ ४२ ॥

स देवः कैदारकाणां केदारक्षेत्रसमूहानां गोपिका रक्षिकाः सहासमपश्यत् । कीदृशीस्ताः, कैदारकाणां वा कीदृशानामिति हासे कारणमाह–शुकान्निवारयितुं ता यावद्द्रुता धावितास्तावत्तेषां मृगैरुपद्रुतश्रियां हरिणोपभुक्तसम्पदां, यतो व्रीहिणां सञ्जातसस्यानाम् अतश्च ता अभितः पक्षद्वयेऽपि समाकुलाः किंकर्तव्यतामूढाः, अतो भगवान् स्मयमानोऽवैक्षत । व्रीहयो विद्यन्ते येषु तानि व्रीहीणि "व्रीह्यादिभ्य"श्चेतीनिः । केदाराणां समूहः कैदारकं क्षेत्र-

१ 'र्यान्तीं' क. ख. ग. पाठः । २ 'चेक्ष, ग. पाठः ।

विशेषः। "केदाराद्यञ्च"। गोपायन्तीति गोपिका रक्षिकाः। "ण्वुल्तृचौ"। आयादयः खलु आर्धधातुके विकल्पिताः॥ ४२॥

**व्यासेद्धुमस्मानवधानतः पुरा**
**चलत्यसावित्युपकर्णयन्नसौ।**
**गीतानि गोप्याः कलमं मृगव्रजो**
**न नूनमत्तीति हरिर्व्यकल्पयत्॥ ४३॥**

असौ हरिः सस्यजिघत्सानिवृत्तं हरिणयूथं दृष्ट्वा इत्येवं व्यकल्पयत् विकल्पं चकार। यदि वा पाठान्तरे व्यतर्कयदूहामास। एष मृगव्रजः सारङ्गसार्थो गोप्याः सस्यरक्षिकाया गीतानि शृण्वन् नूनं निश्चितमित्यस्मात् कारणात् कलमं शालिं नात्ति। तमेव हेतुमाह—व्यासेद्धुमित्यदि। ते ह्येवमचिन्तयन् यदि वयं सस्यं भक्षयामस्तदस्मान् व्यासेद्धुमपासितुमुद्यता सत्येषा अवधानत ऐकाग्र्यात् पुरा चलति अधुनैव निवर्तते इति न वयमद्म इत्येव कलमं मृगा न जक्षुरिति हरिर्व्यतर्कयत्। व्यासेद्धुमित्यत्र उद्यतेत्यध्याहार्यम्, अन्यथा तुमुन् दुर्लभः स्यात्। नहि चलनं निषेधार्थं नह्यसावेतान्निषेधा[1]मीति हृदि कृत्वा अवधानाच्चलतीति। एवमन्यत्र। यदि वा लौकिक्येवंविधैषोक्तिः। प्रथम इतिशब्दो हेत्वर्थो, द्वितीयो वितर्कप्रकारनिर्देशार्थः। नूनमित्यतो हेतोर्नात्तीति हरिर्व्यकल्पयत् व्यतर्कयदित्यर्थः। गोपस्य रक्षकस्य स्त्री गोपी। "पुंयोगादाख्यायाम्"॥ ४३॥

**लीलाचलस्त्रीचरणारुणोत्पल-**
**स्खलत्तुलाकोटिनिनादकोमलः।**
**शौरेरुपानूपमवाच्छिनन्मनः**
**स्वनान्तरादुन्मदसारसारवः॥ ४४॥**

उपानूपमनूपसमीपे य उन्मदसारसारवो मत्तलक्ष्मणध्वनिः स हरेः स्वनान्तरात् मनोऽवाच्छिनत् रुतान्तरान्निवर्त्यात्मैकविषयं चक्रे, तमेवासावाकर्णयदित्यर्थः। कीदृगारवः, लीलया विलासेन चला गच्छन्ती या स्त्री नारी तस्या

[1] 'ध्या' क. ख. ग. पाठः।

यौ चरणौ पादौ तावेवारुणोत्पले रक्ताब्जे तत्र स्खलन्तः कम्पमाना ये तुलाकोटयो मञ्जीरास्तेषां यो निनादः शिञ्जितं तेन कोमलः सदृशो मृदुरित्यर्थः । अतश्च नूपुररवस्मरणात्तदेकाग्रत्वं चेतसो युक्तम् । अनुगता आपो यत्रेत्यनूपः "ऊदनोर्देशे" । तस्य समीपे उपानूपम् । उद्गतो मदो येषां ते उन्मदाः । सरसि भवाः सारसा लक्ष्मणाः ॥ ४४ ॥

उच्चैर्गतामस्खलितां गरीयसीं
तदातिदूरादपि तस्य गच्छतः ।
एकेऽग्रहीषुर्बलरेणुसंहतिं
शिरोभिराज्ञामपरे महीभृतः ॥ ४५ ॥

तस्य हरेस्तदा व्रजत एके महीभृतः पर्वताख्या अतिदूरादेव शिरोभिः शृङ्गैर्बलरेणुसंहतिं सैन्यधूलिपटलमग्रहीषुर्बभ्रुः, अपरे तु नृपाख्या मूर्धभिराज्ञां शासनमाददिरे । कीदृशीं धूलिम् उच्चैर्गतां नभोव्यापिनीम्, अस्खलितामरुद्धां यतो गरीयसीं बहलाम्[१] । आज्ञामप्युच्चैर्गतां नाकलोकमपि प्रसृताम्, अस्खलितामनष्टां सर्वेणानुष्ठानात्, गरीयसीं प्रधानामकरणे सत्यपायात् । अग्रहीषुरिति लुङ् "ग्रहोऽलिटि दीर्घः" ॥ ४५ ॥

प्रायेण नीचानपि मेदिनीभृतो
जनः समेनैव पथाधिरोहति ।
सेना मुरारेः पथ एव सा पुन-
र्महामहीध्रान् परितोऽध्यरोपयत् ॥ ४६ ॥

इहेदृशी स्थितिर्यन्नीचान् वामनानपि नगानारुरुक्षुर्जनो बाहुल्येन समेनैव पथाधिरोहतीति । अधिरोहणे पथः करणत्वम् । सा पुनः शौरिचमूः पथो मार्गानेव समन्तात् महामहीध्रानुच्चानद्रीनध्यरोपयत्, अतिबाहुल्यात्पर्वताग्रं यावदपूर्वा बहुरथ्याश्चकारेत्यर्थः । अतश्च महान्विशेषः । यतोऽन्यत्र पन्था एव समो जनानधिरोहयते, अत्र तु जनैरेव ते नगाग्रमधिरोपिताः । पथ इति द्वितीयाबहुवचनम् । "गतिबुद्धी"ति कर्मसंज्ञा । महीध्रानिति कर्मणि द्वितीया ।

१ 'बहुलाम्' ग. पाठः ।

परितः समन्तात् प्रकृतत्वान्महीध्रानेव। अध्यारोपयदिति "णेरणावि"त्यात्मनेपदं न भवति, नह्यत्राणौ यत्कर्म महीध्रानिति स णौ कर्ता अपितु कर्मैव, कर्मान्तरं च विद्यते पथ इति ॥ ४६ ॥

दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः
शिलोच्चयानारुरुहुर्महीयसः।
तिर्यक्कटप्लाविमदाम्बुनिम्नगा-
विपूर्यमाणश्रवणोदरं द्विपाः ॥ ४७ ॥

करिण उन्नतान् शैलानध्यारोहन्। उन्मुखा ऊर्ध्ववदनाः सन्तः, अत एव विषाणकोटिविपाटितजलधरमारोहणम्। तथा तिर्यक् तिरश्चीना कटप्लाविनी गण्डस्थलव्यापिनी यासौ मदाम्बुनिम्नगा दानवारिनदी तया विपूर्यमाणं श्रवणोदरं कर्णविवरं यत्र ॥ ४७ ॥

श्च्योतन्मदाम्भःकटकेन केनचि-
ज्जनस्य जीमूतकदम्बकद्युता।
नागेन नागेन गरीयसोच्चकै-
ररोधि पन्थाः पृथुदन्तशालिना ॥ ४८ ॥

सत्यपि साम्ये सैन्यस्य केनचित् नागेनेभेन पन्था अरोधि मार्गो रुद्धो नत्वद्रिणा। कीदृशेन नागेन श्च्योतन्मदाम्भसौ गलद्दानाम्बू कटौ गण्डौ यस्य तेन "शेषाद्विभाषे"ति कप्। जीमूतकदम्बकद्युता मेघवृन्दमलिनेन, गरीयसा महता, उच्चकैरुन्नतेन, पृथुदन्तशालिना विशालदन्तगर्वितेन। अगेनापि स्रवन्मदजलसंपृक्तसानुना मेघमेचकेन बृहतोच्चकेन दीर्घदन्तश्लाघिना च। अत्र दन्ताः कटकाश्च भागविशेषाः। अरोधीति कर्मणि ॥ ४८ ॥

भग्नद्रुमाश्चक्रुरितस्ततो दिशः
समुल्लसत्केतनकाननाकुलाः।
पिष्टाद्रिपृष्ठास्तरसा च दन्तिन-
श्चलन्निजाङ्गाचलदुर्गमा भुवः ॥ ४९ ॥

द्विपा दिशो भुवश्चैवंविधा व्यधुः । कीदृशीर्दिश इतस्तत उन्मूलितवृक्षास्तथा स्फुरद्ध्वजवनव्याप्ताः । भुवश्च चूर्णीकृतनगशिखरास्तथा चलद्भिर्निजाङ्गैरेवाचलैर्दुर्गमा दुष्प्रवेशाः कृच्छ्रोत्तराः । अयमत्रार्थो विवक्षितः–यद्यपि गमनप्रत्यूहास्तरवस्तैर्दिक्षु च्छिन्नास्तथापि तत्स्थानीयैर्ध्वजांशुकैस्ता गहनीकृताः । तथा यद्यपि नगपृष्ठैः समीकृतं तथापि स्वात्मभिरेव नगोपमैस्तदाकुलमेवेति । कृच्छ्रेण गम्यन्ते इति दुर्गमाः ॥ ४६ ॥

आलोकयामास हरिर्महीधरा-
नधिश्रयन्तीर्गजताः परःशताः ।
उत्पातवातप्रतिकूलपातिनी-
रुपत्यकाभ्यो बृहतीः शिला इव ॥ ५० ॥

स देवो गजताः करिघटा अदर्शत् । कीदृशीः परःशता बहुसंख्याः । "परःशतास्ते विज्ञेया येषां संख्या शतात्परा"इति । "पारस्करादित्वात्सुट्" । अथाद्रीनुपत्यकाधोभागानधिश्रयन्तीरारोहन्तीः । उत्प्रेक्ष्यते–शिला इव । बुध्नादुपरि कथं दृषदो भवन्तीत्याह–उत्पातवातेनोन्मत्तवातेन प्रतिकूलपातिनीर्विपर्ययगामिनीरूर्ध्वं यान्तीरित्यर्थः । उपत्यकाभ्य इत्याधिश्रयणक्रियापेक्षयापादाने पञ्चमी । अधिश्रयणमारोहणम् । केचित्तु प्रतिकूलपातापेक्षयेत्याहुः । गजानां समूहा गजता हास्तिकानि ॥ ५० ॥

शैलाध्यरोहाभ्यसनाधिकोद्धुरैः
पयोधरैरामलकीवनाश्रिताः ।
तं पर्वतीयप्रमदाश्चचायिरे
विकासविस्मारितविभ्रमेक्षणाः ॥ ५१ ॥

तं देवमामलकीवनस्थाः पर्वतीयप्रमदाः खशाङ्गनाश्चचायिरेऽद्राक्षुः । कीदृश्यः, नगाक्रमणाभ्यासेनाधिकोन्नतैः स्तनैरुपलक्षिताः । आरोहणेन हि स्तना उन्मुखा भवन्ति । तथा विकासेनात्युन्मीलनेन विस्मारितविभ्रमाणि ईक्षणानि यासाम् । यदा हि भगवद्दर्शनगर्धेन ताभिर्लोचने विकासिते तदपाङ्गप्रेक्षितादीनि तासां चित्ते नास्फुरन् । आमलकीशब्दः स्त्रीलिङ्गः । गौरादित्वात् ङीप् । पर्वते भवाः पर्वतीयाः "पर्वताच्छः" ॥ ५१ ॥

**सावज्ञमुन्मील्य विलोचने सकृत्**
**क्षणं मृगेन्द्रेण सुषुप्सुना पुनः।**
**सैन्यान्न यातः समयापि विव्यथे**
**कथं सुराजंभवमन्यथाथवा ॥ ५२ ॥**

मृगेन्द्रेण सिंहेन सैन्यान्न विव्यथे नैव भीतम्। कदाचित्तु दवीयो भवेन्नेत्याह—समयापि यातोऽन्तिकेऽपि व्रजतः। कीदृशेन सकृदेकवारं सावज्ञं सावहेलं नेत्रे क्षणं विकास्य भूयः शिशयिषुणा। अत्रैवाक्षेपपूर्वमर्थान्तरन्यासमाह—कथं सुराजंभवमन्यथाथवेति। अन्यथा यदि धैर्यं न भवेत् कथं सुराज्ञा भूयते। सच यदैव प्रतिभयदर्शनेऽपि धीरप्रकृतिस्तदा मृगेन्द्रो हरिणराजः। स्वप्तुमिच्छुः सुषुप्सुः। "रुदविदे"ति कित्त्वात्संप्रसारणम्। सैन्यादिति "भीत्यर्थानां भयहेतु"रित्यपादानसंज्ञा। असुराज्ञा सुराज्ञा भूयते इति सुराजंभवं "कर्तृकर्मणोश्च भूकृञो"रिति खल्। "अरुर्द्विषदजन्तस्य मुम्" ॥ ५२ ॥

**उत्सेधनिर्धूतमहीरुहं ध्वजै-**
**र्हयौघरुद्धोद्धतसिन्धुरंहसाम्।**
**नागैरधिक्षिप्तमहाशिलं मुहु-**
**र्बलं बभूवोपरि तन्महीभृताम् ॥ ५३ ॥**

तत्सैन्यमद्रीणामुपर्यभूत् पृष्ठेऽभूत्, अग्रं यावदाससादेत्यर्थः। अथ चोपर्यभवदधिकमभूदिति भङ्गिभणितिः। तथा हि ध्वजैरुत्सेधेनोच्छ्रायेण निर्धूता न्यक्कृता महीरुहा वृक्षा येन, तथा कीदृशानामद्रीणां, हयौघेनाश्वीयेन रुद्धं निषिद्धमुद्धतानां क्षुभितानां सिन्धूनां सरितां रंहो वेगो येषाम्, तथा कीदृशं बलं, नागैरिभैरधिक्षिप्ता निरस्ता महाशिला गण्डशैला येन ॥ ५३ ॥

**श्मश्रूयमाणे मधुजालके तरो-**
**र्गजेन गण्डं कषतावधूनिते।**
**क्षुद्राभिरक्षुद्रतराभिराकुलं**
**विदश्यमानेन जनेन दुद्रुवे ॥ ५४ ॥**

जनेनाकुलं सत्वरं दुद्रुवे पलायितम्, यतोऽत्तुद्रतराभिर्बृहतीभिः त्तुद्राभिर्मधुमत्तिकाभिर्विदश्यमानेन दष्टेन पीड्यमानेन । कदा करिणा कपोलं कषता मधुजालके मात्तिकपटलेऽवधूनिते कम्पिते । कीदृशे तरोः श्मश्रूयमाणे काष्र्यात् कूर्चकलापतुल्ये, अतो गजचालितान्मधुकरण्डकादुत्थाय जनतां जत्तुः । श्मश्रु इवाचरति श्मश्रूयते "उपमानादाचारे । कर्तुः क्यङ् सलोपश्च"। अवधूनिते इति "धूञ्प्रीञोर्नुग्वक्तव्यः" । दुद्रुवे इति भावे ॥ ५४ ॥

नीते पलाशिन्युचिते शरीरव-
द्गजान्तकेनान्तमदान्तकर्मणा ।
संचेरुरात्मान इवापरं त्तणात्
त्तमारुहं देहमिव प्लवङ्गमाः ॥ ५५ ॥

प्लवङ्गमास्तरुवानरा आत्मान इव द्वितीयं त्तमारुहं वृत्तं देहं यथा त्तणादेव संचेरुः संक्रान्तवन्तो गताः । कदा उचिते शीलिते वासभूते पलाशिनि भूरुहे वपुषीवादान्तकर्मणा क्रूराचारेण गजान्तकेन करिमृत्युनान्तं नीते विनाशिते सति । यथान्तकेन देहेऽन्तं नीते देही देहान्तरं व्रजति, एवं हस्तिना वृत्ते उन्मूलिते वानरा अन्यं वृत्तमायन्निति वाक्यार्थः । उक्तंच—"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही"ति ॥ वृत्तयोर्देहावुपमानं, गजस्यान्तको वानराणामात्मानः । अतश्च पदार्थानां प्रत्येकमौपम्ये इवादयोऽप्यनेका एव न्याय्या इत्यभियुक्ताः । यथा रुद्रटस्य "अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते। भान्ति लता ललना इव पाणिभिरिव किसलयैः सपदि" इति। अत एवोपमेयसमीप एवोपमानप्रयोगः । यत्र त्वेक एव प्रयुज्यते तत्र वाक्यार्थस्यौपम्यं विवत्तितम् । यथा—"युवा प्रवासोपगतः प्रियामुखान्मुखासवं पश्य पिबन्न तुष्यति । शिलीमुखस्तोयदकालविप्लवाच्चिराय बद्धं मधु पङ्कजादिव" ॥ अत एवात्रापरार्धे एव सर्वोपमाननिर्देशः । एवमन्यत्र ॥ ५५ ॥

प्रह्वानतीव क्वचिदुद्धतिश्रितः
क्वचित् प्रकाशानथ गह्वरानपि ।

**साम्यादपेतानिति वाहिनी हरे-**
**स्तदातिचक्राम गिरीन् गुरूनपि ॥ ५६ ॥**

तदानीं गुरून्महतोऽप्यद्रीन् माधवसेनातिचक्रामोदलङ्घयत् । कीदृशान् इतीत्थं साम्यादपेतान् भ्रष्टान् विषमानित्यर्थः । तथा हि क्वचिद्भागे नतान् क्वचिच्चोन्नतान् क्वचित् प्रकाशान् सौम्यान् क्वचिच्च गह्वरान् भीषणान् । सेना तु सदैवोन्नता प्रकाशा चेति साम्यादपेतानित्यतो गम्यते एव, अत एवाक्रमणम् । यः किल साम्यादपेत ऊनस्तस्याक्रमणमभिभवः क्रियते । अथ चोक्तिः ये किल गुरव आचार्यास्ते यदीत्थं समदृष्टित्वादपेता भवन्ति तदा त्यज्यन्ते । क्वचिदीश्वरे प्रह्वान् चाटुकारिणः, क्वचिच्च दरिद्रे उद्धतिश्रितो गर्वितान्, क्वचिच्च शिष्ये प्रकाशान् प्रीतान्, क्वचिच्च गह्वरान् मत्सरान् । उक्तं च–'गुरोरप्यवलिप्तस्य कार्याकार्ये विजानतः[1] । उत्पथप्रतिपन्नस्य परित्यागो विधीयते" इति ॥ ५६ ॥

**स व्याप्तवत्या परितोऽपथान्यपि**
**स्वसेनया सर्वपथीनया तया ।**
**अम्भोभिरुल्लङ्घिततुङ्गरोधसः**
**प्रतीपनाम्नीः कुरुते स्म निम्नगाः ॥ ५७ ॥**

स हरिर्निजचम्वा निम्नगा नदीः प्रतीपनाम्नीर्विपरीताख्याश्चकार अनिम्नगा व्यधादित्यर्थः । यतोऽद्भिराक्रान्तोन्नतपुलिनाः । एतदपि कुतः । यतोऽमार्गानपि समन्तात् तया व्याप्तवत्या, तथा सर्वपथीनयेति बाहुल्योक्तिः । तथा स्वसेनया सर्वपथीनयेति वा व्याख्येयम् । अतश्च निम्नेषु प्रसररोधादुन्नतगमने सति उच्चगा इति नामनिष्पत्तिः । न पन्था अपथम्, अच् "अपथं नपुंसकम्" । सर्वपथान् व्याप्नोतीति सर्वपथीना "तत्सर्वादे"रिति खः । प्रतीपं विपरीतं नाम यासां ताः प्रतीपनाम्न्यः "अन उपधालोपिनोऽन्यतरस्या"मिति ङीप् ॥ ५७ ॥

**यावद्व्यगाहन्त न दन्तिनां घटा-**
**स्तुरङ्गमैस्तावदुदीरितं खुरैः ।**

---
[1] 'कार्यमजानतः' ग. पाठः ।

क्षिप्तं समीरैः सरितां पुरः पत-
ज्जलान्यनैषीद्रज एव पङ्कताम् ॥ ५८ ॥

नदीनां जलानि प्रत्युत रजो धूलिरेव पङ्कतामनैषीत् कर्दमत्वं प्रापयत् । अन्यत्र हि जलेन रेणुः पङ्कीक्रियते तत्र तु विपर्ययोऽभूदित्येव शब्दार्थः । कीदृग्रजः समीरैर्मारुतैः क्षिप्तमीरितमत एव नदीषु पतत् । तथा गजतास्तानि न व्यागाहन्त नास्प्राक्षुः, तावत् पुरः पूर्वमेवाश्वैः कर्तृभिः खुरैरुदीरितमुत्थापितम् । यावद्गजघटा न व्यगाहन्त तावत्पुरः समीरैः क्षिप्तमिति योजना । यदि तु ता व्यगाहिष्यन्त तन्मदजलभरबहलीकृते[1] पयसि न तत्पङ्कतां रेणुरनेष्यदिति भावः । अनैषीदिति "सिचि वृद्धिः" । रज इति कर्तृपदम् । जलानीति शसः शिः ॥ ५८ ॥

रन्तुं क्षतोत्तुङ्गनितम्बभूमयो
मुहुर्व्रजन्तः प्रमदं मदोद्धताः ।
पङ्कं करापाकृतशेवलांशुकाः
समुद्रगानामुदपादयन्निभाः ॥ ५९ ॥

समुद्रगानां नदीपतिवधूनां सरितां मत्ता द्विपाः पङ्कं कर्दममजनयन् । कीदृशा इभाः, रन्तुं क्रीडितुं क्षता लोठिता उत्तुङ्गा नितम्बभूमिस्तटप्राग्भारो यैरत एव हर्षं यान्तः । मदोद्धता मदमत्ताः । तथा करैरपास्तं शेवलमेवांशुकं वासो यैः । येऽपि मदोद्धतास्ते परस्त्रीणां करजैः पीवरा नितम्बस्थलीर्विदारयन्तोऽम्बरं चापहरन्तस्तासां पङ्कं मालिन्यं शीलभ्रंशमुत्पादयन्ति ॥ ५९ ॥

रुग्णोरुरोधःपरिपूरिताम्भसः
समस्थलीकृत्य पुरातनीर्नदीः ।
कूलङ्कषौघाः सरितस्तथापराः
प्रवर्तयामासुरिभा मदाम्बुभिः ॥ ६० ॥

---

1 'बहुलीकृते' ग. पाठः ।

महाद्विपास्तटलोठनपूर्वमाद्याः सरितः स्थलरूपतां प्रापय्य मदजलैरन्या अजनयन्नित्यतिशयोक्तिः। कूलङ्कषौघाः कूलमुद्रुजपूराः, रुग्णैर्लोठितैरुरुभिर्विशालैः रोधोभिः प्रतीरैः परिपूरितं भरितमम्भो यासामिति समस्थलीकरणकारणम्। समं च तत्स्थलं समस्थलम्। यदि वा समं सदृशं स्थलं यासां ताः समस्थलाः। एवं च स्थलं तासां सदृशं भवति यदि ता अपि स्थलरूपा भवन्ति। तेन य एवार्थः स्थलं समीकृत्येति स एवार्थः समस्थलीकृत्येति। असमस्थलाः समस्थलाः कृत्वा समस्थलीकृत्य "अभूततद्भावे च्विः। ऊर्यादिच्विडाचश्चे"ति गतिसंज्ञा। "कुगतिप्रादयः। समासेऽनञ्पूर्वे क्त्वो ल्यप्"। पुरा भवा पुरातनी "सायंचिर"मिति ट्युस्तुट् च। अबाधकान्यपि निपातनानि भवन्ति। कूलं कषति कूलङ्कषः। "सर्वकूलाभ्रे"ति खश्, मुम् ॥ ६० ॥

पद्मैरनन्वीतवधूमुखद्युतो
गता न हंसैः श्रियमातपत्रजाम्।
दूरेऽभवन् भोजबलस्य गच्छतः
शिलोपमातीतगजस्य निम्नगाः ॥ ६१ ॥

भोज आदिपुरुषस्तद्वंश्या अप्यभेदाद्भोजा एवेति हरिरपि भोजस्तत्सैन्यस्य व्रजतो नद्यो दूरेऽनिकटेऽभवन्। उल्लङ्घनान्नदीनां बलस्य च महद्व्यवधानं जातमिति भावः। अथ च दूरे लज्जयानन्तिकेऽभवन्निति वक्रोक्तिः। ता बलं नानुचक्रुरित्यर्थः। पराजितश्चावश्यमेव दूरे तिष्ठति। तथा हि कीदृश्यस्ताः पद्मैरनन्वीताननुगता वधूमुखानां द्युत्कान्तिर्याभिः। तथा छत्रोत्थां शोभां सितच्छत्रैरप्राप्ताः। बलस्य कीदृशस्य शिलाभिरुपमा साम्यं शिलोपमा तामतीतास्त्यक्तवन्तो गजा यस्य। गण्डशैलेभ्योऽपि महान्तो गजा इत्यर्थः। इङ् गताविति क्ते नञि अन्वीतेति रूपम् ॥ ६१ ॥

स्निग्धाञ्जनश्यामतनूभिरुन्नतै-
र्निरन्तराला करिणां कदम्बकैः।
सेना सुधाक्षालितसौधसम्पदां
पुरां बहूनां परभागमाप सा ॥ ६२ ॥

सा यादवसेना बह्वीनां पुरां पुरीणां परभागं परदेशमाप बह्वीर्नगरीरतिचक्रामेत्यर्थः। अथ च परभागं स्वगुणोत्कर्षं शोभातिशयं लेभे इत्यर्थान्तरम्। यतः सा अरूक्षकज्जलमेचकदेहगजघटासम्बाधा, तासां तु मङ्क्षोलानुलिप्तहर्म्यलक्ष्मीकाणामतो वर्णद्वययोगात् परभागप्राप्तिः। क्षालितं धौतमनुलिप्तं शुक्लीकृतमिति यावत्। बहुशब्दे ङीष्विभाषितः॥ ६२॥

**प्रासादशोभातिशयालुभिः पथि**
**प्रभोर्निवासाः पटवेश्मभिर्बभुः।**
**नूनं सहानेन वियोगविक्लवा**
**पुरः पुरश्रीरपि निर्ययौ तदा॥ ६३॥**

प्रभोर्हरेर्मार्गे दूष्यैरावसनिका बभुः। कीदृशैः प्रासादकान्तिजिष्णुभिर्हर्म्यरम्यैरित्यर्थः। अतश्चोत्प्रेक्ष्यते–तदा प्रयाणसमये ध्रुवं हरिणा साकं विरहासहत्वात् पुरोऽग्रे पुरश्रीर्द्वारकालक्ष्मीरपि निर्ययौ निर्जगाम, कथमन्यथाध्वनि निवासानां सश्रीकत्वं स्यादिति भावः। अतिशेरते इत्यतिशयालवः परिभाविनः, आलुचि शीङ्ग्रहणम्। ततो द्वितीयासमासः। निवसन्त्येषु निवासाः, घञ्॥ ६३॥

**वर्ष्म द्विपानां विरुवन्त उच्चकै-**
**र्वनेचरेभ्यश्चिरमाचचक्षिरे।**
**गण्डस्थलाघर्षगलन्मदोदक-**
**द्रवद्रुमस्कन्धनिलायिनोऽलिनः॥ ६४॥**

भृङ्गास्तारं चिरं गुञ्जन्तो वनेचरेभ्यो लुब्धकादिभ्यो द्विपानां वर्ष्म प्रमाणमाचचक्षिरेऽवोचन् "वा लिटि"। कीदृशोऽलिनः गण्डस्थलस्य कटतटस्य यदाघर्षणं कषणं तेन संपेषस्तेन गलत् स्रवद्यन्मदोदकं दानवारि तेन द्रवा आर्द्रा ये द्रुमस्कन्धास्तरुप्रकाण्डानि तेषु निलायिनो निलीनास्तिष्ठन्तः। अतश्च तान् मदाम्बु पिबतो दृष्ट्वा पर्वतीया अनुमिमते नूनमेवंप्रमाणा यादवहस्तिनः, कुतोऽन्यथा मदस्यात्र गतिरिति वर्ष्म द्विपानां रुवन्तो भृङ्गास्तद्वाच्यांस्तेभ्य ऊचुरिव॥ ६४॥

आयामवद्भिः करिणां घटाशतै-
रधःकृताट्टालकपङ्क्तिरुच्चकैः ।
दूष्यैर्जितोदग्रगृहाणि सा चमू-
रतीत्य भूयांसि पुराण्यवर्तत ॥ ६५ ॥

सा सेना बहूनि पुराण्यतीत्योल्लङ्घ्यावर्तत, अनेकानि नगराण्याक्रामदित्यर्थः । अथ च भूयांसि पुराण्यतीत्य जित्वास्तेत्यर्थान्तरम् । तथाहि—कीदृश्यसौ उच्चकैरुन्नतैस्तथायामवद्भिरतिदीर्घैर्गजघटाशतैरधःकृता ह्रस्वीकृता तिरस्कृता अट्टालकपङ्क्तिः प्राकारावलिस्तल्पमाला यया । पुराणि तु दूष्यैः पटवेश्मभिर्जितानि हसितानि उदग्रगृहाणि प्रांशुवेश्मानि येषां तानि जितोदग्रगृहाणि । अतिशयेन बहूनि भूयांसि । "बहोर्लोपो भू च बहोः" । पुरशब्दोऽस्त्रीलिङ्गः ॥ ६५ ॥

उद्धूतमुच्चैर्ध्वजिनीभिरंशुभिः
प्रतप्तमभ्यर्णतया विवस्वतः ।
आह्लादिकल्हारसमीरणाहते
पुरः पपाताम्भसि यामुने रजः ॥ ६६ ॥

अथ पुरोवर्तिनि कालिन्दीजले सेनारेणुरपतत् । कीदृशं चमूभिरुच्चैरुद्धूतमूर्ध्वं क्षिप्तमत एव रवेरभ्यर्णतया सामीप्यात् किरणैः सन्तप्तमत एवाम्भस्यपतत् । यः किलोच्चैर्नगादवारूढः स रविकरसंतापितः सन् जले मज्जति । कीदृशेऽम्भसि आह्लादी प्रमदकारी यः कल्हारसमीरणः सौगन्धिकवातस्तेनाहते कम्पिते इति सौरभोक्तिः । अभ्यर्णशब्दे "अर्देः संनिविभ्यः । अभेश्चाविदूर्ये" इतीडभावः क्ते उक्तः ॥ ६६ ॥

या घर्मभासस्तनयापि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः ।
कृष्णापि शुद्धेरधिकं विधातृभि-
र्विहन्तुमंहांसि जलैः पटीयसी ॥ ६७ ॥

यस्या महानीलतटीरिव द्रुताः
प्रयान्ति पीत्वा हिमपिण्डपाण्डवः ।
कालीरपस्ताभिरिवानुरञ्जिताः
क्षणेन भिन्नाञ्जनवर्णतां घनाः ॥ ६८ ॥

व्यक्तं बलीयान् यदि हेतुरागमा-
दपूरयत् सा जलधिं न जाह्नवी ।
गङ्गौघनिर्भर्त्स्मितशंभुकन्धरा-
सवर्णमर्णः कथमन्यथास्य तत् ॥ ६९ ॥

अभ्युद्यतस्य क्रमितुं जवेन गां
तमालनीला नितरां धृतायतिः ।
सीमेव सा तस्य पुरः क्षणं बभौ
बलाम्बुराशेर्महतो महापगा ॥ ७० ॥

(कलापकम् ।)

सा महापगा यमुना तस्य सैन्योदधेरग्रे सीमेव मर्यादेव वेलातुल्या रेजे, कथमन्यथा नाक्रान्तेति भावः । कीदृशस्य बलोदधेः रंहसा भुवमुल्लङ्घयितुं प्रवृत्तस्य । सीमा कीदृशी तमालैस्तमाला इव वा श्यामा, तथात्यर्थं धृतायतिरूढदैर्घ्या । महाब्धेरपि रयाद्भुवं लिलङ्घयिषतस्तमालनीला दीर्घदीर्घा च वेला रोधिका भवति ॥

कीदृशी यमुना सेति[1] ये धर्मा विवक्षितास्तानाह—येत्यादि । या महानदी जलैरेनांसि क्षपयितुं कुशला । कीदृशैर्जलैरिति विरोधाभासमाह—उष्णांशुसुतापि जलैः शीतलैः, अन्तकस्य भगिन्यपि तैर्जनस्य जीवनैः समाश्वासकारिभिः, नीलापि सा तैः शुद्धिकारिभिर्मालिन्यनाशकैः पापक्षेप्तृभिः । विरोधः सुगमः ॥

---

१ 'नेति सेति' क. ख. ग. पाठः ।

किं च यस्या अपः पीत्वा हिमधवला अपि मेघास्तत्क्षणमेव पिष्टकज्जल-मलिना भवन्ति । अतश्चोत्प्रेक्ष्यते–ताभिरद्भिरनुरञ्जिता इव चित्रिता इव । यः किल रज्यते स वर्णान्तरमाप्नोति । कीदृशीरपः कालीः कृष्णाः, अत एव महानीलतटीरिव द्रुता गालितेन्द्रनीलस्थलमहीसदृशीः । कालीशब्दे "जानपदा"-दिसूत्रेण ङीष् ॥

किं च यद्यागमाच्छास्त्राद्धेतुरनुमानं बलवत्तद्व्यक्तं निश्चितं सा यमुना जलधिमपूरयत् जलनिर्भरं चकार नतु जाह्नवी गङ्गा । कस्मादित्याह–अन्यथा यदि यमुनयासौ न पूरितस्तत्कथमस्याब्धेरम्भो हरगलनीलम् । गङ्गायाः पूरणे हि कारणस्य सितत्वात् तेनापि सितेन भवितव्यम्, न च तद्धवलमपितु नीलं तस्मादनुमिमीमहे साब्धिमपूरयत् न सितनदी, एतच्च कदा यद्यागमादनुमानस्य बलवत्ता स्यात् । आगमस्य बलीयस्त्वं तु जाह्नव्यैव । अगस्त्यपीतो हि समुद्रो भागीरथ्या पूरित इत्यागमः । गङ्गौघेन निर्भस्मिता क्षालितभस्मा या शंभुकन्धरा नीलकण्ठग्रीवा तया सवर्णमेकवर्णं नीलमित्यर्थः । शिवस्य हि कण्ठः कालकूटधारणान्नीलः-इत्यागमः । अपूरयत्सेत्यत्र येति पाठो न्याय्यः । यच्छब्दैरेव वर्णयितुमुपक्रान्तत्वाद्वाक्यान्ते च सेति विद्यत एवेत्याहुः ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ (चक्कलकम् ।)

लोलैररित्रैश्चरणैरिवाभितो
जवाद् व्रजन्तीभिरसौ सरिज्जनैः ।
नौभिः प्रतेरेऽनुचितप्लवोदित-
भ्रमीनिमीलल्ललनावलम्बितैः ॥ ७१ ॥

असौ यमुना बलैः प्रतेरे उत्तीर्णा । कथं नौभिः । कीदृशीभिः, अभितः पार्श्वद्वये लोलैश्चटुलैश्चलद्भिररित्रैः शम्बैर्वेगाद्यान्तीभिः, अतश्च चरणैरिव नावः पादतुल्यैः । चरणैः किल जवाद्गम्यते । कीदृशैर्जनैः, अनुचितेनाशीलितेन प्लवेन जलयानेनोदिता जाता यासौ भ्रमी भ्रमस्तया निमीलन्त्यः संकुचिताक्ष्यो या ललना नार्यस्ताभिरवलम्बितैरवष्टब्धैः । प्रतेरे इति कर्मणि । भ्रमशब्दः स्त्रीपुंसलिङ्गः ॥ ७१ ॥

तत्पूर्वमंसद्वयसं द्विपाधिपाः
क्षणं सहेलाः परितो जगाहिरे ।
सद्यस्ततस्तेरुरनारतस्रुत-
स्वदानवारिप्रचुरीकृतं पयः ॥ ७२ ॥

तद्यामुनं पयो महेभाः पूर्वं सहेलाः सन्तः समन्तात् क्षणं जगाहिरे व्यलोडयन्, यतोऽसद्वयसं स्कन्धप्रमाणमतो ब्रुडनभयाभावात् क्रीडन्तो जग्मुः । ततोऽनन्तरं सद्यो मंक्ष्वेवोत्तेरुः यतोऽनारतं स्रुतेन स्वदानवारिणा प्रचुरीकृतं वृद्धिं नीतमित्यतिशयोक्तिः । अंसद्वयसमिति "प्रमाणे द्वयसच्" ॥ ७२ ॥

प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखै-
स्तुरङ्गमैरायतकीर्णवालधि ।
उत्कर्णमुद्ग्राहितधीरकन्धरै-
रतीर्यताग्रे तटदत्तदृष्टिभिः ॥ ७३ ॥

अश्वैरतीर्यत तीर्णमिति भावे लकारः । कीदृशैरिति जातिबन्धः । उन्मुखैरूर्ध्ववक्त्रैः, तथोद्ग्राहिता ऊर्ध्वप्रसारिता धीरा निश्चला कन्धरा ग्रीवा यैः, तथाग्रे यत्तटं तत्र दत्तदृष्टिभिर्बद्धलक्ष्यैः । कथमतीर्यत प्रोथैर्नासिकानिरोकैः स्फुरद्भिर्हेतुभूतैः स्फुटः शब्दो यत्र, तथायतो दीर्घः कीर्णो विक्षिप्तो वालधिः पुच्छो यत्र, तथोत्कर्णमुर्च्चीकृतश्रवणम् । वाला निधीयन्तेऽस्मिन्निति वालधिः । "कर्मण्यधिकरणे च"ति किः ॥ ७३ ॥

तीर्त्वा जवेनैव नितान्तदुस्तरां
नदीं प्रतिज्ञामिव तां गरीयसीम् ।
शृङ्गैरपस्कीर्णबृहत्तटीभुवा-
मशोभतोच्चैर्नदितं ककुद्मताम् ॥ ७४ ॥

ककुद्मतामुक्ष्णामुच्चैस्तारं नदितमशोभत रेजे चित्तमावर्जयदित्यर्थः । कदा गरीयस्त्वादतिकृच्छ्रोल्लङ्घ्यां यमुनां रयेण तीर्त्वा उल्लङ्घ्यातिक्रम्य । किमिव

प्रतिज्ञामिव । यथा कस्यचिद्वीरस्य महतीं दुस्तरां प्रतिज्ञां समाप्य कत्थनं शोभते तथेत्यर्थः । कीदृशानां ककुद्मतां शृङ्गैरपस्कीर्णा उल्लिखिता बृहती तटभूर्यैः । तीर्त्वेति निनादापेक्षं पूर्वकालत्वम् । "श्युकः किती"ति कित्त्वम्, दीर्घः। अपस्कीर्णेति "अपाच्चतुष्पादि"ति सुट् । ककुद्विद्यते येषामिति ककुद्मन्तः । ककुच्छब्दो दान्तोऽपि युवादित्वात् झय्वत्वाभावः ॥ ७४ ॥

**सीमन्त्यमाना यदुभूभृतां बलै-**
**र्बभौ तरङ्गिर्गवलावलिद्युतिः ।**
**सिन्दूरितानेकपकङ्कणाङ्किता**
**तरङ्गिणी वेणिरिवायता भुवः ॥ ७५ ॥**

असौ तरङ्गिणी यमुनानदी बभौ रेजे । उत्प्रेक्ष्यते–भुवो वेणिः कवरीव, यतो गवलावलिद्युतिर्महिषविषाणपटलकाली । तथा यादवपार्थिवसैनिकैस्तरङ्गिः सीमन्त्यमाना द्विधा क्रियमाणा। सिन्दूरिता येऽनेकपास्त एव कङ्कणाः कचभूषणिकास्ताभिरङ्किता चिह्नीकृता आयता दीर्घा । वेणिरपि कृष्णा सीमन्तिता कङ्कणाङ्किता मृद्वी च भवति । सीमन्तः केशेषु, अन्यत्र तूपचारात् । अनेकेन करेणास्येन च पिबन्तीत्यनेकपा द्विपाः ॥ ७५ ॥

**अव्याहतक्षिप्रगतैः समुच्छ्रिता-**
**ननुज्झितद्राघिमभिर्वरीयसः ।**
**नाव्यं पयः केचिदतारिषुर्भुजैः**
**क्षिपद्भिरूर्मीनपरैरिवोर्मिभिः ॥ ७६ ॥**

केचित् सैनिका नाव्यं नावा तरीतुं शक्यं यत्पयस्तद्भुजैरतारिषुर्बाहुभिरेव तेरुः । कीदृग्भिरूर्मीन् कल्लोलान् क्षिपद्भिरस्यद्भिः, अव्याहतक्षिप्रगतैरनष्टचतुरगतिभिरलुप्तैरित्यर्थः । तथानुज्झितद्राघिमभिरपरित्यक्तदैर्घ्यैः । कीदृशानूर्मीन् समुच्छ्रितानुन्नतान्, वरीयस उरुतरान्, अतश्च भुजैरपरैरिवोर्मिभिस्तरङ्गान्तरतुल्यैरिति भावः । यथा जविनो दीर्घाश्चोर्मयोऽन्यानूर्मीनीरयन्ति, एवं भुजा इत्यर्थः । दीर्घस्य भावो द्राघिमा। "पृथ्वादिभ्य इमनिज्वा । प्रियस्थिरे"ति द्राघादेशः । अतिशयेन उरुर्वरीयान् । तेनैव वभावः । गरीयस इति वा पाठः ।

नावा तार्यमुदकं नाव्यं "नौवयोधर्मे"ति यत् । अतारिषुरिति लुङ् । ऊर्मिशब्दः स्त्रीपुंसलिङ्गः । तथा चोक्तम् "स्त्रीपुंसयोरूर्मिमणिवेणिश्रेणिगोयष्टिशमिशल्मलितूलितुमिमरीचिमृत्यूर्मिककर्कन्धूकिष्कुरेणव"इति । वंशस्थं वृत्तम् ॥ ७६ ॥

**विदलितमहाकूलामुक्ष्णां विषाणविघट्टनै-**
**रलघुचरणाकृष्टग्राहां विषाणिभिरुन्मदैः ।**
**सपदि सरितं सा श्रीभर्तुर्बृहद्रथमण्डल-**
**स्खलितसलिलामुल्लङ्घ्यैनां जगाम वरूथिनी ॥ ७७ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये यात्रावर्णनं नाम
द्वादशः सर्गः ॥ १२ ॥

सा श्रीभर्तुर्लक्ष्मीपतेर्वरूथिनी सेना एनां सरितं कालिन्दीं सपदि शीघ्रमुल्लङ्घ्य तीर्त्वा जगाम ययौ । अथ चोल्लङ्घ्य तिरस्कृत्य जित्वेति वक्रोक्तिः । तमेव जयं विशेषणमुखेनाह—कीदृशीं सरितम् उक्ष्णां वृषभाणां विषाणविघट्टनैः शृङ्गाहतिभिर्विदलितमहाकूलां क्षपितविपुलपुलिनां, तथा उन्मदैर्मत्तैर्विषाणिभिर्दन्तिभिः कर्तृभिरलघुभिश्चरणैराकृष्टा भुवं प्रापिता ग्राहा जलचरा यस्याः । अलघवश्चरणैराकृष्टा इति वा विग्रहः । तथा बृहत्सु रथमण्डलेषु रथकट्यासु स्खलितं सलिलं यस्या इति व्यतिरेकप्रायोऽलङ्कारः । हरिणीवृत्तम् । "भवति हरिणी न्सौ म्रौ स्लौ गोरसोदधिसप्तकैः" ॥ उक्ष्णामित्य"ल्लोपोऽनः । षपूर्वहन्धृतराज्ञामणी"ति तु "अन्"इति प्रकृतिभावे प्राप्ते विध्यर्थो नतु नियमार्थः । गृह्णन्तीति ग्राहा "विभाषा ग्रह"इति णः । वरूथिनी रथिनीति सेनानामनीति भद्रम् ॥ ७७ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि-वल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां यात्रावर्णनं नाम द्वादशः सर्गः ॥ १२ ॥

---

अथ

# शिशुपालवधकाव्ये

## त्रयोदशः सर्गः ।



यमुनामतीतमथ शुश्रुवानमुं
तपसस्तनूज इति नाधुनोच्यते ।
स यदाचलन्निजपुरादहर्निशं
नृपतेस्तदादि समचारि वार्तया ॥ १ ॥

अथानन्तरं तपसस्तनूजो धर्मात्मजो युधिष्ठिरोऽमुं भगवन्तं यमुनामतीतमुत्तीर्णं शुश्रुवान् श्रुतवानश्रौषीत्, कालिन्दीमुत्तीर्णो हरिरित्यबोधीत्यर्थः । एतदेवानादरनिषेधार्थमाक्षिपन्नित्याह–इतीत्यादि । अधुना यमुनामतीतमसौ श्रुतवानित्येतन्नोच्यते न वाच्यम् । कुत इत्याह–स हरिर्यदैव निजपुरात् स्वनगरादचलन्निर्ययौ तदादि तत एवारभ्याहर्निशं दिवारात्रं नृपतेः पार्थस्य वार्तया प्रवृत्त्या समचारि संचारितं वार्तागतेत्यर्थः । यद्वा स एव हरिवार्तया समचारि सम्यक्चारित इति केचित् । अतश्च यदा प्रत्यहं समागमनवार्तां जानाति 'अद्य द्वारवत्याश्चलितोऽद्य तामुत्तीर्णोऽद्य ग्रामं प्राप्तोऽद्य वनमद्य गिरिमद्य नदीरित्यादिकाम्' ततो यमुनामतीतमेवाशृणोदिति कथमुच्यतामित्याक्षेपोऽलङ्कारः । क्वचिच्च नोच्यतेऽधुनेति पाठः । तदा चैवं पदयोजना–तपसस्तनूजोऽमुं हरिं यमुनामतीतं सन्तमधुनेदानीमेव श्रुतवान् बुद्धवानिति नोच्यते । कथमित्याह–स यदेत्यादि । अतश्च यदा प्रस्थानात्प्रभृति तदुदन्तं सर्वमबोधि तदाधुना श्रुतवानिति वचनस्यानवसरः । तेन कथं नगरनिकटं प्राप्तो हरिर्युधिष्ठिरेणाज्ञायि इति निर्वर्णितं कविनेति न चोद्यमिति भावः । तपो धर्मः । अहश्च निशा चाहर्निशं, समाहारे द्वन्द्वः "रोऽसुपि" । नृपतेरिति षष्ठी शेषे । तदादीति निपातः । समचारीति भावे लुङ् । वार्तयेति कर्तरि तृतीया । सर्गेऽत्र सुमङ्गलीवृत्तम् । "द्विगणौ सजौ सहगुरू सुमङ्गली"ति ॥ १ ॥

यदुभर्तुरागमनलब्धजन्मनः
प्रमदादमानिव पुरे महीयसि ।
सहसाधनः सह ततोऽनुजन्मभि-
र्वसुधाधिपोऽभिमुखमस्य निर्ययौ ॥ २ ॥

ततोऽनन्तरमस्य हरेर्भ्रातृसहितो युधिष्ठिरोऽभिमुखं निर्ययौ अग्रतो जगाम । उत्प्रेक्ष्यते-विस्तीर्णेऽपि स्वनगरेऽमानिवावर्तमान इव । विशालं चेत्पुरं कथं न मातीत्याह-हरिसंप्राप्तिसमुत्थात् संमदात् । सह साधनेन बलेन वर्तते इति सहसाधनः "तेन सहेति तुल्यप्रयोगे" इति समासः । "वोपसर्जनस्ये" ति सभावो विभाषितः । अनु पश्चाज्जन्मोत्पत्तिर्येषां तेऽनुजन्मानः कनीयांसः ॥ २ ॥

रभसप्रचक्रगुरुचक्रदुन्दुभि-
ध्वनिभिर्जनस्य बधिरीकृतश्रुतेः ।
समवादि वक्तृभिरभीष्टसंकथा-
प्रकृतार्थशेषमथ हस्तसंज्ञया ॥ ३ ॥

अभीष्टायाः सङ्कथायाश्चर्चायाः प्रकृतो योऽर्थस्तस्य शेषं भागो वक्तृभिर्जनस्य हस्तसंज्ञया करसंकेतेन समवादि सम्यगुक्तम्, यदि वा समपादि संपादितम् । वाचैव कथं नोक्तमित्याह-बधिरीकृतश्रुतेर्जडितकर्णस्य । केन रभसेनौत्सुक्येन प्रचक्रं चलितं गुरु विस्तीर्णं यच्चक्रं सैन्यं, यदि वा कुरुचक्रं पाण्डवबलं तस्य ये दुन्दुभयस्तद्ध्वनिभिः । शिष्यते इति शेषम् ॥ ३ ॥

अपदान्तरं च परितः क्षितिक्षिता-
मपतन् द्रुतभ्रमितहेमनेमयः ।
जवमारुताञ्चितपरस्परोपम-
क्षितिरेणुकेतुवसनाः पताकिनः ॥ ४ ॥

---

१ 'कु' ड. पाठः । २ 'पा' ड. पाठः ।

अपदान्तरमनन्तरं क्षितिभृतां पताकिनो रथाः परितः समन्तादपतन् चेलुः। चशब्द एककालत्वसूचनार्थः । यदैव दुन्दुभयस्ताडितास्तदैवापतन्नित्यर्थः । कीदृशा रथाः द्रुतं त्वरितं भ्रमिता विवृत्ता हेमनेमयः काञ्चनप्रधयो येषाम्, तथा जवमारुतेन वेगवातेनाञ्छितानि प्रेरितानि परस्परोपमान्यनेकवर्णत्वादन्योन्यसदृशानि क्षितिरेणुकेतुवसनानि भूधूलिचिह्नांशुकानि येषां ते तथोक्ताः। अपदान्तरमित्यन[१]न्तरम् । केचित्तु अविद्यमानं पदानामन्तरं रन्ध्रं यत्र तदपदान्तरं गमनमाहुः । मरुदेव मारुतः । "प्रज्ञादित्वादण्" ॥ ४ ॥

द्रुतमध्वनन्नुपरिपाणिवृत्तयः
पणवा इवाश्वचरणाहता भुवः ।
ननृतुश्च वारिधरधीरधोरण-
ध्वनिधृष्टकूजितकलाः कलापिनः ॥ ५ ॥

द्रुतं लाघवेन तुरगखुरैस्ताडिता भुवो दध्वनुः शब्दायन्ते स्म । के इवेत्याह–पणवा मृदङ्गा इव । कीदृशाः उपरिपाणेस्तालविशेषस्य वृत्तिर्व्यापारो येषु ते उपरिपाणिवृत्तयः । यथोपरिपाणिताडिताः पणवा द्रुतं द्रुतलयान्वितं ध्वनन्ति तथा भुवो दध्वनुरित्यर्थः । द्रुतो लयविशेषः । तथा चोक्तम्–"अथ त्रयो लयाः सिद्धा द्रुतमध्यविलम्बिताः"इति॥ उपरिपाणिरपि तालविशेषः । उक्तं च "समोपर्यर्धपूर्वस्तु पाणिस्त्रिविध उच्यते। तत्र तालं च पाणिं च प्राहुरेकं मनीषिणः॥ समो वोपरि वा तस्य यद्वाधः संस्थितो भवेत् । वाद्यं पदानि वर्णो वा तदेवमभिधीयते"इति ॥ ननृतुश्चेत्यादि, न केवलं भुवोऽध्वनन् यावच्छिखिनोऽनृत्यन्निति चार्थः । कीदृशाः कलापिनः वारिधरधीरो घनाघनगम्भीरो यो धोरणानां रथतुरगादियानानां ध्वनिश्चीत्कारगलगर्जितहेषितादिस्तेन धृष्टं मुखरं यत्कूजितं वादितं तेन कला मधुराः । ते हि मेघगर्जितभ्रान्त्या मधुरं केकायमानाः प्रमदान्नृत्यन्ति । अन्योऽपि पणवादिषु वादितेषु नृत्यति ॥ ५ ॥

व्रजतोरपि प्रणयपूर्वमेकतां
कुकुराधिनाथकुरुराजसैन्ययोः ।

---

१ 'नर्था' क. ख. ग. पाठः ।

**रुरुषे विषाणिभिरनुक्षणं मिथो**

**मदमूढबुद्धिषु विवेकिता कुतः ॥ ६ ॥**

कुकुराधिनाथो यदुपतिः शौरिः कुरुनाथो युधिष्ठिरस्तयोः सैन्ये बले ये तयोः प्रीतिपूर्वकमप्येकतामभेदं मिश्रीभावं गच्छतोर्दन्तिभिरसकृदन्योन्यं रुरुषे कुपितम्। अत्रैवार्थान्तरन्यासः–मदेन मूढा बुद्धिर्येषां तेषां कुतो विवेकिता युक्तायुक्तविचारः। मत्तानां विचारो न भवतीत्यर्थः। ते च समदाः। मदो दर्पो दानं च। रुरुषे इति भावे ॥ ६ ॥

**अवलोक एव नृपतिः स्म दूरतो**

**रभसाद्रथादवरीतुमिच्छतः।**

**अवतीर्णवान् प्रथममात्मना हरे-**

**र्विनयं विशेषयति संभ्रमेण सः ॥ ७ ॥**

स नृपतिरजातशत्रुर्हरेर्विनयमाचारं पेशलत्वं संभ्रमेणादरेण त्वरया विशेषयति स्मातिशिश्ये "लट् स्मे"। कृष्णेन यः प्रश्रयोऽकारि ततोऽधिकमस्यासौ चकारेत्यर्थः। कीदृशस्य हरेरिति तद्विनयं तावदाह–दूरतो दूरादवलोक एव नृपदर्शनमात्रे सत्येव रभसादौत्सुक्येन रथादवतरीतुमिच्छतोऽवतितीर्षोः। नृपतिस्तु कीदृश इति विनयातिशयमाह–प्रथमं पूर्वतरमेवात्मना स्वयमवतीर्णवानवतीर्णो व्यशेषयदिति सम्बन्धः। अतश्च संभ्रमेण विनयं जिगाय। केचित्तु नृपतिः स, सौहृदेन चेति पठन्ति, एवं च व्याचक्षते। नृपतिर्हरेः प्रथममवात्मनावतीर्णवान् पश्चात्तु हरिरिति प्रथमग्रहणात् प्रतीयत एव। नन्वसौ सार्वभौमो ज्येष्ठश्च तत् कस्मात् कनीयसो हरेः प्रथममवतीर्णवानित्यर्थान्तरन्यासमाह–यः सन् साधुः स सौहृदेन सुहृद्भावेन विनयं प्रश्रयं विशेषयति, सौहार्दात् प्रथममवातरत् नतु ऊनत्वादित्यर्थः। चिन्त्यश्चात्रोभयपदवृद्ध्यभावः "हृद्भगसिन्ध्वन्ते" इति ॥ ७ ॥

**वपुषा पुराणपुरुषः पुरः क्षितौ**

**परिपुञ्ज्यमानपृथुहारयष्टिना।**

भुवनैर्नतोऽप्यरहिताप्यगौरवः
प्रणनाम नाम तनयं पितृष्वसुः ॥ ८ ॥

स पुराणपुरुषश्चिरन्तनमुनिः परमात्मा पितृष्वसुस्तनयं पैतृष्वस्रीयं कौन्तेयं वपुषा शिरसा पुरः पूर्वमग्रे वा प्रणनाम नमश्चकार। नामशब्दः प्रकाश्ये। सर्वप्रकटमेव शिरसा ननामेत्यर्थः। कीदृशोऽसौ भुवनैर्जगद्भिर्नतः। ननु यद्यसौ सर्वज्येष्ठो जगत्पूज्यश्च तत्किमादौ प्रणनामेत्याह–अरहितमत्यक्तमाप्यानां स्वजनानां गौरवं येनासौ अरहिताप्यगौरवः। ज्येष्ठस्य हि राज्ञो प्रणामे बन्धुगौरवं न स्यात्। कीदृशेन वपुषा क्षितौ परिपुञ्जयमाना प्रणामवशात् पिण्डीभवन्ती पृथ्वी दीर्घा हारयष्टिर्मुक्तालता यस्य। आप्या आप्ताः। "ऋहलोर्ण्यत्" ॥ ८ ॥

मुकुटांशरञ्जितपरागमग्रतः
स न यावदाप शिरसा महीतलम् ।
क्षितिपेन तावदविलम्बितक्रमं
भुजपञ्जरेण रभसादगृह्यत ॥ ९ ॥

स हरिर्मूर्ध्ना भूतलमग्रतो यावन्न प्राप तावदेव राज्ञा बाहुचक्रेणौत्सुक्याद्-गृह्यत गृहीतः। अनपेक्षितः क्रमः परिपाटी यत्र ग्रहे। किल कृतप्रणामः कनीयानालिङ्ग्यः। कीदृशं भूतलं मुकुटांशुभिर्मौलिमणिमरीचिभी रञ्जितपरागं छुरितरेणुम् ॥ ९ ॥

न ममौ कवाटतटविस्तृतं तनो-
र्मुरवैरिवक्ष उरसि क्षमाभुजः ।
भुजयोस्तथापि युगलेन दीर्घयो-
र्विकटीकृतेन परितोऽभिषस्वजे ॥ १० ॥

क्षितिपस्य वक्षसि मुरारिवक्षो न ममौ न ववृते, यतस्तत् कवाटतट-वि[१]स्तृतं, तस्य तु तनोः कृशस्य दीक्षाक्षामस्य। कथं तर्ह्याश्लिक्षदित्याह–तथापि

१ 'विकटं' ग. पाठः ।

विकटीकृतेन प्रसारितेन दीर्घयोर्जानुस्पृशोर्भुजयोर्युगेन परितोऽभिषस्वजे समन्तादालिलिङ्गे, इति राज्ञ आजानुबाहुत्वं हरेश्च पीनवक्षस्त्वमुक्तम्। विकटं विशालम्। अभिषस्वजे इति कर्तरि कर्मणि वा ॥ १० ॥

गतया निरन्तरनिवासमध्युरः
परिनाभि नूनमवमुच्य वारिजम् ।
कुरुराजनिर्दयनिपीडनाभया-
न्मुखमध्यरोहि मुरविद्विषः श्रिया ॥ ११ ॥

मुरारेर्मुखं श्रिया लक्ष्म्याध्यरोहि आरूढमधिश्रितं, नृपाश्लेषतोषाच्छोभायुक्तमभूदित्यर्थः। कीदृश्या श्रिया परिनाभि नाभौ वारिजमवमुच्य हित्वा अध्युर उरसि नितरां निवासं स्थानं गतया प्राप्तया वक्षःस्थलस्थितयेत्यर्थः। पूर्वजन्मनि हि भगवतो नाभौ पद्ममभूत्, संप्रति तु वक्षः पद्मायां वसतिः, अतश्चोत्प्रेक्ष्यते–नूनं निश्चितं कुरुराजनिर्दयनिपीडनाभयात् युधिष्ठिरगाढाश्लेषरुजात्रासान्मुखमध्यरोहि, सा हि वक्षोऽवस्थित्या परिष्वङ्गसंमर्दमाशङ्कते। श्रीशब्दस्योभयार्थत्वान्मुखस्य च प्रहृष्टत्वादूहः। उरस्यध्युरः। नाभौ परिनाभि। सप्तम्यर्थेऽव्ययीभावः। निपीडनेति "ण्यासश्रन्थोर्युच्"। अध्यरोहीति कर्मणि ॥ ११ ॥

शिरसि स्म जिघ्रति सुरारिबन्धन-
च्छलवामनं विनयवामनं तदा ।
यशसेव वीर्यविजितामरद्रुम-
प्रसवेन वासितशिरोरुहे नृपः ॥ १२ ॥

सुरारेर्बलेर्बन्धनार्थे छलेन मायया यो वामनो ह्रस्वः स विष्णुरेवमुच्यते, तं तदा राजा मूर्धनि जिघ्रति स्माघ्रासीदित्यर्थः। ननु यदि भगवान् बलिबन्धनच्छलेनैव वामनो ननु स्वभावेन तत्कथमुन्नतो भवन्नमतीत्याह–विनयवामनमाचारप्रह्वम्। कीदृशे शिरसि पराक्रमापहृतपारिजातपुष्पपूगेन वासिताशिरोरुहे सुरभितकेशे। सुरभि किल जेघ्रीयते। उत्प्रेक्ष्यते–यशसेव सुरतरुहरणाद्यद्यशस्तेनेव वासिते इत्यर्थः। सुरभि सितं च यश इति महाकवीनामाचारः ॥ १२ ॥

सुखवेदनाहृषितरोमकूपया
शिथिलीकृतेऽपि वसुदेवजन्मनि।
कुरुभर्तुरङ्गलतया न तत्यजे
विदलत्कदम्बनिकुरम्बचारुता ॥ १३ ॥

राज्ञस्तन्वा विदलत्कदम्बनिकुरम्बचारुता विदलतो विकसतः कदम्बकुसुमवृन्दस्य चारुता शोभा न तत्यजे न त्यक्ता, कण्ठकिता तनुरभूदित्यर्थः। कदाचिद्भगवांस्तेनाश्लिष्टो भवेदित्याह—वासुदेवे शिथिलीकृते मुक्तेऽपि। कथं तर्हि कण्ठकितेत्याह—सुखस्योपजोषस्य वेदनयाऽनुभवेन हृषिता विकासं नीता रोमकूपा रोमरन्ध्राणि यस्याः। "हृषेर्लोमस्वि" तीट् ॥ १३ ॥

इतरानपि क्षितिभुजोऽनुजन्मनः
प्रमनाः प्रमोदपरिफुल्लचक्षुषः।
स यथोचितं जनसभाजनोचितान्
प्रसभोद्धृतासुरसभोऽसभाजयत् ॥ १४ ॥

स भगवानन्यानपि क्षितिभुजो नृपस्यानुजन्मनोऽनुजान् भीमार्जुनयमान् यथोचितं यथाप्रधानमसभाजयत् प्रीत्यावाद्राक्षीत्। भीमं पूर्वाभिवादनेनार्जुनं हासपूर्वं माद्रेयावाश्लेषपुरःसरमिति यथोचितार्थः। कीदृशांस्तान् प्रमोदपरिफुल्लचक्षुषो हर्षविकसितनेत्रान्। तथा जनानां सभाजने पूजायामुचितान् योग्यान् लोकपूज्यान्। स कीदृशः प्रमनाः प्रहृष्टः, तथा प्रसभं बलादुद्धृता उन्मूलिता असुरसभा दैत्यकुलं येन ॥ १४ ॥

समुपेत्य तुल्यमहतः शिलाघनान्
घनपक्षदीर्घतरबाहुशालिनः।
परिशिश्लिषुः क्षितिपतीन् क्षितीश्वराः
कुलिशात्परेण गिरयो गिरीनिव ॥ १५ ॥

अन्येऽपि भूपाः समुपेत्य संगत्य राज्ञः परिशिश्लिषुरवागूहन् । कीदृशान् तुल्याश्च ते महान्तस्तांस्तुल्यमहतः, अनुरूपानुन्नतांश्चेत्यर्थः । "कृत्यतुल्याख्या अजात्या" । शिलाघनानश्मविकटान्, घनपक्षान् गाढसहायान् दीर्घतरबाहुशालिन आजानुभुजान् । क्षितीश्वराणामपि विभक्तिविपरिणामेनैतानि विशेषणानि, अन्यथा तुल्यत्वं न स्यात् । के कानिवाश्लिक्षन्नित्याह–कुलिशात्परेण वज्रात् पूर्वमद्रयोऽद्रीनिव । कुलिशग्रहेण कार्यं पक्षच्छेदो गृह्यते । तानपि तुल्यमहतश्च, शिलाभिश्च घनान्, घनैश्च पक्षैः पतत्रैरेव बाहुभिः शालिनः । परेणेति निपातः ॥ १५ ॥

इभकुम्भतुङ्गघटितेतरेतर-
स्तनभारदूरविनिवारितोदराः ।
प्रतिफुल्लगण्डफलकाः परस्परं
परिरेभिरे कुकुरकौरवस्त्रियः ॥ १६ ॥

कुकुरस्त्रियो वृष्णिनार्यः सत्यभामाद्याः कौरवस्त्रियः पाण्डवनार्यो द्रौपद्याद्यास्ता अन्योन्यमाश्लिक्षन् । कीदृश्यः इभकुम्भा इव तुङ्गा इतरेतरं घटिताः सम्बद्धा ये स्तनभारास्तैर्दूरमत्यर्थं विनिवारितानि वियोजितान्युदराणि मध्यानि यासां तास्तथोक्ताः, पीनस्तन्यः कृशोदर्यश्चेत्यर्थः । तथा प्रतिफुल्लौ विकसितौ गण्डफलकौ यासामिति प्रहर्षकथनम् ॥ १६ ॥

रथवाजिपत्तिकरिणीसमाकुलं
तदनीकयोः समगत द्वयं मिथः ।
दधिरे पृथक्करिण एव दूरतो
महतां हि सर्वमथवा जनातिगम् ॥ १७ ॥

तत्सेनयोर्द्वयं युग्मं मिथोऽन्योन्यं समगत समगंस्त मिलितम् । कीदृशं स्यन्दनतुरगपदातिहस्तिनीव्याप्तम् । द्विपाः पुनर्दूरत एव पृथग्दधिरे धृताः, युद्धभयात्तेऽन्योन्यं नाश्लिक्षन् न मेलिता इत्यर्थः । किमेतच्चित्रम् । यतो महतामुन्नतानां सर्वमेव किञ्चिज्जनातिगं लोकातीतम् । ते च महान्तो महा-

प्रमाणत्वात्, अतो जनातिगा जनमध्ये न निवेशिताः। अथवेति पूर्वोक्तस्याक्षेपार्थः। समगतेति कर्तरि लुङ्। "वा गम" इति सिचः कित्त्वात् "अनुदात्तोपदेशे"ति मलोपः। "ह्रस्वादङ्गादि"ति सिज्लुक्। दधिरे इति कर्मणि ॥ १७ ॥

अधिरुह्यतामिति महीभृतोदितः
कपिकेतनार्पितकरो रथं हरिः।
अवलम्बितैडबिडपाणिपल्लवः
श्रयति स्म मेघमिव मेघवाहनः ॥ १८ ॥

अथ हरिः स्यन्दनं रथं श्रयति स्मारुरोह। कीदृशः महीभृता युधिष्ठिरेणाधिरुह्यतामित्युदित उक्तोऽनुज्ञातः। तथा कपिकेतनस्यार्जुनस्यार्पितो योजितः करो येन। राज्ञोऽनुज्ञामवाप्यार्जुनं चावष्टभ्य कृष्णः स्यन्दनमारोहदित्यर्थः। कः कीदृशः किं यथा श्रयतीत्याह–अवलम्बितैडबिडपाणिपल्लवोऽवष्टब्धधनदकरकिसलयो यथा मेघवाहनो रुद्र इन्द्रो वा मेघं श्रयति। यस्य हि[1] यो वाहनं सोऽवश्यमेव तमधिरोहति। इडबिडोऽपत्यमैडबिडो वैश्रवणः। व्युत्पत्तिमात्रमेतत् ॥ १८ ॥

रथमास्थितस्य च पुराभिवर्तिन-
स्तिसृणां पुरामिव रिपोर्मधुद्विषः।
अथ धर्ममूर्तिरनुरागभावितः
स्वयमादित प्रवयणं प्रजापतिः ॥ १९ ॥

मुरारेश्च रथमारुह्य पुरीं यियासोरनन्तरं स्वयमेव प्रजापतिः राजा प्रवयणं प्रतोदमादित जग्राह, यतोऽनुरागभावितः स्नेहव्याप्तः प्रेमप्रवणः। कः प्रजापतिरित्याह–धर्मो मूर्तिर्यस्य स धर्ममूर्तिर्युधिष्ठिरः। कस्य क इव प्रवयणं जग्राहेत्याह–यथा तिसृणां पुरां रिपोर्मुरारेः सर्वदेवमयं रथमास्थितस्य पुराभिवर्तिनस्त्रिपुरं दिधक्षोः प्रजापतिर्ब्रह्मा स्वयं प्रवयणमादित। हरस्य हि त्रिपु-

---

१ 'मेघो' क. ख. ग. पाठः।

रवासिनो दानवान् जिघांसोरात्मभूः सारथिरभूत् । उक्तं च–"ब्रह्माणं सारथिं कृत्वे"ति । सोऽपि धर्ममूर्तिः पुण्यदेहोऽनुरागेण च लौहित्येन व्याप्तः । चशब्दः पूर्वापेक्षया क्रियान्तरसमुच्चयार्थः । आदितेति "स्थाघ्वोरिच्चे"ति । प्रवयणमिति "अजेर्व्यघञपोः" ॥ १९ ॥

**शनकैश्च तस्य तनुजालकान्तर-**
**त्वरितक्षपाकरकरोत्कराकृतिः ।**
**पृथु फेनकूटमिव निम्नगापते-**
**र्मरुदस्य सूनुरधुवत् प्रकीर्णकम् ॥ २० ॥**

यथा निम्नगापतेरब्धेः फेनकूटं डिण्डीरराशिं मरुद्वायुर्धुनोत्येवमस्य वायोः सूनुः पुत्रो भीमस्तस्य हरेः शनैः प्रकीर्णकं चामरमधुवदचालयत् । कीदृशं तनुः सूक्ष्मो जालकान्तरैर्गवाक्षविवरैः त्वरितः प्रविष्टो यः क्षपाकरकरोत्करः शशिकरनिकरस्तस्येवाकृतिः संस्थानं यस्य तत्तथोक्तम् । तनुत्वं वात्र जालकविशेषणम् । तथा पृथु दीर्घम् । फेनकूटमप्येवंविधम् ॥ २० ॥

**विकसत्कलायकुसुमासितद्युते-**
**रलघूडुपाण्डु जगतामधीशितुः ।**
**यमुनाह्रदोपरिगहंसमण्डल-**
**द्युतिजिष्णु जिष्णुरभृतोष्णवारणम् ॥ २१ ॥**

जगतामधीशितुः कृष्णस्य जिष्णुरर्जुन उष्णवारणमातपत्रमभृत दध्रे । कीदृशस्य विकसतः कलायाख्यस्य कुसुमस्येवासिताऽसिक्नी द्युतिर्यस्य । छत्रं त्वलघु महदुडु ताराचक्राख्यं तदिव पाण्डु धवलम्, अत एव यमुनाह्रदोपरिगं कालिन्दीप्रवाहपृष्ठस्थं यद्धंसमण्डलं सितच्छदचक्रं तस्य या द्युतिः कान्तिस्तां जिष्णु परिभावि । कृष्णस्य काष्ण्यार्द्यमुनोपमानम् । उपरि गच्छतीत्युपरिगः । "गमेः सुपी"ति डः ॥ २१ ॥

**पवनात्मजेन्द्रसुतमध्यवर्तिना**
**नितरामरोचि रुचिरेण चक्रिणा ।**

दधतेव योगमुभयग्रहान्तर-

स्थितिकारितं दुरुधुराख्यमिन्दुना ॥ २२ ॥

हरिणा नितरामरोचि शोभितमिति भावे लकारः । कीदृशेन भीमार्जुनमध्यस्थेन तथा रुचिरेण भास्वता । केनेवारोचि इन्दुनेव । कीदृशेन दुरुधुराख्यं दुरुधुरानामानं योगं बिभ्रता । कीदृशमिति तत्स्वरूपमाह–उभयोर्ग्रहयोः सूर्यमहीतनययोर्यदन्तरं मध्यं तत्र या स्थितिरवस्थानं तया कारितं निष्पादितम् । द्वितीयद्वादशग्रहद्वयमध्यस्थस्य हीन्दोर्दुरुधुरायोगो भवति । उक्तं च–"रविवर्जं द्वादशगैरनफा चन्द्राद् द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधुरा केमद्रुमसंज्ञकोऽतोऽन्य"इति ॥ अत्र च संस्थानमात्रं दीप्तिमत्त्वं च विवक्षितं न तु सावर्ण्यमितीन्दुः कृष्णस्योपमानं न विरुध्यते । एवमन्यत्र ॥ २२ ॥

वशिनं क्षितेरयनयाविवेश्वरं

नियमो यमश्च नियतं यतिं यथा ।

विजयश्रिया वृतमिवार्कमारुता-

वनुसस्रतुस्तमथ दस्रयोः सुतौ ॥ २३ ॥

अथ तं हरिं दस्रयोः सुतौ नासत्यात्मजौ नकुलसहदेवावनुसस्रतुः । कौ कमिवेत्याह–वशिनं जितेन्द्रियं क्षितीश्वरं यथा अयनयौ दैवनीती । अनुकूलं हि दैवमयः, षाड्गुण्यं नयः । तथा नियतं संयमिनं यतिं मुनिं यथा नियमयमौ । नियमोऽनुष्ठेयरूपः शौचादिः, यमो निषिद्धवर्जनमहिंसादिः । उक्तं च–"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसन्तोषस्वाध्यायेश्वरप्रणिधानानि नियमाः" । तथा विजयश्रिया विजयलक्ष्म्या वृतं जिघृक्षितं यथार्कमारुतौ रविवायू अनुसरतः । यदा किल तौ पराङ्मुखौ भवतस्तदा लक्ष्म्या वरणात् सामर्थ्यादेव जयसद्भावः । अनेकोपमानोपादानं भगवतः सर्वधर्मख्यापनार्थम् । नय इति "कृत्यल्युटो बहुल"मित्यच् ॥ २३ ॥

मुदितैस्तदेति दितिजन्मनां रिपा-

वविनेयसंभ्रमविकासिभक्तिभिः ।

---

१ 'ध' क. ख. ग. पाठः । २ 'वधार' क. ख. ग. पाठः ।

उपसेदिवद्भिरुपदेष्टरीव तै-
र्ववृते विनीतमविनीतशासिभिः ॥ २४ ॥

तैः पाण्डवैर्दैत्यारौ विष्णौ विनीतं ववृते सविनयमासितम् । भावे लकारः । कीदृशैस्तैर्मुदितैर्हृष्टैस्तथाविनेयोऽकृत्रिमो यः संभ्रमस्त्वरादरस्तेन विकासिनी प्रसरन्ती भक्तिर्येषाम् । सहजो ह्यादरो भक्तिं प्रकाशयति कृत्रिमस्तूपचारम् । अविनीयेति तु पाठे अशिक्षित्वा विनीतं ववृते इति योजना । अविनीतशासिभिर्दुराचारहन्तृभिः । शसु हिंसार्थः । कैर्यथा क्व विनीतमास्यते इत्याह–उपदेष्टरि गुरौ यथा उपसेदिवद्भिरन्तेवासिभिः । तेऽपि सहजभक्तयो विनीतवासिनश्च । विकासिभक्तिभिरित्यविकासनिवृत्तिपरायां चोदनायां स्त्रीत्वेन विना पूर्वपदार्थो विवक्षितः इति नापशब्दोऽयमन्यथा तु "अपूरणीप्रियादिष्वि"ति पुंवद्भावनिषेधः स्यात् ॥ २४ ॥

गतयोरभेदमिति सैन्ययोस्तयो-
रथ भानुजह्नुतनयाम्भसोरिव ।
प्रतिनादितामरविमानमानकै-
र्नितरां मुदा परमयेव दध्वने ॥ २५ ॥

तयोर्बलयोरित्थमभेदमैक्यं यमुनाजाह्नव्योरिव प्राप्तयोरथानकैः पटहैरत्यर्थं दध्वने, मिलितयोस्तयोर्भेर्योऽवाद्यन्तेत्यर्थः । उत्प्रेक्ष्यते–परमया महत्या मुदेव तुष्ट्येव । सति हि हर्षे मुखरेण भूयते । कथं दध्वने प्रतिनादितानि अनुध्वनितानि अमरविमानानि सुरधिष्ण्यानि यत्र ॥ २५ ॥

मखमीक्षितुं क्षितिपतेरुपेयुषां
परितः प्रकल्पितनिकेतनं बहिः ।
उपरुध्यमानमिव भूभृतां बलैः
पुटभेदनं दनुसुतारिरैक्षत ॥ २६ ॥

तत् क्षितिपतेः पुटभेदनं स्थानीयमिन्द्रप्रस्थं भगवान् हरिरैक्षतादर्शत् । कीदृशं यज्ञं द्रष्टुं प्राप्तानां राज्ञां सैन्यैर्बहिर्बाह्यदेशे परितः समन्तात् प्रकल्पितनिकेतनं रचितावसतिकम् । अतश्चोत्प्रेक्ष्यते–उपरुध्यमानमिव वेष्ट्यमानमिव । यस्य किल पुरस्य परैरुपरोधः क्रियते तद्बहिः प्रकल्पितनिकेतनं भवति । पुटभेदनं मूलनगरम् ॥ २६ ॥

प्रतिशब्दपूरितदिगन्तरः पतन्
पुरगोपुरं प्रति स सैन्यसागरः।
रुरुचे हिमाचलगुहामुखोन्मुखः
पयसां प्रवाह इव सौरसैन्धवः॥ २७॥

स बलोदधिः शुशुभे। कीदृशः पुरगोपुरं प्रति नगरद्वारसंमुखं पतन् प्रविशन्, तथा प्रतिश्रुत्कभरिताशाविवरः। क इवाभादित्याह—तुषाराद्रिदरीरन्ध्राभिमुखः सौरसैन्धवो गाङ्गस्तोयपूर इव, सोऽपि प्रतिरवपूरितदिगन्तः। सुरसिन्धोरयं सौरसैन्धवः "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः॥ २७॥

असकृद्गृहीतबहुदेहसम्भव-
स्तदसौ विभक्तनवगोपुरान्तरम्।
पुरुषः पुरं प्रविशति स्म पञ्चभिः
सममिन्द्रियैरिव नरेन्द्रसूनुभिः॥ २८॥

असौ पुरुषो भगवांस्तत्पुरमिन्द्रप्रस्थं प्रविवेश। कीदृशोऽसकृत् भूयोभूयो गृहीत आश्रितो रामादिरूपेण बहूनां देहानां संभवो जन्म येन। पुरं कीदृशं विभक्तानि विभागेन स्थापितानि नवानां प्रत्यग्राणां गोपुराणां द्वाराणामन्तराणि मध्यानि यत्र, सुभक्तकक्ष्याप्रदेशमित्यर्थः। किं केवलं प्राविक्षन्नेत्याह—पञ्चभिः पाण्डवैः सह। कैरिवेत्याह—इन्द्रियैरिवेति। यथा पुरुष आत्मा चक्षुरादिभिरिन्द्रियैः सार्धं पुरं शरीरं प्रविशति, सोऽप्यसकृद्गृहीतबहुदेहसंभवः, आत्मा हि देहाद्देहान्तरं संचरति। पुरमपि विभक्तनवद्वारं विभक्तानि नवसंख्यानि गोपुराणि द्वाराणि पायूपस्थास्यश्रोत्राक्षिघ्राणानि यस्य। पुरशब्देनात्र द्वारमात्रं विवक्षितम्॥ २८॥

अन्यच्च कीदृक् पुरमित्याह—

तनुभिस्त्रिनेत्रनयनानलेक्षित-
स्मरविग्रहद्युतिभिरद्युतन् नराः।

**प्रमदाश्च यत्र खलु राजयक्ष्मणः**
**परतो निशाकरमनोहरैर्मुखैः ॥ २९ ॥**

यत्र पुरे नरास्तनुभिर्देहैर्नार्यश्च मुखैरद्युतन् बभुः । कीदृशीभिस्तनुभिः त्रिनेत्रस्य स्मरारेस्तृतीयेन चक्षुषाऽनवीक्षितोऽलक्ष्यीकृतो यः स्मरविग्रहः कामकायस्तस्येव द्युतिः कान्तिर्यासाम्, अदग्धकन्दर्परम्याभिरित्यर्थः । मुखैः कीदृशैः राजयक्ष्मणः क्षयव्याधेः परतः पूर्वं यो निशाकरश्चन्द्रस्तद्वन्मनोरमैः, अखण्डमण्डलेन्दुनिभैरित्यर्थः । इति सर्वेषां रूपवत्त्वमुक्तम् । अद्युतन्निति "द्युद्भ्यो लुङि" ॥ २९ ॥

**अवलोकनाय सुरविद्विषां द्विषः**
**पटहप्रणादविहितोपहूतयः ।**
**अवधीरितान्यकरणीयसत्वराः**
**प्रतिरथ्यमाजिहत पौरयोषितः ॥ ३० ॥**

पौरयोषितो नागरिकाः प्रतिरथ्यं मार्गं मार्गमाजिहतायुः । किमर्थं मुरारेरवलोकनाय देवं द्रष्टुम् । कथं तदागमनमजानन्नित्याह—यतो दुन्दुभिध्वनिकृताह्वाना अत एवोत्सृष्टकार्यान्तराः सत्वराश्च । आजिहतेति ओहाङो लुङ् । "भृञामित्, अदभ्यस्तात्" । पुरे भावाः पौराः । अवपूर्वस्य धीरशब्दस्य ण्यन्तस्य क्तेऽवधीरितमिति रूपम् ॥ ३० ॥

तमेव कार्यान्तरत्यागमाह—

**अभिवीक्ष्य सामिकृतमण्डनं यतीः**
**कररुद्धनिर्लसदुरोंशुकाः स्त्रियः ।**
**दधिरेऽधिभित्तिपटहप्रतिस्वनैः**
**स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ ३१ ॥**

अधिभित्ति भित्तिषु ये पटहप्रतिस्वना आनकप्रतिश्रुत्कास्तैः करणभूतैः सौधपङ्क्तयो हर्म्यावलयः स्फुटं व्यक्तमट्टहासमिव दधुः सशब्दं जहसुरित्यर्थः ।

किं कृत्वेति हासस्य कारणमाह—सामिकृतमण्डनमर्धमेव प्रतिकर्म कृत्वा यतीर्गच्छन्तीर्नायिका आलोक्यातश्च त्वरावशात् करेणैव रुद्धमवष्टब्धं निर्लसद् भ्रश्यदुरोंशुकं स्तनाम्बरं याभिस्तास्तथोक्ताः । अतश्चोत्प्रेक्ष्यते—सौधपङ्क्तय आसां हसन्तीवेति शौक्ल्यान्मुखरत्वाच्च हासारोपः । सामिकृतं मण्डनं यत्रेति क्रियाविशेषणम् । दधिरे इति कर्तरि ॥ ३१ ॥

**रभसेन हारपददत्तकाञ्चयः**
**प्रतिमूर्धजं निहितकर्णपूरकाः ।**
**परिवर्तिताम्बरयुगाः समापतन्**
**वलयीकृतश्रवणकुण्डलाः स्त्रियः ॥ ३२ ॥**

नार्यः समापतन् भगवद्दर्शनार्थमाययुः । कीदृश्यः रभसेन त्वरया हारपदे कण्ठे कृतमेखलाः, तथा प्रतिमूर्धजं केशेषु कृतकर्णपूरः, परिवर्तितं चाम्बरयुगं याभिः, अधस्तनं वास उपरि प्रावृतं तत्रत्यं च जघने याभिरित्यर्थः । वलयीकृतं भुजे निहितं श्रवणकुण्डलं याभिरिति, रभसेनेति प्रत्येकमभिसम्बध्यते ॥ ३२ ॥

**व्यतनोदपास्य चरणं प्रसाधिका-**
**करपल्लवाद्रसवशेन काचन ।**
**द्रुतयावकैकपदचित्रितावनिं**
**पदवीं गतेव गिरिजा हरार्धताम् ॥ ३३ ॥**

काचिन्नारी पदवीं पद्धतिं द्रुतयावकैकपदचित्रितावनिं व्यतनोच्चकार । द्रुतयावकं सरसालक्तकं यदेकं पदं क्रमस्तेन चित्रितेवावनिर्यस्याम् । किं कृत्वा रसवशेन कौतुकबलात् प्रसाधिकाकरपल्लवात् चेटीपाणिदलाच्चरणमपास्याक्षिप्य । अतश्चैकस्य पदस्य चित्रितत्वादुत्प्रेक्ष्यते—गिरिजा पार्वती हरार्धतां गतेव । गौरीश्वरस्य ह्येकं पदं सालक्तकं भवति ॥ ३३ ॥

**व्यलगन् विशङ्कटकटीरकस्थली-**
**शिखरस्खलन्मुखरमेखलाकुलाः ।**

भवनानि तुङ्गतपनीयसंक्रम-

क्रमणक्कणत्कनकनूपुराः स्त्रियः ॥ ३४ ॥

नार्यो भवनानि प्रासादान् व्यलगन्नारुरुहुः । कीदृश्यः विशङ्कटा विकटा याः कटीरकस्थल्यो जघनतट्यस्तासां यच्छिखरं पीनो भागस्तत्र स्खलन्त्यश्चलन्त्योऽत एव मुखराः शिञ्जाना या मेखला रशनास्ताभिराकुलाः सायासा इव, तथा तुङ्गा उन्नता ये तपनीयसंक्रमाः कनकसोपानानि तत्र तैर्वा यत् क्रमणमारोहणं तेन क्वणन्ति झणझणायमानानि कनकनूपुराणि हेममञ्जीराणि यासाम् । संक्रम्यतेऽनेनेति संक्रमः सोपानम् । विशङ्कटं विशालं "वेः शालच्छङ्कटचौ" ॥ ३४ ॥

अधिरुक्ममन्दिरगवाक्षमुल्लसत्

सुदृशो रराज मुरजिद्दिदृक्षया ।

वदनारविन्दमुदयाद्रिकन्दरा-

विवरोदरस्थितमिवेन्दुमण्डलम् ॥ ३५ ॥

कस्याश्चिन्मुग्धाक्ष्या मुखाम्बुजं रेजे । कीदृशं भगवद्दिदृक्षया अधिरुक्ममन्दिरगवाक्षं सुवर्णभवनवातायने उल्लसत् श्लिष्यत् स्फुरद्वा । किमिव रराजेत्याह—उदयपर्वतदरीमध्यरन्ध्रोदितं शशिबिम्बमिव । रुक्मस्य मन्दिरं रुक्ममन्दिरं तस्य गवाक्षो रुक्ममन्दिरगवाक्षः । ततः सप्तम्यर्थेऽव्ययीभावः ॥ ३५ ॥

अधिरूढया निजनिकेतमुच्चकैः

पवनावधूतवसनान्तयैकया ।

विहितोपशोभमभियाति यादवे

नगरं व्यरोचत पताकयेव तत् ॥ ३६ ॥

भगवति निविशमाने सति तत्पुरं व्यरोचताशोभत । कीदृशम् एकयान्यया नार्या विहितोपशोभं जनित[१]च्छविम् । पूर्वापेक्षमन्यत्वम् । कयेव पताकयेव वैजयन्त्येव । भगवदागमनोच्छ्रितया पताकया यथा तद्भूषितमेवं तयेत्युपमा ।

१ 'शोभम्' क. पाठः ।

यदि वा तस्या एव पताकात्वमारोप्यते—इत्युत्प्रेक्षा । 'कीदृश्या नार्या इति पताकासाधर्म्यमाह—उच्चकैः प्रांशु निजनिकेतं स्वमन्दिरमधिरूढया उद्गतया, तथा पवनेनावधूतो वसनान्तो वस्त्रपल्लवो यस्याः । पताकाप्येवंविधैव भवति ॥ ३६ ॥

करयुग्मपद्ममुकुलापवर्जितैः
प्रतिवेश्म लाजकुसुमैरवाकिरन् ।
अवदीर्णशुक्तिपुटमुक्तमौक्तिक-
प्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥ ३७ ॥

प्रियं रथाङ्गं चक्रं यस्य तं चक्रपाणिं पुरनार्यः प्रतिवेश्म गेहाद्गेहाल्लाजैः कुसुमैश्चावाकिरन् निर्भरं चक्रुः । कीदृशैः करयुग्ममेव पद्मं तस्य यन्मुकुलं संपुटस्तेनापवर्जितैर्मुक्तैः, अतश्चावदीर्णो विकसितो यः शुक्तिपुटो मुक्ताकवाटस्तेन मुक्ताः क्षिप्ता ये मौक्तिकप्रकरा मुक्तावृन्दानि तैरिव तत्तुल्यैः सितत्वान्मुकुलक्षेपाच्चेति भावः । किरतेरचि प्रकरः ॥ ३७ ॥

हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः ।
अभवत् प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः ॥ ३८ ॥

स माधवः कृष्णः प्रमदाजनस्य नागरिकालोकस्य महोत्सव इव महोत्सवोऽभूत् सुखकरो बभूवेत्यर्थः । कीदृशः हिमान्नीहारान्मुक्तो यश्चन्द्रः शशी स इव रुचिरः कान्तिमानिति दीप्तिमात्रविवक्षया सादृश्यम् । सह पद्मया श्रिया वर्तत इति सपद्मको लक्ष्मीवान्, द्विजान् विप्रान्मदयन् प्रत्यक्षदर्शनेन हर्षयन्, जनितो मीनकेतनः प्रद्युम्नो येन, तथा प्रसादिताः कण्ठकोद्धरणेन हर्षिताः सुरा देवा येन । श्लेषेणार्थान्तरप्रतीतिः । माधवो वसन्तः प्रमदाजनस्य महोत्सवोऽभवत् । कीदृशः हिमान्मुक्तेन चन्द्रेण रुचिरः, सपद्मं कमलयुक्तं कं वारि यत्र स सपद्मकः, द्विजान् पक्षिणः कोकिलादीन् मदयन् मत्तान् कुर्वन्, जनितमीनकेतनो वर्धितकामः, प्रसादितसुरोऽच्छितहालः । वसन्ते हि सुरा निर्मला

भवति । यदि वा माधव आसवविशेषो नारीणां महोत्सवोऽभूत् । कीदृशः हिमः शीतलः, तथा मुक्तेनावचूर्णितेन चन्द्रेण कर्पूरेण रुचिमभिलाषं राति ददातीति मुक्तचन्द्ररुचिरः, सपद्मकः साब्जः सोत्पलः, द्विजान् क्षत्रियान् मदयन् क्षीवयन्, जनितमीनकेतन उल्वणीकृतमन्मथः, प्रकर्षेण सादिता निर्गौरवीकृता सुरा येन । तत्सन्निधौ हि वारुणीं सुरां न कश्चित्पिबति तस्योत्कृष्टत्वादित्यर्थत्रयवाची । औपम्यं चात्र बोद्धव्यं माधवो माधव इवेति ॥ ३८ ॥

**धरणीधरेन्द्रदुहितुर्भयादसौ**
**विषमेक्षणः स्फुटममूर्न पश्यति ।**
**मदनेन वीतभयमित्यधिष्ठिताः**
**क्षणमीक्षते स्म स पुरो विलासिनीः ॥ ३९ ॥**

स भगवान् पुरः पुर्या विलासिनीर्वेश्याः क्षणमद्राक्षीत् । कीदृशीः कामेनेत्यतो हेतोर्वीतभयं निःशङ्कमधिष्ठिता आश्रिताः । कुत इत्याह—असौ विषमेक्षणो ध्रुवमेता विलासिनीः पार्वतीभयान्नेक्षते, तस्य हि हराद्भयं स च तासां गौरीर्ष्याशङ्कया दर्शनमेव न ददातीति निर्भयमेवासौ तासु वसतीति तारुण्योक्तिः । उत्प्रेक्षालङ्कारः ॥ ३९ ॥

**विपुलेन सागरशयस्य कुक्षिणा**
**भुवनानि यस्य पपिरे युगक्षये ।**
**मदविभ्रमासकलया पपे पुरः**
**स पुरस्त्रियैकतमयैकया दृशा ॥ ४० ॥**

स भगवानेकतमया कयाचित् पुरस्त्रिया एकया दृशा चक्षुषा पपे पीतः, अतिमात्रं दृष्ट इत्यर्थः । एकयापि न सर्वया अपितु मदविभ्रमेण रागविलसितेनासकलयासमग्रया । कीदृशोऽसावित्याह—यस्य विष्णोः सागरशयस्य सतः कल्पान्ते बृहता कुक्षिणा सर्वाण्येव जगन्ति पपिरे पीतानि अन्तःकृतानि सोऽबलयापाङ्गप्रेक्षणमात्रेणैव पीत इति विषमाख्योऽलङ्कारः । यत्र गुर्वपि कार्यं हीनोऽपि कर्ता कुरुते इति । पुरोऽग्रे सर्वेषामेव पश्यतामित्यर्थः । लकारौ कर्मणि । एकतमयेति स्त्रीविशेषणम् । एकयेति तु दृशः ॥ ४० ॥

अधिकोन्नमद्घनपयोधरं मुहुः
प्रचलत्कलाचिकलशङ्खकस्वना ।
अभिकृष्णमङ्गुलिमुखेन काचन
द्रुतमेककर्णविवरं व्यघट्टयत् ॥ ४१ ॥

काचिन्नारी मुहुः पुनःपुनः कृष्णाभिमुखमङ्गुल्यग्रेण त्वरितमेकश्रोत्रविवरं व्यघट्टयदचालयदित्यनुरागस्यानुभावकथनम् । कीदृशी सा प्रचलन्ती द्रुतविघट्टनवशात् कम्पमाना यासौ कलाचिर्भुजा तस्यां कलो मधुरः शङ्खकस्वनो वलयरवो यत्र । कथमघट्टयत्–अधिकमुन्नमन्नूर्ध्वीभवन् घनः पीवरः पयोधरो यत्रेति जातिबन्धः । स्तनौ ममैष पश्यत्वित्येतदर्थं कर्णविवरमघट्टयत् नतु कण्डूेति व्याख्या ग्राम्या । कलाचिः प्रकोष्ठः ॥ ४१ ॥

परिपाटलोर्ध्वतलचारुणासकृ-
च्चलिताङ्गुलीकिसलयेन पाणिना ।
सशिरःप्रकम्पमपरा रिपुं मधो-
रनुदीर्णवर्णनिभृतार्थमाह्वयत् ॥ ४२ ॥

अन्या स्त्री मधुरिपुं पाणिनाह्वयदाहूतवती, एह्येहि कृष्ण मनोहर त्रायस्वाबलाजनमित्यवददिवेत्यर्थः । कीदृशेन करेण परिपाटलं सर्वतो रक्तमूर्ध्वमूर्ध्वीकृतं यत्तलं पृष्ठं तेन चारुणा रम्येण । तथासकृच्चलिता अङ्गुलय एव किसलयानि यस्याः । कीदृगाह्वानं सह शिरःप्रकम्पेन वर्तते यत् सशिरःप्रकम्पम् , तथानुदीर्णैरनुच्चारितैर्वर्णैरक्षरैर्निभृतो गूढोऽर्थोऽभिधेयो यत्र । पाणिं शिरश्च चालयन्ती मनसैव तमाजुहावेत्यर्थः । इत्यङ्कुराभिनयकथनम् । "ॠ गतौ" वित्युत्पूर्वस्य क्ते उदीर्णमिति रूपम् । "ईर गतौ" वित्ययं सेट् ॥ ४२ ॥

नलिनान्तिकोपहितपल्लवश्रिया
व्यवधाय चारु मुखमेकपाणिना ।
स्फुरदङ्गुलीविवरनिःसृतोल्लसद्-
दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

अन्या नारी जजृम्भे । किं कृत्वा रम्यं मुखमेकेन करेण पिधाय । कीदृशेन नलिनान्तिके पद्मसमीपे उपहितस्य न्यस्तस्य पल्लवस्येव श्रीः शोभा यस्य । मुखस्याब्जमुपमानम् । कीदृशं मुखं स्फुरन्तीनां चलन्तीनामङ्गुलीनां विवरे निःसृता निर्गता उल्लसन्ती द्योतमाना यासौ दशनप्रभा दन्तकान्तिः सैवाङ्कुरो यस्य यत्र वा जृम्भणे । पल्लवश्रियेति समुदायस्याश्रीत्वेऽपि श्री[1]शब्दस्य स्त्रीप्रत्यया[2]न्तत्वाभावादसति ह्रस्वत्वे घ्यन्तत्वाभावान्नाभावाभावः ॥ ४३ ॥

**वलयार्पितासितमहोपलप्रभा-**
**बहलीकृतप्रतनुरोमराजिना ।**
**हरिवीक्षणाक्षणिकचक्षुषान्यया**
**करपल्लवेन गलदम्बरं दधे ॥ ४४ ॥**

अन्यया भ्रश्यद् दुगूलं पाणिनैव दधे धृतं नतु ग्रथितम् । यतो हरिवीक्षणेनाक्षणिके व्यापारान्तरासक्षणे चक्षुषी यस्याः । यावच्च दृष्ट्या न विषयीकृतं तावत्कथं ग्रन्थनं युज्यते । जघनाम्बरस्य तु पातो देहोच्छ्वासेन नीवित्रुटनाद्बोद्धव्यः । उच्छ्वासस्य तु भगवद्दर्शनमेव हेतुः । कीदृशेन करेण वलयेऽङ्गदेऽर्पितः प्रोतो योऽसितोपल इन्द्रनीलमणिस्तत्प्रभया बहलीकृता घनत्वमापादिता तन्वी रोमराजिर्येन ॥ ४४ ॥

**निजसौरभभ्रमितभृङ्गपक्षति-**
**व्यजनानिलोल्ललितघर्मवारिणा ।**
**अभिशौरि काचिदनिमेषदृष्टिना**
**पुरदेवतेव वपुषा व्यभाव्यत ॥ ४५ ॥**

काचिन्नारी एवंविधेन वपुषा पुरदेवतेव व्यभाव्यताबुध्यत । कीदृशेन निजसौरभेण सहजसौगन्ध्येन भ्रमिताश्चञ्चला ये भृङ्गास्तेषां याः पक्षतयः प[3]क्षमूलानि ता एव व्यजनमाक्षेपकस्तस्य योऽनिलो वातस्तेनोल्ललितमपासितं घर्मवारि भगवद्दर्शनोत्थं स्वेदाम्बु यस्य, तथा अभिशौरि हरिं प्रति अनिमेष-

१ 'स्त्रीश' ग. पाठः । २ 'यान्तरत्वात्' क.ख. पाठः । ३ 'पतत्रमू' क. पाठः ।

दर्शनोच्छेदभयादनिमीलन्ती दृष्टिर्यस्य[1]। देवतापि सुरभिवदना निश्चलनेत्रास्वेदा च भवति। सर्वं वस्तु देवतया व्याप्यते इति पुरग्रहणम्॥ ४५॥

**अभियाति नः सतृष एष चक्षुषो**
**हरिरित्यखिद्यत नितम्बिनीजनः।**
**न विवेद यः सततमेनमीक्षते**
**न वितृष्णतां व्रजति खल्वसावपि॥ ४६॥**

नारीलोकोऽखिद्यत खेदं ययौ। कुत इत्याह—एष हरिरस्माकं चक्षुषोऽक्ष्णः सतृषोऽनिवृत्तेक्षणलालसस्यैव यातीत्यतो हेतोः स च मुग्ध एवं न विवेद नाबुद्ध। यथा य एनं कृष्णं सततं सदैवेक्षते सोऽपि वितृष्णतां न यातीति। ताभिश्च क्षणमसौ दृष्ट इति कुतो वैतृष्ण्यं स्यात्। य इत्यनेन द्वारवतीवास्तव्यो जनो योगिजनो वा निर्दिश्यते। चक्षुष इति "षष्ठी चानादरे"। अखिद्यतेति कर्तरि॥ ४६॥

**अकृतस्वसद्मगमनादरः क्षणं**
**लिपिकर्मनिर्मित इव व्यतिष्ठत।**
**गतमच्युतेन सह शून्यतां गतः**
**प्रतिपालयन्मन इवाङ्गनागणः॥ ४७॥**

अङ्गनागणो यौवतं क्षणं व्यतिष्ठत तत्रैवास्थात्। कीदृशः, अकृतः स्वगृहगमने आदरोऽभिलाषो येन। यतः शून्यतां गतोऽहृदयत्वं प्राप्तोऽत एव लिपिकर्मनिर्मित इव चित्रन्यस्तो यथा, एवंविधो ह्येष दग्धप्रेमस्वभावः। तत्रैवावस्थाने तर्कमाह—भगवता सह गतं मनः प्रतिपालयन्निव प्रतीक्षमाण इव, एतत्तावदागच्छतु ततः सह यास्याम इति। व्यतिष्ठतेति—"समवप्रविभ्यः स्थः"। ननु कुलस्त्रीणामेतदनुचितं यत्परं प्रत्यनुरागस्तत् कथं कविना ऊचे। सत्यमेतत् किंतु एवंविधोऽयं कथानायकधर्मः। नचालङ्कारविद्भिर्निषिद्धः प्रमाणरूपैरप्यनुष्ठितत्वात्। तद्यथा भगवतो व्यासस्य "तासां कौरवपत्नीनां प्रद्युम्नगतचेतसाम्। नवानामिव धेनूनां जघनानि प्रसुस्नुवु"रिति सर्वमेवानवद्यम्॥ ४७॥

---

१ 'यस्याः' क. पाठः।

**अलसैर्मदेन सुदृशः शरीरकैः**
**स्वगृहान् प्रति प्रतिययुः शनैःशनैः ।**
**अलघुप्रसारितविलोचनाञ्जलि-**
**द्रुतपीतमाधवरसौघनिर्भरैः ॥ ४८ ॥**

सुदृशः स्वगृहान्प्रति निजभवनसंमुखं स्वैरं स्वैरं प्रतिजग्मुः । मन्दगमने कारणमाह—यत एवंविधैः शरीरैरुपलक्षिताः । कीदृशैः मदेन चित्तविकारेणालसैर्मन्थरैः, तथा अलघु दीर्घं प्रसारितैर्विकासितैर्नयनैरेवाञ्जलिभिर्द्रुतं पीतोऽतितूर्णं दृष्टो यो माधवः कृष्णस्तस्य यो रसौघो रसपूरस्तेन निर्भरैः पूर्णैः, हरिं प्रति सानुरागैरित्यर्थः । अत एव च शरीराणां तनुत्वम् । योऽप्यञ्जलिना माधवरसौघं पिबति सोऽवश्यमेव मदेनालसः सन् मन्दमन्दं गृहं प्रति याति । माधव आसवोऽपि । मदः क्षीवतापि । स्वल्पं शरीरं शरीरकम् । गृहशब्दोऽर्धर्चादिः ॥ ४८ ॥

**नवगन्धवारिविरजीकृताः पुरो**
**घनधूपधूमकृतरेणुविभ्रमाः ।**
**प्रचुरोद्धतध्वजविलम्बिवाससः**
**पुरवीथयोऽथ हरिणातिपेतिरे ॥ ४९ ॥**

अथ भगवता पुरवीथयो नगरमार्गा अट्टपथा अतिपेतिरेऽतिक्रान्ताः । कीदृश्यः पुर आदावेव नवगन्धवारिणा सुगन्धोदकेन विरजीकृता निर्धूलिकाः कृताः, घनेन धूपधूमेन कृतो रेणुविभ्रमो रजोभ्रान्तिर्यत्र, प्रचुराणि बहून्युद्धतान्युच्छ्रितानि ध्वजानि यत्र, विलम्बीनि लम्बमानानि वासांसि चेलानि यत्रेति पुरोत्सवकथनम् । अविरजसो विरजसः कृता विरजीकृताः "अरुर्मनश्चक्षुश्चेतोरहोरजसां सलोपश्च" ॥ ४९ ॥

**उपनीय बिन्दुसरसान्मयेन या**
**मणिदारु चारु किल वार्षपर्वणम् ।**

विद्धेऽवधूतसुरसद्मसम्पदं
समुपासदत् सपदि संसदं स ताम् ॥ ५० ॥

स हरिस्तां संसदं सभां सपदि तत्क्षणं समुपासदत् प्राप। कामित्याह— मयेन विश्वकर्मात्मजेन बिन्दुसरसात् सरोविशेषात् मणय एव दारु काष्ठमुपनीय या किल निर्मिता कृता। किलागमे। कीदृङ् मणिदारु चारु रम्यं, तथा वृषपर्वण इदं वार्षपर्वणं दानवीयम्। पूर्वं हि बिन्दुसरसः समीपे वृषपर्वणो दानवेश्वरस्य रत्नमयी सभाभूत्। ततोऽनन्ते सरसि काले तामेवोत्पाट्य मयेन प्रत्युपकुर्वाणेन पाण्डवानां सभाकारि। अत एवावधूतसुरसद्मसम्पदं तिरस्कृतामरावतीलक्ष्मीकाम्। बिन्दुसरसशब्दे "अनोऽश्मायःसरसां जातिसंज्ञयो"रित्यच्। सान्तपाठे तु "समासान्तविधिरनित्यः" ॥ ५० ॥

भूयोऽपि तच्छब्देन योऽस्या विवक्षितो धर्मस्तमाह—

अधिरात्रि यत्र निपतन्नभोलिहः
कलधौतधौतमणिवेश्मनां रुचः।
पुनरप्यवापदिव दुग्धवारिधि-
क्षणगर्भवासमनिदाघदीधितिः ॥ ५१ ॥

यत्र यस्यां सदसि अनिदाघदीधितिः शीतांशुः पुनरपि दुग्धवारिधेः क्षीराब्धेः क्षणं गर्भवासं मध्यावस्थितिमवापदिव प्राप्तवान् यथा। शशी हि दुग्धाब्धेरजनि। किं कुर्वन् कलधौतमिव रजतमिव धौताः शिलाः स्फटिकाख्या येषां वेश्मनां गृहाणां तेषां या रुचो भासो नभोलिहो गगनस्पृशः, ता अधिरात्रि नक्तमधि निपतन् प्रविशन्नित्युच्छ्रायोक्तिः। स्फटिकगृहरुचां क्षीरोदधिरुपमानम् ॥ ५१ ॥

लयनेषु लोहितकनिर्मिता भुवः
शितिरत्नरश्मिहरितीकृतान्तराः।
जमदग्निसूनुपितृतर्पणीरप-
स्तनुते स्म या विरलशेवला इव ॥ ५२ ॥

या सभा लयनेषु वेश्मस्वेवंविधा भुवस्तनुते स्म व्यतनोत् प्रकटीचकारेत्यर्थः । कीदृशीः लोहितकैः पद्मरागैर्निर्मिता घटिताः, तथा शितीनि हरितानि यानि रत्नानि इन्द्रनीलाख्यानि तेषां रश्मिभिर्हरितीकृतं नीलतामापादितमन्तरं मध्यं यासाम्, अतश्चाप इव तोयनिभाः । का अप इत्याह—जमदग्निसूनुः परशुरामस्तत्पितॄणां तर्पणीस्तृप्तिकरीः रुधिरमयीरित्यर्थः । पूर्वं किल पितृवधात् क्रुद्धेन रामेण त्रिःसप्तकृत्वो हतानां क्षत्राणां रुधिरह्रदेषु पितरस्तर्पिता इत्यागमः । विरलशेवलाः शेवलगर्भाः । लोहितकभुवामाप उपमानं, मरकतरश्मीनां शेवलम् । लीयते एष्विति लयनानि निलयाः । लोहितमेव लोहितकम् "लोहितान्मणौ" विति कन् । तर्पयन्तीति तर्पण्यः, तर्प्यन्त आभिरिति वा तर्पण्यः ॥ ५२ ॥

विषदाश्मकूटघटिताः क्षपाकृतः
क्षणदासु यत्र च रुचैकतां गताः ।
गृहपङ्क्तयश्चिरमतीयिरे जनै-
स्तमसीव हस्तपरिमर्शसूचिताः ॥ ५३ ॥

यत्र च रात्रिषु वास्तव्यैर्वेश्मपङ्क्तयश्चिरं हस्तपरिमर्शसूचिताः सत्योऽतीयिरे हस्तेन चिरं परिमृश्यातिक्रान्ताः । यतो विषदाश्मकूटघटिताः स्फटिकोपलनिचयरचिताः, तथेन्दोः कान्त्या ज्योत्स्नयाभेदं प्राप्ताः, अतश्च सादृश्याद्विवेकाभाव इति करेण परिमृश्यातीताः । तमसीव, ध्वान्ते हि यावत्पाणिना न परामृष्टं वस्तु तावत्तस्य सदसत्ता न ज्ञायते । अतीयिरे इति इणः कर्मणि लकारः ॥ ५३ ॥

निलयेषु नक्तमसिताश्मनां चयै-
र्बिसिनीवधूपरिभवस्फुटागसः ।
मुहुरत्रसद्भिरपि यत्र गौरवा-
च्छशलाञ्छनांशव उपांशु जघ्निरे ॥ ५४ ॥

यत्र सभायां निलयेषु गृहेषु येऽसिताश्मनां चया इन्द्रनीलकूटानि तैर्नक्तं मृगाङ्ककिरणा जघ्निरे हता निष्प्रभीकृता इत्यर्थः । क ? उपांशु स्वरश्मिसमीपे

नतु सर्वत्र । कथं हता गौरवादतिबाहुल्यात् । कीदृशैः चयैरत्रसद्भिरनष्टैर्महाप्रभैः "वा भ्राशे"ति शप् । हनने तर्कमाह–बिसिनी पद्मिन्येव वधूर्जाया तस्या यः परिभवः संकोचस्तेन स्फुटागसः सापराधा इव । तत्र हीन्द्रनीलपरिष्कृता पद्मिनी विद्यते, सा च यदेन्दुरश्मिभिः संमीलिता ततस्तदपराधादिव तैस्ते हताः । यदा किल केषांचिद्वध्वाः केचित्प्रकटमेव परिभवं कुर्वते तदा तेऽत्रस्यन्तोऽपि नक्तमुपांशु गुप्तं गृहे तं घ्नन्ति, कुतः गौरवाद्गौरवरक्षार्थम् । यदि हि प्रत्यक्षं हन्युस्तल्लोको मारका एते इति गौरवं न कुर्यात् । जघ्निरे इति कर्मणि ॥ ५४ ॥

सुखिनः पुरोऽभिमुखतामुपागतैः
प्रतिमासु यत्र गृहरत्नभित्तिषु ।
नवसङ्गमैरबिभरुः प्रियाजनैः
प्रमदं त्रपाभरपराङ्मुखैरिव ॥ ५५ ॥

यत्र कामिनः कान्तालोकैः प्रमदं हर्षमबिभरुरूहुः । कदाचिन्मुखेन्दुदर्शनं स्यादित्याह–त्रपाभरेण पराङ्मुखैर्यतो नवसङ्गमैरचिरोढैः । कथं तर्हि जहृषुरित्याह–पुरोऽग्रे यानि वेश्ममणिकुड्यानि तत्र याः प्रतिमाः प्रतिबिम्बानि तत्राभिमुखत्वमागतैः, अतश्च वदनालोकात्तोषः । अबिभरुरिति लुङ् । अपिर्विरोधे । यो हि पराङ्मुखः स कथं संमुखो भवेत् ॥ ५५ ॥

तृणवाञ्छया मुहुरवाञ्चिताननान्
निचयेषु यत्र हरिताश्मवेश्मनाम् ।
रसनाग्रलग्नकिरणाङ्कुराञ्जनो
हरिणान् गृहीतकवलानिवैक्षत ॥ ५६ ॥

यत्र संसदि लोको मृगान् गृहीतकवलान् आत्तग्रासानिवैक्षत बुबुधे । कीदृशान् हरिताश्मवेश्मनामिन्द्रनीलोपलगृहाणां निचयेषु समूहेषु मुहुरसकृदवाञ्चिताननान् प्रसारिताननान् । कुतस्तृणवाञ्छया शाद्वलशङ्कया । अत एव जिह्वाग्रे लग्नाः किरणा एवाङ्कुरा येषाम्, अतश्च गृहीतकवलानिव तान् जनोऽमन्यत । हरितान् नवाश्मनामिति पाठान्तरम् । "हरिन्नीलो भवेद्वर्णः" ॥ ५६ ॥

**विपुलालवालभृतवारिदर्पण-**
**प्रतिमागतैरभिविरेजुरात्मभिः ।**
**यदुपान्तिकेषु दधतो महीरुहः**
**सपलाशराशिमिव मूलसन्ततिम् ॥ ५७ ॥**

यस्या उपान्तिकेषूपशल्येषु वृक्षा आत्मभिर्देहैरभिविरेजुर्बभुः । कीदृशाः मूलसन्ततिं दधतः । कीदृशीं सपलाशराशिमिव संजातपत्रनिचयामिव । मूलेषु कथं पर्णानि स्युरित्याह—कीदृशैरात्मभिः विपुलं यदालवालं सेकजलधारणं तेन भृतं निष्प्रवाहीकृतं यद्वारि तदेव दर्पणस्तत्र प्रतिमां गतैः प्रतिबिम्बितैरतश्च ज्ञायते मूलान्यप्येषां सपत्राणीति ॥ ५७ ॥

**उरगेन्द्रमूर्धरुहरत्नसंनिधे-**
**र्मुहुरुन्नतस्य रसितैः पयोमुचः ।**
**अभवन् यदङ्गनभुवः समुच्छ्वस-**
**न्नववालवायजमणिस्थलाङ्कुराः ॥ ५८ ॥**

यस्याः सभाया अङ्गनभुवोऽजिरोर्व्य एवंविधा अभवन् । कीदृश्यः, उच्छ्वसन्त उद्भिद्यमाना नवा देदीप्यमाना वालवायजमणिस्थलेषु वैडूर्यरत्नकुट्टिमेषु अङ्कुराः शलाका यासु तास्तथोक्ताः । कुतः उन्नतस्य महतः संनद्धस्य पयोमुचोऽब्दस्य रसितैर्गर्जितैः । मेघरवात् किल वै[1]डूर्योर्वीषु रत्नानि जायन्ते । यदुक्तम्—"तया दुहित्रा सुतरां जनित्री स्फुरत्प्रभामण्डलया चकाशे । वैडूर्यभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेवे"ति ॥ मेघा अपि कथं सर्वदा गर्जन्तीत्याह—उरगेन्द्रमूर्धरुहस्य सर्पेशफणजस्य रत्नस्य संनिधानात् । सर्पमणिसंनिधौ ह्यकालेऽपि मेघा गर्जन्तीति वार्ता । केचित्तु द्वयमप्येतदङ्कुरोत्पत्तौ कारणमाहुः । यत्र ह्युरगमणिरभ्रगर्जितं च तत्र विडूरमणिस्थलेषु तदुत्पत्तेरिति वदन्ति । चशब्देन च विना दुर्लभोऽत्रैषोऽर्थः । पूर्वके च व्याख्याने एवं तल्लभ्यते एव । वालवायनगेऽप्यभ्रशब्दाद्वैडूर्यमणयो जायन्ते ॥ ५८ ॥

---

१ 'वैदूर्यो' ग. पाठः ।

नलिनी निगूढसलिला च यत्र सा
स्थलमित्यदः पतति या सुयोधने ।
अनिलात्मजप्रहसनाकुलेऽखिल-
क्षितिपक्षयागमनिमित्ततां ययौ ॥ ५९ ॥

यत्र च सदसि सा पद्मिनी या दुर्योधने पतति सकलनृपनाशोत्पत्तिहेतुतां जगाम । स्पष्टे मार्गे किमित्यसौ पपातेत्याह—अद एतत् स्थलं नतु जलमित्यतो हेतोः । यतो निगूढसलिला अलक्ष्यजला, तादृशं हि तस्याः सलिलं मयेनाकारि यत्र स्थलभ्रान्तिः, अतश्च भूरेवैषेति धिया तत्र व्रजन्नसावपतत् । अथ पातमात्रादेवासौ कस्माद्राजन्यकान्तहेतुरित्याह—भीमसेनोपहासाकिंकर्तव्यतामूढे यतस्तस्मिन्, यदाह्यसौ पपात तदा मारुतिर्जहास तन्मन्युना च वैरमभजत, ततोऽक्षान् देवित्वा स तान्जिगाय, पाण्डवांश्चोदवासयत, ततः समये समाप्ते समरमभूत्, ततः पार्थिवाः सर्वे नेशुरिति सैव मूलमनर्थस्य ॥ ५९ ॥

हसितुं परेण परितः परिस्फुर-
त्करवालकोमलरुचावुपेक्षितैः ।
उदकर्षि यत्र जलशङ्कया जनै-
र्मुहुरिन्द्रनीलभुवि दूरमम्बरम् ॥ ६० ॥

यत्र यस्यां संसदि इन्द्रनीलभुवि जनैर्दूरमत्यर्थमम्बरं वास उदकर्षि उत्क्षिप्तम् । कुतः जलशङ्कया तोयभ्रान्त्या, यतः परिस्फुरत्करवालकोमलरुचौ उल्लसत्खड्गसदृशच्छवौ नीलत्वात् । किं भ्रान्तिनाशको जनस्तत्र नास्तीत्याह—परेणान्येनोपेक्षितैरनुक्तैः किमर्थं हसितुं हासाय । भ्रान्त्या हि तादृशे संविधाने सर्वो हसति ॥ ६० ॥

अभितः सदोऽथ हरिपाण्डवौ रथा-
दमलांशुमण्डलसमुल्लसत्तनू ।
अवतेरतुर्नयननन्दनौ दिवं
शशिभार्गवावुदयपर्वतादिव ॥ ६१ ॥

अथानन्तरं सदोऽभितः सभायाः संमुखं कृष्णकौन्तयौ रथादवतेरतुरवरूढौ । कीदृशौ देदीप्यमानतेजश्चक्रेण स्फुरद्देहौ तथा नेत्रोल्लासकौ । कौ यथा कुतोऽवतरत इत्याह—नभोऽभितः शशिशुक्रौ यथोदयाद्रेस्तावप्येवंविधौ । अभित इति तस्प्रत्ययान्तप्रतिरूपकोऽभिमुखार्थो निपातः, यद्योगे च नभःसदसोर्द्वितीया ॥ ६१ ॥

तदलक्ष्यरत्नमयकुड्यमादरा-
दभिधातरीत इत इत्यथो नृपे ।
धवलाश्मरश्मिपटलाविभावित-
प्रतिहारमाविशदसौ सदः शनैः ॥ ६२ ॥

अथ तत्सदस्तां सभामसौ हरिः स्वैरं न्यविशत । कीदृशम् अलक्ष्याणि रत्नमयत्वात् कुड्यानि भित्तयो यत्र, तथा धवलाश्मनां स्फटिकोपलानां रश्मिपटलेन दीप्तिपुञ्जेनाविभावितः प्रतिहारो द्वारं यत्र । अतश्च युधिष्ठिरे आदरात् प्रीत्या इत इत इत्यादरादभिधातरि ब्रुवति सति ॥ ६२ ॥

नवहाटकेष्टकचितं ददर्श सः
क्षितिपस्य पस्त्यमथ तत्र संसदि ।
गगनस्पृशां मणिरुचां चयेन यत्
सदनान्युदस्मयत नाकिनामिव ॥ ६३ ॥

अथ तत्र सदसि हरिर्धर्मात्मजस्य पस्त्यं वेश्मादर्शत् । कीदृशं नवहाटकेष्टकचितमुज्ज्वलकनकशिलादृब्धम् अत एव च यदभ्रंलिहरत्नदीप्तिमण्डलेन देवानां भवनान्युदस्मयतेव जहासेव कियन्ति यूयं रम्याणीति । इष्टकाभिश्चितमिष्टकचितमिति "इष्टकेषीकामालानां चिततूलभारिष्वि"ति ह्रस्वः ॥ ६३ ॥

उदयाद्रिमूर्ध्नि युगपच्चकासतो-
रहिमांशुपूर्णशशिनोरसंभवाम् ।
रुचिमासने रुचिरधाम्नि बिभ्रता-
वलघुन्यथ न्यषदतां नृपाच्युतौ ॥ ६४ ॥

अथ हरियुधिष्ठिरौ भास्वरे महति कनकविष्टरे न्यषदतामुपविष्टौ । कीदृशा-वर्कपूर्णेन्द्वोः कान्तिं बिभ्रतौ । कीदृशयोरुदयाद्रिशृङ्गे युगपत्तुल्यकालं चकास-तो राजतोः । ननु रविः पूर्णेन्दुश्च न कदाचिदपि साकमुद्गच्छतस्तत्कथं तयोः शोभया तावुपमीयेत इत्याह—कीदृशीं रुचिमसंभवामसतीमभूतपूर्वाम् । एतदुक्तं भव-ति—यदि युगपदुदयगिरिशिरसि रविशशिनावुद्गच्छेतामेवं तयोरुपमा स्यादित्यु-त्पाद्योपमेयम् । न्यषदतामिति लुङ् । लृदित्त्वादङादेशः । "सदेरप्रते"रिति षत्व-म् । नृपाच्युताविति "अल्पाच्तरमभ्यर्हितं चे"ति पूर्वनिपातः ॥ ६४ ॥

सुतरां सुखेन सकलक्लमच्छिदा
सनिदाघमङ्गमिव मातरिश्वना ।
यदुनन्दनेन तदुदन्वतः पयः
शशिनेव राजकुलमाप नन्दथुम् ॥ ६५ ॥

तद्राजकुलं नृपभवनं राजकं वा भगवता नन्दथुमाप तोषं लेभे, माधवागम-ने सति मुदमापेत्यर्थः । यतोऽत्यर्थं सुखेन सुखकारिणा, सुखयतीति सुखः । तथा सकलो यः क्लमः संसारश्रमस्तं छिनत्त्युन्मूलयति यस्तेन सकलक्लमच्छि-दा । केन यथा को हृष्यतीत्याह—सनिदाघं घर्मितमङ्गं वपुर्यथा वायुनेति रोमा-ञ्चितोक्तिः । यथा च वारिधेरर्णः शशिनेति देहोच्छ्वासकथनम् । द्वावपि सुखौ क्लमहरौ च । नन्दनं नन्दथुस्तोषः । "ट्वितोऽथुच्" ॥ ६५ ॥

अनवद्यवाद्यलयगामि कोमलं
नवगीतमप्यनवगीततां दधत् ।
स्फुटसात्त्विकाङ्गिकमनृत्यदुज्ज्वलं
सविलासलासकविलासिनीजनः ॥ ६६ ॥

सविलासो विभ्रमान्वितो लासको नर्तको यो विलासिनीजनो दासीलोकः स कोमलं सुकुमारमनृत्यत् प्रयुयुजे । अनर्तक्योऽपि विलासिन्यो भवन्तीति लासकग्रहणम् । नाट्यमपि द्विविधं सुकुमारमुद्धतं चेति, कोमलमिति कर्मोपा-दानम् । कीदृशं कोमलमनवद्यमगर्ह्यं लक्षणान्वितं यद्वाद्यं ततानद्धघनसुषिरात्मकं तस्य यो लयो द्रुतमध्यविलम्बितभेदेन त्रिविधः । यद्वा वाद्यं च लयश्च तं गच्छत्यनुवर्तते इत्यनवद्यवाद्यलयगामि, तथा नवमपूर्वं गीतं यत्र तन्नवगीतम्,

एवंरूपमप्यनवगीततामश्रुतपूर्वत्वं दधत् । अवगीतं गर्ह्यमसकृदनुभूतं च । अपिर्विरोधे । यत् किल नवगीतयुक्तं तत् कथं तेनैव रहितं स्यात्, नवगीतमनवगीतमिति कृत्वा । तथा स्फुटमहीनं सात्त्विकं सहजं स्तम्भादि, आङ्गिकं च भ्रूक्षेपादि यत्र तत् स्फुटसात्त्विकाङ्गिकमत एवोज्ज्वलं मनोहरम् । एतेन गीतानुगतं वाद्यं तदनुगतं च नृत्तं कथितं भवति। भगवतोऽग्रे प्रेक्षणकं विलासिन्योऽनृत्यन्निति वाक्यार्थः । "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका गुणाः" इति । आङ्गिकस्त्वभिनयः शिरोदृष्टिकरवक्षःकटिभेदेन षड्विधः ॥ ६६ ॥

सकले च तत्र नगरे हरौ गृहान्
गतवत्यकालमहमादिदेश सः ।
सततोत्सवं तदिति नूनमुन्मुदो
रभसेन विस्मृतमभून्महीभृतः ॥ ६७ ॥

भगवति भवनमागते सति स राजा सकले पुरेऽकालमहमप्रस्तुतमुत्सवमादिदेशाज्ञापयत् । तस्य चोन्मुद उत्पन्नहर्षस्य नूनं निश्चितं रभसेनौत्सुक्येन तन्नगरं सततोत्सवमजस्रं सुखितमिति विस्मृतमभूत् मनसि न पुस्फोर ॥ ६७ ॥

हरिराकुमारमखिलाभिधानवित्
स्वजनस्य वार्तमयमन्वयुङ्क्त सः ।
महतीमपि श्रियमवाप्य विस्मयः
सुजनो न विस्मरति जातु किञ्चन ॥ ६८ ॥

भगवान् बन्धूनामाबाल्येभ्यो वार्तमयं वार्तामन्वयुङ्क्त पप्रच्छ । कथम् अखिलानामभिधानं नाम विद्यते यत्र तदखिलाभिधानवित्, नामग्राहमित्यर्थः । यदि वाखिलाभिधानवित् सर्वेषां संज्ञां वेत्ति वा जानाति, स एवार्थः । ननु भगवांस्त्रिभुवनकार्यव्यग्रस्तत् कथं तस्यैताच्चित्ते वर्तते यद्बालानामपि नाम गृहीत्वा कुशलं पप्रच्छेत्याह—यः सुजनः साधुः स महतीमपि समृद्धिमासाद्य नैव किञ्चित् कदाचिद्विस्मरति, यतोऽसौ विस्मयो विगतस्मयो निरभिमानः ।

आ कुमारेभ्य आकुमारम्, अभिविधौ समासः। वार्तैव वार्तमारोग्यम्। "प्रज्ञादिभ्यश्च" । प्रकृतं प्राचुर्येण प्रस्तुतं वार्तं वार्तमयं "तत्प्रकृतवचने मयट्" । अन्वयुङ्क्तेति लङ् । "स्वराद्यन्तोपसृष्टा"दिति तङ् । स्मयो गर्वः । सुमङ्गली वृत्तम् ॥ ६८ ॥

मर्त्यलोकदुरवापमवाप्तरसोदयं
नूतनत्वमविरक्ततयानुपदं दधत् ।
श्रीपतिः पतिरसाववनेश्च परस्परं
सङ्कथामृतमनेकमसिष्वदतामुभौ ॥ ६९ ॥

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये श्रीकृष्णसमागमो नाम त्रयोदशः सर्गः ॥ १३ ॥

असौ श्रीपतिर्विष्णुरवनेश्च पतिर्युधिष्ठिरस्तदानेकं बहु सङ्कथामृतं संलापपीयूषमसिष्वदतामास्वादितवन्तौ, योगक्षेमकथां बहुकालं चक्रतुरित्यर्थः । सङ्कथैवामृतं कीदृशमिति तत्साधर्म्यमाह–मर्त्यलोकैः सामान्यजनैर्दुरवापं दुर्लभम्, नहि तयोर्यद्वत् सौष्ठवमनुत्तमं च कर्म तदन्यस्य भवति । तथावाप्तो रसेन रागेण स्नेहेन वा उदय आविर्भावो यत्र, सर्वत्र हि तत्त्वतः क्रियमाणे वस्तुनि रागो भवति। तथातृप्ततयावैतृष्ण्येनानुपदं पदे पदे नूतनत्वमपूर्वत्वं दधद् बिभ्रत् । यदि वाविरक्ततयाविरागेण, यत्र ह्युद्विज्यते तत्पुराणमिति विज्ञायते । अमृतमपि मनुष्यलोके दुर्लभं प्राप्तरसोदयं चाविरक्ततया च नवत्वं धत्ते, रसो माधुर्यम् । म्रियन्ते इति मर्त्याः "भुजिमृङ्भ्यां युक्त्युकौ चे" ति चकारस्यानुक्तसमुच्चयार्थत्वात् त्यप् प्रत्ययः । असिष्वदतामिति स्वादयतेर्लुङ्, तसस्ताम्, च्लेश्चङ् "णौ चङ्युपधाया ह्रस्वः" द्वित्वम्, षत्वम् । अषत्वपाठे तु 'स्वद आस्वादने' इत्यस्य रूपम्। रूपकश्लेषोऽलङ्कारः । सौम्या रमणीयको वा वृत्तम् । उष्णगुरूयुगग्लः सौम्या श्यामलिकेगि (?) । "जंणि उत्तमरतो मरजोहत्तरहङ्गअ विरसअम्मिदूरुज्ज़लवख्खधअग्गतअं । ते वि आणसुविरिदिठ अजइ रमणिज्ज़अं छन्दअम्मिछत-ओअरिरमणिज्ज़अं" इति भद्रम् ॥ ६९ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां कृष्णसमागमो नाम त्रयोदशः सर्गः ॥ १३ ॥

अथ

# शिशुपालवधकाव्ये

## चतुर्दशः सर्गः ।



**तं जगाद गिरमुद्गिरन्निव स्नेहमाहितविकासया दृशा ।**
**यज्ञकर्मणि मनः समादधद्वाग्विदां वरमकद्वदो नृपः ॥ १ ॥**

अथ तं भगवन्तं नृपः पार्थिवो गिरं वाचं जगादोवाच । गीर्ग्रहणं विस्पष्टार्थम् । किं कुर्वन् आहितविकासयोत्पन्नहर्षया दृशा दृष्ट्या स्नेहमुद्गिरन्निव प्रेमोद्वमन् यथा, नेत्रविस्फारादयो हि प्रेमसूचकाः । तथा यज्ञकर्मणि क्रतुक्रियायां मनः समादधच्चित्तं कुर्वन्, प्रस्तुतक्रतुसम्बद्धमवोचदित्यर्थः । कीदृशं तं वाग्विदां वाग्मिनां वरं श्रेष्ठम् । सोऽप्यकद्वदो वाग्मीति द्वयोरपि वाक्सौष्ठवोक्तिः । वाचं विदन्तीति वाग्विदो विचक्षणाः, अकुत्सितं वदतीत्यकद्वदः सद्वादी, "रथवदयोश्चे" ति कदादेशः । सर्गेऽस्मिन् रथोद्धता वृत्तम् । नौ रलौ गुरुयुता रथोद्धता ॥ १ ॥

भगवतः प्रियकथनाच्चाटुकारित्वं मा (कश्चि! केनचि) न्मम ज्ञायीति शङ्कमानः श्लोकत्रयमाह—

**लज्जते न गदितः प्रियं परो वक्तुरेव भवति त्रपाधिका ।**
**व्रीडमेति न तव प्रियंवदो ह्रीमता तु भवतैव भूयते ॥ २ ॥**

परस्त्वदन्यः कश्चित् प्रियमलीकमुक्तः सन्नैव लज्जते धृष्टत्वात्, प्रत्युत वक्तुः प्रियमाख्यातुरेवात्यर्थं त्रपा भवति, किमेतदनृतमहं वच्मीत्यात्मनैवासौ लज्जते । तव पुनः प्रियंवदश्चाटुकारः स्तोता न व्रीडमेति न जिह्रेति तथ्यकथनात् प्रत्युत भवतैव ह्रीमता त्रपान्वितेन भूयते, महात्मानो हि गुणकीर्तनेन नतमुखा भवन्ति । उक्तं च "गरहिजन्तानिजनेणणेअ लज्जं वहन्ति कातरिसा । सम्पुरिमाउण गुणकित्तणे विविलिता नम्रा होन्ति" ॥ तस्मादुत्कृष्टत्वात् त्वमस्माकं स्तुत्यो, वयमपि स्थाने स्तुतिं कुर्मो नानृतवादिन इति

वाक्यार्थः । प्रियं वदतीति प्रियंवदः "प्रियवशे वदः खच्" । प्रियं वदन्निति तु पाठे पदद्वयम् ॥ २ ॥

**तोषमेति वितथस्तवैः परस्ते च तस्य सुकराः शरीरिभिः ।**
**अस्ति न स्तुतिवचोऽनृतं तव स्तोत्रयोग्य न च तेन तुष्यसि ॥ ३ ॥**

परोऽन्यो वितथस्तवैरलीकस्तोत्रैस्तोषमेति हृष्यति, गुणाध्यारोपणं हि लघूनामुल्लासाय । ते च वितथस्तवास्तस्य जनैः सुलभाः, सत्यं हि दुर्लभमलीकस्य तु निष्ठैव नास्ति । तव पुनरनृतमलीकं स्तुतिवचः प्रियवचनं नास्ति, यतस्त्वं स्तोत्रयोग्यो नुतेरास्पदं सगुणत्वात् । यो हि निर्गुणस्तस्य स्तुतिरलीका भवति, नत्वन्यत्र । नच त्वं तेन वितथस्तवेन तुष्यसि सगुणत्वादेव । अथवा स्तुतिवचसा तेन त्वं न तुष्यसीति केचित्, सगुणस्य गुणवानित्युक्तौ को नाम तोषः । एतदुक्तं भवति–आत्महितार्थं त्वां वयं स्तुमो नत्वेतावता तव तोषः (स?त्वं) हि स्तोतरि निन्दके च समः ॥ ३ ॥

एतदेवोपोद्बलयति—

**बह्वपि प्रियमयं तव ब्रुवन् न व्रजत्यनृतवादितां जनः ।**
**संभवन्ति यददोषदूषिताः सार्व सर्वगुणसम्पदस्त्वयि ॥ ४ ॥**

अयं मादृशो जनो बह्वपि प्रियं तव वदन् नानृतवादितामलीकभाषित्वं याति, यद्यस्मात् हे सार्व सर्वहित ! त्वयि सर्वा एव गुणसम्पदो गुणातिशया अ[1]णिमादयोऽदोषदूषिता दोषैरदुष्टा निर्मलाः संभवन्ति विद्यन्ते, तस्माद्यद्वयं वच्मस्तत्तत्त्वमेव नत्वर्थवाद इति तात्पर्यार्थः ॥ ४ ॥

तदेव प्रियमाह—

**सा विभूतिरनुभावसम्पदां भूयसी तव यदायतायति ।**
**एतदूढगुरुभार ! भारतं वर्षमद्य मम वर्तते वशे ॥ ५ ॥**

हे ऊढगुरुभार ! धृतभुवनत्रितय विश्वम्भर यन्मम भारतं वर्षं भूलोकोऽद्य वशे वर्तते आयत्तं सा तवानुभावसम्पदां प्रभावातिशयानां महती विभूतिर्म-

१ 'अणि' क. पाठः ।

ह्रिमा, भवन्माहात्म्यवशादहं सार्वभौम इत्यर्थः। आयता दीर्घा प्रसृता आयतिरस्मत्प्रतापो यत्र तदायतायति। व(र्षे? शं) वशवर्तनं वा ॥ ५ ॥

प्रकृतमाह—

सप्ततन्तुमधिगन्तुमिच्छतः कुर्वनुग्रहमनुज्ञया मम।
मूलतामुपगते खलु त्वयि प्रापि धर्ममयवृत्तता मया॥ ६॥

सप्ततन्तुं यज्ञमधिगन्तुमिच्छतः प्राप्तुं वाञ्छतो मम त्वमनुज्ञयानुग्रहं प्रसादं कुरु, देह्यनुज्ञां यावद्राजसूययाजी भवामीत्यर्थः। यस्मात् त्वयि मूलतां कारणत्वं याते धर्ममयवृत्तता मया प्रापि प्राप्ता प्राप्स्यते,"आशंसायां भूतवच्च"। त्वया मूलभूतेनाहं धर्मवृत्त इति प्रसिद्ध इत्यर्थः। उक्तं च, "युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः। माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्चे"ति ॥ ६ ॥

अत्र च त्वदाज्ञाभाव एव विघ्न इति दर्शयितुमाह—

संभृतोपकरणेन निर्मलां कर्तुमिष्टिमभिवाञ्छता मया।
त्वं समीरण इव प्रतीक्षितः कार्षकेण वलजं पुपोषता॥ ७॥

मया निर्मलां शुद्धामिष्टिं यज्ञं कर्तुमिच्छता चिकीर्षता त्वमेव भगवांश्चराचरगुरुर्विश्वसाक्षी प्रतीक्षितः प्रतिपालितः। केन क इवेत्याह—कार्षकेण कृषीवलेनेव वलजं क्षेत्रं पुपोषता पवितुमिच्छता समीरणो वायुः। कीदृशेन मया संभृतं ढौकितमुपकरणमाज्यदक्षिणादि येनेति द्रव्यसंपदुक्तिः। कार्षकस्योपकरणानि संमार्जन्यादीनि। इष्टे निर्मलत्वमर्थशुद्धिः श्रद्धापूतत्वं च। वलजा क्षेत्रभूस्तात्स्थ्यात् तुषं धान्यमुच्यते। पुपोषतेति पूञो रूपम्। पूङस्तु पिपविषमाणेनेति स्यात्॥ ७॥

न त्वमाज्ञादानार्थमेव प्रतीक्षितो यावद्यागसमाप्तयेऽपीति दर्शयितुमाह—

वीतविघ्नमनघेन भाविता सन्निधेस्तव मखेन मेऽधुना।
को विहन्तुमलमास्थितोदये वासरश्रियमशीतदीधितौ॥ ८॥

ममेदानीं भवत्संनिधानाद्यघेन वीतविघ्नं निर्विघ्नमेवानघेन परिपूर्णेन भाविता भाविष्यते, त्वयि पालके सति निरन्तरायमेव राजसूयं भविष्यतीत्यर्थः । अघं व्यसनम् । तदेव दृष्टान्तेन द्रढयति—उष्णांशौ कृतोदये सति दिनलक्ष्मीं को विहन्तुमलं बाधितुं समर्थः । भावितेति भावे लुट् । चिण्वद्भावः ॥ ८ ॥

न च ममात्राधिकार इति वक्तुमाह—

**स्वापतेयमधिगम्य धर्मतः पर्यपालयमवीवृधं च यत् ।**
**तीर्थगामि करवै विधानतस्तज्जुषस्व जुहवानि चानले ॥ ९ ॥**

अहं यत् स्वापतेयं धनं धर्मतः क्षत्रवृत्त्याधिगम्यार्जयित्वा पर्यपालयमरक्षं, तथा अवीवृधं वर्धितवांस्तदद्य तीर्थगामि करवाणि पात्रसाद्विधिना करवै कर्तुं प्रार्थये, तथाग्नौ विधिवज्जुहवानि जुहोमि, जुषस्वानुमोदस्व कुरु प्रसादम्, आज्ञा दीयतां कालोऽयं सोमं पातुमित्यर्थः । अर्थस्य हि शास्त्रदृष्ट एवंविधः क्रमः । उक्तं च "धर्मेण लब्धुमीहेत लब्धं यत्नेन पालयेत् । पालितं वर्द्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपे"दिति । तीर्थं पात्रम् । "स्वाध्यायाढ्यं धर्मयोनिं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम् । गोषु क्षान्तं नातितीक्ष्णं शरण्यं वृत्तिग्लानं तादृशं पात्रमाहु"रिति ॥ तद्गच्छति साध्विति तीर्थगामि । स्वपतौ साधु स्वापतेयं धनं "पथ्यतिथिवसतिस्वपतेर्ढञ्" । "स्वरादीनां चे"ति वृद्धिनिषेधस्यैव वचनप्राप्तस्य स्वागतादित्वात् प्रतिषेधः । पर्यपालयमिति लङ् मिप्, अम् । अवीवृधमिति वर्धयतेर्णिचि लुङ् । करवै जुहवानीति प्रार्थने लोट् निमन्त्रणे वा । निमन्त्रणं नियोगकरणम् । "एत ऐ" "लघूपधस्ये"त्यनुवृत्त्या "नाभ्यस्तस्याचि पिती"ति गुणनिषेधाभावः ॥ ९ ॥

गौरवे[1] तत्स्थिते सति, आत्मनः कर्तृत्वे धार्ष्ट्यमाशङ्कमान आह—

**पूर्वमङ्ग ! जुहुधि त्वमेव वा स्नातवत्यवभृथे ततस्त्वयि ।**
**सोमपायिनि भविष्यते मया वाञ्छितोत्तमवितानयाजिना ॥ १० ॥**

अङ्ग ! तात अथवा त्वमेव पूर्वं जुहुधि वह्निं प्रीणय, ततस्त्वय्यवभृथे यज्ञान्तस्नाने सोमपायिनि पीतामृते चानन्तरं मया वाञ्छितोत्तमवितानयाजिना भविष्यते, वाञ्छितेन चिकीर्षितेनोत्तमेन श्रेष्ठेन वितानेन मखेन राज-

[1] 'वितेस्थि' क. ख. ग. पाठः ।

सूयाख्येनेष्टवानिति वाञ्छितोत्तमवितानयाजी तेन तादृशेन संपत्स्यतेऽनन्तरमहं होष्यामीत्यर्थः। "करणे यजः" इति णिनिः। "धातुसम्बन्धे प्रत्ययाः" इति साधुत्वम्। यथा अग्निष्टोमयाजी अस्य पुत्रो जनितेति। अवभृथो यज्ञान्ते कर्मविशेषस्तत्र स्नायते इत्यागमः ॥ १० ॥

आज्ञादानेनौद्धत्यं मन्यमान आह—

**किं विधेयमनया विधीयतां त्वत्प्रतापजितयार्थसंपदा।**
**शाधि शासक! जगत्त्रयस्य मामाश्रवोऽस्मि भवतः सहानुजः ॥११॥**

हे त्रिभुवनरक्षक! मां शाध्यादिश, अनया भवत्तेजोर्जितया धनसमृद्ध्या किं कार्यं विधीयताम्, यतस्तवाहं सानुज आश्रवो वचनकारी, यदेव त्वं वक्षि तदेवाहं सम्पादयामीत्यर्थः। शाधीति शासः "शा हौ"। शास्तीति शासकः पालकः। आशृणोतीत्याश्रवः। सहानुजैर्वर्तते इति सहानुजः ॥ ११ ॥

**तं वदन्तमिति विष्टरश्रवाः श्रावयन्नथ समस्तभूभृतः।**
**व्याजहार दशनांशुमण्डलव्याजहारशवलं दधद्वपुः ॥ १२ ॥**

तं भूपतिमित्थं ब्रुवाणमथानन्तरं विष्टरश्रवा व्याजहार जगाद। किं कुर्वन् सर्वपार्थिवान् श्रावयन् निशामयन् राजकस्य प्रत्यक्षम्, अत्र च वक्ष्यमाणोऽभिप्रायः। "यस्तवेह सवने" इति (१४।१६)। तथा वपुर्बिभ्रत्। कीदृशं दशनांशुमण्डलव्याजेन दन्तकिरणच्छद्मना हारेण मुक्तावल्या शवलं शारम् ॥ १२ ॥

किमुवाचेत्याह—

**साधिताखिलनृपं महन्महत् संप्रति स्वनयसंपदैव ते।**
**किं परस्य स गुणः समश्नुते पथ्यवृत्तिरिह यद्यरोगिताम् ॥ १३ ॥**

"सा विभूतिरनुभावसम्पदा"मिति (१४।५) यद्राज्ञोक्तं तदमुष्य वक्ति। तव महद्राज्यं संप्रति स्वनयसम्पदैव निजनीत्युत्कर्षेणैव साधिताखिलनृपं वशीकृतराजकं नत्वस्मदनुभावेन। कीदृशं महत् महद्विशालं, चतुरुदधिमालामेखलामहीमर्यादमित्यर्थः। एतदेव दृष्टान्तेन द्रढयति—पथ्यवृत्तिर्हिताशी यद्यरोगितामारोग्यं समश्नुते इह स किं परस्य वैद्यस्य गुणः कौशलमपि तु पथ्यवृत्तेरेव। साधिताः करदीकृताः। महद्राज्यं, महद्विस्तीर्णं, नयः षाड्गुण्यम्

पथोऽनपेता पथ्या "धर्मपथ्यर्थन्यायादनपेते" ॥ १३ ॥

यदप्युक्तं पूर्वमङ्गेत्यादि (१४।१०) तदयुक्तमिति दर्शयितुमाह—

**तत् सुराज्ञि भवति स्थिते परः कः क्रतुं यजतु राजलक्षणम्।**

**उद्धृतौ भवतु कस्य वा भुवः श्रीवराहमपहाय योग्यता ॥ १४ ॥**

यतस्त्वं नययुक्तश्च तस्मात् सुराज्ञि त्वयि संनिहिते कोऽपरो राजलक्षणं क्रतुं राजसूयं यजतु निर्वर्तयतु, त्वमेवात्र योग्यो नापर इत्यर्थः। एतदेवाक्षेपपूर्वं दृष्टान्तेन द्रढयति—भूमेरुद्धरणे आदिवराहं वर्जयित्वा कस्यान्यस्य योग्यता भवत्विति भङ्ग्यानुज्ञादानम्। शोभनो राजा सुराजा "न पूजना"दिति टच्प्रतिषेधः। राजशब्दो लक्षणमुपलक्षणं यस्य तं राजलक्षणं क्रतुं राजसूयम्। योग्यतैव वर्जने भवने च कर्त्रीति अपहायेति ल्यबुत्पत्तिः ॥ १४ ॥

यथोक्तम् 'इष्टिं वाञ्छता मया त्वं समीरण इव प्रतीक्षित' इतिः (१४, ७) तदुद्दिश्याह—

**शासनेऽपि गुरुणि व्यवस्थितं कृत्यवस्तुषु नियुङ्क्ष्व कामतः।**

**त्वत्प्रयोजनधनं धनञ्जयादन्य एष इति मां च मावगाः ॥ १५ ॥**

कामतो यथेच्छं त्वं मां कृत्यवस्तुषु कार्यशरीरेषु नियुङ्क्ष्व व्यापारय, देह्याज्ञां किं कर्म क्रियतामित्यर्थः। यतो गुरुण्यनन्यसाध्ये शासनेऽप्याज्ञायां स्थितोऽहम्, तथा त्वत्प्रयोजनं भवत्कार्यमेव धनं यस्य तं त्वत्प्रयोजनधनम्। किं बहुना अर्जुनादन्य एष इति मां त्वं मावगाः मा बुद्धाः, यथार्जुनस्तावकीनो निदेशवर्ती तथाहमपीत्यर्थः। अवगा इतीणो गाङ्, लुङ्। धनं जितवान् धनञ्जयः, "खः संज्ञायाम्" ॥ १५ ॥

यच्चोक्तं 'वीतविघ्नमित्यादि' (१४।८) तत् सत्यमिति वक्तुमाह—

**यस्तवेह सवने न भूपतिः कर्म कर्मकरवत् करिष्यति।**

**तस्य नेष्यति वपुः कबन्धतां बन्धुरेष जगतां सुदर्शनः ॥ १६ ॥**

यो राजा तवास्मिन् सवने यज्ञे भृतक इव कर्म न करिष्यति तस्यायं सुदर्शनश्चक्रं वपुः कबन्धतां नेष्यति, शिरश्छेत्स्यतीत्यर्थः। यतो जगतां बन्धुः सहायो दुष्टनिग्रहेण। कर्म करोतीति कर्मकरः "कर्मणि भृत"इति टः, भक्तैः सुखेन दृश्यते इति सुदर्शनः "भाषायां शासियुधिदृशी"ति युच् ॥ १६ ॥

**इत्युदीरितगिरं नृपस्त्वयि श्रेयसि स्थितवति स्थिरे मम ।**
**सर्वसम्पदिति शौरिमुक्तवान् उद्वहन् मुदमुदस्थित क्रतौ ॥ १७ ॥**

अथ नृपो युधिष्ठिरः क्रतौ राजसूये उदस्थितोद्यमं चक्रे । कीदृशः भगवन्तं शौरिमितीत्थमुक्तवान् भाषमाणः। किमित्याह–त्वयि श्रेयसि शुभहेतौ स्थिरे दृढे स्थिते सति मम सर्वसम्पदखिलाः समृद्धयः। कीदृशं शौरिमित्युक्तप्रकारेणोदीरितगिरमुक्तवाचम्। अत एव राजा मुदमुद्वहन् प्रीयमाणः। उदस्थितेति- "उदोऽनूर्ध्वकर्मणि"। "स्थाघ्वोरिच्च" ॥ १७ ॥

तमेवोद्यममाह—

**आननेन शशिनः कलां दधद् दर्शनक्षपितकामविभ्रमः।**
**आप्लुतः स विमलैर्जलैरभूदष्टमूर्तिधरमूर्तिरष्टमी ॥ १८ ॥**

स राजा अष्टम्यष्टमूर्तिधरमूर्तिरभवत्। क्षितिजलपवनहुताशनसोमसूर्याकाशयजमानाख्या अष्टौ मूर्तीर्धारयतीत्यष्टमूर्तिधरो महादेवो भगवांस्तस्य सम्बन्धिनी मूर्तिरसौ राजाभूत्। कासावित्याह–अष्टमी यजमानाख्या, तेन राजा यजमानोऽभवदित्यर्थः। यजमानग्रहणमेव कस्मान्न कृतम्, श्लेषार्थं देवस्य सर्वव्यापित्वख्यापनार्थं च। छन्दतश्च वाचां प्रवृत्तिः। कीदृशोऽसौ मुखेन शशिनः कलां बिभ्रत्, एतेन तोष उपवासग्लानिस्तेजस्वित्वं चोक्तम्। तथा दर्शनेनेक्षणमात्रेण क्षपितो निवर्तितः कामविभ्रमः, कामस्याभिलाषस्य याच्ञाया विभ्रमो विलसितविकारो येन, दृष्टिमात्रेण धनं दत्त्वा परिपूरिताशा अर्थिनो येन कृता इत्यर्थः। तथा विमलैः पुण्यैर्जलैस्तोयैराप्लुतः स्नातः। भगवानपि शशिकलावतंसो दग्धस्मरविभ्रमो गङ्गाजलौघोक्षितमूर्धजश्चेति ॥ १८ ॥

**तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः।**
**कर्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि ॥ १९ ॥**

तस्य राज्ञो यज्ञे कर्तृताभवत्, ईज इत्यस्य शब्दस्यासौ वाच्योऽभूदित्यर्थः। कदाचित् स्वयं क्रियाः कुर्यात् तदवश्यमेव कर्तृता भवतीत्याह—आत्मनः क्रियाः क्रतुकर्माण्यकुर्वतोऽनिर्वर्तयतः। कदा कर्तृताभूदित्याह— ऋत्विजि याजके करणे यथा बुद्धितुल्ये वृत्तिभाजि वेतनभृति, मूल्येन क्रीते ऋत्विजि कर्माणि कुर्वतीत्यर्थः। यदि स्वयं क्रियां न कुरुते तत्कथमन्यस्य सक्रियत्वे तस्य

कर्तृत्वमित्याह— तदुपलम्भतस्तासां क्रियाणामुपलम्भाद् दर्शनात् धनक्रीतर्त्विग्निर्वर्तितव्यापाराणां दर्शनात् फलभाक्त्वाच्च तस्य कर्तृत्वम्, अत एव सांख्यपुरुषेण समीक्षोक्तेनात्मना तुल्यतां साम्यं बिभ्राणस्य। किल करणे बुद्धौ वृत्तिभाजि सव्यापरे सुखदुःखोपभोक्तरि निष्क्रियस्यापि पुरुषस्य कर्तृत्वम्, कुतः तासां बुद्धिकृतानां क्रियाणामुपलम्भाद् दर्शनात्। प्रकृतिजनितानां हि क्रियाणां द्रष्टा साङ्ख्यपुरुष उदासीनः, अतश्च बुद्धिबन्धमोक्षानुभवादात्मा बद्धो मुक्त इत्यभिधीयते। तदुक्तं पूर्वम् "विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम्। फलभाजि समीक्षोक्ते बुद्धेर्भोग इवात्मनी"ति (स० ३ श्लो० ५६)। याजकाः कर्माण्यकुर्वन् नृपस्तु द्रष्टाभवदिति वाक्यार्थः ॥ १६ ॥

अथ ता एव क्रिया आह—

**शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया।**
**याज्यया यजनधर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥ २० ॥**

अथ यजनधर्मिणो याजका द्रव्यजातं पुरोडाशादिकमक्षिपन्नग्नौ जुहुवुः। किं कृत्वा देवतामाज्यादिस्वामिनीमपदिश्याभिसंधाय। कीदृशीम् अनुवाक्ययाह्वानमन्त्रेण शब्दितामाहूताम्, कथमनपशब्दं ससाधुशब्दम्। यज्ञे हि कर्मण्यपशब्दोच्चारणेन महान् प्रत्यवायः। उक्तं च—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधा"दिति॥ उच्चकैस्तारं वेगेनेत्यर्थः। तद्यथा- इन्द्र ३ आगच्छ हरिध ३ आगच्छेत्यादि। कीदृशा याजका वाक्यलक्षणविदो मीमांसका वाक्यार्थविचारक्षमाः। केन द्रव्यजातमत्यजन्नित्याह—याज्यया हविष्प्रक्षेपमन्त्रो याज्या, आह्वानमन्त्रस्त्वनुवाक्या। यजनं याजनमत्र, तदेव धर्मः स विद्यते येषां ते यजनधर्मिणः सर्व एव होत्रध्वर्युप्रभृतय ऋत्विजः "धर्मशीलवर्णान्ता"दितीनिः। तत्र होता याज्यानुवाक्ये पठति, यजमानो देवतामुद्दिशति, अध्वर्युराज्यं वह्नौ प्रक्षिपति ॥ २० ॥

**सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ।**
**तत्र सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत ॥ २१ ॥**

तत्र मखे सामविदुद्गाता छन्दोगोऽसङ्गमनवरतं साम गीतिविशेषमुज्ज-

गावगासीत्, सामवेदो हि गीयते। कीदृशं साम षड्जादिभेदेन सप्तभेदाः करे पाणौ कल्पिताः पर्वाभिर्भोगेन रचिताः स्वराः—स.ऋ.ग.म.प.ध.नयः यत्र तत् सप्तभेदकरकल्पितस्वरम् । किंच तत्र सूरयो बहृचाः कठाश्च पुण्यं पवित्रमृग्यजुषमृचा यजूषि चाध्यगीषत पेठुः । सर्वेषां विशेषणमाह—सूनृतगिरः सामर्ग्यजुर्विदः । तत्र हि शाखाभेदेन द्विजास्तिष्ठन्ति । ऋचश्च यजूंषि च ऋग्यजुषमिति निपातितम्। पादबद्धो मन्त्र ऋचः, अपादबद्धो यजुः, सामानि वाक्यविशेषस्था गीतयः। अध्यगीषतेति इङो लुङ् "विभाषा लुङ्लृङो"-रिति गाङादेशः "गाङ्कुटादिभ्योऽञ्णिन्ङित् , घुमास्थागे"तीत्वम् ॥ २१ ॥

**बद्धदर्भमयकाञ्चिदामया वीक्षितानि यजमानजायया ।**
**शुष्मणि प्रणयनाभिसंस्कृते तैर्हवींषि जुहुवांबभूविरे ॥ २२ ॥**

तैर्याजकैः शुष्मण्यग्नावाहवनीयाख्ये हवींष्याज्यादीनि जुहुवांबभूविरे हुतानि। कीदृंशि यजमानजायया द्रौपद्या वीक्षितानि दृष्टानि, एवंविधो ह्येष विधिः। कीदृश्या बद्धं दर्भमयं काञ्चिदाम मेखलागुणो यया "डाबुभाभ्यामन्यतरस्या"-मिति डाप् । कीदृशे शुष्मणि प्रणयनेन संस्कारविशेषेणाभिसंस्कृते कृतसंस्कारे। गार्हपत्यादुद्धृत्य प्राचीनं नीत्वोत्तरवेद्यां निधानं प्रणयनम्। जुहुवांबभूविरे इति कर्मणि लकारः। "भीह्रीभृहुवां श्लुवच्च" ॥ २२ ॥

**नाञ्जसा निगदितं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे ।**
**तत्र कर्मसु विपर्यणीनमन् मन्त्रमूहकुशलाः प्रयोगिणः ॥ २३ ॥**

तत्र मखे प्रयोगिणः प्रयोगज्ञा वैयाकरणा ऋत्विजः कर्मसु निर्वापादिकासु क्रियासु मन्त्रं वेदवाक्यं विपर्यणीनमन् विपरिणमितवन्तः, यत आगमे वेदे निखिलाभिः सर्वाभिर्विभक्तिभिर्व्यक्तिभिश्च निखिलं न निगदितमुक्तम्। व्यक्तिः स्त्रीपुंनपुंसकानि। अञ्जसा विपरिणामं ते कथं जानते इत्याह— ऊहकुशला अनुमानकुशलाः। तत्र च प्रयोगित्वमेव कारणम्। शब्दशास्त्रे किलेदमुक्तम्—"रक्षोहागमलघ्वसन्देहाः प्रयोजन"मिति । सम्बन्धादेकस्यापरस्यानुमानमूह उत्प्रेक्षा। आगमे किल न सर्वैर्वचनैर्नापि सर्वैर्लिङ्गैर्मन्त्रा उक्ताः, तेन यज्ञगतेन यथायथं विपरिणम्याः। न चावैयाकरणो विपरिणमयितुं शक्नोतीत्यूहार्थं व्याकरणमध्येयम्। तद्यथाग्नेर्मन्त्रोऽस्ति "अग्नये त्वा जुष्टं निर्वपामी"ति। सूर्यस्य तु नास्ति, चोदना च विद्यते "प्रकृतिवच्च विकृतिः कर्तव्ये"-

ति । स चोह्यते "सूर्याय त्वा जुष्टं निर्वपामी"ति । तथापां मन्त्रोस्ति "देवीरापः शुद्धा यूय"मिति, आज्यस्य तु नास्ति स लिङ्गेन विपरिणम्यते। "देव आज्य त्वं शुद्ध"मिति । विपर्यणीनमन्निति नमयतेर्लुङ्। प्रयुञ्जते इति प्रयोगिणः "संपृचानुरुधे"ति घिनुन् ॥ २३ ॥

असंदेहार्थं व्याकरणमित्युक्तं तद् दर्शयितुमाह—

**संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति ।**

**शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥ २४ ॥**

शब्दाः शिष्यन्ते संस्क्रियन्तेऽनेनेति शब्दशासनं व्याकरणं, तद्विदन्तीति तद्विदो वैयाकरणास्ते समासयोस्तत्पुरुषबहुव्रीह्योर्विग्रहं वाक्यं स्वरेणोदात्तादिना व्यवससुर्निश्चिक्युः । कीदृशयोरिति भ्रान्तिकारणमाह—संशयाय संदेहाय सरूपतां सादृश्यं दधतोः । उभयकोटिस्पृग् ज्ञानं संशयः । कदाचिदर्थभेदः स्यात्तन्मा भून्निश्चय इत्याह—क्रियामनुष्ठानं प्रति दूरमत्यर्थं भिन्नं फलं लक्षणं ययोः, फलं भिन्नमिति यावत् । यथा—'स्थूलपृषतीमालभेते'ति यज्ञियाः पठन्ति, तत्र च संशयः किं स्थूला चासौ पृषतीति कर्मधारयः उत स्थूलानि पृषन्ति यस्या इति बहुव्रीहिः, उभयत्रापि हि सदृशं रूपं, क्रियायां फलभेदश्च । कर्मधारये हि पीवराया मृग्या आलम्भनं, बहुव्रीहौ तु सर्वस्या गवादिजातेः शारायाः, । एवंविधे च संदेहे वैयाकरणाः स्वरात् समासं व्यवससुः । यदि स्थूलपृषतीशब्दोऽन्तोदात्तस्तत् तत्पुरुषोऽयं समासः "समासस्ये"ति (६।१।२२३) तत्रान्तोदात्तविधानात्, अथाद्युदात्तस्तद्बहुव्रीहिः, "बहुव्रीहौ प्रकृत्या पूर्वपदं"(६।२।१) इति वचनात् स्थूलस्य चाद्युदात्तत्वात् । स्यतेर्लिटि व्यवससुरिति ॥ २४ ॥

**लोलहेतिरसनाशतप्रभामण्डलेन लसता हसन्निव ।**

**प्राज्यमाज्यमसकृद्वषट्कृतं निर्मलीमसमलीढ पावकः ॥ २५ ॥**

पावकोऽग्निराज्यं घृतमलीढालिक्षत् आद । कीदृशं प्राज्यं प्रभूतम्, असकृच्च वषट्कृतं वौषट्कारेण हुतं, निर्मलीमसं मन्त्रपूतम् । कीदृशोऽग्निः, लोलाश्चटुला हेतयो ज्वाला एव रसना जिह्वास्तच्छतानां प्रभामण्डलेन दीप्तिचक्रेण लसता स्फुरता हसन्निव तृप्तियोगात् । अलीढेति लुङ् "ढो ढे लोपः" ॥ २५ ॥

**तत्र मन्त्रपवितं हविः क्रतावश्नतो न वपुरेव केवलम् ।**
**वर्णसम्पदमतिस्फुटां दधन्नाम चोज्ज्वलमभूद्धविर्भुजः ॥ २६ ॥**

तत्र यज्ञे हविर्भुजोऽग्नेर्मन्त्रपूतं हविर्भुञ्जानस्य न केवलं वपुरेवोज्ज्वलं स्निग्धमभूत् यावद्धविर्भुगिति नामापि, नाम्न औज्ज्वल्यमर्थानुगमात् । किल हवींषि भुङ्क्ते इति हविर्भुक् । कीदृशं वपुः, वर्णस्यौज्ज्वल्यस्य सम्पदं प्रकर्षं प्रकटतां बिभ्रत् । नामापि वर्णानामक्षराणां सम्पदं बाहुल्यमतिस्फुटामसंदिग्धां धत्ते, हविर्भुगित्यत्र हि बहवो वर्णाः प्रकटाश्च । पवितामिति "पूङश्चे"ति वेट् ॥ २६ ॥

**स्पर्शमुष्णमुचितं दधच्छिखी यद् ददाह हविरद्भुतं न तत् ।**
**गन्धतोऽपि हुतहव्यसंभवाद् देहिनामदहदोघमंहसाम् ॥ २७ ॥**

शिखी वह्निरुचितं सहजमुष्णं तीक्ष्णं स्पर्शमुद्वहन् यत्पुरोडाशादिकं हविर्ददाह न तदाश्चर्यम्, यतो हव्योत्थाद्गन्धतोऽपि गन्धेनापि प्राणिनामंहसामोघं पापपूगमदहत् । हविर्गन्धग्रहणेन हि पापं क्षीयते, अतश्च गन्धेनापि यः पापं दहति स हविस्तीक्ष्णस्पर्शेन दहतीति किं चित्रम् । ये त्वेवं व्याचक्षते—शिखी हविर्यद्ददाह तन्नाद्भुतं, यदुष्णस्पर्शं दधदिदं त्वत्यद्भुतं यद्गन्धेनाप्यंहःसंततिमदहदिति तेषां साध्याहारोऽयं श्लोकः स्यात् । हूयते इति हविः ॥ २७ ॥

**उन्नमन् सपदि धूम्रयन् दिशः सान्द्रतां दधदधःकृताम्बुदः ।**
**द्यामियाय दहनस्य केतनः केतयन्निव दिवौकसां प्रियम् ॥ २८ ॥**

दहनस्याग्नेः केतनो धूमो द्यामियाय खं प्रससार । कीदृशः उन्नमन्नुद्गच्छन्, सपदि दिशो धूम्रयन् सधूमाः कुर्वन्, यतः सान्द्रतां दधत् घनतां बिभ्रत्, उन्नम्रत्वादधःकृता अम्बुदा मेघा येन, तथा दिवौकसां देवानां प्रियं केतयन्निवाख्या[1]निव 'आगच्छत युष्माकमुत्सवोऽय'मिति । केतयन्निति कित ज्ञाने । दिवि ओको येषां ते दिवौकसः । दिवशब्दोऽकारान्तोऽपि नपुंसकलिङ्गोऽस्ति यथा "दिशो बाहू दिवं शिर"इति ॥ २८ ॥

**निर्जिताखिलमहार्णवौषधिस्यन्दसारममृतं ववल्गिरे ।**
**नाकिनः कथमपि प्रतीक्षितुं हूयमानमनले विषेहिरे ॥ २६ ॥**

नाकिनो देवा अमृतं ववल्गिरे हविर्जक्षुः । अग्नौ तु हूयमानं तत्कथ-

१ 'ख्य'क. ख. ग. पाठः ।

मपि प्रतीक्षितुं प्रतिपालयितुं विषेहिरे सोढवन्तः, आहूतो हि बुभुक्षितः कालक्षेपेण ताम्यति। ननु पूर्वममृतं तैर्जग्धमेव तत्कथं तत्वरिरे इत्याह—निर्जितोऽखिलो महार्णवस्यौषधीनां च स्यन्दसारो रसोत्कर्षो येन तत्तथोक्तम् । अब्धिमथिताद्यमृतात् तत्साधुतरम् । उक्तं च-अमृतं नाम यत्सन्तः (२।१०७) इत्यादि ॥ २९ ॥

**तत्र नित्यविहितोपहूतिषु प्रोषितेषु पतिषु द्युयोषिताम् ।**

**गुम्फिताः शिरसि वेण्योऽभवन् न प्रफुल्लसुरपादपस्रजः ॥ ३० ॥**

द्युयोषितां देवस्त्रीणां वेण्यः शिरसि गुम्फिता बद्धा अभवन् नतु प्रफुल्लसुरपादपस्रजः, प्रफुल्ता विकसिता सुरपादपानां मन्दारादीनां स्रजो माला यासु ता एवंविधा न बभूवुः। कुतः पतिषु प्रोषितेषु सत्सु। किं सङ्ग्रामे नेत्याह तत्र यज्ञे नित्यं विहिता उपहूतिराह्वानं येषाम्, अतश्चाजस्रं मत्स्यलोकवासात् प्रोषितत्वम्। अत एव देवीनां केशरचनानादरः। दीर्घसत्रं राजाकार्यदिति वाक्यार्थः ॥ ३० ॥

**प्राशुराशु हवनीयमत्र यत् तेन दीर्घममरत्वमध्यगुः।**

**उद्धतानधिकमेधितौजसो दानवांश्च विबुधा विजिग्यिरे ॥ ३१ ॥**

अत्र मखे देवा यतो हवनीयं हविः प्राशुरादुस्तेन दीर्घममरत्वमध्यगुर्लेभिरे। सामुद्रे ह्यमृते भुक्ते तैः किञ्चिदमरत्वं प्राप्तम्, अद्य तु दीर्घदीर्घमित्यतिशयोत्प्रेक्षा। तेनैवेत्यर्थः । तथा उद्धतानपि दानवानधिकतेजस्त्वाद्विजिग्यिरेऽभ्यभवन्। प्राशुरित्यश्नातेर्लिट्। अध्यगुरिति "इणो गा लुङि" । विजिग्यिरे इति "विपराभ्यां जेः। संल्लिटोर्जेः" ॥ ३१ ॥

**नापचारमगमन् क्वचित् क्रियाः सर्वमत्र समपादि साधनम्।**

**अत्यशेरत परस्परं धियः सत्रिणां नरपतेश्च संपदः ॥ ३२ ॥**

अत्र मखे क्रिया निर्वापादिका अपचारं विधिभ्रंशं नागमन् यज्ञसूत्रविधेरभ्यस्तत्वात्, तथा सर्वमखण्डं साधनमुपकरणमाज्यादिकं समपादि सम्पन्नम्। किं च सत्रिणामृत्विजां धियो बुद्धयो राज्ञश्च समृद्धयः परस्परमन्योन्यमत्यशेरत जिग्युः। द्विगुणे दक्षिणादिके निरूप्यमाणे चतुर्गुणस्य ढौकनात् । समपादीति "चिण्ते पदः"। परस्परमिति कर्मपदम् । सत्रं यज्ञो विद्यते येषां ते सत्रिणो याजकाः ॥ ३२ ॥

**दक्षिणीयमधिगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम् ।**
**दक्षिणः क्षितिपतिर्व्यशिश्रणद् दक्षिणाः सदसि राजसूयिकीः ॥३३॥**

अथ स राजा सदसि पङ्क्तिशः पङ्क्तौ दक्षिणा व्यशिश्रणद् ददौ । कास्ताः राजसूयस्य दक्षिणा राजसूयिकीः राजसूययोग्याः "तस्य दक्षिणा यज्ञाख्येभ्य" इति ठक्। किं कृत्वा एवंविधं विप्रसंघमवगम्य बुद्ध्वा प्राप्य वा । कीदृशं पङ्क्तिपावनं स्वाध्यायश्रुतयमनियमादिभिर्यः पङ्क्तिं पुनीते स पङ्क्तिपावनः, अत एव च दक्षिणामर्हतीति दक्षिणीयम् "कडङ्गरदक्षिणाच्छ च" । राजा कीदृशः, दक्षिणोऽनुकूलो भक्तिमान्। व्यशिश्रणदिति श्रणयतेर्लुङ् ॥ ३३ ॥

**वारिपूर्वमखिलासु संस्क्रियालब्धशुद्धिषु धनानि बीजवत् ।**
**भावि बिभ्रति फलं महद् द्विजक्षेत्रभूमिषु नराधिपोऽवपत् ॥ ३४ ॥**

द्विजा एव क्षेत्रभूमयस्तासु राजा धनान्येव बीजमवपदुप्तवान् ददौ। कथं वारिपूर्वं जलमादौ दत्त्वा, एवंविधो हि विधिः। कीदृशीषु संस्क्रिया संस्कारः कुलपाठश्रुतादिकस्तया लब्धा शुद्धिर्निष्कल्मषत्वं याभिः पवित्राभिरित्यर्थः। कीदृशानि धनानि भावि भविष्यत् फलं स्वर्गादिकं महदक्षयं बिभ्रति वहमानानि। किमिवावपदित्याह—बीजवत् । यथा कश्चित् कृषीवलो बीजानि वपति वारिपूर्वमादौ हि पानीयमारोप्यते। संस्क्रियया हलगोमयादिकया लब्धा शुद्धिरुत्कर्षो याभिः। बीजान्यपि भावि शारदिकं फलं धान्यं महदलघु धारयन्ति ॥ ३४ ॥

**किं नु चित्रमधिवेदि भूपतिर्दक्षयन् द्विजगणानपूयत ।**
**राजतः पुपुविरे विरेपसः प्राप्य तेऽपि विमलं प्रतिग्रहम् ॥ ३५ ॥**

राजाधिवेद्यन्तर्वेद्यां विप्रपूगान् दक्षयन् यदपूयत पूतस्तत्किं चित्रं ? नैवाश्चर्यम्, यतस्तेऽपि द्विजगणा राजतो युधिष्ठिराद्विमलमनिन्द्यं शुद्ध्या पूतं प्रतिग्रहं प्राप्य पुपुविरे पूताः। अतश्च यत्र ग्रहीतारोऽपि पूयन्ते तत्र दातरि का गणना। कीदृशाद्राजतः, विरेपसो निष्पापात् धर्मिष्ठात्। सपापात्किल प्रतिग्रहो दोषाय। उक्तं च—"यो राज्ञः प्रतिगृह्णाति लुब्धादुच्छास्त्रवर्तिनः। स याति नरकान् घोरान् सपुत्रपशुबान्धव" इति॥ किं न्विति, किंशब्दः काक्काम् । नुरवधारणे। नैव चित्रमित्यर्थः। वेद्यामधिवेदि। अपूयत, पुपुविरे इति कर्मकर्तरि। दक्षयन्निति "दक्ष वृद्धौ"। द्विजा वर्धन्ते राजा धनादिना वर्धयतीति हेतुमण्णिच् ॥ ३५ ॥

**स स्वहस्तकृतचिह्नशासनाः पाकशासनसमानशासनः ।**
**आशशाङ्कतपनार्णवस्थितेर्विप्रसादकृत भूयसीर्भुवः ॥ ३६ ॥**

स राजा बह्वीर्भूमीर्विप्रसादकृत ब्राह्मणाधीनाश्चक्रे द्विजेभ्यो ददौ, "देये त्रा चे" ति सातिः। किमवधिकमित्याह—आशशाङ्कतपनार्णवस्थितेः कल्पान्तं यावदित्यर्थः। कीदृशीस्ताः स्वहस्तेन स्वहस्त एव वा कृतं चिह्नमङ्को येषां तथाविधानि शासनानि पट्टका यासु ताः स्वहस्तकृतचिह्नशासनाः। नच कालान्तरेण राजान्तरात्तासां हरणभयं, यतोऽसाविन्द्राज्ञातुल्यादेशोऽनुल्लङ्घ्यादेश इत्यर्थः ॥ ३६ ॥

**शुद्धमश्रुतिविरोधि बिभ्रतं शास्त्रमुज्ज्वलमवर्णसंकरैः ।**
**पुस्तकैः सममसौ गणं मुहुर्वाच्यमानमशृणोद् द्विजन्मनाम् ॥ ३७ ॥**

असौ राजा द्विजगणं वाच्यमानमाशिषं कार्यमाणमशृणोत्, दक्षिता हि ब्राह्मणाः स्वस्तिवाचनं कुर्वते। किं केवलं नेत्याह—पुस्तकैः समं, पुस्तकानपि वाच्यमानानश्रौषीदित्यर्थः। अथ च पुस्तकैः समं तुल्यमित्यर्थान्तरम्। तदेव साम्यमाह—द्विजगणं तावत् शुद्धं पवित्रं निर्मायम्, तथाश्रुतिविरोधि वेदाविरोधि शास्त्रं मीमांसादिकं बिभ्राणम्, अवर्णसंकरैश्चतुर्णां वर्णानामसांकर्येणोज्ज्वलं निर्मलीमसम्, ब्राह्मण्यस्यासांकर्यान्निष्कल्मषमित्यर्थः। पुस्तका अपि शास्त्रं पुराणादिकं बिभ्रति। कीदृशं शुद्धमनपशब्दम्, अश्रुतिविरोधि श्रवणमधुरम्, उज्ज्वलं सुबोधम्, तथाविद्यमानो वर्णसंकरोऽक्षरसांहत्यं येषां तैरवर्णसंकरैः सुलिपिभिः पुस्तकैः। वाच्यमानमिति वचेर्ण्यन्तात्कर्मणि लकारः। "अग्रजन्मा द्विजन्मा च ब्राह्मणः सद्भिरिष्यते"इति ॥ ३७ ॥

**तत् प्रतीतमनसामुपेयुषां द्रष्टुमाहवनमग्रजन्मनाम् ।**
**आतिथेयमनिवारितातिथिः कर्तुमाश्रमगुरुः स नाश्रमत् ॥ ३८ ॥**

स आश्रमगुरू राजा द्विजानामातिथेयं पूजां कर्तुं नाश्रमत् नाखिद्यत। कीदृशानां तदाहवनं यज्ञं द्रष्टुमुपेयुषामागतानामत एव प्रतीतमनसां हृष्टचेतसाम्। स कीदृशोऽनिवारितातिथिरनिषिद्धार्थी, यो य आगच्छति तं तमखिन्नेन मनसार्चिचदित्यर्थः। अतिथौ साधु पूजादिकमातिथेयम्। वानप्रस्थगृहस्थयतिब्रह्मचारिणां रक्षकत्वादाश्रमगुरू राजा। अश्रमदिति लुङ्, पुषादित्वादङादेशः ॥ ३८ ॥

**मृग्यमाणमपि यद् दुरासदं भूरिसारमुपनीय तत् स्वयम् ।**
**आसतावसरकाङ्क्षिणो बहिस्तस्य रत्नमुपदीकृतं नृपाः ॥ ३९ ॥**

तस्य राज्ञोऽन्ये राजानः स्वयमेव रत्नं श्रेष्ठं वस्तु आदायावसरकाङ्क्षिणः सन्तो बहिरेवासत तस्थुः । कीदृशमर्थ्यमानमपि यद् दुरासदं दुष्प्रापं यतो भूरिसारमत्युत्कृष्टं तदपि न स्वल्पमपितु प्रभूतमुपदीकृतं ढौकनिकार्थमानीतम् । आसतेति लङ् । उपदोपायनम् ॥ ३९ ॥

**एक एव वसु यद्ददौ नृपस्तत् समापकमलक्षयत क्रतोः ।**
**त्यागशालिनि तपःसुते ययुः सर्वपार्थिवधनान्यपि क्षयम् ॥ ४० ॥**

एक एव राजा यदुपदीकृतं ढौकनिकार्थमानीतं धनं ददौ तदेव यज्ञस्य समापकमलक्षयत, तेनैव क्रतुर्नूनं समाप्यतेति बुद्धमित्यर्थः । धर्मात्मजे पुनरशेषराजकधनान्यपि क्षयमगमन्, सर्वमेव ददावित्यर्थः । यतस्त्यागशालिन्युदारे ॥ ४० ॥

**प्रीतिरस्य ददतोऽभवत् तथा येन तत्प्रियचिकीर्षवो नृपाः ।**
**स्पर्शितैरधिकमागमन् मुदं नाधिवेश्म निहितैरुपायनैः ॥ ४१ ॥**

अस्य राज्ञस्तथा तेन प्रकारेण ददतः प्रीतिरभवत् येन तस्य प्रियकारिणो नृपा उपायनैः स्पर्शितैरस्मै निवेदितैरधिकं मुदमागमन् जहृषुः, न त्वधिवेश्म निहितैर्गृहे निक्षिप्तैः । सर्वमेव कथमस्माभिर्वसु न निवेदितमिति तच्छ्रिया (चेतस्य) चिन्तयन्नित्यर्थः । स्पर्शो दानम् । उक्तं च—"विश्राणनमतिसर्गः स्पर्शनमतिसर्जनं वितरणं च । दानं वैहायसिकं प्रादेशनमंहतिश्च तथे"ति ॥ ४१ ॥

**यं लघुन्यपि लघूकृताहितः शिष्यभूतमशिषत् स कर्मणि ।**
**सस्पृहं नृपतिभिर्नृपोऽपरैर्गौरवेण ददृशेतरामसौ ॥ ४२ ॥**

स राजा क्षपितारिर्यं नृपं लघुन्यपि कर्मणि द्वाररक्षादावशिषद् न्ययुङ्क्त स नृपोऽन्यैरनियुक्तैर्नृपैः साभिलाषं महता गौरवेण दृष्टः कीदृगेष पुण्यभाग्यं राजा स्वयं न्ययुङ्क्तेति । शिष्यभूतं शिष्यरूपतां प्राप्तम् । शिष्यः किल यत्र तत्र नियुज्यते । अशिषदिति शासेर्लुङ् । "सर्तिशास्त्यर्तिभ्यश्चे"ति । "शास इदङ्हलोः । शासिवसिघसीनां चे"ति ॥ ४२ ॥

**आदिकोलतुलितां प्रकम्पनैः कम्पितां मुहुरनीदृगात्मनि ।**
**वाचि रोपितवतामुना महीं राजकाय विषया विलेभिरे ॥ ४३ ॥**

तेन राज्ञा राजकाय नृपवृन्दाय विषया विलेभिरे देशाः प्रसादीकृताः। कीदृशेन वाचि महीं रोपितवता कुर्वता, मनसा किल निश्चित्य वाचोच्यते दीयतामिदमस्येति । अथ च वाचि महीं रोपितवता बिभ्रतेत्यर्थान्तरम् । कश्चिद्वाचि भुवं बिभर्ति यः सत्यं बिभर्ति सत्येन भूमिर्ध्रियते । कीदृशीं महीमादिकोलतुलितां श्रीवराहपरिच्छिन्नामियत्यसाविति । तथा वातैरसकृत् कम्पितां चालितामत एव वाचि रोपिताम्। चलितं किल रोप्यते। कीदृश्यां वाचि अनीदृगात्मा स्वभावो यस्याः सा। महार्थत्वान्न केनचित् तुलिता नापि कम्पिता जितेति व्यतिरेकोक्तिः ॥ ४३ ॥

**आगताद् व्यवसितेन चेतसा सत्त्वसम्पदविकारिमानसः ।**
**तत्र नाभवदसौ महाहवे शात्रवादिव पराङ्मुखोऽर्थिनः ॥ ४४ ॥**

तत्र महाहवे महायज्ञे राजसूयेऽसौ राजार्थिनो याचकात् पराङ्मुखो नाभवत्, यद्यस्मै रुरोच तत्तस्मै ददावित्यर्थः। यतः सत्त्वसम्पदा औदार्यप्रकर्षेणाविकारिमानसो लोभेनाहृतचित्तः। कीदृशादर्थिनः, नृपान्मया नूनं दारिद्र्यमद्यापास्यमिति व्यवसितेन निश्चितेन मनसागतात्। कस्मादिव पराङ्मुख इत्याह– शात्रवादिव। शत्रुरेव शात्रवः, तस्माद्यथा योद्धुं कृतनिश्चयादसौ महाहवे महारणे सात्त्विकत्वात् पराङ्मुखो न भवति । यद्वशात् कार्पण्यविषादभयादीनि चेतस्यवस्थितिं न बध्नन्ति तत्सत्त्वम् । हूयतेऽस्मिन्नाज्यमिति हवो यज्ञः "ऋदोरप्"। आहूयन्तेऽस्मिन् भटा इत्याहवः संग्रामः "आङि युद्धे"। महांश्चासावाहवो महाहवः "आन्महतः" ॥ ४४ ॥

**नैक्षतार्थिनमवज्ञया मुहुर्याच्यते स्म स न कालमक्षिपत् ।**
**नादितात्पमथ न व्यकत्थत प्रत्तमिष्टमपि नान्वशेत सः ॥ ४५ ॥**

स राजा याचक[1]मवज्ञया नादर्शत् सगौरवमद्राक्षीत् । कदाचित् सकृत् प्रार्थितो भवेन्नेत्याह–मुहुः पुनः पुनर्याच्यते स्म। कदाचित् प्रथममननुष्ठानादसकृद्याच्ञा स्यदित्याह—कालक्षेपं नैवाकरोत्। धनायया तु मुहुर्मुहुर्याच्ञा, अर्थिबहुत्वाद्वा कदाचिदेकवारं दातव्यं बहुभिर्वारैर्दद्यादित्याह—अल्पं नादित ।

---

१ 'कान्' क. ख. ग. पाठः ।

कदाचित् श्लाघार्थं बहु दद्यादित्याह—अथ दानं दत्त्वा न व्यकत्थत कीर्तनेनाश्लाघत अकत्थितत्वात् । कदाचित्पश्चात्तापं भजेदित्याह—इष्टमपि प्रत्तं दत्तं नान्वशेत दत्त्वा नादूयतेत्यर्थः । अनुशयः पश्चात्तापः । न न कालमत्यपदिति पाठे एको नञ् यान्चया सम्बध्यते, शीघ्रदानान्नासक्कृद्याच्यते इत्यर्थः । प्रदीयते स्मेति प्रत्तम् । "अच उपसर्गात्तः" ॥ ४५ ॥

**निर्गुणोऽपि विमुखो न भूपतेर्दानशौण्डमनसः परोऽभवत् ।**
**वार्षुकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्यमूषरम् ॥ ४६ ॥**

दानशौण्डमनसस्त्यागहेवाकिचित्तत्वात् राज्ञो निर्गुणोऽपि परो विमुखो नाभूत् निराशो नागच्छत् । परः शत्रुरन्यो वा । ननु पात्रे देयमित्युक्तं तत्कथं निर्गुणायापि ददावित्याह—अपस्तोयानि वार्षुकस्य वर्षणशीलस्य मेघस्य किमूषरं वर्ज्यं, कुभूमावप्यसौ वर्षत्येव । कृतोन्नतेः खं व्याप्नुवतः । वर्षति तच्छीलो वार्षुकः, तद्योगेऽप इति "नलोकाव्यये"ति षष्ठीनिषेधः । ऊषो भूदोषोऽस्ति यत्र तदूषरं "ऊषसुषिमुष्कमधो रः" । दाने शौण्डः सक्तो दानशौण्डः—"सप्तमी शौण्डैः" ॥ ४६ ॥

भूयोऽपि दानशौण्डत्वं भङ्ग्यन्तरेणाह—

**प्रेम तस्य न गुणेषु नाधिकं न स्म वेद न गुणान्तरं च सः ।**
**दित्सया तदपि पार्थिवोऽर्थिनं गुण्यगुण्य इति न व्यचारयत् ॥४७॥**

स राजा याचकं गुणी अगुण्यश्चेति न व्यचारयत्, अयं गुणी दानार्हः, अयमगुण्यो निर्गुणो न देयमस्मै इति नालुलोके, सर्वेभ्य एव ददावित्यर्थः । कदाचित् गुणद्वेषी स्यान्नेत्याह—तस्य गुणेष्वधिकं न न प्रेमापितु प्रीतिरेव । कदाचित् गुणान्तरज्ञो न स्यात् तदवश्यमेव समदृष्टिर्भवतीत्याह—गुणानामन्तरं विशेषं न न स्म वेदापितु विवेद । कथं तर्ह्यविचार इत्याह—दित्सया दातुमिच्छया । गुणप्रियोऽपि गुणज्ञोऽपि दानव्यसनित्वेन गुणिनमगुण्यं च न व्यचारयत् । अर्थयतेऽवश्यमित्यर्थी । यदि वा "अर्थाच्चासंनिहिते" । गुणा विद्यन्ते यस्यासौ गुणी गुण्यश्च "अत इनिः । अन्येभ्योऽपि दृश्यते" इति । यच्च 'क्रमादमुं नारद इत्यबो[illegible] सः' इत्यत्र यो द्वितीयाभावो न्याय्यः स वेहान्यत्र च ॥ ४७ ॥

**दर्शनानुपदमेव कामतः स्वं वनीपकजनेऽधिगच्छति ।**
**प्रार्थनार्थरहितं तदाभवद् दीयतामिति वचोऽतिसर्जने ॥ ४८ ॥**

इह लोट् लिङ् वा ददाति प्रार्थनायां प्रैषे च वर्तते। उक्तं च–"देहि देहीति ददतः सैव देहीति याचतः। अहो गिरितृणप्रख्या वचसः सारफल्गुते"ति ॥ एवं स्थिते तदा तस्मिन्काले दीयतामित्येतद्वचनं प्रार्थनालक्षणेनार्थेन रहितं सद्-तिसर्जन एव त्यागविषय एवाभवत्, ददातेः प्रैष एव लोट् उदपादि नतु प्रार्थनायामित्यर्थः। कुत इत्याह—वनीपकजने याचकलोके दर्शनानुपदमेवालोकसमनन्तरमेव कामतो यथेच्छं स्वं धनमधिगच्छति। यावद्धि ते दीयतामिति नाब्रुवन्त तावत् तान् दृष्ट्वैव राजा गञ्जपतिमादिदेशेति कुतः प्रार्थनार्थत्वमयाचितमेव राजा ददावित्यर्थः ॥ ४८ ॥

**नानवाप्तवसुनार्थकाम्यता नाचिकित्सितगदेन रोगिणा ।**
**इच्छताशितुमनाशुषा च न प्रत्यगामि तदुपेयुषा सदः ॥ ४९ ॥**

अर्थकाम्यता धनेच्छुना तत्सदः सभामुपेयुषा प्राप्तेनानवाप्तवसुनाप्राप्तार्थेन न प्रत्यगामि न प्रतीपं गतमपितु धनमासाद्य, तथा रोगिणा व्याधितेनाचिकित्सितगदेनानुन्मूलितव्याधिना न प्रत्यगाम्यपि तु स्वस्थेन, अशितुमिच्छता चानाशुषाभुक्तेन न प्रतिगतमपितु तृप्तेनेति सर्वकामप्रदत्वोक्तिः। अर्थमिच्छतीत्यर्थकाम्यति "काम्यच्च"। चिकित्सित इति कितेर्व्याधिप्रतीकारे "गुप्तिज्किद्भ्यः सन्"। अनाशुषेति अश्नातेर्नञ्पूर्वस्य क्वसौ रूपम्। उपेयुषेति त्विणः। प्रत्यगामीति भावे ॥ ४९ ॥

**स्वादयन् रसमनेकसंस्कृतप्राकृतैरकृतपात्रसंकरैः ।**
**भावशुद्धिविहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ॥ ५० ॥**

तदा जनो बुभुक्षितो लोको भोजनैर्मुदं बभार भुञ्जानस्तुतोष। कीदृशः रसं मधुरादिकं षड्विधमास्वादयन् अनुभवन्। कीदृशैर्भोजनैः अनेकानि बहूनि संस्कृतानि मांसादीनि प्राकृतानि च फलादीनि यत्र। यद्वानेकानि च तानि संस्कृतानि प्राकृतानि चेति कर्मधारयः। द्रव्यान्तरेण संस्कार्यं पक्वापक्वं मांसमार्जितादिकं भोजनं संस्कृतम्, अन्यत्तु द्राक्षादिकमनाहार्यं प्राकृतम्। तथाकृतः पात्रसंकरः सहभोजनं येषु। भावशुद्ध्या निर्मलेन चित्तेन विहितैर्दत्तैरेवं-

विधैर्भोजनैर्जनो मुमुदे नाटकैरिव । नाटकैरपि सामाजिको जनस्तदा तुतोषेत्यर्थः । औपम्यसहोक्तिरलङ्कारोऽयम् । यज्ञे हि दशरूपकमपि प्रीतये प्रस्तूयते । कीदृशो जनः रसं शृङ्गारादिकं नवविधं स्वादयन् अनुभवन् । रसानां ह्यास्वादनाद्रसत्वम् । उक्तं च—अनेकद्रव्यसंयुक्तैर्व्यञ्जनैर्बहुभिर्धृतम्[1] । आस्वादयन्ति भुञ्जाना भक्तं भक्तभुजो यथा ॥ भावाभिनयसंबद्धान् स्थायिभावांस्तथा नराः । आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृता,, इति ॥ कीदृशैर्नाटकैरनेकं संस्कृतं प्राकृतं च येषाम् । संस्कृतभाषाया अनेकत्वं गद्यपद्यरूपेण, प्राकृतभाषायास्तु मागधशूरसेनादिभेदेन । तथाकृतः पात्राणां संकरो येषु । यस्य पात्रस्य येन सह प्रयोगनिर्गमौ तस्य तेनैव यत्र कृतावित्यर्थः । भावा रत्यादयो द्वितीयसर्गदर्शितास्तेषां शुद्धिरसंकरस्तया विहितैः । रसविभागेन हि भावा उक्ताः ॥ ५० ॥

**रक्षितारमिति तत्र कर्मणां न्यस्य दुष्टदमनक्षमं हरिम् ।**
**अक्षतानि निरवर्तयत्तदा दानहोमयजनानि पार्थिवः ॥ ५१ ॥**

स राजा तत्र मखे विष्णुं क्रियाणां गोपायकं नियुज्येतीत्थमखण्डानि दानहोमयजनानि निरवर्तयत् समापयत् । परस्वतापादनं दानम्, अग्नावाज्यादिप्रक्षेपो होमः, देवतोद्देशेन द्रव्यत्यागो यागः । कीदृशं हरिं दुष्टदमनक्षमं विघ्नादिनाशसमर्थमत एव रक्षाविनियोगः ॥ ५१ ॥

**एक एव सुसखैष सुन्वतां शौरिरित्यभिनयं वितन्वती ।**
**यूपमङ्गुलिमिवोदनीनमद् भूश्चशालतुलिताङ्गुलीयकम् ॥ ५२ ॥**

भूर्यूपमुदनीनमदुन्नमयामास । यज्ञसमाप्तौ हि खादिरः शांशपः पालाशः शामीलो वा यूपोऽवनौ रोप्यते । कीदृशं तं चशालेन यूपकटकेन तुलितमनुकृतमङ्गुलीयकं करशाखाभरणं येन । उत्प्रेक्ष्यते—इत्यतो हेतोरभिनयं वितन्वती अङ्गुलिमिवोदनीनमदुदशिश्रियत् । कुत इत्याह—सुन्वतां यायजूकानामेष शौरिरेव सुसखा शोभनः सहायः । परमेतेन सख्या यज्वनां निर्विघ्नं यज्ञः समाप्यते इति चिन्तयन्ती भूर्विस्मयवशाच्छोटिकां ददती अङ्गुलीयकभूषितामङ्गुलिमिव सचशालं यूपमुन्नमीचकारेत्यर्थः । शोभनः सखा सुसखा "न पूजनादि"ति टजभावः । सुन्वन्तो यज्वानः "सुञो यज्ञसंयोगे" इति शता । इतिर्हेतौ । उदनीनमदिति नमयतेर्लुङ् । अङ्गुलौ भवमङ्गुलीयकं "जिह्वामूलाङ्गुलेश्छः" ॥५२॥

१ 'वृं' क. ख. पाठः ।

**इत्थमत्र विततक्रमे क्रतौ वीक्ष्य धर्ममथ धर्मजन्मना।**
**अर्घदानमनु चोदितो वचः सभ्यमभ्यधित शन्तनोः सुतः॥ ५३॥**

इत्थमुक्तेन प्रकारेण विततक्रमे सविस्तारपरिपाटीके मखे, अथ शन्तनोः सुतो भीष्मः सभ्यं सभायां वक्तुं योग्यं वचनमभ्यधितावोचत्। यतोऽर्घदानमुद्दिश्य तपसः सुतेन चोदितः पृष्टः, धर्ममाचारं वीक्ष्यालोक्य। यज्ञान्ते ह्यर्घो गुणवते देयः। अनुर्लक्षणे कर्मप्रवचनीयसंज्ञः॥ ५३॥

किमभ्यधादित्याह—

**आत्मनैव गुणदोषकोविदः किं न वेत्थ करणीयवस्तुषु।**
**यत्तथापि न गुरून् न पृच्छसि त्वं क्रमोऽयमिति तत्र कारणम्॥५४॥**

करणीयवस्तुषु कृत्यशरीरेषु मध्ये किं त्वं स्वयमेव न वेत्थ न जानासि, सर्वमेव कार्यमवैषीत्यर्थः। यतोऽसि गुणदोषकोविदो युक्तायुक्तज्ञस्तथापि यत् गुरून् न न पृच्छसि तत्र प्रश्ने क्रमोऽयमिति कारणम्। "प्रष्टव्या गुरवः किले" त्याचारज्ञत्वेन पृच्छासि नतु संशयान इत्यर्थः। किमिति कर्मपदम्। वेत्थेति "विदो लटो वे"ति सिपस्थल्। इति वा युधिष्ठिराभिप्रायः-क्रमोऽयमिति निर्दिश्यते। स किल मनुते क्रमोऽयं यद्वृद्धं पृच्छामीति। कोविदशब्दः पृषोदरादिः॥ ५४॥

प्रकृतमाह—

**स्नातकं गुरुमभीष्टमृत्विजं संयुजा च सह मेदिनीपतिम्।**
**अर्घभाज इति कीर्तयन्ति षट् ते च ते युगपदागताः सदः॥ ५५॥**

षडिमानर्घभाज इति पूज्या[1]इति कीर्तयन्ति शिष्टा ब्रुवन्ति। कांस्तानित्याह-स्नातकं साङ्गवेदाध्यायिनम्, गुरुमाचार्यम्, अभीष्टं प्रियम्, ऋत्विजं याजकम्, मेदिनीपतिं पार्थिवम्, संयुजा सह संयुक्तमपीत्यर्थः। संयुक् संबन्धी जामाता च। ते च स्नातकादयः षडपि तव युगपत् तुल्यकालमेव सदः सभामागताः प्राप्ताः, अतः सर्वानेव पूज्यत्वात् पूजयस्वेति भावः। उक्तं च—"आचार्यमृत्विजं चैव संयुक्तं च युधिष्ठिर। स्नातकं च प्रियं चैव षडर्घार्हान् नृपं तथे"ति॥ अर्घभाज इति जसन्तः, द्वितीयाभावस्तु नारदवत्, स्नातकादिभ्यस्तु कर्मत्वाद्भवत्येव यथामुमिति। स्नातकं समाप्तवेदव्रतम् "स्नातात् वेदसमाप्तावि"ति कन्॥ ५५॥

'ते च ते युगपदागताः सद' इत्येतदेव द्रढयति—

---

१ 'ज्यान्' क. ख. ग. पाठः।

**शोभयन्ति परितः प्रभाविणो मन्त्रशक्तिविनिवारितापदः ।**

**त्वन्मखं मुखभुवः स्वयंभुवो भूभुजश्च परलोकजिष्णवः ॥ ५६ ॥**

स्वयंभुवो मुखभुवो ब्रह्मणो वक्त्राज्जाता ब्राह्मणा उच्यन्ते, ते तव मखं राजानश्च परितः शोभयन्ति । कीदृशा द्विजास्तावत् प्रभाविणस्तपःप्रभावयुक्ताः, मन्त्रशक्त्या वेदबलेन विनिवारिता निवर्तिता आपदो विषा[1]दिकृता यैः, परलोकजिष्णवश्चिरजीवित्वात् परलोकजेतारः, शुभाचारत्वाद्वा तज्जयः। राजानोऽपि प्रभवन्तीति प्रभाविणः प्रभुशक्तियुक्ताः, मन्त्रशक्त्या नीतिशास्त्रबलेन विनिवारितव्यसनाः, परलोकस्य शत्रुलोकस्य जिष्णवोऽभिभाविनः। प्रभाविण इति प्रभावोऽस्त्येषामितीनिः "प्रातिपदिकान्तनुम्विभक्तिषु च"ति णत्वम् । दन्त्यपाठे त्वावश्यके णिनिः"न भाभूपूकमी"ति कृत्स्नत्वनिषेधः ॥ ५६ ॥

**आभजन्ति गुणिनः पृथक्पृथक् पार्थ! सत्कृतिमकृत्रिमाममी ।**

**एक एव गुणवत्तमोऽथवा पूज्य इत्ययमपीष्यते विधिः ॥ ५७ ॥**

हे पार्थ पृथासूनो अमी गुणिनः स्नातकादयोऽकृत्रिमां महतीं सत्कृतिमर्हणां पृथक्पृथक् प्रत्येकमाभजन्त्यर्हन्ति, षण्णां संनिधौ षडप्यर्घ्या इत्यर्थः। अथवा षट्संनिधावप्येक एवैषां कश्चिद्गुणवत्तम उत्कृष्टगुणान्वितोऽप्यर्घ्य इत्ययमपि विधिरिष्यते। तथा च पाराशर्यः–"एषामैकैकशो राजन्नर्घ आनीयतामिति। अथवैषां वरिष्ठाय समर्थायोपनीयता"मिति ॥ ५७ ॥

उच्यतां क एक इत्याह—

**अत्र चैष सकलेऽपि भाति मां प्रत्यशेषगुणबन्धुरर्हति ।**

**भूमिदेवनरदेवसङ्गमे पूर्वदेवरिपुरर्हणां हरिः ॥ ५८ ॥**

अस्मिन् द्विजनृपसमागमेऽखिलेऽपि हरिरर्हणां पूजामर्हतीति मां प्रतिभाति, भगवानेवार्घ्य इति मम प्रतिभासते इत्यर्थः। यतोऽशेषाणां गुणानां बन्धुः। बध्नन्त्यस्मिन्नास्पदमिति बन्धुः, यदि वा बन्धुरिव बन्धुः। तथा पूर्वदेवानां दैत्यानां रिपुर्जिष्णुः। असुराः पूर्वदेवाः स्युः। भाति मां प्रतीति प्रतिशब्दो निपातो भिन्नक्रमः क्रियापदात्पूर्वो बोद्धव्यः । "हाप्रतियोगे" इति द्वितीया ॥ ५८ ॥

ननु मादृश एष वसुदेवात्मजस्तत्कथं भवानाह पूर्वदेवरिपुरित्याशङ्क्याह—

---

१ 'धि' क. पाठः ।

**मर्त्यमात्रमवदीधरद्भवान् मैनमानमितदैत्यदानवम् ।**
**अंश एष जनतातिवर्तिनो वेधसः प्रतिजनं कृतस्थितेः ॥ ५९ ॥**

एवं हरिं वशीकृतदैत्यदानवं भवान् मर्त्यमात्रं मानुषमात्रं मा अवदीधरत् मा ज्ञासीत् मा बुद्धास्त्वम् । कस्तर्ह्ययमित्याह—वेधसः प्रजापतेर्नारायणस्यांशो भाग एषः । कदाचिद्वेधा अपि मर्त्यः स्यादित्याह—जनतातिवर्तिनः सकललोकातिक्रान्तस्य, दुर्ज्ञानस्येत्यर्थः । तथा प्रतिजनं कृतस्थितेरात्मरूपत्वात् । एतच्च विरुद्धप्रायम् । अवदीधरदिति अवधारयतेर्लुङ् ॥ ५९ ॥

अन्यच्च कीदृगेष इति प्रसङ्गात् स्तोत्रम्—

**ध्येयमेकमपथि स्थितं धियः स्तुत्यमुत्तममतीतवाक्पथम् ।**
**आमनन्ति यमुपास्यमादराद् दूरवर्तिनमतीव योगिनः ॥ ६० ॥**

यं योगिनोऽध्यात्मज्ञा एवंविधमामनन्ति कथयन्ति । कीदृशमेकं प्रधानं ध्येयं चिन्त्यं स्थूलरूपतया, सूक्ष्मरूपतया तु धियो बुद्धेरपथि अमार्गे स्थितम् । पुरुषो हि मनसोऽप्यविषयः । उक्तं च—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे"ति । यदि वा बुद्धितत्त्वातिक्रमेण तत्पथे न स्थितम्, अन्या हि बुद्धिरन्यश्चात्मा । विरुद्धं चैतत् । यो हि बुद्धेरगोचरः स कथं ध्येयो भवेत्, अविरोधस्तु उक्त एव । तथा स्तुत्यं स्तवार्हं यत उत्तममुत्कृष्टम् । पूर्ववच्चातीतवाक्पथमुल्लङ्घितवाग्गोचरं वाचामविषयम् । यश्च वागविषयः स कथं स्तूयते, अथ च 'नमो विष्णवे' इति सर्व एव स्तौति, तत्त्वतस्तु वाचां न गोचरः "यतो वाचो निवर्तन्ते" इति न्यायेन । तथा चादरात् प्रयत्नादुपास्यं जपोपवासादिना सेव्यम् अथ च सुष्ठु दूरवर्तिनं दुष्प्रापमनेकजन्मलभ्यम् । यश्च दूरस्थः स कथं सेव्यः । विषयभेदेन विरोधः परिहार्य इति तु केचित् । ज्ञानिनां हि भगवान् ध्येयः स्तुत्य उपास्यश्च, अन्येषां तु बुद्धेर्वाचो मनसश्च दूरवर्ती । अपथीति "पथो विभाषे"ति समासान्तो विभाषितः । आमनन्तीति म्ना अभ्यासे "म्नो मनः" ॥ ६० ॥

**पद्मभूरिति सृजञ्जगद्रजः सत्त्वमच्युत इति स्थितिं नयन् ।**
**संहरन् हर इति श्रितस्तमस्त्रैधमेष भजति त्रिभिर्गुणैः ॥ ६१ ॥**

एष भगवान् त्रिभिर्गुणैः सत्त्वरजस्तमोभिस्त्रैधं त्रिधा भवति । तथाहि

जगत् सृजन् रजोगुणं श्रितः सन् पद्मभूरिति भवति, तथा सत्त्वं श्रितो जगत् स्थितिं सक्रियत्वं नयन् प्रापयन् अच्युत इति भवति, तथा जगत् संहरंस्तमोगुणं श्रितो हर इति भवति। उक्तं च—"रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे। अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नम"इति ॥ त्रयः प्रकारास्त्रैधं "द्वित्र्योश्च धमुञ्" ॥ ६१ ॥

**सर्ववेदिनमनादिमास्थितं देहिनामनुजिघृक्षया वपुः।**

**क्लेशकर्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः ॥ ६२ ॥**

अमुं हरिं पुंविशेषं पुरुषविशेषमीश्वराख्यं विदुः पातञ्जला अविदन्। कीदृशं सर्ववेदिनं सर्वज्ञम्, अनादिं पुराणं, देहिनां प्राणिनामनुजिघृक्षयानुग्रहेच्छया वपुर्देहमाश्रितमात्मरूपत्वात्, ईश्वरस्य हि भूतानुग्रहं वर्जयित्वा देहाश्रयणे नान्यत् कारणम्। तथा क्लेशकर्मफलभोगवार्जितम्, अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः, कर्माणि शुभाशुभानि, तेषां फलं विपाकस्तस्य भोगोऽनुभवस्तेन वर्जितं त्यक्तं, यद्वा प्रकृतिपुरुषयोरभेदो भोगः। क्लेशाश्च कर्माणि च फलभोगश्च तैर्वर्जितः। उक्तं च—"क्लेशकर्मविपाकाशयैरस्पृष्टः पुरुषविशेष ईश्वरः" इत्येतच्च तच्छास्त्रादेव सुबोधम्, इह तु विचारे ग्रन्थगौरवं स्यात् ॥ ६२ ॥

**भक्तिमन्त इह भक्तवत्सले सन्ततस्मरणरीणकल्मषाः।**

**यान्ति निर्वहणमस्य संसृतिक्लेशनाटकविडम्बनाविधेः ॥ ६३ ॥**

इह भगवति ये भक्तिमन्तो भक्तास्ते नित्यध्यानक्षीणपापाः सन्तोऽस्य संसृतिक्लेशनाटकविडम्बनाविधेर्निर्वहणं यान्ति। संसृतिः संसारो जन्ममरणप्रबन्धः स एव क्लेशस्तेन वा क्लेशः खेदः स एव नाटको मायामयत्वात्, तेन वा विडम्बना वितारणा लज्जा (तस्याः) विधिः कृतिस्तस्य निर्वहणमन्तं यान्ति गच्छन्ति, भूयः संसारदुःखं नानुभवन्तीत्यर्थः। यत एष भक्तवत्सलो भक्तानुकम्पी। विडम्बना वितारणा। जननमरणप्रबन्धो हि विडम्बना मनस्विनः। अन्योऽपि नाटकस्य निर्वहणाख्यं संधिं याति। 'मुखप्रतिमुखगर्भविमर्शनिर्वहणानि पञ्च नाटकेषु संधयः'। रीणं नष्टम्। रीङ् क्षये "ओदितश्चे"ति निष्ठानत्वम् ॥ ६३ ॥

**ग्राम्यभावमपहातुमिच्छवो योगमार्गपतितेन चेतसा।**

**दुर्गमेकमपुनर्निवृत्तये यं विशन्ति वशिनं विमोक्षवः ॥ ६४ ॥**

यं भगवन्तं विमोक्षवो मुमुक्षवो विशन्ति लीयन्ते तेन सायुज्यं यान्ति अपुनर्निवृत्तये भूयः संसारमनागन्तुम्। उक्तं च—"मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति। यतो ग्राम्यभावं त्रैगुण्यं संसारित्वमपहातुमिच्छवस्तित्यक्षवः। जननमरणप्रबन्धानुभवो हि पुनरुक्तत्वाद् ग्राम्यत्वं। ग्राम्यः किलैकत्र सक्तो भवति, यो हि ग्राम्यत्वं त्यक्तुमिच्छति स कथं नाम ग्राम्यमध्ये गणयेयेति दुर्गं पुरं प्रविशति, योगमार्गपतितेनाध्यात्मपथसक्तेन मनसा। कीदृशं हरिं दुर्गं दुरासदम्, न हि सर्वः परं स्थानं प्राप्नोति। एकमुत्कृष्टं, वशिनं विभुं स्वतन्त्रम्। यदि वा वशिनो वश्यात्मानो योगिनः। विरोधालङ्कारः। यः किल विमोक्षुर्मोक्तुमात्मानमिच्छति चौरादिः स किमिति दुर्गमेव विशति। विमोक्तुमिच्छुर्विमोक्षुः "मुचोऽकर्मकस्य गुणो वा" अभ्यासलोपश्च ॥ ६४ ॥

**आदितामजननाय देहिनामन्ततां च दधतेऽनपायिने।**
**बिभ्रते भुवमधःसदाथ च ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥ ६५ ॥**

एवंविधायास्मै नमः। कीदृशाय भूतानामादितां कारणत्वं बिभ्रते, अविद्यमानं जननं जन्म यस्य तस्मै अजननाय अजाय, त्वं जगतः कारणं तव तु न किञ्चिदित्यर्थः। विरुद्धं चैतत्—यो न जायते स कथमादित्वं बिभर्ति। तथा देहिनां रुद्ररूपेणान्ततां क्षयं दधते, अविद्यमानोऽपायो नाशो यस्य तस्मै अनपायिने नित्यायानन्ताय जगदन्ताय चेत्यर्थः। यश्चान्तत्वं दधाति स कथमनपायी स्यादिति विरोधः। तथानन्तरूपेण भुवं बिभ्रते दधते, अथ च ब्रह्मणोऽप्युपरि तिष्ठतेऽवस्थिताय सर्वोत्कृष्टत्वयोगात्, यदि वा ब्रह्मलोकादूर्ध्वं भगवतोऽवस्थितेः। यश्च पातालस्थः स कथं ब्रह्मलोकमधः कुर्यादिति विरोधः। "अनाद्यन्ताय जगतो जन्मसंहारकारिणे। सर्वगाय नमस्तुभ्यं वाक्यार्थोऽयमिह स्थितः" इति ॥ ६५ ॥

**केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।**
**धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः ॥ ६६ ॥**

'सृज विसर्गे,' 'हृञ् हरणे संपूर्वः,' 'शासु अनुशिष्टौ, इक्श्तिपौ धातुनिर्देशे" एते धातव इह भगवति विषये केवलं कर्तृवाचिनः प्रत्ययान् ण्वल्तृच्तिबादीन् दधत्युपपादयन्ति नतु कदाचित् कर्मणि कारके कर्मवाचकान्। एष ब्रह्मविष्णुरुद्ररूपेण जगत् सृजति संहरति शास्ति च। उक्तं च—"विश्वं जगत् सृजति यः परमादिदेवो यश्च स्थितिं त्रिभुवनस्य विभुर्विधत्ते। यश्चोपसंहरति सर्वमिदं

युगान्ते तस्मै नमो भगवते पुरुषोत्तमाये''ति ॥ नत्वेष सृज्यते ह्रियते शिष्यते वा। 'ष्टुञ् स्तुता'वित्ययं धातुरत्र विपरीतकारकः, कर्मण्येव प्रत्ययं दधाति नतु कर्तरीत्यर्थः। भगवान् हि ब्रह्मादिभिः स्तूयते नत्वेष कंचित् स्तौति। सृजतीत्यादावाद्यर्थग्रहणं, तेन रक्षत्यादयोऽपि गृह्यन्ते। कारकमत्र कर्तृकर्मणी ॥ ६६ ॥

तत्र सर्गमाह—

**पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ ।**
**तत्र कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् ॥ ६७ ॥**

इह भगवान् पूर्वमादौ किलापः ससर्ज, तासु चाप्सु दुःसहं वीर्यं रेत आदधौ चिक्षेप, तत्र वीर्यं ब्रह्मणः कारणं हिरण्मयं सौवर्णमभवत्। किं तदिति वेदागमादण्डं, स ब्रह्मा इदं जगदसृजत्, तेन विष्णुः कथं स्रष्टेति न वक्तव्यमिति भावः। किल आगमे। एवं हि मनुः—''सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ तत्र जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः।''इति ॥ ६७ ॥

**मत्कुणाविव पुरा परिप्लवौ सिन्धुनाथशयने निषेदुषः ।**
**गच्छतः स्म मधुकैटभौ विभोर्यस्य नैद्रसुखविघ्नतां क्षणम् ॥ ६८ ॥**

यस्य च विभोः पुरा पूर्वं सृष्टिकालेऽब्धिशय्यायां सुषुप्सतो मधुकैटभौ दानवेन्द्रौ नैद्रस्य सुखस्य विघ्नतां क्षणं जग्मतुः, यतः परिप्लवौ चपलौ निद्रासुखमसमापयन्तौ। एतेनायास उक्तः। मत्कुणाविव, यथा कस्यचित्सुप्तस्य मत्कुणौ दशन्तौ हस्तस्पर्शमात्रेणैव नष्टावित्यर्थः। पुरा गच्छतः स्मेति''लट् स्मे''। पुर इति पाठे पुरोऽग्रतः। परिप्लवौ चापलमाचरन्तौ भ्रमन्ताविति योजना ॥ ६८ ॥

**श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भमुज्ज्वलम् ।**
**श्रीमुखेन्दुसविधेऽपि शोभते यस्य नाभिसरसीसरोरुहम् ॥ ६९ ॥**

यस्य च विभोर्लक्ष्मीवक्त्रशशिसंनिधावपि नाभावेव सरस्यामब्जं राजते नतु सङ्कुचितम्। इन्दूदयाद्धि पद्मानि संमीलन्ति। कीदृशं श्रुतिर्वेदस्तस्यायं श्रौतः स चासौ मार्गः श्रौतमार्गो वेदमार्गस्तस्य सुखदं सुखकारि वा यद्गानं पाठस्तत्र कोविदश्चतुरो यो ब्रह्मा स एव षट्चरणो भृङ्गः स गर्भे गर्भो वा यस्य तत्तथोक्तम्। ब्रह्मा हि भगवतो नाभिपद्मे प्रतिवसति, सरोजमपि श्रुतिपथसुखकारिहुङ्कारचतुरभ्रमरगर्भं भवति। उज्ज्वलं मनोज्ञमुभयमपि। सरसीशब्दः

पिप्पल्यादिः ॥ ६९ ॥

**सत्यवृत्तिमपि मायिनं जगद्वृद्धमप्युचितनिद्रमर्भकम् ।**
**जन्म बिभ्रतमजं नवं नवं यं पुराणपुरुषं प्रचक्षते ॥ ७० ॥**

यं भगवन्तमेवंविधमाहुः । किंभूतं सत्यवृत्तिं परमार्थचेष्टं ब्राह्मरूपत्वात्, मायिनं मायातत्त्वाख्यं व्यक्तरूपत्वात् । "दैवी ह्येषा गुणमयी मम माया दुरत्यये"ति माया बुद्धिस्तत्त्वविशेषो वा । यश्च सत्यवृत्तिः स कथं मायावी भवेत् । माया कपटः । तथा जगद्वृद्धमाद्यं कारणत्वात्, तथोचितनिद्रं परिचितयोगस्वापमर्भकं बालम् । उक्तं च—"बालः स्वपिति यश्चैक" इति । यश्च निद्रालुर्बालः स कथं वृद्धो भवेत् । तथा जन्म बिभ्रतं रामादिरूपत्वात्, तत्त्वतस्तु जन्मरहितमात्मरूपत्वात् । उक्तं च—"न जायते न म्रियते" इति । यश्च जन्म बिभर्ति स कथमजः स्यात् । तथा नवं नवमक्रियत्वात्, अथ च पुराणं पुरुषमाद्यं पुरुषनित्यमीश्वरम् । यश्च पुराणः स कथं नवो नवो भवेत् । अपिः सर्वत्र विरोधे । मायीति व्रीह्यादिः । नवं नवमिति वीप्सायां द्वित्वम् ॥ ७० ॥

इदानीं प्रादुर्भावमुखेन स्तौति—

**स्कन्धधूननविसारिकेसरक्षिप्तसागरमहाप्लवामयम् ।**
**उद्धृतामिव मुहूर्तमैक्षत स्थूलनासिकवपुर्वसुन्धराम् ॥ ७१ ॥**

अयं भगवान् स्थूलनासिकवपुर्वराहरूपः सन् उर्वीं क्षणमात्रमनुद्धृतामप्युद्धृतामिवैक्षत ददर्श विवेद । यतोऽसकम्पनेन विसारिभिः प्रसृतैः केसरैः सटैः क्षिप्तः प्रेरितः सागरस्य सम्बन्धी महाप्लव उदकपूरो यस्यास्तां तथोक्तामतश्च दृश्यरूपत्वादुद्धृतामिव मेने । अथ च महाशक्तियोगादुद्धृतामिवाबोधीत्यर्थान्तरम् । "अस्थूलादि"ति निषेधात् स्थूलनासिकशब्दे "अञ्नासिकाया"इति अञ्नस्विधेरभावः । वसु धारयतीति वसुन्धरा । "संज्ञायां भृतृवृजि" इति खश्, मुमागमः ॥ ७१ ॥

**दिव्यकेसरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि ।**
**दुर्निवाररणकण्डु कोमलैर्वक्ष एष निरवापयन्नखैः ॥ ७२ ॥**

एष देवो नृसिंहदेहो हिरण्यकशिपोर्वक्षः करजैर्निरवापयत् शमं निन्ये, व्यदारयदित्यर्थः । कीदृशं दुर्निवारा निरसितुमशक्या रणकण्डूः समरदर्पो यस्य, अत एवायुधैर्वज्रादिभिरपि नैव लब्धशमं प्राप्तान्तम्, अतश्चैष मृदुभिर्नखैरशीशमदित्यनायासः प्रतिपाद्यते । यस्यापि महती कण्डूर्भवति तस्य कश्चित् को-

मलैः सुस्पर्शैर्नखैस्तां शमयति। दिव्यश्चासौ केसरी दिव्यकेसरी दिव्यकेसरीव वपुर्यस्यासौ दिव्यकेसरिवपुर्नरसिंहमूर्तिः। निरवापयदिति वातेर्णिचि पुक् ॥७२॥

**वारिधेरिव कराग्रवीचिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः ।**
**यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः ॥ ७३ ॥**

यस्य च नृसिंहमूर्तेश्चारुनखशुक्तयः स्फुरन् उल्लसन् यो मौक्तिकप्रकरो मुक्ताफलनिचयः स गर्भो गर्भे वा यासां तद्भावस्तत्ता तां दधुः, मौक्तिकानि बभ्रुरित्यर्थः। यतः कराग्रैरेव वीचिभिर्दिग्गजवक्त्राण्यभिघ्नतो दारयतः, सिंहानां जातिस्वभावो हि करिविदारणम्। कस्येवेत्याह—वारिधेरिवेति। यथाब्धेर्वीचिभिर्दिङ्मुखान्यभिघ्नतः शुक्तयः स्फुरन्मौक्तिकप्रकरगर्भत्वं बिभ्रति, वेगवत्तरङ्गसङ्घाद्धि शुक्तीनां कवाटभेदो भवति ॥ ७३ ॥

**दीप्तिनिर्जितविरोचनादयं द्यां विरोचनसुतादभीप्सतः ।**
**आत्मभूरवरजाखिलप्रजः स्वर्पतेरवरजत्वमाययौ ॥ ७४ ॥**

यः स्वर्पतेरिन्द्रस्यावरजत्वमनुजत्वमाययौ। कीदृशस्य विरोचनसुताद्बलेर्दिवं जिघृक्षतः, तेन महेन्द्रत्वं हृतमभूत्। यतोऽसौ दीप्तिनिर्जितविरोचनस्तेजसा न्यक्कृतसूर्यः। कीदृशोऽयमात्मन एव भूर्जन्म यस्य स आत्मभूरजः, अत एवावरजाखिलप्रजो जगज्ज्येष्ठः। एतेन कर्माधीनत्वं निरस्तम्। आत्मभूरित्यदितेः पुत्रहितार्थं जातो नतु कर्मप्रेरित इत्यर्थः। विरोचना अर्केन्दुवह्नयः ॥७४॥

**किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्न दानवः ।**
**तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलः क्रमः ॥ ७५ ॥**

तदा च यावद् दानव इत्थं नाहसत् तावदस्य क्रमो नभस्तले न ममौ न ववृते, यतो लङ्घितार्कशशिमण्डलः सर्वव्यापी। कथं नाहसदित्याह—एष वामनोऽल्पप्रमाणः किं क्रमिष्यति कियतीं भुवं व्याप्स्यतीति। तेन हि क्रमत्रयमर्थितम्। क्रमः पदविक्षेपः। किलेत्युपहासे ॥ ७५ ॥

**गच्छतापि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा ।**
**क्रान्तकन्धर इवाबलो बलिः स्वर्गभर्तुरगमत् सुबन्धताम् ॥ ७६ ॥**

यस्य च सम्बन्धिनाङ्घ्रिणा पादेन क्रान्तकन्धर इवाबलो निश्चेष्टो बलिः स्वर्पतेः शक्रस्य सुबन्धतां, सुखेन बध्यते इति सुबन्धः तत्तामगमत्, अक्लेशेनैव

बद्ध इत्यर्थः। यस्य हि गले पादः क्रियते स निश्चेष्टत्वात् सुबन्धो भवति। कीदृशेनाङ्घ्रिणा उच्चकैरुन्नतेन भूधरगरीयसाद्रिबृहता अत एवाकाशप्रान्तं क्रामता । यः किल नभ आक्रान्तः स कथं भूस्थस्य कन्धरामाक्रामेत्। स्वर्गे भर्ता स्वर्गभर्तेति तृन्नन्तेन समासः। तस्य सुबन्धतामिति नरकस्य जिष्णुवत्प्रयोगः ॥ ७६ ॥

**क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमलिनीलमायतम् ।**
**व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्धयेव यमुनौघमुत्थितम् ॥ ७७ ॥**

तदा चास्य दूरमत्यर्थं विक्रामतो नाकिनो भृङ्गकृष्णमायतमूरुमैक्षन्त। उत्प्रेक्ष्यते—त्रिपथगाजलसरणीर्ष्यया कालिन्दीजलपूरमिवोद्गतम् ॥ ७७ ॥

**यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।**
**कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥ ७८ ॥**

यस्य हरेः किंचिदप्यपकर्तुं बाधितुमक्षमोऽशक्तः सन् राहुरधुनापीन्दुं बाधते ग्रसति। कीदृशः कायनिग्रहाद् देहनाशादात्तवैरः। अथ यदि हरिणा तस्य शिरश्छिन्नं तं चासौ बाधितुमशक्तः सन् निरागसः शशिनः किमायातं येन तमत्तीत्याह—कान्तं तेजोयुक्तं यद्वक्त्रं वैष्णवं तेन सदृशी आकृतिः शोभा यस्य तं कान्तवक्त्रसदृशाकृतिम् । स किल हस्तिबाधायामशक्तस्तत्पुरीषे क्रोधं मुञ्चति यच्छौरिं बाधितुं न शक्नोति तन्मुखेन्दुसाम्याच्चेन्दुं बाधते। कृतीत्युल्लुण्ठनायाम्। एतावता चासौ कृती कृतार्थः, मूर्खोऽयं तद्बाधया वैरशुद्धिं वेत्तीत्यर्थः। लोकहितार्थमनेन राहोः शिरश्छिन्नमिति तात्पर्यार्थः ॥ ७८ ॥

**संप्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः ।**
**स्मर्तुमप्रतिहतस्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः ॥ ७९ ॥**

एष हरिरत्रिगोत्रजो दत्त इत्यभवत् पूर्वं दत्तात्रेयो नाम्नाभवत्। किमर्थमत्रिमुनेर्गोत्रं शिश्रायेत्याह—श्रुतीर्वेदान् स्मर्तुम्, यतः संप्रदायविगमादागमनाशात् नाशमन्तर्धिमुपेयुषीः प्राप्ताः। पूर्वं हि द्वादशवार्षिक्यामनावृष्टौ सर्वं नष्टमभूदित्यागमः। एष तर्हि कथं स्मरतीत्याह—अप्रतिहतस्मृतिरनष्टज्ञानः, यतोऽविनाशिविग्रहश्च शाश्वतिकदेहो नित्य इत्यर्थः। जगद्धितार्थं च जन्म गृह्णाति। उक्तं च—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मांशं सृजाम्यहम्"मिति ॥ संप्रदाय उपदेशपरम्परा, दाञो घञ्। श्रुतीरिति

शेषत्वाविवक्षया षष्ठ्यभावः ॥ ७९ ॥

**रेणुकातनयतामुपागतः शातितप्रचुरपत्रसंहतिः ।**
**लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम् ॥ ८० ॥**

एष रेणुकायास्तनयतां पुत्रत्वं रामरूपेण प्राप्तः सन् अर्जुनवनं कार्तवीर्यमेव काननमेवंविधमकरोत्। कीदृशं शातिता नाशिता प्रचुराणां पत्राणां वाहनानामश्वेभरथादीनां संहतिः संघातो यस्य, तथा लूनाश्छिन्ना भूरयो बहवो भुजा एव शाखा यस्य, सहस्रबाहुः किलासावभूत् अत एवोज्झितच्छायं त्यक्तकान्ति, भार्गवरामो भवन्नेष एवार्जुनं जघानेति वाक्यार्थः। अन्योऽपि कुपितोऽर्जुनानां वृक्षाणां वनमेवंविधमेव करोति। अत्र पत्राणि पर्णानि, छाया आतपाभावः। रेणुका जमदग्निभार्या ॥ ८० ॥

**एष दाशरथिभूयमेत्य च ध्वंसितोद्धतदशाननामपि ।**
**राक्षसीमकृत रक्षितप्रजस्तेजसाधिकविभीषणां पुरीम् ॥ ८१ ॥**

एष देवो दाशरथिभूयं दशरथसुतत्वं रामत्वं प्राप्य रक्षसामिमां राक्षसीं पुरीं लङ्कां ध्वंसितोद्धतदशाननामपि तेजसाऽधिको विभीषणस्तद्भ्राता यस्यास्तामधिकविभीषणामकृत, रावणं हत्वा विभीषणस्वामिकां चकारेत्यर्थः। अपिर्विरोधे। यस्यां हि भयकारी दशमुखो हतः सा कथमत्यर्थविभीषणा स्यात्। रक्षितप्रजो रक्षोवधात्पालितभुवनः। दाशरथेर्भावो दाशरथिभूयम् "भुवो भावे" इति क्यप्। विभीषणशब्दो नन्द्यादिः ॥ ८१ ॥

**निग्रहीतुममरेशविद्विषामर्थितः स्वयमथ स्वयंभुवा ।**
**संप्रति श्रयति सूनुतामयं कश्यपस्य वसुदेवरूपिणः ॥ ८२ ॥**

अथ सांप्रतमयं कश्यपावतारस्य वसुदेवस्य पुत्रत्वं श्रयति भजते, यतः स्वयं ब्रह्मणा देवारीणां कंसकेशिकालनेमिचाणूरचैद्यादीनां निग्रहीतुं पेष्टुमर्थितो नतु कर्मप्रेरित इत्यर्थः। विद्विषामिति "जासिनिप्रहणे"ति कर्मणि षष्ठी। कश्यपः प्रजापतिस्तस्यांशो वसुदेव इत्यागमः ॥ ८२ ॥

**तात नोदधिविलोडनं प्रति त्वद्विनाद्य वयमुत्सहामहे ।**
**यः सुरैरिति सुरौघवल्लभो वल्लवैश्च जगदे जगत्पतिः ॥ ८३ ॥**

यश्च देवः सुरैः पूर्वमधुना च वल्लवैरित्येवं सदृशमुक्तः। देवैस्तावद्—हे

तात ! त्वया विना वयमुदधिविलोडनं प्रति सागरमन्थने नोत्सहामहे न शक्ताः । गोपैस्तु—तात ! त्वया विना वयं दधिविलोडनं प्रति नो उत्सहामहे न समर्थाः । सुरौघवल्लभो देवप्रियः, जगत्प्रभुस्त्रिभुवनेश्वरः । त्वदिति पञ्चमी ॥ ८३ ॥

**नात्तगन्धमवधूय शत्रुभिश्छायया च शमितामरश्रमम् ।**
**योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः ॥ ८४ ॥**

यश्चेन्द्रस्य स्वर्गात् पारिजातकतरुमुदमूलयत् जहार अभिमानमिवाहङ्कारमिव, द्वयमपि जहारेत्यर्थः । वृत्तहरणान्मानग्लानेः । कीदृशं तं रिपुभिरवधूय तिरस्कृत्य नात्तगन्धमगृहीतसौरभम्, बलेन शत्रुभिर्गन्धो यस्य नानुभूत इत्यर्थः । यदि वा अवधूय पराजित्योदमूलयदिति योज्यम् । छायया चापासितो देवानां श्रमो येन । अभिमानोऽपीन्द्रस्य शत्रुभिर्नात्तगन्धोऽभिभूतः । "आत्तगन्धोऽभिभूतः स्यात्" । तथा च छायया प्रभावेण शमितामरक्लमम् ॥ ८४ ॥

**यं समेत्य च ललाटलेखया मुञ्चतः सपदि शंभुविभ्रमम् ।**
**चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम् ॥ ८५ ॥**

यं च हरिं चण्डमारुतमिव खरवाततुल्यं समेत्य चेदिपस्य शिशुपालस्य तृतीयनेत्रं प्रदीपवन्निरवात् शशाम नष्टम् । यथा चण्डमारुतमासाद्य दीपः शाम्यत्येवमेनं दृष्ट्वा चैद्यस्य नेत्रं निरवादित्यर्थः । अत एव ललाटलेखया तत्क्षणमेव शंभुविभ्रमं त्र्यक्षलीलां त्रिनयनसारूप्यं मुञ्चतो जहतः । तृतीयनेत्रसद्भावात् किलासौ हरेण सदृशो नत्वन्यथा[1] । एवमत्रागमः—"शिशुपालः पुरा जातस्त्रिनेत्रो हि चतुर्भुजः । पितरौ चाथ तं दृष्ट्वा हातुं वै चक्रतुर्मतिम् ॥ अथोच्चचार नभसो वागेवमशरीरिणी । नैष त्याज्यो महाराजा श्रीमान् वीरो भविष्यति ॥ स चास्य वधको भावी यं दृष्ट्वा न भविष्यतः । बाहू नेत्रं च सहसा तस्माद्धै पाल्यतामयम् ॥ कौतुकादथ तं द्रष्टुं सर्वे वर्णाः समागमन् । अर्चापूर्वं नृपोऽथाङ्के पुत्रं तेषां न्यवेशयत् ॥ नासौ प्राप विकारं च कृष्णादन्यत्र बान्धवात् । तं दृष्ट्वा व्यथिता माता वरं कृष्णमयाचत ॥ नवोऽप्ययं त्वया देव पुत्रो मे दीयतामिति । सहिष्ये शतमागांसीत्यथोवाच हरिस्तदे"ति ॥ "रौ रलौ गुरुयुता रथोद्धते"ति ॥८५

**यः कोलतां वल्लवतां च बिभ्रद् दंष्ट्रामुदस्याशु भुजां च गुर्वीम् ।**
**मग्नस्य तोयापदि दुस्तरायां गोमण्डलस्योद्धरणं चकार ॥ ८६ ॥**

यश्च भगवान् कोलतां सूकरतां वल्लवतां गोपत्वं च बिभ्रद् दंष्ट्रां भुजां चाशु उदस्योत्क्षिप्य तोयापदि ब्रुडितस्य गोमण्डलस्योद्धरणं चकार । औपम्यमत्र बो-

---

1 'दा' क. ख. ग. पाठः ।

द्धव्यम्। यथा पूर्वं कोलतां बिभ्रद् दंष्ट्रामुदस्याशु गोमण्डलं पृथ्वीवलयमुज्जहार, एवमधुना वल्लवतां बिभ्रद् भुजामुद्यम्य तोयापदि मग्नस्य गोमण्डलस्य सुरभिवर्गस्योद्धरणं चकारेत्यर्थः। दुःखेन तीर्यते इति दुस्तरा कृच्छ्रोत्तारा। "तौ ज्गौ गुरुश्चेद्धवतीन्द्रवज्रा" ॥ ८६ ॥

**धन्योऽसि यस्य हरिरेष समक्ष एव दूरादपि क्रतुषु यज्वभिरिज्यते यः।**
**दत्त्वार्घमत्रभवते भुवनेषु यावत् संसारमण्डलमवाप्नुहि साधुवादम् ॥ ८७ ॥**

अन्यश्चेदमाह—युधिष्ठिर! धन्योऽसि पुण्यवांस्त्वं यस्यैष भगवान् विष्णुः समक्ष एव प्रत्यक्षः। कदाचिदसौ सुदर्शनः स्यादित्याह—यो यज्वभिर्यायजूकैर्मखेषु यज्ञेषु दूरादपीज्यते अप्रत्यक्षोऽपि पूज्यते, अतश्च त्वमत्रभवते विष्णवेऽर्घं दत्त्वा पूजां विधाय जगत्सु यावत्संसारमण्डलं भूवलयं तावत् साधुवादमवाप्नुहि, ईदृक्पुण्यभाक् युधिष्ठिरो यस्य योगिभिरप्यदृश्येन भगवता नारायणेन स्वयं पूजा गृहीतेति यशो लभस्वेत्यर्थः। धन्यः पुण्यवान्। धनं प्रयोजनमस्येति तु व्युत्पत्तिमात्रं तैलपायिकावत्। "स्वर्गादिभ्यो यत्"। यज्वा सम्यग् य इष्टवान् "सुयजोः ङ्वनिप्"। अत्रभवच्छब्दः पूजायाम्। "इतराभ्योऽपि दृश्यते" इति तृच्। वदनं वादः साध्वित्यादिको वादः साधुवादः। "मयूरव्यंसकादिः"। वसन्ततिलका वृत्तम् ॥ ८७ ॥

**भीष्मोक्तं तदिति वचो निशम्य सम्यक्**
**साम्राज्यश्रियमथ बिभ्रता नृपेण।**
**दत्तेऽर्घे महति महीभृतां पुरोऽपि**
**त्रैलोक्ये मधुभिदभूदनर्घ एव ॥ ८८ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये कृष्णार्घदानो नाम चतुर्दशः सर्गः ॥ १४ ॥

इतीत्थं तद्भीष्मोक्तं वचनं निशम्य सम्यगादरेण श्रुत्वा, अनन्तरं राज्ञा राजन्यकप्रत्यक्षं विष्णवेऽर्घे दत्तेऽपि स जगत्स्वनर्घ एवाभूदपरिच्छेद्य एवासीत् सर्वोत्कृष्टत्वादज्ञातस्वरूपत्वाच्च। यस्मै चार्घो दत्तः स कथं नामानर्घः स्यादिति शाब्दो विरोधः। महीभृतां पुर इति साभिप्रायम्। कीदृशेन नृपेण साम्राज्यश्रियं बिभ्रता—"राजसूयेन येनेष्टं मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडभिधीयते" इति। तद्भावः साम्राज्यं, ततः श्रीशब्देन षष्ठीसमासः कर्मधारयो वा। राजसूययाजित्वात् तदा तस्य साम्राज्यलक्ष्मीधारणम्। विरोधालङ्कारः। प्रहर्षिणी वृत्तम्। "म्नौ ज्रौ गस्त्रिकदशकैः प्रहर्षिणी स्यात्" ॥ ८८ ॥

इति श्रीमहामहोपाध्यायवर्य्य—आनन्ददेवायनि—श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां कृष्णार्घदानो नाम चतुर्दशः सर्गः ॥ १४ ॥

अथ

# शिशुपालवधकाव्ये

## पञ्चदशः सर्गः ।



**अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।**
**मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥१॥**

युधिष्ठिरेण तत्र यज्ञे भगवतो मानमर्चा विहितम् अथ चेदिपतिः शिशुपालो नासहत न चक्षाम न सेहे, हरेः सपर्यां नाभ्यनन्दत । कीदृशं मानं पाण्डुतनयेन युधिष्ठिरेण कृतम् । क, तत्र तस्यां संसदि सभायाम् । किमर्थं नासहत । हिशब्दो हेत्वर्थे । मानिनां मानवतामुन्नतानां यस्मान्मनश्चेतः परवृद्धिमत्सरि भवति, परवृद्धिरन्योन्नतिस्तत्र मत्सरोऽमर्षोऽस्यास्तीति । तथा च भारविः—"प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यये"ति । उद्गता वृत्तम् । "तरसोदिता सजसलेषु नसजगुरुकेष्वथैकतः । सत्सु भनजलगुरूणि ततः सजसा जगौ च भवतीयमुद्गता" इति ॥ १ ॥

**पुर एव शार्ङ्गिणि सवैरमथ पुनरमुं तदर्चया ।**
**मन्युरभजदवगाढतरः समदोषकाल इव देहिनं ज्वरः ॥ २ ॥**

अथामुं चैद्यं मन्युः कोपो भूयोऽभजत् शिश्राय, यतः पुर एव पूर्वमेव भगवति सवैरं सामर्षम् । कीदृशो मन्युस्तदर्चया भगवत्पूजयावगाढतरः । कः किमिव भजते-समौ दोषकालौ धातुसमयौ यस्य तथाविधो यथा ज्वरो देहिनं प्राणिनं भजते । दोषा मान्द्यहेतवः, कालो हेमन्तादिः । तथाहि वसन्तः श्लेष्मकालस्तत्र च यदा श्लेष्मवर्धकं भोजनं दध्यादिकं श्लेष्मप्रकृतिर्नरो भुङ्क्ते तदा तस्य गाढतरो ज्वरो भवति, अन्यदा तु तावन्मात्रम् । दोषो धातुरत्र ॥ २ ॥

कथं ज्ञायते चुकोपासाविति तदनुभावानाह—

**अभितर्जयन्निव समस्तनृपगणमसावकम्पयत् ।**
**लोलमुकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शिरः ॥ ३ ॥**

असौ चैद्यः सकलं राजकं भर्त्सयन्निव शनैर्मन्थरं सगर्वं शिरो दुधाव । कीदृशं लोलाः कम्पवशाच्चला मुकुटमणिरश्मयो यस्य, तथा अशनैः सपद्येव प्रकम्पितं भीषितं त्रिभुवनं येन ॥ ३ ॥

**स वमन् रुषाम्बु घनघर्मविगलदुरुगण्डमण्डलः ।**

**स्वेदजलकणकरालकरो निरभात् प्रभिन्न इव कुञ्जरस्त्रिधा ॥ ४ ॥**

स चैद्योऽमर्षेणाम्बु वमन् वाष्पं मुञ्चन् निरभात् नितरां बभौ, तथा घनो बहलो[1] घर्मः स्वेदाम्भस्तेन विगलदुच्छ्वसदुरु विशालं गण्डमण्डलं कपोलस्थलं यस्य, तथा स्वेदजलं घर्मोदकं तस्य कणा बिन्दवस्तैः करालौ दन्तुरौ करौ पाणी यस्य । उत्प्रेक्ष्यते–कुञ्जर इव दन्ती यथा । कीदृशः त्रिधा प्रभिन्नः, त्रिभिर्नेत्रगण्डकरैर्मदस्रावी कुञ्जर इव, स्रोतस्त्रयगलितमदकुञ्जरतुल्य इत्यर्थः । त्रिधा भिन्नः कुञ्जर इवासौ निरभात् प्रतिभासते स्मेति वा योजना ॥ ४ ॥

**सनिकामघर्मितमभीक्ष्णमधुवदवधूतराजकः ।**

**क्षिप्तबहलजलबिन्दु वपुः प्रलयार्णवोत्थित इवादिसूकरः ॥ ५ ॥**

स शरीरमत्यर्थमधुवदकम्पयत् । कीदृशं निकामघर्मितं भृशस्विन्नम्, अत एव क्षिप्तबहलजलबिन्दु, अतश्च कल्पान्तोदधिमध्यादादिवराह इवोत्थितः । स किल जलादुत्थायात्मानं धुन्वन् उदकविप्रुषश्चिक्षेप । अवधूतराजको भर्त्सितनृपमण्डलः । अधुवदिति "धू विधूनने" इत्यस्य ॥ ५ ॥

**क्षणमाश्लिषद् घटितशैलशिखरकठिनांसमण्डलः ।**

**स्तम्भमुपहितविधूनिमसावधिकावधूनितसमस्तसंसदम् ॥ ६ ॥**

स चैद्यः स्तम्भं स्थूणां क्षणमाश्लिषत् स्तम्भे निषसाद । कीदृशं घटितं योजितं शैलशिखरमिव कठिनमंसं स्कन्धो यत्र, अत एवोपाहितविधूनिं कृतकम्पं चालितमित्यर्थः । अत एव चाधिकमवधूनिता कम्पिता समस्ता संसत् सभा येन, अंसलो बलवान् "वत्सांसाभ्यां कामबले" । तत्कम्पश्च कम्पकरणे कारणम् । आश्लिषदिति लुङ् । पुषादित्वादङ्, क्सादेशस्त्वालिङ्गने, तच्च प्राणिविषयम् ॥ ६ ॥

---

1 'बहुलः' ग. पाठः ।

**कनकाङ्गदद्युतिभिरस्य गमितमरुचत् पिशङ्गताम् ।**
**क्रोधमयशिखिशिखापटलैः परितः परीतमिव बाहुमण्डलम् ॥ ७ ॥**

अस्य चेदिपतेः कनककटककान्तिभिः कपिशितं भुजचक्रमरुचत् बभौ । उत्प्रेक्ष्यते—कोपोत्थितवह्निज्वालापुञ्जैः समन्तात् परीतं व्याप्तमिव । अरुचदिति "द्युद्भ्यो लुङ्" ॥ ७ ॥

**कृतसंनिधानमिव तस्य पुनरपि तृतीयचक्षुषा ।**
**क्रूरमजनि कुटिलभ्रु गुरुभ्रुकुटीकठोरितललाटमाननम् ॥ ८ ॥**

तस्य मुखं क्रूरमजनि भीषणं जातं, यतः कुटिलभ्रु विषमितभ्रुकम्, तथा गुर्व्या भ्रुकुट्या कठोरितं कर्कशितं दुर्निरीक्ष्यं कृतं ललाटं यस्य । उत्प्रेक्ष्यते—भूयोऽपि तृतीयेनाक्ष्णा कृतसंनिधानमिव विहितावस्थान[1]मिव भ्रुकुटिनयनयोः सादृश्यात् । पूर्वं चासौ त्रिनेत्रोऽभूत् ॥ ८ ॥

**अतिरक्तभावमुपगम्य कृतमतिरमुष्य साहसे ।**
**दृष्टिरगणितभयासिलतामवलम्बते स्म समया सखीमिव ॥ ९ ॥**

अमुष्य शिशुपालस्य दृष्टिः समया समीपवर्तिनीमसिलतां खड्गयष्टिमवलम्बते स्म, खड्गमसावद्राक्षीदित्यर्थः । यतः साहसे हरिवधे कृतमतिः, तथागणितभया तृणीकृतत्रासा । दृष्टिद्वारेण तस्यैव विशेषणे एते बोद्धव्ये । किं कृत्वा अतिशयेन रक्तभावं लौहित्यमुपगम्य प्राप्य, क्रोधाद्धि रक्तत्वं जायते । कामिवावलम्बते स्म सखीमिव, यथा काचित्तरुणी साहसेऽकार्ये कृतमतिरगणितभया तिरस्कृतभर्तृभीतिः क्वचिद्रक्तभावं व्यसनित्वं प्राप्य समीपस्थां विश्वासधारिणीं सखीमवलम्बते श्रयति । सा हि तां[2] वक्ति—अत्र पुरुषे मम मनो गतं त्वमत्र शरणमिति ॥ ९ ॥

**करकुड्मलेन निजमूरुमुरुतरनगाश्मकर्कशम् ।**
**त्रस्तचपलवलमानजनश्रुतभीमनादमयमाहतोच्चकैः ॥ १० ॥**

अयं चैद्यः पाणिमुकुलेन स्वमूरुमुच्चकैर्वेगेनाहताताडयत् । कीदृशम् उरुतरनगाश्मकर्कशं गरीयोगण्डशैलकठिनमत एव त्रस्तैः किमेतत्स्यादिति भीतैश्चपलैस्तरलहृदयैर्वलमानैर्विवर्तमानैर्जनैः श्रुतो भीमो नादो यस्य यत्र वा हनने ।

---

१ 'स्थानीयमिव' क. ख. ग. पाठः । २ 'तस्याः' क. ख. पाठः ।

आहतेति "आङो यमहनः । स्वाङ्गकर्मकाच्च" त्यात्मनेपदम् ॥ १० ॥

**इति चुक्रुधे भृशमनेन ननु महदवाप्य विप्रियम् ।**
**याति विकृतिमपि संवृतिमत् किमु यन्निसर्गनिरवग्रहं मनः ॥ ११ ॥**

अनेन चैद्येनेतीत्थं भृशं चुक्रुधे । युक्तं चैतत्, यस्मादतिसंवृतिमत् गम्भीरमपि मनो महद्विप्रियमवमानं प्राप्य विकृतिं यात्यन्यथात्वमापद्यते, किं पुनर्यन्निसर्गनिरवग्रहं स्वभावनिरङ्कुशं, निरवग्रहमस्वतन्त्रमगम्भीरमित्यर्थः ॥ ११ ॥

**प्रथमं शरीरजविकारकृतमुकुलबन्धमव्यथी ।**
**भाविकलहफलयोगमसौ वचनेन कोपकुसुमं व्यचीकसत् ॥ १२ ॥**

असौ चैद्यः कोपमेव कुसुमं वचनेन व्यचीकसद् व्याकोशयामास, गिरा कोपमाविश्चकारेत्यर्थः । कीदृशमिति कोपकुसुमसाधर्म्यमाह—प्रथममादौ शरीरजैर्विकारैः सात्त्विकाङ्गिकैरनुभावैर्घर्मलौहित्योरुताडनादिभिः कृतो मुकुलबन्धः कलिकाप्रादुर्भावो यस्य । शरीरविकार एव मुकुलबन्धः । तथा भावी भविष्यन् यः कलहो रणं स एव फलयोगो यस्य । कुसुमे हि मुकुलेन विकासेन फलेन च भाव्यम् । न व्यथते इत्यव्यथी निर्भयः "जिदृक्षिविश्रीण्वमे" त्यादिना इनिः । व्यचीकसदिति णयन्तात् कसेर्लुङ् ॥ १२ ॥

**ध्वनयन् सभामथ सनीरघनरवगभीरवागभीः ।**
**वाचमवददिति रोषवशामतिनिष्ठुरस्फुटतराक्षरामसौ ॥ १३ ॥**

अथानन्तरमसौ चैद्यः इति वक्ष्यमाणां वाचमवोचत्, सभां सदो ध्वनयन् प्रतिरवेण शब्दयन्, यतः सनीरो जलयुतो यो घनो मेघस्तस्य रवो गर्जितं तद्वद्गभीरा गम्भीरा कालान्तरस्थायिनी वाग्यस्य, अभीर्निर्भयः । कीदृशीं वाचं रोषवशात् कोपवशादतिनिष्ठुराणि भृशपरुषाणि स्फुटतराणि अभिव्यक्तान्यक्षराणि यस्यास्तामतिनिष्ठुरस्फुटतराक्षराम् । अर्थस्य निष्ठुरत्वादक्षराणामपि निष्ठुरत्वम् ॥ १३ ॥

किमवददित्याह—

**ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम् ।**
**सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र को गुणः ॥ १४ ॥**

हे कुरुनरेन्द्र ? कौरवनाथ ननु सर्व एव कश्चित् कमपि गुणं पौरुषश्रुतादिकं समवेक्ष्य पूज्यतामेति पूज्यते, गुणाः पूजाया निमित्तमित्यर्थः । यदि वा गुणं स्वप्रयोजनं पर्यालोच्य । अतश्चैवं स्थितेऽस्य हरेर्वानरतुल्यस्य सर्वैर्गुणैः कृतज्ञत्वादिभिर्विरहितस्य विशेषेण वर्जितस्य परिपूजया को गुणः, एनमर्चयित्वा न कश्चिद्गुणस्त्वयाप्त इत्यर्थः । ननुरमर्षे । कमपि स्वल्पमपीत्यर्थः। हरिर्वानरः तत्सधर्मत्वाद्भगवानत्र हरिर्विवक्षितो यथाग्निर्माणवक इति । नच त्वं यादृशस्तादृशो येनागुणं पूजयसीति कुरुनरेन्द्रेत्यामन्त्रणपदेन सूच्यते । अत्र च कविरतिभक्तत्वाद्भगवत्कथाक्रमागतामपि निन्दामसहमानः प्रतीयमानां स्तुतिं व्यरचदिति तदर्थोऽधुना व्याख्यायते—हरेर्विष्णोः परिपूजया कोऽगुणोऽपितु स्वर्गादिको गुण एवेत्यकारप्रश्लेषः । यदि वा परमताशङ्कया किंशब्दः काक्वा, को गुणो ननु गुण एवेत्यर्थः। यदि वा को गुणो नीरागत्वेन नैवास्य गुण उपकार इत्यर्थः । कीदृशस्य सर्वैस्त्रिभिरपि गुणैः सत्त्वरजस्तमोभिर्विरहितस्य । निर्गुणो हि पुरुष इति सांख्याः । अत्र द्वितीयार्धमेवार्थेन भिद्यते, प्रथमार्धे तु न किञ्चित् प्रयोजनम्, नहि तत्र तेन गुणनिन्दा कृता । पूज्यतामिति कृत्यः । धात्वर्थस्य त्ववेक्षितैव कर्ता, य एव हि समवेक्षते स एव पूजयते इति ल्यब् भवत्येव । सर्वो गुणान् दृष्ट्वा पूज्यते इत्यर्थः । वक्रश्लेषोऽत्र, निन्दा स्तुतावलङ्कारः ॥ १४ ॥

तदेव निर्गुणत्वं दर्शयितुमाह—

**न महानयं न च बिभर्ति गुणसमतया प्रधानताम् ।**
**स्वस्य कथयति चिराय पृथग्जनतां जगत्यनभिमानितां दधत् ॥१५॥**

अयं हरिर्न महान् सर्वोत्कृष्टः । सर्वनाम सर्वत्र प्रत्यक्षनिर्देशे । कदाचिदन्येषां प्रधानानां गुणैः समः स्यात् तथापि पूज्यः, एतदपि नेत्याह—गुणसमतया गुणसाम्येन या प्रधानता विवक्षितत्वं तदपि न बिभर्ति गुणवर्जितत्वादिति भावः । निर्गुणत्वादन्येषां प्रधानानां मध्ये न गण्यते इत्यर्थः । गुणसमत्वमत्र प्रधानतायां हेतुः, तदभावे वा नापि प्रधानतां बिभर्ति, यतोऽन्येषां गुणैरसम इत्यर्थः । गुणोत्कर्षाद्धि प्राधान्यमाप्यते। कदाचिन्महान् प्रधानं च न भवेद्यावद्धीनोऽपि न स्यात्तदपि नेत्याह—अनभिमानितां निरहङ्कारित्वं दधत् स्वस्यात्मनश्चिराय जगति पृथग्जनत्वं हीनत्वं कथयति, प्राकृतो हि निरभिमानो भवति, इति निन्दा ॥ स्तुतिस्तु—अयं न महान् महत्तत्त्वं न भवति, गुणाना-

मुद्रेके साम्याभावे बुद्धेरेव महत्त्वम् । तथा गुणानां सत्त्वरजस्तमसां समतया या प्रधानता तामपि न बिभर्ति, प्रधानमपि न भवतीत्यर्थः । अनुद्भूतविक्रियाणि प्रकृतिस्थानि सत्त्वरजस्तमांसि प्रधानशब्देनाहुः । तथानभिमानितामनहङ्कारित्वं दधत् स्वस्यात्मनः पृथग्जनतां जनव्यतिरिक्तत्वं कथयति । जायन्ते एभ्यः शरीराणीति जना महाभूतानि, घञ् । जनयन्तीति वा जनाः पञ्चतन्मात्राणि, अच् । पृथग्भूतो जनेभ्यः पृथग्वा जना यस्मात् स पृथग्जनस्तद्भावस्तत्ता तां कथयति सर्वातीतत्वात् । तेन नायं महान् न प्रधानं न भूतानि न तन्मात्राणि नाहङ्कार इति वाक्यार्थः । पञ्चविंशकोऽयं पुरुषश्चतुर्विंशकबाह्य इति यावत् ॥ १५ ॥

भूयोऽपि निर्गुणत्वमाह—

**रहितं कलाभिरखिलाभिरकृतरसभावसंविदम् ।**
**क्षेत्रविदमपदिशन्ति जनाः पुरबाह्यमेनमगतं विदग्धताम् ॥ १६ ॥**

एनं हरिं क्षेत्रविदमपदिशन्ति कार्षकमाहुः, अत एव पुरबाह्यं ग्राम्यम्, कार्षका हि नगराद्बहिर्वसन्ति । यद्वा पुरस्य वाहनीयो वाह्यः पुरायत्तः, तथा सर्वाभिः कलाभिर्गीतवाद्यादिभिर्वर्जितम्, यतोऽकृता रसानां शृङ्गारादीनां भावानां च रत्यादिकानां संवित् सङ्केतः संवेदनं येन, विदग्धशास्त्राणां सङ्केतमपि यो न वेत्तीत्यर्थः । यतो विदग्धतां वैदग्ध्यमगतमप्राप्तमिति निन्दा । स्तुतिस्तु– एनं भगवन्तं क्षेत्रविदं क्षेत्रज्ञमात्मानमामनन्ति । क्षेत्रं शरीरम् । कीदृशं समग्राभिः कलाभिरवयवैः रहितं निष्कलम्, अकृतरसा अविहितरागा भावसंवित् पदार्थसंवेदनं यस्य, पुरुषो हि भावान्वेत्ति नतु तत्र रसज्ञतां भजते । यद्वा अविद्यमानाः कृतरसभावाः कर्मरागोत्पत्तयो यस्य स चासौ संवित् चित्स्वरूपः, पुराद् देहाद्बाह्यं विलक्षणम्, विदग्धतां विशेषेण दाह्यत्वमगतम् । यदाह—"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः" इति ॥ १६ ॥

**अतिभूयसापि सुकृतेन दुरुपचर एष शक्यते ।**
**भक्तिशुचिभिरुपचारपरैरपि न ग्रहीतुमभियोगिभिर्नृभिः ॥ १७ ॥**

अयमेवंविधैरपि नृभिर्ग्रहीतुमावर्जयितुं न शक्यते । कीदृशैर्भक्त्या सत्त्वतः शुचिभिः शुद्धमतिभिः, उपचारपरैराराधनपरैः, अभियोगिभिरेतन्मनोभिः । कथं तर्हि न शक्यते इत्याह–यतोऽतिभूयसापि बहुतरेणापि सुकृतेनोपकारेण दुरुप-

चरो दुराराधः । अकृतज्ञोऽयमिति वाक्यार्थः, इति निन्दा ॥ स्तुतिस्तु-एषोऽभियोगिभिराभिमुख्येन योगभाग्भिरपिनृभिर्ग्रहीतुं परिच्छेतुं न शक्यते, आत्मतत्त्वस्य दुर्ज्ञानत्वात् । कीदृगेष अतिभूयसापि सुकृतेन यज्ञदानादिना दुरुपचरो दुराराधः, भक्तिगम्यो हि भगवान् । कीदृशैर्नृभिः भक्त्या शुचिभिर्निर्मलीमसैः । केचित् तु परमताशङ्कया नञ्काकां व्याचक्षते-नैष सुकृतेन दुरुपचरो योगिभिरपि न ग्रहीतुं शक्यते, परन्तु तैरवज्ञायते इत्यर्थः । यदुक्तं—"नाहं वेदैर्न तपसा" इत्यादि ॥ १७ ॥

**व्रजति स्वतामनुचितोऽपि सविनयमुपासितो जनैः ।**
**नित्यमपरिचितचित्ततया पर एव सर्वजगतस्तथाप्ययम् ॥ १८ ॥**

अयमनुचितोऽप्ययोग्योऽपि स्वतां व्रजत्यस्माकं ज्ञातित्वं याति, असमोऽपि शिशुपालस्याहं स्वजन इति वक्तीत्यर्थः । तथा जनैः सविनयं साचारं सेवितोऽपि परः शत्रुरेवायं त्रिभुवनस्य । यद्ययमकृतज्ञः सेवितोऽपि शत्रुस्तत्कथं जनाः सेवन्ते इत्याह—अपरिचित्ततयाज्ञातचित्तत्वेन । ते हि जानते, साधुरेवायं सेव्यते इति । यदि वापरिचितचित्ततया चलचित्ततया अविश्वासहृदयत्वेन सर्वजगतः पर एवेति योज्यमिति निन्दा ॥ स्तुतिस्तु—असौ स्वतामात्मत्वं व्रजति प्रतिपद्यते, क्षेत्रज्ञोऽयमित्यर्थः । लोकप्रसिद्ध्यात्र स्वशब्देनात्मोक्तः । आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । सांख्या ह्यात्मानं स्व[1]शब्दवाच्यमाहुः । कीदृशोऽयमनुचितोऽनभ्यस्तोऽज्ञेयोऽपि सविनयमैकाग्र्येण योगिभिरुपासितश्चिन्तितः, तस्मात् सर्वस्माज्जगतोऽव्यक्तात्परो विलक्षणः । कुतः अपरिचितमसङ्गतं चित्तं मनो बुद्धिर्वा यस्य स अपरिचितचित्तः, तद्भावस्तत्ता तया । अन्यो ह्यात्मा, अन्या च बुद्धिः, अन्यच्च चित्तम् । जगच्चेदं प्राकृतो भागः ॥ १८ ॥

**उपकारिणं निरुपकारमनरिमरिमप्रियं प्रियम् ।**
**साधुमितरमबुधं बुधमित्यविशेषतः सततमेष पश्यति ॥ १९ ॥**

अयमुपकारिणमपकारिणं चाविशेषेण पश्यति, अपकारिणमिवोपकारकमप्यसौम्यया दृष्ट्या पश्यतीत्यर्थः, इत्यकृतज्ञत्वकथनम् । एवमन्यत्र । तथारिं शत्रुमनरिं मित्रम् । नायं नियमो यन्मित्रमुपकार्येव भवति, अनुपकारकश्च शत्रुरेवेति पृथगुपादानम् । मित्रमपि नोपकुरुते निरुपकारी चाशत्रुरपि संभवति । अप्रियं द्वेष्यं, प्रियं मनोज्ञं, साधुमार्यमितरं खलम्, अबुधं मूर्खं, बुधं पण्डि-

१ 'स्वामि' ग. पाठः ।

तम् । इतिरुक्तनिर्देशे । एषा निन्दा । स्तुतौ तु निर्गुणत्वात्पुरुषस्य समदृष्टित्वम् ॥ १९ ॥

**उपकारकस्य दधतोऽपि बहुगुणतया प्रधानताम् ।**
**दुःखमयमनिशमाप्तवतो न परस्य किञ्चिदुपकर्तुमिच्छति ॥ २० ॥**

अयं परस्यान्यस्य किञ्चिदपि मनागपि नोपकर्तुमिच्छति, उपकारकरणे बुद्धिरेवास्य न भवतीत्यर्थः । कदाचित् परोऽनुपकारी स्यादित्याह–उपकारकस्यापि अत एवैतदर्थमनिशं दुःखं क्लेशमाप्तवतः प्राप्तस्य । कदाचिदमुख्यः परः स्यात्तदप्रत्युपकारित्वेन तथा लज्जादोषो भवेदित्याह–बहुगुणतया श्रुतशौर्यादिगुणसद्भावेन प्रधानतां मुख्यत्वं दधतो बिभ्रतः । तदेतेन पूर्वोक्तो दृढीकृतः, इति निन्दा ॥ अथ च स्तुतिरेव–अयं परस्य बुद्धितत्त्वस्य प्रधानसंज्ञकस्य किञ्चिदपि नोपचिकीर्षति, द्रष्टा हि पुरुषो न सक्रियः । कीदृशस्य पुरुषप्रवृत्तिद्वारेणोपकारकस्य, तथा बहवस्त्रयोऽपि ये गुणास्तद्भावेन प्रधानतां प्रकृतित्वं दधतः । सत्त्वरजस्तमांसि प्रधानम् । तथा दुःखं जननमरणादिकं सदा प्राप्तस्य, सर्वं हि बुद्धिरनुभवति न पुरुषः ॥ २० ॥

**स्वयमक्रियः कुटिलमेष तृणमपि विधातुमक्षमः ।**
**भोक्तुमविरतमलज्जतया फलमीहते परकृतस्य कर्मणः ॥ २१ ॥**

एष देवः परकृतस्यान्यनिष्पादितस्य कर्मणः क्रियायाः फलं भोक्तुमीहते वाञ्छति, कथमलज्जतया निस्त्रपत्वेन । कदाचिदैश्वर्यादेव स्यादित्याह–आत्मना तृणमपि कुटिलं कर्तुमक्षमोऽसमर्थोऽनीशः, यतोऽक्रियोऽलसः । अशक्त्या स्वयं निष्क्रियः पराधीनोऽन्यदत्तेन पिण्डेन जीवतीति वाक्यार्थः । इति निन्दा ॥ अथ च वाक्यार्थपर्यालोचनया स्तुतिः—एष भगवान् परजनितस्य बुद्धिकृतस्य कर्मणः शुभाशुभस्य फलं सुखदुःखात्मकं भोक्तुमीहते । आत्मा हि फलभागिति सांख्याः । कीदृगेष इति पुरुषस्य स्वरूपमाह–स्वयमक्रियो निष्कर्मा, तथा तृणमपि कुटिलं कर्तुमनीशः । निर्लज्जत्वं हि निर्गुणत्वात् ॥ २१ ॥

**य इमं समाश्रयति कश्चिद् उदयविपदोर्निराकुलम् ।**
**तस्य भवति जगतीह कुतः पुनरुद्भवो विकरणत्वमेयुषः ॥ २२ ॥**

यः कश्चित् मूर्ख इमं कृष्णं समाश्रयति सेवते तस्यास्मिन् संसारे कुतः पुनरुद्भवो भवति, नैव समुत्थानं विभूतिर्भवतीत्यर्थः । यत एनमुदये विपदि

च निराकुलं निश्चिन्तम् । आश्रितस्य यदि सम्पत्ततोऽस्य न सुखं, यदि वा विपत्ततो नैव दुःखमित्यर्थः । कीदृशस्य तस्य विकरणत्वं मृतिमेयुषः प्राप्तस्य, एतदाश्रयणात् स मृत एव । साधनसामग्रीवैकल्यं विकरणत्वमिति निन्दा ॥ स्तुतिस्तु—यः कश्चिद्योगी एनं परमात्मानं सेवते तस्य विकरणत्वमेयुषो नष्टदेहस्य पुनरिह संसारे कुत उद्भवो जन्म, मुक्त एवासावित्यर्थः । कीदृशममुमुदयविपदोर्निराकुलमव्यग्रमविक्रियत्वात् । करणानीन्द्रियाणि । एयुष इत्याङ्पूर्वस्येणः क्वसुः । "उपेयिवानि" त्यत्र हि उपसर्गनिर्देशे तन्त्रम् ॥ २२ ॥

**गुणवन्तमप्ययमपास्य जनमखिलमव्यवस्थितैः ।**
**याति सुचिरमतिबालतया धृतिमेक एव परिवारितो जडैः ॥ २३ ॥**

अयं सर्वमेव गुणिनमपि जनमतिबालतयातिचापलेन हित्वा अव्यवस्थितैश्चपलैर्जनैरज्ञैः परिवारितः सन् अजस्रमेक एव धृतिं याति[1] प्रीयते । एतद्वर्जं नान्यो नाकलोकमपास्य गोपमध्ये रमते इति निन्दा ॥ स्तुतिस्तु—एष भगवान् बालतया बालरूपो भवन् जलैरद्भिः परिवारित आवृतः सुचिरं धृतिमेति । उक्तं च—"संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् । बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः" इति ॥ कीदृशैर्जलैरव्यवस्थितैर्भरितसकलभुवनैः । किं कृत्वा धृतिं याति, गुणवन्तं सत्त्वाद्याश्रितं जनमपास्य क्षिप्त्वा विनाश्य, सर्वं जनं संहृत्य बालरूपधरो मायया जलमध्येऽयं शेते इत्यर्थः ॥ २३ ॥

**सुकृतोऽपि सेवकजनस्य बहुदिवसखिन्नचेतसः ।**
**सर्वजनविहितनिर्विदयं सकृदेव दर्शनमुपैति कस्यचित् ॥ २४ ॥**

अयं सुकृतोऽप्युपकारकस्याप्याश्रितजनस्य सकृदेकवारमेव दर्शनं ददाति, तत्रापि कस्यचिन्न सर्वस्य, अतश्च सर्वजनस्य विहितनिर्वित् जनितनिर्वेदः । कीदृशस्य जनस्य बहुभिर्दिवसैः खिन्नं चेतो यस्य तस्य चिरकालमेवोद्विग्नचित्तस्येत्यर्थः, इति निन्दा ॥ स्तुतिस्तु—अयं कस्यचिदेव सेवकजनस्य भक्तलोकस्य सकृदेव दर्शनमुपैति, नहि क्षेत्रज्ञः सर्वदृश्योऽसकृद्वा । कीदृशस्य सुकृतः पुण्यवतस्तथा बहुभिर्दिवसैर्भूयसा कालेन खिन्नचेतसः क्षुण्णमनसः, दीर्घेण योगेन श्रान्तचित्तस्येत्यर्थः । नह्यनभ्यासगम्य ईश्वरः । अत एव सर्वजनाविहितनिर्वेदः, श्रेयस्यपि हि चिरकाललभ्ये मनो निर्विद्यते । यदि वा सर्वेषु जनेषु विगतौ हितनिर्वेदौ यस्य स सर्वजनविहितनिर्वित्, नास्य कश्चित्प्रियो नच क-

1 'मेति' क. ख. ग. पाठः ।

श्चिद् द्वेष्य इत्यर्थः । यदि वा सर्वे जना यत्र स सर्वजनः, विगतौ हितनिर्वेदौ सुखदुःखे यस्य स विहितनिर्वित्, ततः कर्मधारयः । सर्वजनस्य कृतनिर्विद्धिहितनिर्वाण इत्यन्ये, आश्रितं जनं संसाराद्यो मोचयतीत्यर्थः । शोभनं करोतीति सुकृत् उपकारी पुण्यकृच्च । निर्विन्निर्वेदो निर्वाणं चेति ॥ २४ ॥

**स्वजने सखिष्वनुगतेषु नियतमनुरागवत्स्वपि ।**

**स्नेहममृदुहृदयः क्षपयन् निरपेक्ष एष समुपैति निर्वृतिम् ॥ २५ ॥**

एष बन्धुमित्राश्रितेषु प्रीतिं नाशयन्निर्वृतिं सदा समुपैति सुखं प्राप्नोति, सर्वत्रैव वैरायमाणः सुखायते इत्यर्थः । कदाचिदेते विरक्ताः स्युरित्याह—अनुरक्तेष्वपि । कथं तर्हि निःस्नेह इत्याह–यतोऽमृदुहृदयः क्रूरचित्तः । तथा निरपेक्षो निर्विवेक इति निन्दा ॥ स्तुतिस्तु—एष स्वजनादिषु (वयमप्ये (?) वमनुरागवत्स्वपि स्नेहं क्षपयंस्तृष्णां तनूकुर्वन्निर्वृतिं समुपैति निर्वाणं याति । तृष्णाक्षयात् किल मुक्तिः । अमृदुहृदयोऽनार्द्रस्वभावो वीतरागत्वात् । यदि वा अमृदु दुर्बोधं हृदयं स्वरूपं यस्य । निरपेक्षो निःसङ्गः । क्षपिर्धातुष्वपठितोऽपि क्रियावाचित्वात् खचिमिलिकम्यर्घत्यादिकवद्धातुरेव ॥ २५ ॥

**क्षणमेष राजसतयैव जगदुदयदर्शितोद्यतिः ।**

**सत्त्वहितकृतमतिः सहसा तमसा विनाशयति सर्वमावृतः ॥ २६ ॥**

एष राजसतया चापलेन क्षणं जगदुदये लोकहिते दर्शितोद्यतिर्दर्शितोद्यम इति क्रियारम्भसिकत्वेन क्षणमुपकुरुते इत्यर्थः । तमसा तु मोहेन पुनरनन्तरमावृतत्वादहितकृतमतिरुपद्रवनिहितबुद्धिः सन् सहसैव सर्वं सत् सुकृतं विनाशयति, यदेव पूर्वमुपकृतं तदेव मोहान्नाशयतीत्यर्थः । सत्सुकृतम् । तुर्भिन्नक्रमः । एषा गर्हा ॥ नुतिरपि–एष त्रिमूर्त्ती राजसतया रजोगुणमाश्रित्य जगदुदये प्रजासर्गे दर्शितोद्यमः, तथा सत्त्वेन गुणेन हिते रक्षायां कृतमतिर्विहितचित्तो विष्णुरूपेण, तथा तमसा गुणेनावृतः सन् सहसैव सर्वं व्यक्तं रुद्ररूपेण नाशयति ॥ २६ ॥

**अभिहन्यते यदभिहन्ति परितपति यच्च तप्यते ।**

**नास्य भवति वचनीयमिदं चपलात्मिका प्रकृतिरेव हीदृशी ॥ २७ ॥**

यदेष हरिरन्येनाभिहन्यते ताड्यते यच्चैषोऽन्यानभिहन्ति, तथा यत्परितपति बाधते, यच्च तप्यते उपद्रूयतेऽतोऽस्य वचनीयता वाच्यता न भवति, यतोऽ-

स्यैवंविधैव चपलात्मिकाविनीता प्रकृतिः स्वभावः। स्वभावाच्च न पर्यनुयोगमर्हतीति क्षेपः॥ स्तुतिस्तु-अस्य परमात्मनो यथोक्तं वचनीयं वचनं न भवति न प्रवर्तते। एष हन्ति हन्यते परितपति तप्यते चेति न वाच्यमित्यर्थः। यत ईदृशी चपलात्मिकानेकरूपा प्रकृतिर्बुद्धिः, न त्वेषः। हननादिकं तमसा भवति, पुरुषश्च निर्गुण इत्यर्थः। उक्तं च-"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति॥ "तस्मान्न बध्यतेऽसौ न मुच्यते नचापि संसरति क्व[1]चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः"॥ तपिः सकर्मकोऽपि। शारीरं दुःखमभिघातः। मानसं तु परितापः॥ २७॥

**अतिसत्त्वयुक्त इति पुंभिरयमतिशयेन वर्ण्यते।**
**सूक्ष्ममतिभिरथ चापगते समुपैति नाल्पमपि सत्त्वसङ्करम्॥ २८॥**

एष सूक्ष्ममतिभिः स्वल्पप्रज्ञैर्नृभिर्महता सत्त्वेन धैर्येण युक्त इति सुष्ठु कथ्यते। अथानन्तरं चापगते प्राप्तचापे गृहीतधनुषि कस्मिंश्चित् स्वल्पमपि सत्त्वसङ्करं पौरुषलेशं न भजते, कालयवनादिना परेणोत्तब्धस्यास्य सत्त्वलेशोऽपि न लभ्यते इत्यर्थः। तस्मादयुक्तं च तैर्वर्ण्यते इति भावः, इति निन्दा। चापं गतश्चापगतः। यद्वा चापस्य गतं प्राप्तिश्चापगतं तस्मिंश्चापगते धनुःसंनिधाने सतीत्यर्थः॥ अथ च सबीजनिर्बीजसमाधिसत्त्वसङ्करं नोपैतीति समाधिद्वारेण स्तुतिः—एष सबीजे समाधौ पुंभिर्योगिभिः सत्त्वेन गुणेन युक्त इति कथ्यते। अथच सूक्ष्ममतिभिः कुशाग्रीयबुद्धिभिर्बहुदृश्वभिरपगते ज्ञाते सति निर्बीजसमाधौ स्वल्पमपि सत्त्वसङ्करं नोपैति, निर्गुणो हि पुरुषः। अथ चेति विस्मये॥ २८॥

**प्रलयं परस्य महतोऽपि सततमिह निःसुखे गुणाः।**
**यान्ति जगदपि सदोषमदः स्वरुचैव पश्यति गुणान्द्विषन्नयम्॥२९॥**

परस्यान्यस्य महतोऽपि मुख्यस्यापीह कृष्णे गुणाः सौन्दर्यादयो नियतमवश्यं प्रलयं यान्ति नश्यन्ति, नैष कस्यचिदपि गुणानङ्गीकरोतीत्यर्थः। अविद्यमानं सुखमस्मादिति निःसुखः, गुणापहाराद्धि कुतः सुखम्। यद्वा-अविद्यमानं परगुणैरस्य सुखमिति निःसुखः, अत एव ते नाशमत्र यान्ति, अतश्चायं गुणान् द्विषन्नखिलमप्येतज्जगत् स्वरुचैवात्मेच्छयैव सदोषं पश्यति, गुणद्वेषित्वादन्यानपि सदोषान्वेत्तीत्यर्थः, इति निन्दा॥ अथ च स्तुतिः—इह परमात्मनि कृ-

[1] 'कश्चित्' ग. पाठः।

ष्णे परस्य बुद्धितत्त्वस्य महतोऽपि महत्तत्त्वस्य च गुणाः सत्त्वरजस्तमांसि प्रलयं यान्ति नाशं गच्छन्ति, पुरुषं प्राप्य निवर्तन्ते इत्यर्थः । कीदृशेऽत्र निःसुखे सुखवर्जिते अविक्रियत्वात्, बुद्धेर्हि सुखासुखे नात्मनः । तथैष गुणान् सत्त्वादीन् द्विषन्ननभिनन्दन्नस्पृशन्नदो जगत् प्रकृतिं सदोषं क्लेशयुक्तं पश्यतीक्षते, द्रष्टा हि पुरुषः प्रकृतेरिष्यते । जगत्प्रकृतिः, प्राकृतो हि भागो व्यक्तं, तच्च सदोषं जननमरणयोगात् । केन पश्यति स्वरुचा आत्मभाना[१]दिति शक्त्येत्यर्थः ॥ २९ ॥

एवं सांख्यदर्शनेन स्तुत्वा अधुना पुराणदर्शनेन तुष्टूषुर्निनिन्दिषुश्चाह—

**क्षितिपीठमम्भसि निमग्नमुदहरत यः परः पुमान् ।**
**एष किल स इति कैरबुधैरभिधीयमानमपि तत्प्रतीयते ॥ ३० ॥**

इत्येवमभिधीयमानमुच्यमानं कैरबुधैरपि प्रतीयते बुध्यते, मूर्खा अप्येतदसत्यमवगच्छन्तीत्यर्थः । किमित्याह–तोये ब्रुडितं महीमण्डलं यः परः पुमानुत्कृष्टः पुरुष उदहरतोद्धृतवान् स किलैष इति । किलासत्ये । अपिर्भिन्नक्रमः । सोऽन्य एव महापुरुषः, अयं त्वन्य इति जडा अपि प्रतियन्तीत्यर्थः । इति निन्दा ॥ स्तुतिस्तु–यः परः पुरुषोऽम्भसि निमग्नं क्षितिपीठमुज्जहार स किलैष एवेत्यभिधीयमानमपि कैरबुधैः प्रतीयते, मूर्खैरेतच्छ्रुत्वापि न सम्भाव्यते इत्यर्थः ॥ ३० ॥

**नरसिंहमूर्तिरयमेव दितिसुतमदारयन्नखैः ।**
**आप्तजनवचनमेतदपि प्रतिपत्तुमोमिति जनोऽयमर्हति ॥ ३१ ॥**

नृसिंहवपुः सन्नयमेव नखैर्हिरण्यकशिपुमभाङ्क्षीत्, इति यदाप्तवचनं बान्धवभाषितं तदप्ययमेव जनो भीष्मादिक ओमित्येवमेवैतदिति प्रतिपत्तुं ज्ञातुमङ्गीकर्तुमर्हति । सुहृद एवैवमेनं स्तुवन्ति, तच्च मूर्खा एव सत्यं बुध्यन्ते इत्यर्थः । इतिशब्दोऽत्र वाक्ययोः सम्बन्धोपादानायाध्याहार्यः ॥ स्तुतौ त्वयमर्थः–अयमेव भगवान् नापरो नरसिंहमूर्तिमाश्रित्य नखैर्दैत्येन्द्रमदारयदित्येतदप्याप्तजनवचनं शिष्टवाक्यमयं मनीषी जनः प्रतिपत्तुमर्हति नान्यः, आप्तोक्तत्वात्पण्डिता इव सत्यं जानन्तीत्यर्थः । आप्ता अवितथवादिनो व्यासादयः ॥ ३१ ॥

**अपहाय तुङ्गमपि मानमुचितमवलम्ब्य नीचताम् ।**
**स्वार्थकरणपटुरेष पुरा बलिना परेण सह संप्रयुज्यते ॥ ३२ ॥**

---

१ 'भावात्' ग. पाठः ।

एष बलिना बलवता परेणान्येनारिणा वा सह पुरा चिरात् संप्रयुज्यते सम्बध्यते, समर्थं चेत्परं वेत्ति तद्भयात्तमनुप्रविशतीत्यर्थः । सर्वनामनिर्देशः सर्वत्र निन्दायामनास्थां सूचयति, स्तुतौ तु गौरवम् । किं कृत्वा उचितं योग्यं तुङ्गमुन्नतं मानमप्यपहायाहङ्कारमपि त्यक्त्वा, तथा नीचतां प्राकृतत्वमाश्रित्य, यतः स्वार्थकरणपटुरात्मप्रयोजनसंपादनचतुरः । शङ्केः किल मानो नाशायेति निन्दा । स्तुतिस्तु—एष तुङ्गं मानं प्रमाणं हित्वा नीचतां खर्वत्वं चावलम्ब्य पुरा पूर्वं परेणोत्कृष्टेन बलिना वैरोचनिना सह संप्रयुज्यते संप्रयुयुजे "पुरि लुङ् चास्मे" । यतः स्वस्य ज्ञातेरिन्द्रस्य योऽर्थः शत्रुवशीकरणलक्षणस्तत्र पटुः कुशलः । इन्द्रप्रीतये वामनरूपमवलम्ब्यैष भगवान् बलिं बद्धवानित्यर्थः ॥ ३२ ॥

**क्रमते नभो रभसयैव विरचयति विश्वरूपताम् ।**
**सर्वमतिशयगतं कुरुते स्फुटमिन्द्रजालमिदमेष मायया ॥ ३३ ॥**

एष कृष्णः स्फुटं नूनमिदमिन्द्रजालमसद्भूतं मायया हेतुभूतया कुरुते । किमित्याह—रभसया रभसेन युद्धादौ नभः क्रमते आरोहति, वयः पक्षिणः श्वानः कुक्कुराः रूपा मृगास्तद्भावं विरचयति, यदिवा विश्वरूपतां नानारूपत्वम् । तथा सर्वमतिशयगतं विशेषप्राप्तं कुरुते, तात्त्विकोऽस्य व्यवहारो न कश्चिदिति वाक्यार्थः, इति निन्दा । स्तुतिस्तु—इदमीदृक् स्फुटमेष भगवान् मायया बुद्ध्या इन्द्रजालं कुरुते, इन्द्रजालमिवेन्द्रजालं भ्रमकारित्वात् । तदेवाह—नभः क्रमते बडिबन्धनार्थं विश्वरूपतां सर्वदेवमयत्वं विरचयति, सर्वं च जगदतिशयगतं रक्षया सविशेषं कुरुते । कीदृश्या मायया रभसमौत्सुक्यं करोतीति रभसा तया रभसया, लोकस्य वञ्चन्येत्यर्थः । क्रमते इति "अनुपसर्गाद्वे" त्यात्मनेपदम् ॥ ३३ ॥

**किल रावणारिरयमेव किमिदमियदेव कथ्यते ।**
**सत्त्वमतिबलमधिद्युति यत्तदशेषमेष इति धृष्टमुच्यताम् ॥ ३४ ॥**

अयं हरिः किल रावणारिरेतेन दशास्यो हत इतीयदेवैतत् स्वल्पमात्रकं किमिति कस्मादुच्यते, अतिबलं महाशक्ति अधिद्युति महातेजश्च यत्सत्त्वं प्राणी तत्सर्वमेष एवेति धृष्टं निःशङ्कमुच्यताम् । नह्यलीकस्यान्तो भवतीति भावः । अतश्च येनासत्यं वाच्यं स बह्वेव कस्मान्नाह, तस्मात् नैतेन किञ्चिदपि कृत-

मिति वाक्यार्थः, इति निन्दा । स्तुतिस्तु—अयं रावणारिरेवेति किमित्येतावदेवोच्यते, यस्माद्यदतिबलमधिद्युति च सत्त्वं तत्सर्वमेवैष इति धृष्टं निःशङ्कमुच्यताम् । उक्तं च–"यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छेस्त्वं मम तेजोंशसम्भवमि" ति ॥ किलागमे ॥ ३४ ॥

यच्च बाल्ये शकटमेष एव चिक्षेपेत्युच्यते तदप्यसत्यमिति वक्तुमाह—

**चलतैष पादयुगलेन गुरु शकटमीषदस्पृशत् ।**
**दैवकलितमथ चोदलसद् दलितोरुभाण्डचयमात्मनैव तत् ॥ ३५ ॥**

एष वैकल्येन चलद्भ्यां चरणाभ्यां गुरु शकटं किंचिदस्प्राक्षीत् तच्च दैवकलितं दैवचोदितं स्वयमेवोदलसदपप्तत्, न त्वेतस्यात्र किंचित्पौरुषम् । दलितः स्फुटित उरुर्महान् भाण्डानां दधिघृतघटादीनां चयो राशिर्यत्रेति निन्दा ॥ स्तुतिस्तु—एष भगवांश्चलता पादयुगलेन गुरु शकटमीषदेवास्पृशत् । अथ चोदलसत् परिवृत्तम्, यत एतेन दैवेन भगवता कलितं प्रेरितम् । अथ चेति विस्मये । ईषत्स्पर्शमात्रात् किल भङ्गो न युक्तः । शकटशब्दोऽस्त्रीलिङ्गः ॥ ३५ ॥

**स्नुवतामुना स्तनयुगेन जनितजननीजनादरा ।**
**स्त्रीति सदयमविधाय मनस्तदकारि साधु यदघानि पूतना ॥ ३६ ॥**

अमुना यत्पूतना राक्षसी स्त्रीयमवध्येति सदयमकृत्वा मनोऽघानि हता तत् साध्वकारि युक्तं कृतमिति काका प्रयोगे नैव साधु कृतमित्यर्थः । कीदृशी सा स्नुवता क्षीरं स्रवता स्तनयुगेन कृतो जननीजनादरो मातृस्नेहो यया, अतश्च मातृघात्येवायमिति निन्दा ॥ स्तुतिस्तु—यदमुना स्नुवता स्तनयुगेन कृतमातृस्नेहापि पूतना राक्षसी स्त्रीति मनः सदयमकृत्वा हता, तत् साध्वकारि युक्तमेवानुष्ठितमिति स्पष्ट एवार्थः । सा हि राक्षसी स्तनाभ्यां क्षीरं स्रवन्ती तन्मारणार्थमेवागमदित्यागमः । निष्कारणवधोद्यतस्य वधे कथमधर्मः स्यादिति ॥ ३६ ॥

**अभनक् तरू कथमिवैष कृतधरणिरिङ्गणः क्षणात् ।**
**बाढमिदमपि न बालकृतं ननु देवताविधिरयं विजृम्भते ॥ ३७ ॥**

कृतधरणिरिङ्गणो विहितोर्वीगतिः स कथमिव केन प्रकारेणैष क्षणेनैव तरू अर्जुनाख्यौ बाढं भृशमभनक् बभञ्ज, न सम्भावयाम एतदित्यर्थः । ननु

सर्वत्रैव तेनैव भग्नाविति प्रतीतिस्तत् कथं भवतो न संभावनेत्याह—इदमपि न बालकृतं न शिशुकर्म । ननु देवताविधिरयं विजृम्भते विलसति, केनाप्यदृष्टेन देवैनैतत्कृतं न त्वेतेन । यस्य हि गमनमात्रे न शक्तिः स कथममानुषं कर्म कुर्यादिति भावः । ननुरमर्षे । न केवलं शकटभङ्गो देवताविधिर्यावदयमपीत्यपिशब्दार्थः, इति निन्दा ॥ स्तुतिस्तु—यदेष कृतधरणिरिङ्गणः कथमिवावस्त्विव क्षणादर्जुनौ बभञ्ज, इदमपि न बालकृतं नत्वयं देवताविधिर्विजृम्भते, एतस्य देवरूपत्वात् । देवत्वमाश्रित्येतदेतेन कृतं ननु तत्त्वतो बालेनेत्यर्थः । ननुराभिमुख्ये । अभनगिति भन्जेः रूपं लङ् ॥ ३७ ॥

**विहरन् वने विजन एव महति दधदेष गोपताम् ।**
**नाम जगति मधुसूदन इत्यगमद्धतेन मधुना महीयसा ॥ ३८ ॥**

एष विजने वनेऽरण्ये गोपरूपो विहरन् बृहता मधुना माक्षिकपटलेन मधुसूदन इति नामागमत् संज्ञां प्राप्तवान् नतु दैत्यवधादिति निन्दा । स्तुतिस्तु—एष महीयसा तेजस्विना मधुना दैत्येन हतेन मधुसूदन इति नाम प्राप्तवान् । मधुं सूदितवानिति नन्द्यादित्वात् ल्युः । कीदृगेष वने तोये महति सर्वव्यापिनि विगतजन एव विहरन्, तथा गां पृथ्वीं पातीति गोपस्तद्भावं बिभ्रत् ॥ ३८ ॥

**अविमृश्य गोवधसमुत्थमयमघममीमरद्रुषा ।**
**रिष्टमुपगु समुपोढमदं यदसौ किलासुर इति प्रमार्ष्टि यत् ॥ ३९ ॥**

अयं गोवधसमुत्थं दान्तमारणोद्भवमघं पापमविमृश्यागणयित्वा यद्रुषा कोपेन रिष्टमनुड्वाहममीमरदवधीत् तदकार्यमसौ पापी असुर इति किल प्रमार्ष्टि नाशयति, दान्तरूपी असुरो मया हतो नतु गौरिति लोकस्य परिशुद्ध्यति । किलालीके । तत्त्वतस्त्वसौ गौरेव, अयं च गोघातीत्यर्थः । कीदृशं रिष्टमुपगु गवां समीपे समुपोढमदं धृतहर्षं सुरभीः काम[1]यमानमित्यर्थः । अतश्च सुरतासक्तदान्तवधपातकित्वान्नायं पूजार्ह इति निन्दा ॥ स्तुतिस्तु—किलशब्दस्य सत्यार्थत्वात् यदसौ उपगु गोनिकटे रिष्टमतृणेट् तदसौ किलासुर इति प्रमार्ष्टि, असुर एवानेन हत इत्यर्थः । कीदृशं तम् अविमृश्यश्चिन्तयितुमशक्यो यो गोवधस्तत्र समुत्था उत्थानमुद्यमो यस्य तमविमृश्यगोवधसमुत्थम्, यतोऽघं पा-

1 'कामयानं' ग. पाठः ।

पिनं, अघमस्यास्तीति कृत्वा । तथा समुपोढमदं धृतदर्पम्, अतश्च गोवधसमर्थस्य दर्पिष्ठस्य पापमतेर्दानवस्य वधाद्भगवतो महती नुतिरेव । अविमृश्येति ल्यप् "ऋदुपधादि"ति च यत् । अमीमरदिति मारयतेर्लुङ् चङ् । प्रमार्ष्टीति "मृजेर्वृद्धिः" ॥ ३९ ॥

**मुखकन्दरान्तरगतोऽपि विकटदशनेन केशिना ।**
**नास्य सपदि यदखादि भुजस्तदहो तिरश्चि सहजैव मूढता ॥ ४० ॥**

अस्य केशिनाम्नाश्वेन यद्भुजो नाखादि जग्धस्तदहो तिरश्चि तिर्यञ्चु सहजैव स्वाभाविक्येव मूढताज्ञत्वम् । तिर्यक्त्वान्मूर्खेन तेन न भक्षितो नत्वस्य काचिच्छक्तिरिति वाक्यार्थः । कदाचिदप्राप्तोऽसौ भवेत् नेत्याह—आस्यदरीविवरप्राप्तोऽपि । कदाचिद् दन्ताभावः स्यादित्याह--विकटदशनेन दन्तुरेणापि, सपदि आस्यप्राप्तिसमनन्तरम् । अहो विषादे । इति निन्दा ॥ स्तुतिरत्र परमतमाशङ्क्य काकुप्रयोगेण—यदस्य केशिना दैत्येन भुजो नाखादि, तत् किं तिरश्चि सहजैव मूढता, नत्वस्य माहात्म्यमित्यर्थः । एतस्यैव ह्येवमसौ शक्तिः, न स तात्त्विकोऽश्वः । अहोशब्दः परस्योल्लुण्ठनायाम् । तिरश्चीति सप्तमी ॥ ४० ॥

**यदुदस्य बाहुमयमेकमभृत गिरिमद्भुतं न तत् ।**
**भूरिसलिलमविषह्यमियं जलदे विमुञ्चति गवां सभाग्यता ॥ ४१ ॥**

मेघे दुःसहं प्रभूतं वारि वर्षति, यदयं हरिरेकं भुजमुत्क्षिप्य गिरिं गोवर्धनमभृत दध्रे तन्नाद्भुतं नाश्चर्यम्, यत इयं गवां सभाग्यता पुण्यवत्त्वम् । गवां महिम्नासौ धृतो नत्वेतस्य काचिच्छक्तिरित्यर्थः, इति निन्दा । स्तुतिस्तु परमतमाशङ्क्य काकुप्रयोगेण—न तदद्भुतमपित्वाश्चर्यमेव । तथेयं गवां सभाग्यता, नत्वस्य सामर्थ्यमयमेव स्वमहिम्ना बभारेत्यर्थः ॥ ४१ ॥

**किमिवात्र चित्रमयमन्नमचलमहकल्पितं यदि ।**
**प्राश निखिलमखिलेऽपि जगत्युदरं गते बहुभुजोऽस्य न व्यथा ॥४२॥**

अयं हरिरचलमहकल्पितं पर्वतोत्सवकृतमन्नं यदि प्राश भुक्तवान् तत्किमिवात्र चित्रमाश्चर्यम्, यतोऽस्य बहुभुज औदरिकस्य सकलेऽपि जगत्युदरं प्राप्ते न व्यथा पीडा जीर्णम् अतश्च यः कुक्षिम्भरित्वात् सर्वमेव जिघत्सति तस्यौदनमात्रभोजनात् को विस्मय इत्यात्मम्भरित्वकथनेन निन्दा ॥ स्तुतिस्तु—

अस्याम्नादनात् को विस्मयो यतोऽस्य जगन्निवासस्य सर्वेषु जगत्सूदरास्थितेषु न व्यथा । बहु भुनक्तीति बहुभुक्, निखिलभुवनपालकः । यदि वा बहवो भुजा यस्य स बहुभुजोऽयम् । पूर्वत्र तु बहु भुङ्क्त इति बहुभुक् । प्राशेत्यश्नातेर्लिद् ॥ ४२ ॥

**अमुना करेण पृथुदन्तमुसलमुदपाटि दन्तिनः ।**
**तेन यदवधि स एव पुनर्बलशालिनां क इव तत्र विस्मयः ॥ ४३ ॥**

अमुना हरिणा दन्तिनः कुवलयापीडस्य यत् पृथुदन्तमुसलं करेणोदपाटि उत्खातं तेनोत्खातेन योऽसौ हस्ती अवधि हतस्तत्र बलशालिनां क इव विस्मयः, न युक्तस्तत्र विस्मयः । मर्महननाद्धि शिशुरपि मारयतीति निन्दा ॥ स्तुतिस्तु—काक्वा गम्यते, को विस्मयो विस्मय एवेत्यर्थः । मत्तहस्तिनो हन्तुमशक्यत्वादिति भावः । यदुक्तम्-"एकः क्रुद्धो गजो हन्ति षट् सहस्राणि वाजिना" मिति । अवधीति कर्मणि लकारः, च्लेश्चङ्, अकारलोपः ॥ ४३ ॥

**शिशुरेव शिक्षितनियुद्धकरणमकृतक्रियः स्वयम् ।**
**मल्लमलघुकठिनांसतटं न्यवधीद्यदेष तदहष्टकारितम् ॥ ४४ ॥**

एष हरिः शिशुरेव बालः सन् यन्मल्लं चाणूराख्यं न्यवधीज्जघान तददृष्टकारितं दैवविहितम्, विधिवशाद्धबलोऽपि बलीयांसमभिभवति । तदेव बलवत्त्वमाह–कीदृशं मल्लं शिक्षितानि नियुद्धकरणानि बाहुयुद्धक्रिया येन तं शिक्षितनियुद्धकरणं युद्धक्षम्, तथालघु पीनं कठिनमंसतटं यस्य तम् । एष तु स्वयमकृतक्रियोऽशिक्षितकरणः, यतः शिशुरिति निन्दा ॥ स्तुतिस्तु पूर्ववत्काक्वा—तत्किमदृष्टकारितं, नैव तद् दैवविजृम्भितम् अपित्वेतस्यैवायं महिमेत्यर्थः ॥४४॥

**यदयुध्यमानमपि सन्तमुपहितसुरौघसाध्वसम् ।**
**कंसमभियमयमभ्यभवत् समुदा जनेन तदपि प्रशंस्यते ॥ ४५ ॥**

यच्चैषोऽयुध्यमानं कंसं स्वजनमभ्यभवदाचकर्ष तदपि समुदा हृष्टेन जनेन प्रशंस्यते नैवाभिनन्द्यते इति काकुप्रयोगः । निष्क्रियस्य हि वधे का नाम स्तुतिः । कीदृशं तं जनितदेवपूगकम्पं, तथाभियं त्रासरहितं वीरमित्यर्थः, इति निन्दा ॥ स्तुतिस्तु–अयुध्यमानमपि सन्तं कंसं यदयमभ्यभवत्तदपि संतोषवता जनेन प्रशंस्यते स्तूयत एव, यत उपहितसुरौघसाध्वसं सदर्पं च । कण्ठकोद्धरणेन चावश्यं प्रहृष्टो जनः प्रशंसां करोति ॥ ४५ ॥

**इति निन्दितुं कृतधियापि वचनममुना यदाददे ।**
**स्तोतुमनिशमुचितस्य परैः स्तुतिरेव सा मधुनिघातिनोऽभवत् ॥४६॥**

इत्युक्तेन प्रकारेणामुना चैद्येन यद्वच आददेऽभ्यधायि सा भगवतो मधुरिपोर्नुतिरेवाभवत् । कदाचित्तुष्टूषुरसौ स्यादित्याह–निन्दितुं कृतधियापीति । किंविधस्य हरेः परैः शत्रुभिरपि स्तोतुमजस्रं योग्यस्य, अत एव स्तुतिरभवत् । एतेन पूर्वेषां वाक्यानामुभयार्थता ख्याता । यथा चैतत्तथा लाघवेन व्याख्यातमेव । आददे इत्यस्यास्यविहरणस्याभावात् परस्मैपदाभावः । प्रतीयते ह्यत्र तत् नतु शब्दोपात्तम्, यथा आस्यं व्याददातीति । मधुनिघातीति "आवश्यके णिनिः" । "कर्मणि हनः" इत्यत्र तु कुत्सायाम् ॥ ४६ ॥

**यदुवाच दुष्टमतिरेष परिविवदिषुर्मुरद्विषम् ।**
**अर्थमपि सदसि चेदिपतेस्तदतोऽपराधगणनामगाद्वचः ॥ ४७ ॥**

एष सभायां यद्वचोऽवोचत् तदुभयार्थं स्तुतिनिन्दावाचकमप्यतो हेतोरपराधगणनामगात् अपराधमध्ये गणितम्, यतो दुष्टबुद्धित्वान्मुरारिं परिविवदिषुर्निनिन्दिषुः, तेन हि तद्वच आक्रोशतोक्तम् । यत्तु तस्य स्तोत्ररूपता सा काकतालीयेन भगवतो वा माहात्म्यं, नैतावतासौ प्रियंवद इत्यपराधगणनामेवाययौ । तेन हि तस्यागःशतं सोढव्यं । तद्वचो अर्थमप्यतोऽपराधगणनामगात् यस्मादेष दुष्टमतिः सन् देवं परिविवदिषुराह, इत्येवं वा योज्यम् । मुरं द्वेष्टीति मुरद्विषम् ॥ ४७ ॥

**कटुनापि चैद्यवचनेन विकृतिमगमन्न माधवः ।**
**सत्यनियतवचसं वचसः सुजनं जनाश्चलयितुं क ईशते ॥ ४८ ॥**

हरिश्चैद्यवचसा रूक्षेणापि विकारं न ययौ न चुकोप, यतो यः साधुस्तं के जना वचसो वचनाच्चलयितुं निवर्तयितुमीशते शक्नुवन्ति । यतः सत्येन नियतं बद्धं वचो यस्य तं सत्यनियतवचसमङ्गीकृतवस्तुनिर्वहणपाशनियतमित्यर्थः । स चैवमुक्तवान् "सहिष्ये शतमागांसी" ति ॥ ४८ ॥

**न च तं तदेति शपमानमपि यदुनृपाः प्रचुक्रुधुः ।**
**शौरिसमयनिगृहीतधियः प्रभुचित्तमेव हि जनोऽनुवर्तते ॥ ४९ ॥**

न केवलं भगवान्न चुक्रोध, यावदन्येऽपि तत्पक्ष्या नृपास्तस्मै चैद्यायेत्थं शपमानाय न रुरुषुः, यतो हरिवचनसंदानितमतयः । अत्रैवार्थान्तरन्यासः—प्रभुचित्तमेव हि जनोऽनुवर्तते । शपमानमिति स्वरितेत्त्वाच्छानच्, ताच्छील्ये वा चानश् । तामिति "क्रुधद्रुहोरुपसृष्टयोः कर्म" ॥ ४९ ॥

**विहितागसो मुहुरलङ्घ्यनिजवचनदामसंयतः ।**
**तस्य कतिथ इति तत्प्रथमं मनसा समाख्यदपराधमच्युतः ॥ ५० ॥**

तस्य शिशुपालस्य मुहुर्मुहुः कृतापराधस्यापि भगवान् तत्प्रथमं कतिथः कियत्संख्योऽस्यैषोऽपराध इति मनसा केवलं समाख्यत् संख्यातवानजीगणत्, यतोऽनुष्ठेयस्वसमयपाशग्रथितः । अपराधं कतिथ इति पूर्ववत्प्रयोगः । का संख्या परिमाणमेषाम् "किमः संख्यापरिमाणे । डति च" । कतीनां पूरणः कतिथः "षट्कतिकतिपयचतुरां थुक्" । समाख्यदिति "अस्यतिवक्तिख्यातिभ्योऽङ्" ॥ ५० ॥

**स्मृतिवर्त्म तस्य न समस्तमपकृतमियाय विद्विषः ।**
**स्मर्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः ॥ ५१ ॥**

अथ तस्य देवस्य संख्यातं विद्विषश्चैद्यस्य सम्बन्धि अपकृतमागः समग्रं स्मृतिवर्त्म मनोमार्गं नेयाय, कियत्संख्योऽस्यायमपराध इति न सस्मारेत्यर्थः । यतो ये उत्तमाः महान्तस्ते दोषमखिलं स्मर्तुं न पटवो न शक्ताः, यतोऽधिगतगुणस्मरणा ज्ञातगुणस्मृतयः, अतश्च गुणान् ये स्मर्तुं जानते ते कथं दोषान् स्मरेयुः । स्मर्तुमिति "पर्याप्तिवचनेषु" इति तुमुन् ॥ ५१ ॥

**नृपतावधिक्षिपति शौरिमथ सुरसरित्सुतो वचः ।**
**स्माह चलयति भुवं मरुति क्षुभितस्य नादमनुकुर्वदम्बुधेः ॥ ५२ ॥**

नृपतौ चैद्ये भगवन्तमधिक्षिपत्याक्रोशति सति, अथानन्तरं गाङ्गेयो भीष्मो वच[1] आह सोवाच । कीदृशं वाते भूमिं कम्पयति सति क्षुभितस्याब्धेर्ध्वनिमनुकुर्वत् । कल्पापाये उच्छृङ्खलप्रभञ्जनप्रकम्पितक्षोणीवशकल्लोलितमहोदधिजलरवधीरमित्यर्थः ॥ ५२ ॥

किमाह स्मेत्याह—

---

१ 'चनं' ग. पाठः ।

**विहितं मयाद्य सदसीदमपमृषितमच्युतार्चनम् ।**
**यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्वभूभृताम् ॥ ५३ ॥**

मयेदमद्य भगवदर्चनं कृतं, सदस्यस्यां सभायामपमृषितमक्षान्तमनभिमतं यस्य, यो न सहते स चापं नमयतु धनुः सज्यं करोतु, अयं पादः सर्वेषां राज्ञां मूर्धनि कृतः, तस्माद्यस्य शक्तिरस्ति स युध्यतामित्यर्थः । सर्वे चात्र राजानः परकीया विवक्षिताः ॥ ५३ ॥

**इति भीष्मभाषितवचोऽर्थमधिगतवतामिव क्षणात् ।**
**क्षोभमगमदतिमात्रमथो शिशुपालपक्ष्यपृथिवीभृतां गणः ॥ ५४ ॥**

अथ चैद्यवर्ग्याणां राज्ञां समूहो नितरां क्षणादेवेति वक्ष्यमाणेन प्रकारेण क्षोभमगमदाकुलीबभूव चुकोप । उत्प्रेक्ष्यते–भीष्मेण भाषितमुक्तं यद्वचनं 'अयं चरणः कृतः' इति तस्य योऽर्थोऽभिधेयः शिरसि चरणकरणलक्षणस्तमधिगतवतामिव प्राप्तवतां यथा मूर्धनि पादं कृतमेव जानतामित्यर्थः । पक्षे भवाः पक्ष्याः "दिगादिभ्यो यत्" ॥ ५४ ॥

तमेव क्षोभमाह—

**शितितारकानुमितताम्रनयनमरुणीकृतं क्रुधा ।**
**बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्यमण्डलम् ॥ ५५ ॥**

बाणासुरस्य मुखमुददीपि दीप्रमभूद् दुर्निरीक्ष्यं जातं जगतो भिये उपद्रवाय । कीदृशं शितिभ्यां कृष्णाभ्यां तारकाभ्यां कनीनिकाभ्यामनुमिते ऊहिते ताम्रे नयने यस्य, यतः क्रोधेनारुणीकृतं रक्तमतश्च शावल्यादभेदे च सत्यनुमानम् । किमिवोददीपीत्याह–सूर्यमण्डलं रविबिम्बं सकीलमिव । मण्डलान्तरे कृष्ण औत्पातिको जगद्भयकारी ग्रहः कीलकः, तारकयोः स उपमानम् ॥ ५५ ॥

**अनिशान्तवैरदहनेन विरहितवतान्तरार्द्रताम् ।**
**कोपमरुदभिहतेन भृशं नरकात्मजेन तरुणेव जज्वले ॥ ५६ ॥**

नरकासुरतनयेन हयग्रीवेण जज्वले दीप्तं, यतोऽप्रशान्तवैराग्निना । पितृवधात् किलासौ हरेर्वैरी । अत एव चान्तश्चेतस्यार्द्रतां स्नेहं विरहितवता त्यक्तवता, तथा कोप एव मरुद्वातस्तेनाभिहतेन चोदितेनात एव जज्वले तरुणेव ।

यः किल तरुः शमीवृक्षः सोऽप्रशान्ताग्नित्वाच्छुष्कत्वाच्च मरुद्ध्मातः शीघ्रमेव ज्वलति ॥ ५६ ॥

**अभिधित्सतः किमपि राहुवदनविकृतं व्यभाव्यत ।**
**ग्रस्तशशधरमिवोपलसत्सितदन्तपङ्क्ति मुखमुत्तमौजसः ॥ ५७ ॥**

उत्तमौजसः पाञ्चालस्य मुखं राहुमुखमिव विकृतं भयानकं विभाव्यतालक्ष्यत, यतः किमप्यवाच्यं विवक्षतः, अत एवोद्द्योतमानधवलदशनावलि, अतश्च ग्रस्तशशधरमिव निगीर्णचन्द्रमिव । अतश्च स्वर्भानुवदनसाम्यं दन्तपङ्क्तेः शश्युपमानम्, ग्रस्तचन्द्रो राहुरिव तन्मुखमित्यर्थः ॥ ५७ ॥

**प्रविदारितारुणतरोग्रनयनकुसुमोज्ज्वलः स्फुरन् ।**
**प्रातरहिमकरताम्ररुचि[1]र्विषविद्रुमोऽपरइवाभवद् द्रुमः ॥ ५८ ॥**

द्रुमो द्रुमनामकः कश्चिच्चैद्यपक्ष्योऽपरो द्वितीयो विषविद्रुमो विषवृक्ष इवाभवत्, यतः प्रविदारिते विस्फारिते अरुणतरे कोपातिरक्ते अत एवोग्रे भीषणे नयने एव कुसुमे पुष्पे ताभ्यामुज्ज्वलो दीप्तः । यदि वा कर्मधारयः । तथा स्फुरन् उल्लसन् प्रातः प्रगे योऽहिमकरश्चण्डांशुस्तस्येव ताम्रा तनुर्यस्य । विषविद्रुमोऽपि स्फुरता प्रातस्त्येन रविणा ताम्रतनुर्भवति स्वभावाद्वा, अत एवारुणकुसुमः । दृष्ट्या विषवृक्ष इव लोकं संमूर्छयति स्मेति वाक्यार्थः ॥ ५८ ॥

**कुपिताकृतिं प्रथममेव हसितमशनैरसूचयत् ।**
**क्रुद्धमशनिदलिताद्रितटध्वनि दन्तवक्रमरिचक्रभीषणम् ॥ ५९ ॥**

दन्तवक्राख्यं नृपमशनैर्वेगेन हसितं कर्तृ क्रुद्धमसूचयदकथयत् । किंभूतं प्रथममादावेव कुपितस्येवाकृतिः संस्थानं यस्य तं कुपिताकृतिं, प्रसन्नोऽपि रूपेण यः क्रुद्ध इवेत्यर्थः । अतश्च वक्रदन्तत्वाद् दन्तवक्र इति नाम । अतश्चाट्टहासेन क्रुद्ध इति सूचितः । कीदृशं हसितम् अशनिना वज्रेण दलितस्य चूर्णितस्याद्रितटस्येव ध्वनिः शब्दो यस्य । यतोऽशनैरत एवारिचक्रभीषणं रिपुवलभयङ्करम् । भीषयतीति भीषणं, ल्युः ॥ ५९ ॥

**प्रतिघः कुतोऽपि समुपेत्य नरपतिगणं समाश्रयत् ।**
**जामिहरणजनितोऽनुशयः समुदाचचार निज एव रुक्मिणः ॥ ६० ॥**

---

[1] 'तनुः' क. पाठः ।

नरपतिगणं राजकं कुतोऽपि विना कारणमेवागत्य प्रतिघः क्रोधः समाश्रयत् भेजे, निर्निमित्तमेव राजानो हरौ क्रुद्धा इत्यर्थः । रुक्मिणः पुनर्नित्य आत्मीय एवानुशयः क्रोधो वैरं समुदाचचाराविर्बभूव । तदेव निजत्वमाह—जामिहरणजनितो भगिनीहठहृतिकृतोऽनुशयः पश्चात्तापो निजः । तस्य हि स्वसा रुक्मिणी चैद्याय दत्ता पूर्वं हरिणा बलेन हृता, अतः कारणसद्भावात्तस्य क्रोधो युक्तः, अन्ये तु नृपा मौर्ख्यादेव क्रुद्धा इति वाक्यार्थः। अनुशयनमनुशयोऽमर्षः क्रोधः । प्रतिहन्तीति प्रतिघः क्रोधः, पृषोदरादिः ॥ ६० ॥

**चरणेन हन्ति सुबलः स्म शिथिलितमहीध्रबन्धनाम् ।**
**तीरतरलजलराशिजलामवभुग्नभोगिफणमण्डलां भुवम् ॥ ६१ ॥**

सुबलो गान्धारराजः पादेनोर्वीं जघान । कीदृशीं शिथिलिताश्चालिता महीधरा एव बन्धनानि यस्याः, तथा तीरेषु पुलिनेषु तरलं कम्प्रं जलराशेर्जलं यस्याः, अवभुग्नं कुटिलं भोगिनोऽनन्तस्य फणमण्डलं शिरश्चक्रवालं यस्याः ॥ ६१ ॥

**रुषितेषु राजसु तथापि रथचरणपाणिपूजया ।**
**चित्तकलितकलहागमनो मुदमाहृवृतिः सुहृदिवाधिकां दधौ ॥६२॥**

तथा तेन प्रकारेण पूर्वोक्तेन चक्रपाण्यर्चया क्रुद्धेष्वपि राजसु आहृवृतिर्भीष्मकः सुहृदिव मुदं दधौ मित्रमिव तुतोष, अमित्रोऽपि सखा यथा भगवत्पूजया मुमुदे इत्यर्थः । यतश्चेतसा कलितं कलहागमनं युद्धागतिर्येन, निश्चितरणसमय इत्यर्थः । शूरो[1] हि युद्धे उपस्थिते हृष्यति[2] ॥ ६२ ॥

**गुरुकोपरुद्धपदमापदसितयवनस्य रौद्रताम् ।**
**व्यात्तमशितुमिव सर्वजगद् विकरालमास्यकुहरं विवक्षतः ॥ ६३ ॥**

कालयवनस्य विवक्षतो वक्तुकामस्य वक्त्रविवरं रौद्रतामापद्भीषणमभूत् । कीदृशं गुरुणा कोपेन रुद्धपदं निवृत्तवाक्यम् । अतिरोषवशाद्धि वाक् प्रतिहतप्रसरा भवति । विकरालं भास्वरम्, व्यात्तं विकसितमभिधित्सया विस्तारितम् । उत्प्रेक्ष्यते—त्रिभुवनं ग्रसितुमिव, अत एव रौद्रत्वम् । व्याङ्पूर्वस्य दाञो व्यात्तशब्दः । आपदिति लुङ् ॥ ६३ ॥

---

१ 'राः' ग. पाठः । २ 'न्ति' ग. पाठः ।

**विवृढोरुबाहुपरिघेन सरभसपदं निपित्सता ।**

**हन्तुमखिलनृपतीन् वसुना वसनेऽवलम्बिनि निजे विचस्खले ॥६४॥**

वसुना वसुनाम्ना नृपेणात्मीय एवांशुके लम्बमाने विचस्खले विस्खलितम् । कीदृशेन विवृढ उद्यत उत्क्षिप्तो बाहुरेव परिघ आयुधविशेषो येन, तथाखिलनृपतीन् पेष्टुं त्वरितक्रमं निपित्सता निर्गन्तुकामेन, बाहुमुद्यम्य राजन्यकानि हन्तुं तूर्णं धावतेत्यर्थः । अतश्च त्वरावशाल्लम्बमाने स्ववासस्यसौ चस्खाल । विवृढ उद्यतः । पाठान्तरे विवृतमुत्क्षिप्तमेव वा । परिहन्यतेऽनेनेति परिघः । "परौ घ" इति को घश्च ॥ ६४ ॥

**इति तत्तदा विकृतरूपमभजदविभिन्नचेतसम् ।**

**मारबलमिव भयङ्करतां हरिबोधिसत्त्वमभि राजमण्डलम् ॥ ६५ ॥**

तद्राजन्यकमितीत्थं तदा भयानकतां भेजे शिश्राय । कीदृशं हरिरेव बोधिसत्त्वो बुद्धभट्टारकस्तमभि तं प्रति विकृतरूपं विकारावस्थामापन्नं क्रुद्धमित्यर्थः । हरिं कीदृशमविभिन्नचेतसमविकृतचित्तमक्षुभ्यन्तम् । किमिव रौद्ररूपतामभजदित्याह–मारबलमिव, यथा पूर्वं बोधिसत्त्वं प्रति मारबलं कामसैन्यं विकृतरूपं नानारूपं भयङ्करतां समाधिविरुद्धत्वं भेजे । बुद्धस्तु तथाप्यविभिन्नचेता इव । उक्तं च—"कामेनाकृष्य चापं पटुपटहरवावल्गिभिर्मारवीरैर्भ्रूभङ्गोत्कम्पजृम्भास्मितललितकृता दिव्यनारीजनेन । सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन ध्यायन् बोधेरवाप्तावचालित इति वः पातु दृष्टो मुनीन्द्रः" इति ॥ ६५ ॥

**रभसादुदस्थुरथ युद्धमनुचितभियोऽभिलाषुकाः ।**

**सान्द्रमुकुटकिरणोच्छलितस्फटिकांशवः सपदि मेदिनीभृतः ॥६६॥**

अथानन्तरं सदसि चैद्यपदया नृपाः रभसात् क्षोभादुदस्थुरुत्थिताः, यतो युद्धमभिलाषुका युयुत्सवः, अनुचितभियोऽनभ्यस्तत्रासाः, सान्द्रेषु घनेषु मुकुटाकिरणेषु उच्छलिता बहलीभूताः प्रणामवशात् स्फटिकांशवो येषाम् । सभा हि क्वचिद्धवलाश्ममयी । अभिलषणशीला अभिलाषुकाः– "लषपते" त्युकञ् । "न लोकाव्ययनिष्ठे" ति षष्ठीनिषेधः ॥ ६६ ॥

**स्फुरमाणनेत्रकुसुमोष्ठदलमभृत भूभृदङ्घ्रिपैः ।**

**धूतपृथुभुजलतं चलितैर्द्रुतवातवानवनविभ्रमं सदः ॥ ६७ ॥**

तत्सदः सा सभा द्रुतवातवानवनविभ्रममभृत आप, द्रुतं तूर्णं वातस्य वायोर्वानं वहनं यत्र तद् द्रुतवातवानं यद्वनं काननं तस्य यो विभ्रमो लीला सारूप्यं तदभृतोवाह, वातकम्पितवननिभमभूदित्यर्थः । केन भूभृतो राजान एवाङ्घ्रिपा वृक्षास्तैश्चलितैरुत्थितैः । कीदृक् सदः नेत्राण्येव कुसुमानि ओष्ठानि दलानि किसलयानि तानि स्फुरमाणानि कम्प्राणि यत्र, तथा धूताः पृथवो भुजा एव लता यत्र, वनमपि वाते वाति कम्पमानपुष्पपत्रलतापादपं भवति । स्फुरणशीलानि स्फुरमाणानि "ताच्छील्यवयोवचनशक्तिषु चानश्" ॥ ६७ ॥

**हरिमप्यमंसत तृणाय कुरुपतिमजीगणन्न वा ।**
**मानतुलितभुवनत्रितयाः सरितः सुताद्बिभयुर्न भूभुजः ॥ ६८॥**

ते चैद्यनृपा हरिमपि तृणममंसत तृणतुल्यं बुबुधिरे, तथा कुरुपतिं युधिष्ठिरं नैवाजीगणन् मनसि चक्रुः, पाण्डवबलमपि तेषां न पुस्फोरेत्यर्थः । तथा सरितः सुताद्भीष्मात् नाबिभयुस्त्रेसुः । यतो मानेनाहङ्कारेण तुलितं परिच्छिन्नं भुवनत्रितयं यैः । अमंसतेति मनेर्लुङ् । तृणायेति "मन्यकर्मण्यनादरे" इति चतुर्थी । अजीगणन्निति लुङ् "ई च गणः" । अबिभयुरिति बिभेतेर्लङ् "सिजभ्यस्तविदिभ्यश्चे" ति झेर्जुस् ॥ ६८ ॥

**गुरु निःश्वसन्नथ विलोलसदवथुवपुर्वचोविषम् ।**
**कीर्णदशनकिरणाग्निकणः फणवानिवेति विससर्ज चेदिपः ॥ ६९ ॥**

अथानन्तरं चैद्य इतीत्थं वचनमेव विषं सर्प इव विससर्जोदवमत् । कीदृशः गुरु दीर्घं निःश्वसन्निःश्वासान् मुञ्चन्, तथा विलोलं कम्प्रं सदवथु सोष्म वपुर्यस्य स विलोलसदवथुवपुः, तथा कीर्णा विक्षिप्ता दशनकिरणा एव वह्निविस्फुलिङ्गा येन । सर्पोऽपि विषमुद्वमन्नेवंविध एव भवति । दवनं दवथुरुपतापः "ट्वितोऽथुच्" ॥ ६९ ॥

किमाहेत्याह—

**किमहो नृपाः सममर्मीभिरुपपतिसुतैर्न पञ्चभिः ।**
**वध्यमभिहथ भुजिष्यममुं सह चानया स्थविरराजकन्यया ॥ ७० ॥**

अहो अमर्षे । अहो नृपा इमं भुजिष्यं दासं किं कस्मात् नाभिहथ मारयध्वे, यतो वध्यं वधार्हम् । इममिति हरेः प्रत्यक्षनिर्देशः । किं केवलं नेत्याह–

अमीभिरुपपतिसुतैर्जारजातैः पाण्डवैः सह, तथानया स्थविरराजकन्यया वृद्धराजकुमार्या सह, क्लीवेन भीष्मेण साकमित्यर्थः । स हि वृद्धो ब्रह्मचारी च । कन्यात्वेनात्र क्लीवत्वं विवक्षितम् । अभिहथेति लट् ॥ ७० ॥

**विदतुर्यमुत्तममशेषपरिषदि नदीजधर्मजौ ।**
**यातु निकषमधियुद्धमसौ वचनेन किं भवति साध्वसाधु वा ॥७१॥**

अशेषपरिषदि सर्वस्यां सभायां नदीजधर्मजौ गाङ्गेययुधिष्ठिरौ यमुत्तमं श्रेष्ठं विदतुर्जानीतः सोऽयं हरिरधियुद्धं युद्धे निकषं परीक्षां यातु, एतद्वचनमात्रेण किं साधु श्रेष्ठमसाध्वशोभनं वा भवति । यद्यसावुत्तमस्तत्समरे उत्तमत्वं दर्शयतु, नहि वाङ्मात्रेणोत्तमत्वं प्राप्यते । निकष्यतेऽस्मिन्निति निकषः परीक्षास्थानम्, अत्र तु परीक्षैव विवक्षिता । यो हि परीक्ष्यते स तत्स्थाने भवत्येव । विदतुरिति "विदो लटो वा" ॥ ७१ ॥

**अचिरान्मया सह गतस्य समरमुरगारिलक्ष्मणः ।**
**तीक्ष्णविशिखमुखपीतमसृक् पततां गणैः पिबतु साकमुर्वरा ॥७२॥**

किं बहुना गरुडध्वजस्य मया सह रणं प्राप्तस्य युध्यमानस्याचिरात् पक्षिवृन्दैः साकमुर्वरा भूमिर्निशितसायकाग्रपीतं रुधिरं पिबतु, मया हतमेवेनं भवन्तः पश्यन्त्वित्यर्थः । उर्वरा उर्वी ॥ ७२ ॥

**अभिधाय रूक्षमिति मा स्म गम इति पृथासुतेरिताम् ।**
**वाचमनुनयपरां स ततः सहसावगण्य निरियाय संसदः ॥ ७३ ॥**

स चैद्य इति परुषमुक्त्वा, ततोऽनन्तरं सभायाः सहसा निरियाय निर्ययौ । किं कृत्वा, मा तावत्त्वं यासीरित्येवंविधामनुनयपरां वाचं युधिष्ठिरेणोक्तामवज्ञाय । मा स्म गम इति "माङि लुङ् । स्मोत्तरे लङ् च" ॥ ७३ ॥

ननु पाण्डवानामपि तेनाक्रुष्टं तत्कथं पार्थः सान्त्वमब्रवीदित्याह—

**गृहमागताय कृपया च कथमपि निसर्गदक्षिणाः ।**
**क्षान्तिमहितमनसो जननीस्वसुरात्मजाय चुकुपुर्न पाण्डवाः ॥७४॥**

पाण्डवा जननीस्वसुरात्मजाय मातृष्वस्रीयाय चैद्याय कथमपि न चुक्रुधुः, सत्यपि कोपकारणे कथं कथमपि न क्रुद्धाः । यतो गृहमागतो जननीस्वसुश्च

सुतः, ते च कृपा¹लवः स्वभावप्रियंवदाश्च क्षमाधिष्ठितचित्ताश्चेति कारणपञ्चकसद्भावः । महितं पूजितम् । जननीस्वसुरात्मजायेति समासपक्षे ततो "विद्यायोनी" त्यलुक् । आत्मजायेति "क्रुधद्रुहे" ति संप्रदानत्वम् । शूरस्य द्वे दुहितरौ सात्त्वती कुन्ती च ॥ ७४ ॥

**चलितं ततोऽनभिहतेच्छमवनिपतियज्ञभूमितः ।**
**तूर्णमथ ययुमिवानुययुर्दमघोषसूनुमवनीशसूनवः ॥ ७५ ॥**

अथानन्तरं चैद्यं राजपुत्रा द्रुतमनुययुः पश्चाज्जग्मुः । कीदृशं तं तस्माद्राजमखस्थानाच्चलितं निर्गतम्, यतोऽनभिहतेच्छमचालितग्रहम् । कमिवानुययुरित्याह–ययुमिवेति, यथा यज्ञभूमितश्चलितमश्वं राजपुत्रा अनुयान्ति । अश्वमेधे हि चिकीर्षितेऽश्व आदौ भ्राम्यते ॥ ७५ ॥

**विशिखान्तराण्यतिपपात सपदि जवनैः स वाजिभिः ।**
**द्रष्टुमलघुरभसापतिता वनिताश्चकार न सकामचेतसः ॥ ७६ ॥**

स चैद्यः प्रजवित्वादश्वानां तत्क्षणादेव विशिखान्तराणि रथ्यान्तराण्यतिपपातातिचक्राम, अतश्च महतौत्सुक्येनेक्षितुमागता योषितः सकामचेतसः समुत्पन्नमनोरथाः स नाकरोत्, त्वरया गमने तद्दर्शनानिष्पत्तेः । अन्या विशिखा विशिखान्तराणि "सुप्सुपे" ति समासः । जवनशब्दे "जुचङ्क्रम्ये" ति युच् ॥ ७६ ॥

**क्षणमीक्षितः पथि जनेन किमिदमिति जल्पता मिथः ।**
**प्राप्य शिविरमविशङ्कमनाः समनीनहद् द्रुतमनीकिनीमसौ ॥७७॥**

अथासौ शिविरं स्कन्दावारनिवेशं प्राप्य निर्भयचित्तः संस्तूर्णमेव सेनां समनीनहत् संनाहयामास । कीदृशः किमेतदिति मिथोऽन्योन्यं जल्पता जनेन क्षणं मार्गे दृष्टः ॥ ७७ ॥

**त्वरमाणशाङ्खिकसवेगवदनपवनाभिपूरितः ।**
**शैलकटकतटभिन्नरवः प्रणनाद सांनहनिकोऽस्य वारिजः ॥ ७८ ॥**

अस्य चैद्यस्य सांनहनिकः संनहनार्थो वारिजः शङ्खः प्रणनाद दध्वान, सैनिकान् संवर्मयितुं शङ्खो ध्मात इत्यर्थः । कीदृक् त्वरमाणेन व्यग्रेण शाङ्खि-

१ 'पयालवः' क. ग. पाठः ।

केन सवेगं बलेन वदनपवनाभिपूरितो मुखश्वासभरितः, अत एव शैलकटकतटेषु भिन्नो द्विधाभूतः प्रतिफलितो रवो यस्य । शङ्खवादनं शिल्पमस्येति शाङ्खिकः "शिल्प" मिति ठक् । संनहनं प्रयोजनमस्येति सांनहनिकः "प्रयोजन"-मिति ठक् ॥ ७८ ॥

**जगदन्तकालसमवेतविषदविषमेरितारवम् ।**
**धीरनिजरवविलीनगुरुप्रतिशब्दमस्य रणतूर्यमावधि ॥ ७९ ॥**

अथास्य रणतूर्यं संग्रामवादित्रमावध्याहतमिति कर्मणि लकारः । कीदृशं जगतोऽन्तकाले समवेता मिलिता ये विषदा जलदास्तैरिव विषमो भीषण ईरितो मुक्त आरवो ध्वनिर्येन, तथा धीरः कालान्तरस्थायी निज आत्मीयो रवस्तत्र विलीनो विशेषेण लीनो लयं गतो गुरुः प्रतिशब्दो यत्र तत् तथोक्तम् । गुरुत्वाद् दिव्वसंभवन्नात्मन्येव यस्य प्रतिरवो लीन इत्यर्थः । विषं तोयम् ॥ ७९ ॥

**सहसा च संभ्रमविलोलसकलजनतासमाकुलम् ।**
**स्थानमगमदथ तत्परितश्चलितोडुमण्डलनभस्तलोपमाम् ॥ ८० ॥**

यत्रासौ स्थितस्तत्स्थानं परितश्चलितमुडुमण्डलं ताराचक्रं यस्य तेन नभस्तलेनोपमां सादृश्यं ययौ, यतः सहसा निःशङ्कं संभ्रमेण क्षोभेण विलोलया चलया सकलया जनतया समाकुलं संकटम् ॥ ८० ॥

**दधतो भयानकतरत्वमुपगतवतः समानताम् ।**
**धूमपटलपिहितस्य गिरेः समवर्मयन् सपदि मेदिनीभृतः ॥ ८१ ॥**

अथ मेदिनीभृतः सपदि शङ्खश्रवणानन्तरं समवर्मयन् संनेहुः, धूमपुञ्जस्थगितस्यात एव भीषणत्वं प्राप्तस्य गिरेः सादृश्यं दधतो वहन्तः । वर्मणां कार्ष्ण्याद् धूम उपमानम् । वर्मणा संनह्यन्ति संवर्मयन्ति "सत्यापपाशे"ति णिच्, टिलोपः ॥ ८१ ॥

**परिमोहिणा परिजनेन कथमपि चिरादुपाहृतम् ।**
**वर्म करतलयुगेन बृहत् तनुचूर्णपेषमपिषद्रुषा परः ॥ ८२ ॥**

अन्यः कश्चिद्भटो बृहदपि वर्म कवचं रोषवशात् पाणिद्वयेन तनुचूर्णपेषमपिषत् पिपेष सूक्ष्मचूर्णरूपं चकारेत्यर्थः । यतः परिमोहिणा व्याकुलेन परिजनेन जयनपातिना कथमपि चिरादानीतम् । मोहश्चिरानयने हेतुः, । तद्रो-

षेण पिपेष । कथमपि क्लेशेनेति दुर्वहत्वेन महत्त्वोक्तिः । तनु च तच्चूर्णमिति कर्मधारयः । तनुचूर्णमिव तनुचूर्णपेषं "उपमाने कर्मणि चे"ति णमुल् । "शुष्कचूर्णरूक्षेषु पिष"इति, अत्र तु तदन्तविधिर्दुर्लभः, नचाप्यर्थसङ्गतिः । अपिषदिति लुङ् ॥ ८२ ॥

**रणसंमदोदयविकासिबलकलकलाकुलीकृते ।**
**शारिमतरदधिरोपयितुं द्विरदे मदश्च्युति जनः कथश्चन ॥ ८३ ॥**

शारिं हस्तिपर्याणमधिरोपयितुं कथश्चन कृच्छ्रात् जनो हस्तिन्यतरत् शशाक आरुरोह वा, यतो रणसंमदोदयेन समरहर्षाविर्भावेन विकासी प्रसारी यो बलकलकलः सैन्यतुमुलरवस्तेनाकुलीकृते क्षुभितेऽत एव मदश्च्युति दानस्राविणि ॥ ८३ ॥

**परितश्च धौतमुखरुक्मविलसदाहिमांशुमण्डलाः ।**
**तेनुरतनुवपुषः पृथिवीं स्फुटलक्ष्यतेजस इवात्मजाः श्रियः ॥ ८४ ॥**

श्रिय आत्मजा लक्ष्मीसुता अश्वाः परितः पृथिवीं तेनुर्व्यापुः । श्रियः किलाश्वा जाताः, सामभ्य इव गजा इत्यागमः । कीदृशाः धौतं वर्णितं यन्मुखरुक्मं मुखत्राणकनकं तत्र विलसत् स्फुरद्रविबिम्बं येषाम् । अतश्चोत्प्रेक्ष्यते–स्फुटं लक्ष्यं तेजः स्फुरितं येषां स्फुटलक्ष्यतेजस इवोल्लासमभजन्नित्यर्थः । अतनुवपुषो महाकायाः ॥ ८४ ॥

**प्रधिमण्डलोद्धतपरागघनवलयमध्यवर्तिनः ।**
**पेतुरशनय इवाशनकैर्गुरुनिस्वनव्यथितजन्तवो रथाः ॥ ८५ ॥**

रथाः स्यन्दना जवेन पेतुर्निर्ययुः । कीदृशाः प्रधिमण्डलेन नेमिवलयेनोद्धतः क्षुभितो यः परागो रेणुस्तस्य यद्घनं संहतं वलयं पटलं स एव वा घनवलयोऽभ्रवृन्दं तस्य मध्यवर्तिनः, तथा बृहच्चीत्कारपीडितसत्त्वाः, अत एवाशनय इवेत्युपमा, तेऽपि घनवलयमध्यस्था भवन्ति गुरुगर्जितव्यथितजन्तवश्च । यदि वा अशनय इव पेतुरनिमित्तसूचकास्तदाशनयोऽपि पेतुरित्यौपम्यसहोक्तिरलंकारः ॥ ८५ ॥

**दधतः शशाङ्कितशशाङ्करुचि लसदुरश्छदं वपुः ।**
**चक्रुरथ सह पुरन्ध्रिजनैरयथार्थसिद्धिसरकं महीभृतः ॥ ८६ ॥**

अथ पुरन्ध्रिजनैरङ्गनाभिः सह क्षितीशा अयथार्थं सिद्धिसरकं चक्रुः । मङ्गलार्थं पानं सिद्धिसरकं, तच्चायथार्थमर्थापेतममङ्गलं, नाम्ना परं सिद्धिसरकं तत्त्वतस्तु सिद्धिसूचकमित्यर्थः । अन्ये त्वाहुः—अयथार्था सिद्धिर्व्युत्पत्तिर्यस्ये-त्ययथार्थसिद्धि, किल सरन्ति सिध्यन्ति अस्मिन्कार्याणीति निर्वचनं सरकम् । कीदृशास्ते वपुर्बिभ्रतः । कीदृशं लसदुल्लसदुरश्छदं श्लिष्यत्कवचम्, अत एव शशेनाङ्कितस्य शशिन इव रुचिर्यस्य । उरश्छदस्य शश उपमानम् । छाद्यतेऽनेने-ति छदः, "संज्ञायां घः । 'छादेर्घे" इति ह्रस्वः । उरसश्छद इति कर्मष-ष्ठीसमासः ॥ ८६ ॥

तदेवायथार्थत्वमाह—

**दयिताय सासवमुदस्तमपतदवसादिनः करात् ।**
**कांस्यमुपहितसरोजपतद्भ्रमरौघभारगुरु राजयोषितः ॥ ८७ ॥**

कस्याश्चित् नृपपत्न्याः कांस्यं चषकं करादपतत्, यतोऽवसादिनोऽवसन्ना-दलसात्, । कीदृक् कांस्यं प्रियाय सासवं समधु उदस्तमर्पणायोत्क्षिप्तं, तथोपहि-तं निक्षिप्तं यत्सरोजमुत्पलं तत्र पतता गच्छता भ्रमरौघभारेण गुरु दुर्वहम् । उत्प्रेक्षा चैषा विनापीवप्रयोगं प्रयुज्यते । भ्रमरौघभारगौरवादिव पपातेत्यर्थः । दयितायेति "क्रियार्थोपपदस्ये" ति चतुर्थी । दयितं पाययितुमुत्क्षिप्तमित्यर्थः । कांस्यं पानपात्रम् ॥ ८७ ॥

**भृशमङ्गसादमरुणत्वमविषदृशः कपोलयोः ।**
**वाक्यमसकलमपास्य मदं विदधुस्तदीयगुणमात्मना शुचः ॥ ८८ ॥**

कस्याश्चिदविशददृशोऽलसाद्याः शुचः शोका मदं क्षीवत्वमपास्य तदीयं गुणं मदगुणं स्वयमेव चक्रुः । कं तं गुणमित्याह—भृशमङ्गसादं शरीरालस्यं ग-ण्डयोश्च लौहित्यं वचश्चासकलं न सर्वं दृशोरविशदत्वमविकासम् । एतानि हि मदेनापि भवन्ति शोकेनापि । दुःखितश्च न माद्यतीति मदमपास्य तद्धर्मं शुच एव व्यधुः ॥ ८८ ॥

**सुदृशः समीकगमनाय युवभिरथ संबभाषिरे ।**
**शोकपिहितगलरुद्धगिरस्तरसागतास्रुजलकेवलोत्तराः ॥ ८९ ॥**

अथानन्तरं तरुणैर्युवतयः समीकगमनाय संग्रामावतरणाय संबभाषिरे आ-

पृष्टाः । एते वयं यामो ज्योगस्तु भवतीभ्यः इति । कीदृश्यः तरसा बलादागतं यदस्रुजलं तदेव केवलमुत्तरं यासाम्, यतः शोकपिहिते दुःखसंवृते गले रुद्धाः पिहिता वाचो यासाम् । ज्योक्कृताः सत्यो रुरुदुरित्यर्थः ॥ ८६ ॥

**विपुलाचलस्थलघनेन जिगमिषुभिरङ्गनाः प्रियैः ।**
**पीनकुचतटनिपीडदलद्वरवारबाणमुरसालिलिङ्गिरे ॥ ६० ॥**

वल्लभैर्यियासुभिः कान्ताः तरसालिलिङ्गिरे आश्लिष्टाः । कथं पीनौ यौ कुचतटौ तयोस्ताभ्यां वा यो निपीडस्तेन दलत् त्रुट्यद्वरं नूतनं वारबाणं कञ्चुकं संनाहो वा यत्र । कीदृशोरसा विपुलाचलस्थलघनेन विस्तीर्णनगतटनिविडेन ॥ ६० ॥

**न मुमोच लोचनजलानि दयितजयमङ्गलैषिणी ।**
**यातमवनिमवसन्नभुजान्न गलद्विवेद वलयं विलासिनी ॥ ६१ ॥**

काचिल्ललना आगतमपि नयनवारि न तत्यजे, यतः कान्तस्य जये मङ्गलमिच्छन्ती । सा च मुग्धा अवसन्नात् स्रस्ताद्भुजात् कटकं गलद् भ्रश्यत् भूमौ पतितं नाज्ञासीत् । मङ्गलभङ्गभीरुत्वात् किलासौ न रोदिति । वलयपातश्च महदशकुनम् । वलयशब्दोऽर्धर्चादिः । अवसन्न[1]भुजेति पाठे विलासिनीविशेषणम् । अपादानाविवक्षा च ॥ ६१ ॥

**प्रविवत्सतः प्रियतमस्य निगडमिव चक्षुरक्षिपत् ।**
**नीलनलिनदलदामरुचि प्रतिपादयुग्ममचिरोढसुन्दरी ॥ ६२ ॥**

काचित् सुन्दरी प्रविवत्सतो जिगमिषोः कान्तस्य प्रतिपादयुगं चरणयुगलाभिमुखं चक्षुर्दृष्टिमक्षिपत् पातयामास । प्रौढा हि मङ्गलत्वरावती भवति । कीदृक् चक्षुः असितोत्पलकिसलयस्रक्कान्ति, अतश्च निगडमिव गमननिषेधार्थं बन्धनदामेव । प्रवस्तुमिच्छति प्रविवत्सति । सुन्दरी वधूः ॥ ६२ ॥

**व्रजतः क्व तात वजसीति परिचयगतार्थमस्फुटम् ।**
**धैर्यमभिनदुदितं शिशुना जननीनिभर्त्सनविवृद्धमन्युना ॥ ६३ ॥**

कस्यचिद्भटस्य व्रजतो गच्छत इतीत्थं शिशुनोदितमुक्तं कर्तृ धैर्यमभिनत् सत्त्वं नुनोद । किमुक्तमित्याह—हे तात क्व वजसि यासीति । कीदृगुदितमस्फुटं

1 'रु' ग. पाठः ।

श्लिष्टवर्णं, यत्र हि व्रजसीति वक्तव्यं तत्र वजसीति वचनं रेफहीनत्वादस्फुटम् । अत्र वैदग्ध्यात् कविना वजिरत्र स्फुटास्फुटरूपो धातुः प्रयुक्तः । वजिरपि धातुषु विद्यते 'वज व्रजगतौ' इति । तर्हि नास्फुटमिति चेत्, न वजेः प्रयोगदर्शनात् । नहि सर्वे धातवो यमकाद्यनुरोधं विना सर्वत्र प्रयोगार्हाः । यद्यस्फुटं तत् कथं गृहीतार्थमित्याह—परिचयेन संस्तववशेन गतार्थं ज्ञाताभिधेयम् । तादृशी हि संज्ञा तैस्तस्य गृहीता । कीदृशेन बालेन जननीनिभर्त्सनेन मातृरोषेण विवृद्धो मन्युः क्रोधो यस्य, स हि प्रश्नपूर्वकं पश्चाच्छब्दयन् अमङ्गलभीतत्वान्मात्रा तर्जितः ॥ ९३ ॥

**शठ नाकलोकललनाभिरविरतरसं रिरंससे ।**
**तेन वहसि मुदमित्यवदद्रणरागिणं रमणमीर्ष्ययापरा ॥ ९४ ॥**

अन्या मानिनी रणरसिकं वल्लभं मत्सरेणेत्थमवोचत् । हे! शठ धूर्त दिव्यस्त्रीभिरविरतरसं यतो रिरंससे दिदेविषसि तेन हेतुना मुदं वहसि प्रहृष्यसि । अविरतोऽतिगाढो रसो रागो यत्र रमणे । रागीति घिनुण् ॥ ९४ ॥

**ध्रियमाणमप्यगलदस्रु चलति दयिते नतभ्रुवः ।**
**स्नेहमकृतकरसं दधतामिदमेव युक्तमतिमुग्धचेतसाम् ॥ ९५ ॥**

कस्याश्चित् कुटिलभ्रुवः कान्ते व्रजति सति रुध्यमानमप्यस्रु अगलत् पपात । ननु प्रस्थानेऽस्रुजलममङ्गलं तत्कथमसावरुददित्याह—अतिमुग्धचेतसामृजुहृदयानामकृतकरसमकृत्रिमादरं स्नेहं प्रेम दधतामिदमेव युक्तमेतदेव सांप्रतं यद्रोदनम् । यः किल चोपचारवान् स कृत्रिमं व्यवहारं दर्शयति, परमार्थस्निग्धस्य तु प्रिये जने वार्यमाणमप्यस्रु पतत्येव, किमत्र क्रियते तद्वाच्यतास्थानम् । रसो रागः ॥ ९५ ॥

**सह कज्जलेन विरराज नयनकमलाम्बुसंततिः ।**
**गण्डफलकमभितः सुतनोः पदवीव शोकमयकृष्णवर्त्मनः ॥ ९६ ॥**

अन्यस्यास्तन्व्या गण्डफलकमभितः कपोलयोः संमुखं साञ्जनो नेत्राब्जजलपूरो बभौ । उत्प्रेक्ष्यते—दुःखाग्निमार्ग इव । कृष्णवर्त्मेत्यन्वर्थं वह्नेर्नाम ॥९६॥

**क्षणमात्ररोधि गलितेन कतिपयपदं नतभ्रुवः ।**
**स्रस्तभुजयुगगलद्वलयस्वनितं प्रतिक्षिपदिवोपशुश्रुवे ॥ ९७ ॥**

केनचिद्भटेन पञ्चषाणि पदानि चलितेन प्रियायाः स्रस्ते भुजयुगे गलतां चलतां वा वलयानां झनत्कार उपशुश्रुवे आकर्णितः। कीदृशं स्वनितं क्षणमात्रं रोधयतीति क्षणमात्ररोधि । क्रियाविशेषणं वा, क्षणं विवृत्त्याश्रौषीदित्यर्थः । तथा प्रतिक्षिपदिव, इत्थं दुःखितायाः कान्ताया मूर्ख त्वं यासीति निवारणार्थं निर्भर्त्सयमानमिव । कतिपयानि पदानि यत्र तत्कतिपयपदं चलनम् ॥ ९७ ॥

**अनुवर्त्म वल्लभतमस्य विगलदमलायतांशुकम् ।**
**भूमिनभसि रभसेन यती विरराज काचन समं महोल्कया ॥ ९८ ॥**

काचन कान्ता प्रियस्यानुवर्त्म पथः पश्चाद्भूमिनभसि रभसेन संभ्रमेण यती यान्ती विरराज बभौ । किमेकाकिन्येव यती नेत्याह–महोल्कया सममिति । अरिष्टसूचिका महोल्कापि तस्य पश्चान्नभसि व्रजन्ती रेजे इत्यर्थः, इति सहोक्तिः । कथं यतीत्याह–विगलत् संभ्रमवशाद् भ्रश्यदमलमुज्ज्वलमायतं दीर्घमंशुकमुत्तरीयं यत्रेत्येतदप्यमङ्गलसूचकम् । उल्कापक्षे तु विगलन्तः प्रसरन्तोऽमला दीर्घा अंशवस्तेजोलेखा यत्र याने । सप्तम्यन्तपाठे भूमिनभसि वा, भूमिरेव नभस्तस्मिन् यथा महोल्का पततीति वाक्यार्थः ॥ ९८ ॥

**समरोन्मुखे नृपगणेऽपि तदनुसरणोद्यतैकधीः ।**
**दीनपरिजनकृतास्रुजलो न भटीजनः स्थिरमना विचक्लवे ॥ ९९ ॥**

संग्रामसंमुखेऽपि राजके भटीजनो न विचक्लवे वैक्लव्यं न ययौ, यतस्तस्य नृपगणस्यानुसरणेऽनुगमनेऽन्वारोहणे उद्यता व्यवसिता कृतनिश्चया एका अचालनीया धीर्बुद्धिर्यस्य, अवश्यमेव मया मर्तव्यमिति यदा निश्चयो भवति तदा दुःखं प्रायेण न बाधते। अत एव दीनेन परिजनेन कृतास्रुजलो विहितरोदनः, स्थिरमना अविह्वलचेताः मरणकृतनिश्चयः । खचिरूचिपुषिकषादिवत् क्लविरपि क्रियावाचित्वाद्धातुरनुदात्तेद्बोद्धव्यः, तस्य च विक्लव इति रूपम् । अवश्यं चैतत् अन्यथा विक्लवशब्दो न सिध्येत् । ये तु ब्रुवते—क्लुङ्धातुर्विद्यते इति—तेषां गुणो न स्यात् । केचित्तु "क्रुदि क्लदि क्लवि वैकल्ये" इति पठन्ति। विचक्लम इति त्वपपाठ एव, क्लमेः परस्मैपदित्वात् ॥ ९९ ॥

**विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः ।**
**यान्तमनिमिषमतृप्तमनाः पतिमीक्षते स्म भृशमा दृशः पथः ॥१००॥**

काचिदङ्गना आ दृशः पथो दृष्टिगोचरं यावदतृप्तत्वादनिमिषं भृशमत्यर्थं यान्तं पतिमद्राक्षीत् । अनिमिषभृशदर्शने तर्कमाह—अमुष्यास्य पत्युः पुनःपुनर्दर्शनमतिदुर्लभं विदुषीव जानानेव । "विदेः शतुर्वसुः" । सर्गेऽत्रोद्गता वृत्तम् ॥ १०० ॥

**संप्रत्युपेयाः कुशली पुनर्युधः सस्नेहमाशीरिति भर्तुरीरिता !**
**सद्यः प्रसह्य द्वितयेन नेत्रयोः प्रत्याचचक्षे गलता भटस्त्रिया ॥१०१॥**

कयाचिद्वीरपत्न्येतीत्थं सप्रेम पत्युराशीरीरितोक्ता सती नेत्रयुगेन गलताश्रु स्रवता प्रसह्य बलादिव सद्यः प्रत्याचचक्षे प्रत्याख्याता । रोदनं ह्यमङ्गलम् । कासावाशीरित्याह-संप्रत्यधुनैव युधः संग्रामात् कुशली स्वस्थः पुनरुपेया आगच्छेरिति । युध्यन्तेऽस्यामिति युत् समित्, क्विप् । उपेया इतीण आशीर्लिङ् । ताविन्द्रवंशा जरसंहितौ मता ॥ १०१ ॥

**काचित् कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-**
**रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।**
**भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमाप**
**प्रस्थाने पार्थिवानामशुभमिति पुरोभावि नार्यः शशंसुः॥१०२॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये युद्धप्रस्थानं नाम पञ्चदशः सर्गः ॥ १५ ॥

पार्थिवानां वीराणां प्रस्थाने समरावतरणे पुरोभाव्यग्रवर्ति अशुभममङ्गलं नार्यः कान्ता इतीत्थं शशंसुराचख्युरसूचयन् । यद्वा भावि भविष्यदशिवं पुरः पूर्वं शशंसुरभिदधुरिति योज्यम् । तथाहि—काचिद्रजोभिः कीर्णा रजस्वला अत एव मन्दवक्त्रेन्दुलक्ष्मीर्नष्टमुखशशिच्छाया सती दिवं द्यामनुविदधावनुचकार, तदानीं द्यौरपि नीहाराक्रान्ता निस्तेजोऽर्केन्दुश्चाभूदित्यर्थः । तथान्या निःश्रीका निर्लक्ष्मीका उद्भ्रान्तसत्त्वाश्चकितप्राणा दाहमूहुः शोकं बभ्रुः दिश इव, दिशोऽपि तदानीमन्तर्दाहं वनदवमूहुरित्यर्थः । अत एवोद्भ्रान्तानीतस्ततो गतानि सत्त्वानि सिंहादीनि यासां ता उद्भ्रान्तसत्त्वाः, निःश्रीका वृक्षादीनां दग्धत्वात् । तथान्या भ्रेमुः किंकर्तव्यतामूढा इतस्ततो जग्मुः वात्या इव, चण्डवाता अपि बभ्रमुरित्यर्थः । वातसमूहो वात्या "पाशादिभ्यो यः" । तथा अपरा प्रतिपदं क्रमे क्रमे कम्पमाना चस्खाल भूमिवत्, भूमिरपि तदा चकम्पे इत्यर्थः ।

सर्वं चैतदशकुनम्, इति प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः । सहोक्तिरलङ्कारः । स्रग्धरा वृत्तम् । "म्रौ भ्नौ याश्च त्रयः स्युः सुरमुनितुरगैः स्रग्धरा स्याद्विरामै" रिति भद्रम् ॥ १०२ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्य-सारटीकायां सन्देहविषौषध्याख्यायां युद्धप्रस्थानं नाम पञ्चदशः सर्गः ॥ १५ ॥

अथ

# शिशुपालवधकाव्ये

## षोडशः सर्गः ।



**दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ ।**
**उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः ॥ १ ॥**

अथानन्तरं दमघोषात्मजेन शिशुपालेन प्रतिशिष्ट आदिष्ट आज्ञप्तः प्रतिभानवान् सप्रतिभः कश्चन कोऽपि दूतः सदसि गत्वा, अद एतद्वचो हरिमुदाहरदवोचत् । स्फुटः प्रकटो भिन्नो विभक्तः प्रियाप्रियरूपोऽर्थो यस्य तत् स्फुटभिन्नार्थम्, झगित्येव प्रतिभासात् स्फुटत्वम्, द्व्यर्थत्वात्तु भिन्नत्वम् । उदाहरते'र्ब्रू'त्यर्थत्वाद्वचो हरिमुदाहरदिति प्रयोगः । वैतालीयाख्यमर्धसमं वृत्तम् ॥ १ ॥

किमुदाजहारेत्याह—

**अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।**
**भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥ २ ॥**

शिशुपलस्तदा पूर्वोक्तेन प्रकारेण तदप्रियं 'सर्वगुणविरहितस्य हरे' रित्याद्युक्त्वा अधुनागत्य तव माननां संमानं कर्तुं वाञ्छति, यतः परमत्यर्थमनुशयं पश्चात्तापं गतः, तथा अभिमना उन्मनास्त्वां प्रत्युत्कचित्तः । कीदृशस्य तव सरुषः क्रुद्धस्य । सक्रोधं त्वामभिमुखीचिकीर्षुरिति प्रियम् । अप्रियं तु—स चैद्यस्तथा तत् तव रूक्षमुक्त्वा परमनुशयं क्रोधं गतोऽभिमना निर्भयचित्तः सन् आगत्य रुषो दोषस्य माननां पूजां चिकीर्षते । रोषस्य माननं सफलीकरणं रिपुषु क्षेपः, तेन त्वां जिघांसतीत्यर्थः । केचित्तु माननां खण्डनामाहुः । तव सरुषोऽसौ खण्डनां नाशं वाञ्छतीत्यर्थः । अविद्यमाना भीर्यस्य तदभि, अभि मनो यस्येत्यभिमनाः ॥ २ ॥

**विपुलेन निपीड्य निर्दयं मुदमायातु नितान्तमुन्मनाः ।**
**प्रभुराधिगताङ्गनिर्वृतिं परितस्त्वां खलु विग्रहेण सः ॥ ३ ॥**

---

१ 'रो' क. पाठः ।

स चैद्यो विपुलेन बृहता विग्रहेण देहेन त्वां परितः सर्वतो निर्दयं गाढं निपीड्यालिङ्ग्य नितान्तमत्यर्थं मुदमायातु तुष्यतु, यत उन्मना उत्कण्ठितः । कीदृशं त्वां तदाश्लेषवशात् प्रचुरं बहु अधिगता प्राप्ताङ्गनिर्वृतिः शरीरसौख्यं येन तं प्रचुराधिगताङ्गनिर्वृत्तिमतिप्रियम् । अन्यच्च–स त्वां विग्रहेण युद्धेन निपीड्य व्यथयित्वा मुदमायातु । उन्मना मानी, यदि वा नितान्तानल्पा मुत् तुष्टिर्यस्य तन्नितान्तमुत् मनश्चेतो यस्य स नितान्तमुन्मनाः । त्वां तु प्रचुरा आधयो मनःपीडा यस्य स प्रचुराधिः, अत एव गता नष्टा अङ्गनिर्वृतिर्वपुःस्वास्थ्यं यस्य स प्रचुराधिगताङ्गनिवृतिः । ततः कर्मधारयः । समरे त्वामसौ पिनष्टित्यर्थः ॥ ३ ॥

**प्रणतः शिरसा करिष्यते सकलैरेत्य समं नराधिपैः ।**
**तव शासनमाशु भूपतिः परवानद्य यतस्त्वयैव सः ॥ ४ ॥**

स चैद्यो राजा सर्वैर्नृपैः सहागत्य प्रह्वः सन् शासनमाज्ञामाश्वेवाद्य विधास्यति, यतस्त्वयैवासौ परवान् त्वमेव तस्य प्रभुः, प्रभोश्चादेशोऽवश्यमेव क्रियते इति प्रियम् । अपरं तु–स राजा राजकेन सहागत्य तव शासनं निग्रहं करिष्यति, यतस्त्वयैवासौ परवान् सशत्रुः, त्वमेवैकस्तस्य रिपुशेषः । कीदृगसौ शिरसा प्रणतः प्रकृतत्वात् नृपैरेव । शासनं निग्रहोऽपि ॥ ४ ॥

**अधिवह्निपतङ्गतेजसो नियतस्वान्तसमर्थकर्मणः ।**
**तव सर्वविधेयवर्तिनः प्रणतिं बिभ्रति के न भूभृतः ॥ ५ ॥**

तव के भूभृतः प्रणतिं न बिभ्रति, सर्व एव त्वयि नम्रा अतो वयमपि प्रणता इत्यर्थः । कीदृशस्य अधिकं वह्नेः पतङ्गाच्च तेजो यस्य तस्याधिवह्निपतङ्गतेजसः । यद्वा अधिगतं वह्निपतङ्गयोस्तेजो येन, तथा नियतस्य स्थिरस्य स्वान्तस्य मनसः समर्थं सङ्गतं योग्यं कर्म व्यापारो यस्य तस्य नियतस्वान्तसमर्थकर्मणश्चित्तानुरूपक्रियस्येत्यर्थः । यदि वा नियतं स्वान्तं यस्य स नियतस्वान्तः संयतचित्तो जितेन्द्रियः, समर्थं कर्म यस्य स समर्थकर्मा । ततः कर्मधारयः । अत एव सर्वे विधेयवर्तिन आज्ञाकारिणो यस्य, अतश्च प्रणतिं बिभ्रति के न भूभृत इति प्रियम् । अन्यच्च–तव केन हेतुना राजानः प्रणतिं बिभ्रति नमन्ति, यतोऽधिवह्नि वह्नौ पतङ्गस्य शलभस्येव तेजो यस्य, विपन्नाग्निं प्रति शलभसदृशस्येत्यर्थः । अत एवानियतं चपलं स्वस्यात्मनोऽन्तसमर्थं

विनाशलक्षणं कर्म यस्य, शलभो हि चापलाद्वह्नौ निपत्य म्रियते । तथा सर्वेषां विधेयवर्तिनो वचनकारिणो वश्यस्य, अतः केन गुणेन तव भूभृतः प्रणमन्ति ॥ ५ ॥

**जनतां भयशून्यधीः परैरभिभूतामवलम्बसे यतः ।**
**तव कृष्ण गुणास्ततो नरैरसमानस्य दधत्यगण्यताम् ॥ ६ ॥**

हे कृष्ण ! तव ततो हेतोर्गुणाः शौर्यादयोऽगण्यतामसंख्येयत्वं बिभ्रति, यतः परैः शत्रुभिरभिभूतां बाधितां जनतां लोकसमूहमवलम्बसे वहसि त्रायसे। भयेन शून्या रहिता धीर्यस्य स भयशून्यधीर्निर्भयचित्तः । नरैरसमानस्यासमस्य सर्वोत्कृष्टत्वात्, इति प्रियम् । अन्यत्तु–हे कृष्ण ! पाप यतस्त्वं भयशून्यधीर्भयमूढबुद्धिः परैरन्यैरभिभूतां वर्जितामपूजितां जनतां प्राकृतत्वं गोपत्वमाश्रयसे, अतस्तव गुणा अगण्यतामनास्थास्पदत्वं धारयन्ति । नरैरसमानस्योनस्य हीनत्वात् । यद्वा असमानस्यापूजितस्य, सह मानेन पूजया वर्तते इति कृत्वा ॥ ६ ॥

**अहितादनपत्रपस्त्रसन्नतिमात्रोज्झितभीरनास्तिकः ।**
**विनयोपहितः कुतस्त्वया सदृशोऽन्यो गुणवानविस्मयः ॥ ७ ॥**

त्वया सदृशोऽन्य एवंविधः कुतो गुणवान् गुणयुक्तः । कीदृशस्त्वमिति तानेव गुणानाह—अहितादनात्महितात् पापादेस्त्रसन् बिभ्यत्, अकार्यभीरुः, तथा अनपत्रपः, अपगता त्रपा यस्य सोऽपत्रपः, नापत्रपोऽनपत्रपः सलज्जः। खललक्षणं हि धार्ष्ट्यम् । अतिमात्रमत्यर्थमुज्झिता भीर्भयं येन सोऽतिमात्रोज्झितभीः, न नास्तिकोऽनास्तिकः । नास्ति परलोक इति मतिर्यस्य स नास्तिकः, आस्तिको धर्मनिष्ठ इत्यर्थः । विनयेनाचारेणोपहितो युक्तो विनयोपहितो जितेन्द्रिय इत्यर्थः । विविधः स्मयो गर्वो यस्य स विस्मयः, न विस्मयोऽविस्मयः पेशलः । अन्यशब्दवाच्यार्थविशेषणत्वेऽप्येषां भगवद्विशेषणतैव प्रतीयते। अन्यत्र ह्येते गुणा निषिध्यन्ते भगवति तु विधीयन्ते, एवंविधोऽन्यः कस्त्वया सदृशस्त्वमेवैवंगुणविशिष्ट इत्यर्थः, इति स्तुतिः । निन्दा तु विपर्ययेन—त्वया सदृशोऽन्य एवंविधोऽगुणवान्निर्गुणः कुतः, भवानेव निर्गुण इत्यर्थः । यादृशोऽन्यो न विद्यते स च यादृशस्तथान्यत् कविर्विशेषणद्वारेणाह–अहिताच्छत्रोस्त्रसन् कातरत्वात्, तथाविद्यमाना अपत्रपा लज्जा यस्य सोऽनप-

त्रपो निर्लज्जः, नतिमात्रेण प्रह्वतामात्रेणोज्झिता भीर्येन, परस्य नम्रो भूत्वा स्वस्थ इत्यर्थः । अनास्तिकः, अस्तीति मतिर्यस्य स आस्तिकः, न आस्तिकोऽनास्तिकः पापः, विगतो नयो नीतिर्यस्य स विनयो दुर्विनीतः, अपगतं हितं यस्य यस्माद्वेत्यपहितो निःसुखः, अवेः पशोरिव स्मयो गर्वो यस्य सोऽविस्मयः, हुडशौर्य इत्यर्थः । यदि वा विस्मयजनकं कर्म विस्मयोऽपदानं, स न विद्यते यस्य सोऽविस्मयः । केचित्तु—त्वया सदृशः कोऽन्योऽना अपुरुषोऽस्तीति व्याचक्षते । एवं च कुत इति न तथा सङ्गतं स्यात् । त्वयेति "तुल्यार्थै" रिति तृतीया ॥ ७ ॥

**कृतगोपवधूरतेर्घ्नतो वृषमुग्रे नरकेऽपि संप्रति ।**
**प्रतिपत्तिरधःकृतैनसो जनताभिस्तव साधु वर्ण्यते ॥ ८ ॥**

तवोग्रे घोरे नरके दानवे प्रतिपत्तिर्वधायानुष्ठानमुद्यमो जनैः संप्रति साधु सुष्ठ्वित्यर्थं वर्ण्यते, शोभनं हरिणा कृतं यदुग्रो नरकोऽवधीति यशस्तव सर्वत्र गीयते इत्यर्थः । कीदृशस्य तव कृता गोपानां तद्वधूनां च रतिः प्रीतिर्येन तस्य कृतगोपवधूरतेः, यतो वृषं दान्तरूपिणमरिष्टाख्यं दानवं घ्नतो मारयतः, अधःकृतमस्पृष्टमेनः पापं येन तस्याधःकृतैनसः पुण्यवत इति प्रत्यक्षम् । परोक्षं तु–तवाधुना उग्रे नरकेऽवीच्यादावधः प्रतिपत्तिः प्रपतनप्राप्तिः साध्वत्यर्थं वर्ण्यते, यतः कृतैनाः पापिष्ठस्त्वम् । एतदपि कुत इत्याह—कृता गोपवधूनां रतिः कामेच्छा येन, तथा वृषमनड्वाहं घ्नतः । परदारगमनं गोवधश्च महत्पातकम्, अतः कृतैनसस्तव नरके पतनं युक्तमेव कथ्यते ॥ ८ ॥

**विहितापचितिर्महीभुजा द्विषतामाहितसाध्वसो बलैः ।**
**भव सानुचरस्त्वमुच्चकैर्महतामप्युपरि क्षमाभृताम् ॥ ९ ॥**

त्वं सानुचरः सभृत्यो महतामपि राज्ञामुपरि भव प्रधानं संपद्यस्व, यतो महीभृता चैद्येन विहितापचितिः कृतसंमानः, अतो रिपूणां बलैराहितं कृतं साध्वसं कम्पो येन, उच्चकैरुदात्तस्त्वमिति प्रियम् । अप्रियं तु–त्वं महतामपि क्षमाभृतां महीधराणामुपरि पृष्ठे सानुचरो भव सानुस्थो भव, यतश्चैद्येन विहितापचितिः कृतापचयः, तथा द्विषतामस्माकं बलैराहितं साध्वसं भयं यस्य, अतश्चोत्सादितो नगरान्नगसानूनि सेवस्व त्वम् । उच्चकैरुन्नतेन राज्ञा । अपचितिः पूजा क्षयश्च ॥ ९ ॥

**घनजालनिभैर्दुरासदाः परितो नागकदम्बकैस्तव ।**
**नगरेषु भवन्तु वीथयः परिकीर्णा वनजैर्मृगादिभिः ॥ १० ॥**

अथ च मैत्र्यां कृतायां तव नगरे वीथयो रथ्या मृगादिभिर्मृगमन्द्रभद्रादिभिर्नागकदम्बकैर्गजघटाभिः समन्तात् कीर्णा व्याप्ताः सत्यो दुरासदाः परैर्दुष्प्रापा भूयासुः । कीदृशैस्तैः, घनजालनिभैरभ्रपटलमलिनैर्वनजैर्वानेयैः, ते हि दुरभिभवा इति प्रकटम् । अन्यत्तु–तव पुरेषु वीथयो घनजालनिभैः संहतजालाकारपञ्जरसदृशैर्नागकदम्बकैः सर्पव्रातैर्दुरासदा दुष्प्रवेशा भवन्तु, तथा वनजैर्मृगादिभिर्हरिणव्याघ्रशरभादिभिः परिकीर्णा व्याप्ताः। त्वय्युत्सादितेऽरण्यरूपा द्वारिकास्त्विति वाक्यार्थः ॥ १० ॥

**सकलापिहितस्वपौरुषो नियतव्यापदवर्द्धितोदयः ।**
**रिपुरुन्नतधीरचेतसः सततव्याधिरनीतिरस्तु ते ॥ ११ ॥**

ते तव रिपुरेवंविधोऽस्तु । कीदृशः सकलमपिहितं स्थगितं नाशितं स्वपौरुषं यस्य । दधातेरपिपूर्वस्यापिहितशब्दः । नियता नित्या आपदो यस्य, अवर्द्धितो वृद्धिं न गत उदयो यस्य, सततं सदा व्याधयो यस्य स सततव्याधिः, अविद्यमाना नीतिर्नयो यस्य सोऽनीतिः । तव कीदृशस्य उन्नतं विपुलं धीरं च गम्भीरं चेतो यस्येति प्रकाशम् । प्रच्छन्नं तु—तवाचेतसो निर्बुद्धेः रिपुश्चैद्य एवंविधोऽस्तु । कीदृशः सकलमपिहितमस्थगितमनाक्रान्तं स्वपौरुषं यस्य । दधातेरपिपूर्वस्य 'वष्टि भागुरि' रित्यकारलोपे नञ्समासे चापिहितशब्दः । तथा नियतं विगता नष्टा आपदो यस्य स नियतव्यापत्, अवर्द्धितोऽच्छिन्न उदयो यस्य, सततव्याधिः सततं विगता आधयो यस्य सः, अविद्यमाना ईतय उपद्रवा यस्य सोऽनीतिः । भवदभिभवेन राजा महोदयो भवत्विति वाक्यार्थः । केचिदत्र हे अस्तुते ! अविद्यमाननुते इत्यामन्त्रणपदमाहुः । एवं चावाचकत्वं स्यात् क्रियापदस्य भवेत्य[1]स्य वासंभवात् ॥ ११ ॥

**विकचोत्पलचारुलोचनस्तव चैद्येन घटामुपेयुषा ।**
**यदुपुङ्गव ! बन्धुगौरवादपि पाता ससुरो नवासवः ॥ १२ ॥**

हे यदुपुङ्गव ! यादवश्रेष्ठ चैद्येन घटामुपेयुषा मैत्रीं प्राप्तेन तव सम्बन्धी ससुरः सुरासहितो नवासवः प्रत्यग्रपानमपि पाता पास्यते। संधौ कृतेऽन्योन्यं गृ-

[1] 'वेत् तस्य' क. पाठः ।

हगमनमधुपानादिकं क्रियते इति स्थितिः । बन्धुगौरवात् स्वजनबहुमानात्, त्वं हि तस्य मातुलिः । कीदृङ् नवासवः, विकचान्युत्फुल्ला[1]नि उत्पलान्येव चारूणि लोचनानि नेत्राणि यस्य । घटा मैत्री । पातेति पिबतेः कर्मणि लुट्, तास् । अपिर्विस्मये । एष एकस्य वाक्यार्थः । अपरस्य तु—हे यदूनां पुङ्गव ! वलीवर्द चैद्येन घटामुपेयुषा करिघटामारूढेनापि ससुरो देवसहितो वासव इन्द्रस्तव न पाता न रक्षिष्यति, किं पुनर्भीष्मादयः । इन्द्रस्य रक्षायां कारणमाह—बन्धुगौरवाद्भर्तृस्नेहात्, यदि वा पुत्रस्य स्यालत्वात्, अर्जुनस्य हि भगवाञ्श्वाशुर्यः । कीदृग्वासवः, विकसितेन्दीवररम्यनयनः । पातेति पातेस्तृच् ॥ १२ ॥

**चलितानकदुन्दुभिः पुरः सबलस्त्वं सह सारणेन तम् ।**
**समितौ रभसादुपागतं सगदः संप्रतिपत्तुमर्हसि ॥ १३ ॥**

तं चैद्यमपि त्वं संप्रतिपत्तुं पूजयितुमर्हसि, यतः समितौ सभायां रभसादौत्सुक्येनोपागतं प्राप्तम् । किं केवलस्त्वं नेत्याह—पुरोऽग्रे चलित आनकदुन्दुभिर्वसुदेवो यस्य स चलितानकदुन्दुभिः, अग्रे त्वत्पिता निर्यात्वित्यर्थः । तथा सह बलेन ज्येष्ठभ्रात्रा हलिना वर्तते इति सबलः, सारणेन कनीयसा भ्रात्रा सह, सह गदेनानुजेन वर्तते इति सगदः। पितृभ्रातृसहितस्त्वमुत्कण्ठयागतं तं संमानयितुमर्हसीति बहिः। गूढं तु-रभसात् क्षोभेण समितौ समरे तमागतं भवान् सहसा झगित्येव रणेन युद्धेन संप्रतिपत्तुं प्रत्येषितुमर्हसि, युद्धार्थमागतस्य तस्य मा त्वं पलायिष्ठा इत्यर्थः । कीदृक् त्वं पुरश्चलितास्ताडिता आनकाः पटहा दुन्दुभयो भीर्यो यस्य, सबलः ससैन्यः, सह गदया वर्तते इति सगदः सायुधः ॥ १३ ॥

**समरेषु रिपून् विनिघ्नता शिशुपालेन समेत्य संप्रति ।**
**सुचिरं सह सर्वसात्त्वतैर्भव विश्वस्तविलासिनीजनः ॥ १४ ॥**

त्वमधुना राज्ञा समेत्य संधिं कृत्वा सर्वैः सात्त्वतैर्यादवैः सह सुचिरं विश्वस्तविलासिनीजनो भव सुखितललनः संपद्यस्व । कलहे किल स्त्रीणां भयं भवति । कीदृशा तेन रणेष्वरीन् क्षपयता तेनेति प्रियम् । आक्रोशस्तु–समरेषु शिशुपालेन समेत्य मिलित्वा सर्वसात्त्वतैः सह विश्वस्तविलासिनीको वि-

[1] 'ल्ता' क. पाठः ।

धवयुवतिकस्त्वं भव, म्रियन्तां सर्व एव भवन्त इत्यर्थः । यतोऽसौ रिपून् विनिघ्नन्निरिहा । शिशुपालेनेति साभिप्रायं नाम, यदपि परं शिशूनसौ न हनिष्यतीत्यर्थः । विश्वस्ता विशोका विधवा च । "आदितश्चे" ति चकारादिणिनषेधः । सत्त्वतोऽपत्यानि सात्त्वताः "उत्सादिभ्योऽञ्" ॥ १४ ॥

**विजितक्रुधमीक्षतामसौ महतां त्वा महितं महीभृताम् ।**
**असकृज्जितसंयतं पुरो मुदितः सप्रमदं महीपतिः ॥ १५ ॥**

असौ क्षितिपो मुदितः संस्त्वा भवन्तं पुरोऽग्रे एवंविधमीक्षतां पश्यतु । कीदृशं विजितक्रुधं त्यक्तमन्युम् । महतामपि महीभृतां महितं पूजितम्, असकृत् बहुकृत्वो जितसंयतं पराजितसमरम्, सप्रमदं हृष्टम् । त्वेति "त्वामौ द्वितीयायाः" । वान्नावादयश्चान्वादेशे विभाषिता इति द्वितीयेऽर्थे त्वामिति भवति । एतत्प्रियम् । अप्रियं तु—सप्रमदं सस्त्रीकं त्वां चैद्यो हृष्टो जितसंयतं पश्यतु, पूर्वं जितं पश्चात्संयतं बद्धम्, अत एवाशक्त्या विजितक्रुधमुत्कृष्टक्रोधम्, अत एव महतामपि चैद्यादीनां राज्ञामहितं विपक्षमिति । सर्वत्र स्तुतिनिन्दात्मको व्याजश्लेषोऽलङ्कारः ॥ १५ ॥

**इति जोषमवस्थितं द्विषः प्रणिधिं गामभिधाय सात्यकिः ।**
**वदति स्म वचोऽथ चोदितश्चलितैकभ्रु रथाङ्गपाणिना ॥ १६ ॥**

अथानन्तरं सात्यकिः शैनेयो द्विषश्चैद्यस्य सम्बन्धिनं प्रणिधिं दूतं वचनमवादीत्, यतश्चक्रिणा चोदितो नियुक्तः । कथं चलिता नर्तिता एका भ्रूर्मुखरोमराजिर्यत्र तच्चलितैकभ्रु, अक्षिनिकोचेन कृतसंज्ञमित्यर्थः । कीदृशं प्रणिधिमिति पूर्वोक्तां गां वाचमुक्त्वा जोषमवस्थितं तूष्णींभूतम् ॥ १६ ॥

किमवोचदित्याह—

**मधुरं बहिरन्तरप्रियं कृतिनाऽवाचि वचस्तथा त्वया ।**
**सकलार्थतया विभाव्यते प्रियमन्तर्बहिरप्रियं यथा ॥ १७ ॥**

भवता पण्डितेन सकलार्थतया द्व्यर्थत्वेन बहिः प्रकटं मधुरं प्रियमन्तश्च गुप्तमप्रियं, तथा तेन प्रकारेण कृतित्वाद्वचोऽवाचि वचनमुक्तम्, यथा अन्तः प्रच्छन्नं प्रियं प्रकटं चाप्रियं विभाव्यते लक्ष्यते । कृतिनेत्युल्लुण्ठनायाम् । तव हि महान् गर्वः, प्रत्यक्षमेते प्रियमुक्त्वा सान्त्विताः परोक्षे तु तन्नास्ति यन्नोक्तमि-

ति । विचार्यमाणानां त्वेषां वाक्यानामप्रियमुक्तानं प्रियं तु कष्टकल्पनया प्रतीयते । सकल उभयरूपोऽर्थो यस्य तत्सकलार्थं तद्भावस्तत्ता तया सकलार्थतया । प्रियाप्रियोक्तौ हेतुरेषः । उपाध्यायप्रकाशवर्षस्तु विपरीतार्थे हेतुमाह—सकलार्थतया वाक्यार्थपर्यालोचनया प्रियमन्तर्बहिश्चाप्रियं विभाव्यते इत्यर्थः ॥१७॥

**अतिकोमलमेकतोऽन्यतः सरसाम्भोरुहवृन्तकर्कशम् ।**
**वहति स्फुटमेकमेव ते वचनं शाकपलाशदेश्यताम् ॥ १८ ॥**

एकमेव प्रयत्नोक्तं तव वचनं स्फुटं निश्चितं प्रकटं वा शाकपलाशदेश्यतां वहति, शाकाख्यतरोर्यत्पलाशं पत्रं तस्य सारूप्यं धारयति । यत एकत एकस्मिन् पक्षे अतिकोमलं म्रदीयः प्रियतरम् अन्यतस्तु अतिपरुषम् । ईषदसमाप्तं शाकपलाशं शाकपलाशदेश्यम् "ईषदसमाप्तौ कल्पप्देश्यदेशीयरः" ॥ १८ ॥

यद्येवंविधमसद्वचस्तत्क्रियतामित्याह—

**प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा ।**
**शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात् ॥ १९ ॥**

ईदृशादेवंविधात् नरात् मार्गवर्तिभिः सत्पथस्थैरुद्विजितव्यं भेतव्यम् । किंभूतादित्याह—प्रकटं प्रकाशं प्रियं नाम ब्रुवतोऽन्तरा गुप्तं तु रूक्षं परुषमर्थं सूचयतः । कस्मादिवेत्याह—शकुनादिवेति, यथा मार्गवर्तिभिरध्वस्थैर्मृदुभाषिणोऽथ चानिष्टाख्यायकात् खगात् त्रस्यते ॥ १९ ॥

एवं चामात्यद्वारेण दूतं निर्भर्त्स्य प्रकृतमाह—

**हरिमर्चितवान् महीपतिर्यदि राज्ञस्तव कोऽत्र मत्सरः ।**
**न्यसनाय ससौरभस्य कस्तरुसूनस्य शिरस्यसूयति ॥ २० ॥**

यदि पार्थो विष्णुमार्चीत् तद्भावत्कस्य प्रभोः कोऽत्र मत्सरोऽमर्षः, न युक्तमत्र मात्सर्यमित्यर्थः । तदेव दृष्टान्तेन द्रढयति—सुगन्धेर्वृक्षकुसुमस्य शिरसि यन्न्यसनमर्पणं धारणं तस्मै कोऽसूयति द्वेष्टि, भगवत्पूजनाद्यस्य मात्सर्यं स सूनं पुष्पमपि न सहते इत्यर्थः । न्यसनायेति "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति संप्रदानम् ॥ २० ॥

**सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः ।**
**सहसैव समुद्गिरन्त्यमी जरयन्त्येव हि तन्मनीषिणः ॥ २१ ॥**

प्राकृतानामहो हृदयं सुकुमारं तुच्छं स्वल्पम्, यदेते हृदयस्थमप्रियं तत्क्षणमेव समुद्गिरन्ति मुञ्चन्ति ब्रुवन्ति, स्वल्पचित्ततया हि रूक्षमन्यैरुच्यते । ये पुनः सन्तस्ते तदप्रियं जरयन्त्येव क्षपयन्त्येव, आगतमपि निवर्तयन्त्येवेत्यर्थः । यस्यापि हृदयमुदरं सुकुमारं स्वल्पमदीप्तं स सहसैवोद्वमति, दीप्तोदरस्तु जरयत्येव । तदेतेन सदसतोर्व्यतिरेकेण हरिचैद्ययोरन्तरमुक्तवान् । एवमन्यत्र ॥२१॥

**उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः ।**
**असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ २२ ॥**

यः साधुः स सर्वजनस्य साधोरसाधोर्वा प्रकृत्यैव सदा उपकारपरः प्रियङ्करः । चित्रं, तथाप्यसाधूनां सज्जनोच्छ्रायो गुरुहृद्रोगकरो दुःसहां मनःपीडां विधत्ते । अतश्च हरेःपूजा भवतामप्यनुकूलैव, तत् कस्मान्मात्सर्यमिति वाक्यार्थः ॥ २२ ॥

नच यूयं दुर्जना इति वक्तुमाह—

**परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतः ।**
**परवृद्धिभिराहितव्यथः स्फुटनिर्भिन्नदुराशयोऽधमः ॥ २३ ॥**

य उन्नतो बृहच्चित्तः सोऽन्यसमृद्धिभिर्नैव परितप्यते दूयते, ता अनुमोदते इत्यर्थः । अपरस्तु मध्यमस्ताभिस्तापं प्राप्तोऽपि सुष्ठु संवृतोऽतिगम्भीरो मात्सर्यं वहति, नतु प्रकटयतीत्यर्थः । यः पुनर्नीचः स ताभिर्जनितव्यथः सन् स्फुटनिर्भिन्नदुराशयः, स्फुटं निश्चितं निर्भिन्नः स्फुटितो दुष्ट आशयो हृदयं यस्य स तथोक्तः, यदि हि निर्भिन्नाशयो न स्यात् तत्कथं हृत्स्थं प्रकाशयेतेति भावः । योऽपि भोजनादिनाहितव्यथः स स्फुटमेव निर्भिद्यते स्फुटति । केचित्तु निर्भिन्नं प्रकटीकृतमाहुः । तदेतेन मात्सर्यप्रकाशनात् तेषामसाधुत्वमुक्तम् ॥ २३ ॥

ननु राजा सर्वगुणयुक्तत्वात् सज्जन एवेत्याह—

**अनिराकृततापसंपदं फलहीनां सुमनोभिरुज्झिताम् ।**
**खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥ २४ ॥**

बुधो जनः कथमसतीं निन्द्यां खलतां खलत्वं श्रयेत, यतः सुमनोभिर्मनस्विभिरुज्झितां त्यक्ताम् । कुतः यतोऽनिराकृतदुःखप्रकर्षाम्, खलो हि सर्वन्तपो नतु क्षेमङ्करः । फलहीनामुपकारकत्ववर्जिताम्, अत एवाप्रतिपत्तिः । किमिव

न प्रतिपद्यते इत्याह–खलतां नभसो वल्लीमिव । को हि प्राज्ञः खात् लतां जिघृक्षेत्, यतोऽसतीमविद्यमानाम्, असतीत्वाद्यानपास्तधर्मातिशयाम्, फलैश्च हीनां सुमनोभिः पुष्पैर्वर्जिताम्, नह्यविद्यमाने सद्धर्मा भवन्ति । तदेतेन यदि चैद्यः साधुः स्यात् तत्कथं खलत्वं दर्शयेत्, तस्मान्नीच एवासावित्युक्तं भवति ॥ २४ ॥

आक्रोशेऽपि स्वस्थत्वात् कातरत्वं हरेः परमतेन निरस्यन्नाह—

**प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते ।**
**अनुहुंकुरुते घनध्वनिं नहि गोमायुरुतानि केसरी ॥ २५ ॥**

शपमानाय क्रोशतेऽपि चैद्याय हरिः प्रतिवचनं खर्ववचो नादत्त नावादीत् । कस्मादित्याह–यस्मात् घनध्वनिमनु मेघगर्जितमुद्दिश्य सिंहो हुंकुरुते गर्जति क्षुभ्यति नतु सृगालवाशितानि, अतश्च साम्याभावात् कीदृशः प्रतिवचोऽवसरः, महात्मनां हीनेषूपेक्षैवौचित्यम् । उक्तं च—“गण्डस्थले मदकरीमदवारिलुब्धमत्तभ्रमद्भ्रमरपादतलाहतोऽपि । कोपं न गच्छति नितान्तबलोऽपि नागस्तुल्यं बलेन बलिनः प्रतिकोपयन्ति” इति । शपमानायेति शपिः स्वरितेत् ॥ २५ ॥

कोपाभावे हेत्वन्तरमाह—

**जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः ।**
**विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥ २६ ॥**

ये साधवस्ते जितकोपवेगा, न कदाचिदपि कुप्यन्तीत्यर्थः । नीचजनस्तु क्रोधेन जितो वशीकृतः, अतश्च साधुजितेन कोपेन जितस्य मूर्खस्य मनस्विभिः सह का विरोधिता कीदृशो विरोधो, न युक्तं वैरम् । यो हि जितविजितस्तस्य जयिभिः सह स्पर्धैव न युक्तेत्यर्थः । कृष्णश्च जितक्रोधस्त्वं च क्रोधजितः, इति कीदृक् साम्यं युवयोः ॥ २६ ॥

नच क्षमया कृष्णस्य किंचिल्लाघवमिति वक्तुमाह–

**वचनैरसतां महीयसो न खलु व्येति महत्त्वमुद्धतैः ।**
**किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता ॥ २७ ॥**

रूक्षैर्दुर्जनवचोभिरुन्नतानां महत्त्वं गुरुत्वं नैव व्येति गच्छति, नह्यौर्वरैर्भू-

स्थैः परागैरवकीर्णस्य मलिनीकृतस्य मणेर्महार्घता बहुमूल्यत्वं नश्यति । उर्वरावनिः ॥ २७ ॥

निर्गुणत्वाच्च वः परुषवाक्त्वं युक्तमेवेति वक्तुमाह—

**परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः ।**
**परदोषकथाभिरल्पकः स जनं तोषयितुं किलेच्छति ॥ २८ ॥**

यस्य स्वगत आत्मीयो न कश्चिद्गुणो नन्दयिता न विद्यते, सोऽल्पको नीचोऽन्यदोषसंकीर्तनेन किल जनं तोषयितुं वाञ्छति, न च शक्नोति किलेत्यर्थः । तदेतेन सर्वेषां तेषां निर्गुणत्वमुक्तम् ॥ २८ ॥

ननु वयं नैवात्मनो दोषं हरेर्वा गुणं पश्यामस्तत्कथं भवानेवमाहेत्याह—

**सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ।**
**स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥ २९ ॥**

ये दुर्जनास्ते एवंविधाः । कीदृशाः स्वदुर्नये सहजान्धदृशो निजदोषे जात्यन्धाः, स्वदोषं न कदाचिदपि पश्यन्तीत्यर्थः । परदोषदर्शने तु दिव्यचक्षुषः सहस्राक्षाः, अन्यस्खलितं दूरादेव पश्यन्तीत्यर्थः । तथा स्वगुणे उच्चगिर उद्दामवाचः, आत्मगुणग्रहणे सहस्रजिह्वा इत्यर्थः । परवर्णग्रहणेऽन्यगुणसंकीर्तने मुनिव्रता वाचंयमा मूकाः, अन्यगुणं नैव भाषन्ते इत्यर्थः । अतश्चासत्स्वभावादात्मदोषं परगुणं वा यूयं नैव पश्यथेति प्रकृतमुक्तं भवति । वर्णो गुणः ॥ २९ ॥

यच्च हरिणा वो दोषाविष्करणं नाकारि एष तस्यापि स्वभावः, इति वक्तुमाह—

**प्रकटान्यपि नैपुणं महत् परवाच्यानि चिराय गोपितुम् ।**
**विवरीतुमथात्मनो गुणान् भृशमाकौशलमार्यचेतसाम् ॥ ३० ॥**

आर्यचेतसां मनस्विनां चिरं लोकविदितानप्यन्यदोषान् गोपितुं रक्षितुं महत्कौशलं, तथात्मगुणान् प्रसिद्धानपि विवरीतुमाख्यातुं भृशमाकौशलमत्यर्थमचातुर्यम्, परदोषानात्मगुणांश्च सन्तो न जातु कीर्तयन्तीत्यर्थः । तस्मान्न यूयं देवेनाविष्कृतदोषा इति तात्पर्यार्थः ॥ ३० ॥

युक्तं चैतत्—यत्सन्तः स्वगुणग्रहणमूका, अन्ये तु स्वगुणोच्चगिर इति वक्तुमाह—

**किमिवाखिललोककीर्तितं कथयत्यात्मगुणं महामनाः ।**
**वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ ३१ ॥**

यो महामना विपुलचित्तः स किमिव कथमिवात्मगुणं कथयति, यतोऽखिललोककीर्तितं सर्वलोकैः कीर्त्यते घोष्यते । असाधुस्तु तेन हेतुनात्मगुणं स्वयं वक्ति, यतस्तद्गुणस्य न कश्चिद्वक्ता कीर्तयितृत्वात् । अतश्च यद्यसौ नाचष्टे तत्कास्य वराकस्य गतिः, तस्माद्युक्ता भवतामात्मस्तुतिः ॥ ३१ ॥

कृष्णश्च मूकोऽपि भवत्कर्मणा कोपं दर्शयिष्यतीत्याह—

**विसृजन्त्यविकत्थिनः परे विषमाशीर्विषवन्नराः क्रुधम् ।**
**दधतोऽन्तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ ३२ ॥**

ये नराः पुरुषा अविकत्थिनः श्लाघामकुर्वन्तः सन्तः परे शत्रौ कोपं मुञ्चन्ति, विषमाशीर्विषा इव सर्पा यथा । यथाहिर्मूकः सन् दशति, एवं पौरुषान्विताः किंचिदप्यब्रुवाणाः कोपविषमुद्वमन्तीत्यर्थः । उक्तंच–"पौरुषेण तु यो युक्तः स न कत्थितुमर्हती" ति । ये त्वितरेऽपुरुषास्ते त्वन्तर्हृदयेऽसाररूपतां तुच्छत्वं दधतो ध्वनिसारा वाक्प्रधानाः वाङ्मात्रेण शूरा न कर्मणेत्यर्थः । पटहा इव आनका ह्यभ्यन्तरेऽसारत्वं सुषिरत्वं बिभ्रतो ध्वनिसाराः शब्दपटवः । तदेतेनैतेषां तुच्छत्वं शौरेश्च शौर्यमुक्तम् । नरशब्दोऽत्र साहचर्यात् तद्गते पौरुषे वर्तते न जातिमात्रे । यथा— "निघ्नन्नभिमुखः शूरानेकशो बहुशः परान् । सङ्ग्रामे विचरत्येष पुरुषः पुरुषो यथे"ति ॥ ३२ ॥

द्व्यर्थोक्तावुत्तरमाह—

**नरकच्छिदमिच्छतीक्षितुं विधिना येन स चेदिभूपतिः ।**
**द्रुतमेतु न हापयिष्यते सदृशं तस्य विधातुमुत्तरम् ॥ ३३ ॥**

किं बहुना, स चेदिराजो येन विधिना प्रकारेण, संधिना विग्रहेण वा नरकारिं हरिं दिदृक्षते, तस्य विधेः सदृशमनुरूपमुत्तरं प्रतिक्रियां विधातुं दातुं न हापयिष्यते न हारयिष्यते, तस्माद् द्रुतमेतु तूर्णमागच्छतु । भगवान् सदृशमुत्तरं विधत्ते । स च नागच्छन् हारयत्यतो द्रुतमेतु यथा न हारयतीत्यर्थः । वैरायमाणो नूनमसौ नङ्क्ष्यतीति नरकच्छिद्ग्रहणेन सूच्यते ॥ ३३ ॥

'अभिधाय तथा तदप्रिय'मित्यादि प्रियवचनं यदुक्तं तदनुपपन्नमिति वक्तुमाह–

**समनद्ध किमङ्ग भूपतिर्यदि संधित्सुरसौ किलामुना ।**
**हरिराक्रमणेन संनतिं किल बिभ्रीत भियेत्यसंभवः ॥ ३४ ॥**

यद्यसौ चैद्यो हरिणा सह संधित्सुः संधिं चिकीर्षुस्तत्किं समनद्ध संवर्मितवान् ! भयार्थं हरेश्चैतदशोभनम्, यत आक्रमणेनाक्रान्त्या या भीर्भीतिस्तया हरिर्विष्णुः संनतिं प्रणतिं बिभ्रीत धारयेदित्यसंभवो नैव तत्संभवीति परमताक्षेपः। भगवान् किल प्रणतिवश्यो न बलेन । यो हि हरिः सिंहः स आक्रमणेन न बिभेति । बिभ्रीतेत्याशङ्कायां लिङ् ॥ ३४ ॥

यच्च भवद्भिर्भगवतो रूक्षमवादि तदात्मन एवानर्थायेति वक्तुमाह—

**महतस्तरसा विलङ्घयन् निजदोषेण विधीर्विनश्यति ।**
**कुरुते न खलु स्वयेच्छया शलभानिन्धनमिद्धदीधितिः ॥ ३५ ॥**

यो विधीर्मूर्खः स उन्नतान् विलङ्घयन् आत्मापराधेनैव नश्यति, महदाक्रान्तिर्हि महान् दोषः । तथाहि–इद्धदीधितिरग्निरात्मेच्छया शलभान्न भस्मसात्कुरुते यावत्तैरेव नाक्रान्तः, तस्मात् स्वदोषेणैव यूयं न भविष्यथेति वाक्यार्थः ॥ ३५ ॥

त्वया च शपमानेनास्मद्धितमेवानुष्ठितमिति वक्तुमाह—

**यदपूरि पुरा मधुद्विषो न मुखेन स्वयमागसां शतम् ।**
**अथ संप्रति पर्यपूपुरत् तदसौ दूतमुखेन चेदिपः ॥ ३६ ॥**

पुरा पूर्वं चैद्यो यदागःशतं स्वयं मुखेन मधुरिपोर्नापूरि नापूरितवान्, अथ संप्रति तदपराधशतमसौ त्वन्मुखेन पर्यपूपुरदपूरयत्, भवदपराधं तस्यैव गणयाम इत्यर्थः। भृत्यापराधाद्धि स्वामिनो दण्डः, तस्मात् संपन्नमनोरथा वयमिति भावः । अपूरीति "दीपजनबुधपूरी"ति कर्तरि चिणादेशः । पर्यपूपुरदिति "णिश्रुदुस्रुभ्यः कर्तरि चङ्" ॥ ३६ ॥

**यदनर्गलगोपुराननस्त्वमतो वक्ष्यसि किंचिदप्रियम् ।**
**विवरिष्यति तच्चिरस्य नः समयोदीक्षणरक्षिताः क्रुधः ॥ ३७ ॥**

किं बहुना, अतोऽनन्तरं यत्किञ्चिदप्रियं वक्ष्यसि तन्नः क्रुधोऽस्मदीयान् कोपांश्चिरस्य विवरिष्यति प्रकाशीकरिष्यति, यत आदितः समयोदीक्षण-

रक्षिताः वचनप्रतिपालननिगडिताः। एवं ह्युक्तं "सहिष्ये शतमागांसी"ति इदानीं तु नूनं क्रुध्यामः । कीदृक् त्वमनर्गलं नीरन्ध्रं यद्गोपुरं पुरद्वारं तत्तुल्यमाननं यस्य सोऽनर्गलगोपुराननः यत्किञ्चनवादी । यथानर्गलाद्द्वारात् सर्वो निःसरत्येवं भवदास्याद्संबद्धमित्यर्थः । अर्गला कवाटं तद्रक्षाकाष्ठं वा ॥ ३७ ॥

**निशमय्य तदूर्जितं शिनेर्वचनं नप्तुरनाप्तुरेनसाम् ।**
**पुनरुज्झितसाध्वसं द्विषामभिधत्ते स्म वचो वचोहरः ॥ ३८ ॥**

अथ द्विषां वचोहरो रिपुदूतो भूयो वचनमवोचत्, कथमुज्झितसाध्वसं त्यक्तभयम्, निर्भयो हि दूतः शस्तः । एनसामनाप्तुर्निष्पापस्य शिनेर्नप्तुः शैनेयस्य सात्यकेस्तदूर्जितं तेजोयुक्तं वचो निशमय्य श्रुत्वा । स्वार्थे णिच् । "ल्यपि लघुपूर्वादि"त्ययादेशः। शिनिः क्षत्रियविशेषः । नप्ता पौत्रः । आप्नोतीत्याप्ता । वचांसि हरतीति वचोहरो दूतः "हरतेरनुद्यमनेऽच्" ॥ ३८ ॥

किमवादीदित्याह-

**विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः ।**
**यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ३९ ॥**

यः पृथग्जनः प्राकृतः स स्वयमेवात्महितं न विविनक्ति न पर्यालोचयति, यतो बुद्धिदुर्विधः प्रज्ञादरिद्रः । यश्चाज्ञः स कथं विचारक्षम इति नास्यासावपराधः । इदं तु महदाश्चर्यम्, यदद एतत् स्वहितमन्यैरुक्तमप्यसौ न वेत्ति, अत्र च वक्ष्यमाणोऽभिप्रायः ॥ ३९ ॥

एतदेवोपोद्वलयति—

**विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः ।**
**न परोपहितं नच स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ४० ॥**

ये बुधाः प्राज्ञास्ते एष्यदपायमागामिनीं बाधां स्वयं विदुर्बुध्यन्ते, आत्मबोधाभावाद्वा परतः श्रद्दधतेऽन्यस्मादाद्रियन्ते, अन्येनोक्तं सदवहिताः शृण्वन्तीत्यर्थः । यस्त्वल्पधीर्मूर्खः सोऽनुभवादृतेऽनुभवं वर्जयित्वा, न परोपहितमन्येनोक्तं सत् प्रमिमीते परिच्छिनत्ति, नापि स्वत आत्मना । यावत्तैरापन्नाप्ता तावद्भविष्यत्येषेति न प्रतियन्तीत्यर्थः । एष्यंश्चासावपाय एष्यदपायः ॥ ४० ॥

येनाभिप्रायेणैतदुक्तं तदाविष्कर्तुमाह-

**कुशलं खलु तुभ्यमेव तद्वचनं कृष्ण यदभ्यधामहम् ।**
**उपदेशपराः परेष्वपि स्वविनाशाभिमुखेषु साधवः ॥ ४१ ॥**

हे कृष्ण यदेतद्वचोऽभ्यधामवोचं तत्खलु तुभ्यमेव हितं त्वत्प्रियार्थमुक्तमित्यर्थः । ननु शत्रुः सन् कस्मादपृष्टोऽपि हितं वक्तीत्याह—ये सज्जनास्ते व्यसनसंमुखेषु शत्रुष्वप्युपदेशपरा युक्तायुक्ताभिधायिनः, त्वं च नाशिष्यन्न स्वयं वेत्सि नाप्युक्तं मया मौर्ख्याच्छृणोषि । खलुर्वाक्यालंकारे । अभ्यधामिति धाञो लुङ् । मिपोऽम् ॥ ४१ ॥

द्व्यर्थोक्तौ कारणमाह—

**उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते ।**
**प्रविभज्य पृथङ् मनीषया सगुणं यत् किल तत् करिष्यसि ॥ ४२ ॥**

त्वरया कालक्षेपं हरता मया सान्त्वमसान्त्वं च द्वयं युगपदेकेन यत्नेनैतदर्थमुक्तम्, यथा यत्किल सगुणं चित्ततोषि तदेव बुद्ध्या पृथग्विभज्य विवेच्य विधास्यसीति । एतदुक्तं भवति—द्वयमेवाहमभिधातुमागतः, त्वरया तु उभयमुक्तं प्रावीण्यप्रदर्शनार्थं च ॥ ४२ ॥

अस्थाने चैवं कथनादसन्मया कथितमिति कथयति—

**अथवाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् ।**
**रविरागिषु शीतरोचिषः करजालं कमलाकरेष्विव ॥ ४३ ॥**

अथवेति स्ववचनाक्षेपे, अयुक्तं मयाकारीत्यर्थः । अतो येऽभिनिविष्टबुद्धयो ग्रहिकास्तेषु सुभाषितं व्यर्थकतां व्रजति नैष्फल्यं प्रतिपद्यते, यथा रविरागिषु प्रियचण्डांशुषु पद्मषण्डेषु शीतांशुकिरणनिकरस्तत्संस्पर्शेऽविकासात् । अभिनिविष्टा एकत्रैवाभिनिवेशवती बुद्धिर्येषां तेऽभिनिविष्टबुद्धयः ॥ ४३ ॥

**अनपेक्ष्य गुणागुणं जनः स्वरुचिं निश्चयतोऽनुधावति ।**
**अपहाय महीपमार्चिचत् सदसि त्वां ननु भीमपूर्वजः ॥ ४४ ॥**

हिताहितं हित्वा व्यक्तं लोको निजमतमनुतिष्ठति । कुत इत्याह—यदयं युधिष्ठिरश्चैद्यमुपेक्ष्य त्वामार्चिचदार्चीदपूपुजत्, त्वत्तो हि स गुणवत्तरः । आर्चिचदिति लुङ्, चङ् "अजादेर्द्वितीयस्य । नन्द्राः संयोगादयः" । ननुशब्दो हेतौ ॥ ४४ ॥

नचैतावतास्माकं हीनतेत्याह—

**त्वयि भक्तिमता न सत्कृतः कुरुराजा गुरुरेव चेदिपः ।**

**प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुम्भजो मणिः ॥ ४५ ॥**

तव भक्तिमत्त्वात् कुरुराजेनापूजितोऽपि चैद्यो गुरुरेव महान् नतु ऊनः। एतदेव दृष्टान्तेन द्रढयति--मांसप्रियत्वात् सिंहेन त्यक्तं गजमौक्तिकं किमवद्यं दुष्टम् । कुरुषु राजते इति कुरुराट् क्विप् ॥ ४५ ॥

पार्थस्याप्रियं वदंश्चैद्यस्य महत्त्वमाह—

**क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः ।**

**शिरसौघमदत्त शंकरः सुरसिन्धोर्मधुशत्रुरङ्घ्रिणा ॥ ४६ ॥**

यो धवलोऽवदातचरितः स धवलैः सितकीर्तिभिर्महद्भिरुच्चकैः क्रियते शिरसि धार्यते, सितेतरैः कृष्णैः पापिष्ठैस्त्वधो हीने स्थाने । तथा च-शुक्लत्वात् शंभुरेव गङ्गौघं सितं मूर्ध्ना दधार, मधुरिपुः कृष्णः पादेन । युधिष्ठिरश्चामहान् कथमिवोत्तमं नृपमर्चयेत् ॥ ४६ ॥

नचार्चया त्वयि महत्त्वमिति वक्तुमाह—

**अबुधैः कृतमानसंविदस्तव पार्थैः कथमेव योग्यता ।**

**सहसि प्लवगैरुपासितं न हि गुञ्जाफलमेति सोष्मताम् ॥ ४७ ॥**

मूर्खैः पार्थैः कृतमानसंविदो विहितपूजाचारस्य ते कुतो हेतोर्योग्यता महत्त्वम् । तथाहि-शीतकाले वानरैर्गुञ्जाफलं रक्तिकानिकरः शीताभावार्थं निषेवितं किं सोष्मतामेत्युष्णं भवति। जातिस्वभावान्मर्कटा हेमन्ते गुञ्जाफलान्यपि भ्रान्त्या सेवन्ते इति वार्ता। पार्थानां प्लवगा उपमानं, कृष्णस्य गुञ्जाफलं, योग्यताया औष्ण्यम् । एवशब्दोऽसंभावनायाम् । मान एव संविदाचारः, यदि वा मानश्च संविच्च, संवित् संभाषणं कुशलप्रश्नः । मार्गशीर्षः सहा ज्ञेयः ॥ ४७ ॥

यच्चोक्तं 'विवरिष्यति तच्चिरस्य न' इत्यादि तत्रोत्तरं दित्सुराह—

**अपराधशतक्षमं नृपः क्षमयात्येति भवन्तमेकया ।**

**हृतवत्यपि भीष्मकात्मजां त्वयि चक्षाम समर्थ एव यत् ॥ ४८ ॥**

भगवन्तमागःशतसहिष्णुमप्येकयैव तितिक्षया राजात्येति जयति । तितिक्षैव केवला जयकारणम्, यदसौ शक्तोऽपि त्वयि रुक्मिणीं हरति सति

चक्षाम सोढवान् । स्त्रीहरणं हि सर्वतो विशिष्यते ॥ ४८ ॥

एतदेव विवृणोति—

**गुरुभिः प्रतिपादितां वधूमपहृत्य स्वजनस्य भूपतेः ।**
**जनकोऽसि जनार्दन स्फुटं हतधर्मार्थतया मनोभुवः ॥ ४९ ॥**

हे जनार्दन ? कृष्ण लोकपीडन वा त्वं स्फुटं निश्चितं हतधर्मार्थतया धर्मार्थत्यागेन मनोभुवः कामस्य जनक उत्पादकः । धर्मार्थौ हित्वा यदा भवान् कामैकनिरतस्तदा मनसिजस्य जनकोऽसि न तु प्रद्युम्नस्योत्पादकत्वात् । तदेव त्यक्तधर्मार्थत्वमाह-गुरुभिर्मातापित्रादिभिः प्रतिपादितां दत्तां स्वजनस्य पितृस्वस्रीयस्य भूपतेः शिशुपालस्य वधूं रुक्मिणीमपहृत्य बलान्नीत्वा मनोभवजनकोऽसीति सम्बन्धः । अतश्च यः परस्य दारानपहरति तत्रापि स्वजनस्य, तस्य कीदृशो धर्मोऽर्थो वा । तस्माद्युक्तं हतधर्मार्थतया कामस्य जनको नतु कन्दर्पावतारस्य प्रद्युम्नस्य पितृत्वात् । अत एव जनार्दनत्वम् । जनानर्दयतीति कृत्वा, नन्द्यादिः ॥ ४९ ॥

किं बहुना—

**अनिरूपितरूपसंपदस्तमसो वान्यभृतच्छदच्छवेः ।**
**तव सर्वगतस्य संप्रति क्षितिपः क्षिप्नुरभीशुमानिव ॥ ५० ॥**

यतश्चैवमतोऽधुना तमसो वा तमस्तुल्यस्य तव रविरिव राजा क्षिप्नुर्नोदकस्तिरस्कर्ता, यथा सूर्यस्तिमिरं क्षपयत्येवं चैद्यस्त्वामित्यर्थः । कीदृशस्य तव अनिरूपिता अज्ञाता रूपस्य स्वभावस्य संपदतिशयो यस्यास्थिररूपस्येत्यर्थः । अन्यभृतच्छदच्छवेः परपुष्टपक्षकृष्णस्य । सर्वं यत्किञ्चिद्गतः प्राप्तस्तस्य सर्वगतस्य यत्किञ्चनकारिणः । तमसोऽप्यनिरूपिता अदृष्टा रूपाणां शुक्लादीनां संपद्यत्र तस्य, तथा कोकिलकान्तेः सर्वगतस्य च । अथ च स्तुतिरेव प्रतीयते—यथा तमसो रविः क्षिप्नुरेवं तव अनिरूपिता रूपाणां वराहनृसिंहादीनां संपद्भूयस्ता यस्य तस्यानिरूपितरूपसंपदो विश्वरूपस्य, सर्वगतस्य सर्वव्यापिनः । तवेति सम्बन्धविवक्षया षष्ठी । यथा न माषाणामश्नीयादिति । क्षिपति तच्छीलः क्षिप्नुः "त्रसिगृधिधृषिक्षिपेः क्नुः" ॥ ५० ॥

यद्येवं किमर्थं सान्त्वमवादीरित्याह—

**क्षुभितस्य महीभृतस्त्वयि प्रशमोपन्यसनं वृथा मम ।**
**प्रलयोल्ललितस्य वारिधेः परिवाहो जगतः करोति किम् ॥ ५१ ॥**

त्वयि चैद्यस्य कुपितस्य मम प्रशमोपन्यसनं सामकथनं निष्कारणं वृथा, नह्यस्मत्प्रयुक्ते सान्त्वेऽसौ न कुप्यतीत्यर्थः । कल्पापाये उच्छृङ्खलस्याब्धेः परिवाह उच्छ्वासो जलनिर्गममार्गो जगतः किं करोति नहि प्रवाहे कृतेऽसौ न क्षुभ्यति । तदेतेनैतदुक्तं भवति–अहं तुल्ये आगमने सान्त्वं स्वेच्छयैवावोचं, नतु सन्धिस्तस्य मतः, अतश्च 'यदि संधित्सु' रित्यादि निरवकाशम् । महीभृत इति "षष्ठी चानादरे" ॥ ५१ ॥

यदि समाने आगमने त्वं स्वेच्छया सान्त्वमुक्तवानागमनस्य तावत्प्रयोजनमुच्यताम्—

**प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।**
**न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥ ५२ ॥**

अहं राज्ञा संग्रामाय यदूनाह्वातुं प्रहितः प्रेषितः । ननु शत्रुणा छलेन प्रहर्तव्यं तत्कथमसावाह्वास्तेत्याह–ये महौजसस्तेजस्विनस्ते छलेन मायया नापकुर्वन्ति न बाधन्ते, यथा मलिम्लुचाश्चौराः, ते हि च्छलं गवेषयन्ति न वीराः ॥ ५२ ॥

**तदयं समुपैति भूपतिः पयसां पूर इवानिवारितः ।**
**अविलम्बितमेधि वेतसस्तलवन्माधव मा स्म भज्यथाः ॥ ५३ ॥**

यत एवं तत् तस्मात् चैद्यो जलौघ इवानिषिद्ध आयात्येव, अतश्चाविलम्बितं शीघ्रं वेतस एधि वेतसरूपो भव प्रणमेत्यर्थः । तलवत् तालवृक्षवत् कृष्ण! मा भज्यथाः मा नंशः, मा मृथा, अप्रणमन्न भवसि नूनमित्यर्थः । अत्र च वेतसतालौ निदर्शनम् । पयःपूरे हि आगते वेतसः प्रणमति, प्रणतत्वाच्चाक्षतिर्भवति । यदुक्तम्- "वैतसीं वृत्तिमाश्रये"दिति । उन्नतास्तु तालादयः पतन्त्येव। उक्तं च- "पतत्यङ्गारवर्षे वा वाति वा प्रलयानिले । तालः स्तब्धतयारब्धस्तयैव सह नश्यती"ति ॥ एधीत्यस्तेर्लोट् "घ्वसोरेद्धौ" । भज्यथा इति कर्मकर्तरि । "माङि लुङ् । स्मोत्तरे लङ्च" । माङाशङ्कायां निषेधे वा । तलस्तालः, यथा

---

१ 'ने' क. ग. पाठः ।

शरः शारः ॥ ५३ ॥

ननु प्रणत्याप्यसौ शिशुपालत्वान्मादृशानां न संमुख इत्याह—

**परिपाति स केवलं शिशूनिति तन्नामनि मा च विश्वसीः ।**
**तरुणानपि रक्षति क्षमी स शरण्यः शरणागतान् द्विषः ॥ ५४ ॥**

तस्य चैद्यस्य नाम तन्नाम तस्मिंस्तन्नामनि शिशुपालाख्ये शिशूनेव परं पाति रक्षतीति मा च विश्वसीः, एवं मैव बुद्धाः, अन्वर्थं तन्नाम मा ज्ञासीरित्यर्थः। यतोऽसौ तरुणानपि रिपून् शरणागतान् पात्येव, यस्मात् क्षमी सहिष्णुः, तथा शरणे साधुः शरण्यः शरणागतवत्सलः। विश्वासो बोधः। चोऽवधारणे। मैव बुद्धा इत्यर्थः। क्वचित्तु न विश्वसीरिति पाठः। तत्र तच्छिशुपाल इति प्रकृतत्वान्नाम यस्य, तत्र शिशुपाले राजनि शिशूनेवैष पातीत्यतो हेतोरेतद्बुद्धौ कृत्वा मा न विश्वसीरविश्वासं मा गाः विश्वसीरेवेत्यर्थः। यतोऽसौ तरुणानपि क्षमी शरण्यो रक्षतीति योज्यम् ॥ ५४ ॥

एतदेवोपोद्बलयति—

**न विदध्युरशङ्कमप्रियं महतः स्वार्थपराः परे कथम् ।**
**भजते कुपितोऽप्युदात्तधीरनुनीतिं नतिमात्रकेण यः ॥ ५५ ॥**

स्वार्थपराः परे महात्मनः कथं निर्भयमेवाप्रियं न विदध्युः मा कार्षुः, यतो यः क्रुद्धोऽपि विपुलचित्तत्वात् प्रणतिमात्रकेणैवानुनयमाश्रयति प्रसीदति। "प्रणिपातप्रतीकारः संरम्भो हि महात्मना"मिति। अतश्च यद्यपि भवानसकृत् तस्मै द्रुह्यति तथापि नत्यासौ स्वाराध एवेति वाक्यार्थः ॥ ५५ ॥

अथ बीजान्तरमाह—

**हितमप्रियमिच्छसि श्रुतं यदि संधत्स्व पुरा विनश्यसि ।**
**अनृतैरथ तुष्यसि प्रियैर्जयताज्जीव भवावनीश्वरः ॥ ५६ ॥**

किं बहुना, अप्रियमपि हितं यदि शुश्रूषसे तत् संधत्स्व संधिं कुरु प्रणम, यस्मात्त्वं कोपयन् पुराश्वेव विनश्यसि विनाशमाप्स्यसि। अथ चेत्प्रियवचनैरनृतैरलीकैस्तुष्यसि तज्जयतात् जीव सार्वभौमो भव, एतानि किल प्रियवचांस्यसत्यानि च। संधत्स्वेति प्रार्थनायां लोट्। विनश्यसीति "यावत्पुरानिपातयोर्लट्"। जयतादिति हेस्तातङ् ॥ ५६ ॥

कंसकेशिमुरादिवधात्पौरुषावष्टम्भो राजनि तव न युक्त इति वक्तुमाह—

**प्रतिपक्षजिदप्यसंशयं युधि चैद्येन भवान् विजेष्यते ।**
**ग्रसते हि तमोपहं मुहुर्ननु राह्वाह्वमहर्पतिं तमः ॥ ५७ ॥**

जितारिरपि त्वं नूनं राज्ञाभिभूयसे । तथाहि—ध्वान्तध्वंसकमपि दिनकरं राह्वाह्वं राहुसंज्ञं तमोऽसकृद् ग्रसत एव । विजेष्यते इति कर्मणि लकारः । तेनैव च कर्मणोऽभिहितत्वाद् द्वितीयाभावः । तमोपहमिति "अपे क्लेशतमसो"रिति डः । राहुरित्याह्वा[1] यस्य तदिति राह्वाह्वम् अह्नः पतिरहर्पतिः "अहन् । रोऽसुपि" ॥ ५७ ॥

एतदेवोपोद्बलयति—

**अचिराज्जितमीनकेतनो विलसन् वृष्णिगणैर्नमस्कृतः ।**
**क्षितिपः क्षपितोद्धतान्धको हरलीलां स विडम्बयिष्यति ॥ ५८ ॥**

स चैद्यो विलसन् संग्रामे विचरन् अचिरादेव हरलीलां शंभुचेष्टां विडम्बयिष्यति अनुकरिष्यति । तथाहि—कीदृशोऽसौ जितमीनकेतनः परिभूतप्रद्युम्नः, अत एव वृष्णिगणैर्यदुबलैर्नमस्कृतोऽभयार्थं प्रणतः, तथा क्षपिता हता उद्धताः सगर्वा अन्धका राजन्यकविशेषा येन स क्षपितोद्धतान्धकः । भगवानपि दग्धमन्मथः, वृष्णिभिः पशुभिर्गणैश्च नमस्कृतो ध्वस्तान्धकासुरश्च ॥ ५८ ॥

अतश्चास्य न किञ्चित् त्वं भवद्बलं वा गणनास्पदमित्याह—

**निहतोन्मददुष्टकुञ्जराद् दधतो भूरि यशः क्रमार्जितम् ।**
**न बिभेति रणे हरेरपि क्षितिपः का गणनास्य वृष्णिषु ॥ ५९ ॥**

चेदिपतिर्हरेरपि त्वत्तोऽपि न बिभेति न त्रस्यति, वृष्णिषु यदुविशेषेषु त्वस्य का गणना क आदरः । कीदृशात् निहत उन्मदो मत्तः कुञ्जरः कुवलयापीडो येन, तथा क्रमार्जितं विक्रमोत्थितं प्रभूतं यशो बिभ्रतः । योऽपि निहतसमदभीषणद्विरदाद्धरेः सिंहान्न बिभेति तस्य वृष्णिषु मेषेषु का गणनास्था ॥ ५९ ॥

भूयोऽप्यासर्गात् तन्माहात्म्यवर्णनम्—

**न तदद्भुतमस्य यन्मुखं युधि पश्यन्ति भिया न शत्रवः ।**
**द्रवतां ननु पृष्ठमीक्षते वदनं सोऽपि न जातु विद्विषाम् ॥ ६० ॥**

---

१ 'ह्वानं' क. ग. पाठः ।

यदस्य चैद्यस्य भयेनारयो रणे मुखं नेक्षन्ते न तच्चित्रम्, यतः सोऽपि पलायमानानां तेषां पृष्ठमेवेक्षते नतु कदाचिन्मुखम्, अतश्च द्वयस्यापि मुखादर्शनादेतद्वदनालक्षणेऽरीणां को विस्मय इति रणस्थैर्यमस्योक्तम् ॥ ६० ॥

**प्रतनूल्लसिताचिरद्युतः शरदं प्राप्य विखण्डितायुधाः ।**

**दधतेऽरिभिरस्य तुल्यतां यदि नासारभृतः पयोभृतः ॥ ६१ ॥**

अस्य राज्ञो येऽरयस्तैः साम्यं मेघा वहन्ति, यदि नासारभृतो वेगवद्वर्षिणो यदि न भवन्ति, आसारभृत्त्वे तु न साम्यम्, एतच्छत्रूणामासाररहितत्वान्मित्रबलवर्जितत्वात् । इदानीं साम्यम् । कीदृशाः मेघाः प्रतन्व्य उल्लसिताः स्फुरिता अचिरद्युतो विद्युतो येषाम्, तथा शरदमृतुं प्राप्य विखण्डितायुधा नष्टेन्द्रचापाः । अरयोऽपि प्रतनु स्वल्पमुल्लसितमुल्लासः स्फुरणं येषां ते प्रतनूल्लसिता, अचिरं च द्युत् कान्तिर्येषां तेऽचिरद्युतः, तथा शरदं चैद्यं बाणवर्षिणं प्राप्यासाद्य विखण्डितायुधाः छिन्नप्रहरणाः ॥ ६१ ॥

**मलिनं रणरेणुभिर्मुहुर्द्विषतां क्षालितमङ्गनास्रुभिः ।**

**नृपमौलिमरीचिवर्णकैरथ यस्याङ्घ्रियुगं विलिप्यते ॥ ६२ ॥**

तथा यस्य पादयुगं क्षितिपमुकुटमयूखैरेव वर्णकैश्चन्दनैर्विलिप्यते रज्यते, राजानो यस्य शिरसा पादवन्दनं कुर्वन्तीत्यर्थः । कीदृशं तत् समररजोभिर्धूसरम्, तथा शत्रुनारीनयनतोयैर्धौतम् । योऽपि वर्णकेनानुलिम्पति स पूर्वं धूलिरूषितत्वात् स्नाति । अथशब्दोऽत्र चार्थे ॥ ६२ ॥

**समराय निकामकर्कशं क्षणमाकृष्टमुपैति यस्य च ।**

**धनुषा सममाशु विद्विषां कुलमाशङ्कितभङ्गमानतिम् ॥ ६३ ॥**

यस्य च शत्रुकुलं धनुषा समं चापेन सहानतिमुपैति, धनुश्चेत्तेन सज्जीकृतं तत्तदैवारयो नता इत्यर्थः । अथ च द्विषां कुलं धनुषा समं सदृशमित्यर्थान्तरम् । तत्र कीदृशं तावदरिकुलं, निकामकर्कशमतिकठोरं दुर्जयमित्यर्थः । समरार्थं च क्षणमाकृष्टमाहूतम्, आशङ्कितभङ्गं संभावितनाशम् । यं हि राजा ह्वयते सोऽवश्यमात्मनाशमाशङ्कते । धनुरपि निकामकर्कशमतिदृढं युधार्थं चाकृष्टं चक्रीकृतम् । आशङ्कितश्च भङ्गस्त्रुटनं यस्य ॥ ६३ ॥

क्रूरमपि तत् चैद्याकर्षणान्नूनं स्फुटत्यधुनेत्याशङ्क्यते—

**तुहिनांशुममुं सुहृज्जनाः कलयन्त्युष्णरुचिं विरोधिनः ।**
**कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथापरे ॥ ६४ ॥**

अमुं राजानं बान्धवाः शशिनं कलयन्त्यवगच्छन्ति आह्लादकत्वात्, वैरिणस्तु चण्डांशुं तापकारित्वात् । के यथा एकमप्यनेकरूपं मन्यन्ते, इत्याह–कृतिभिरैन्द्रजालिकैः कृतदृष्टिविभ्रमा जनितचक्षुर्बन्धा यथैकमेव वस्तु रज्ज्वादिकं केचित् स्रजं मालां जानन्त्यन्ये तु सर्पम् । विभ्रमो भ्रान्तिः ॥ ६४ ॥

**दधतोऽसुलभक्षयागमास्तनुमेकान्तरताममानुषाः ।**
**भुवि सांप्रतमप्रतिष्ठिताः सदृशा यस्य सुरैररातयः ॥ ६५ ॥**

यस्य राज्ञोऽरयः सांप्रतं देवैस्तुल्याः, यतोऽसुलभो दुष्प्रापः क्षयागमो गेहागमनं येषां, नित्यं वनस्थत्वात् । तदाह–एकान्तरतामरण्यसक्तां तनुं देहं बिभ्रतः, अविद्यमानाश्च दारा मानुषा वा येषां ते अमानुषाः, तथा भुवि भूमावप्रतिष्ठिता गिरिदुर्गस्थत्वात् । सुरा अपि दुष्प्रापविनाशागमाः, एकान्तं सततं च रतं निधुवनं यस्यास्तां तनुं दधतः, न मानुषा अमानुषा अमराः, भुवि अप्रतिष्ठिताः स्वर्गस्थत्वात् ॥ ६५ ॥

**अतिविस्मयनीयकर्मणो नृपतेः पश्य विरोधि चेष्टितम् ।**
**यदमुक्तनयो नयत्यसावहितानां कुलमक्षयं क्षयम् ॥ ६६ ॥**

अत्यद्भुतकारिचेष्टितस्य राज्ञो विरुद्धं कर्म पश्य, यदसौ द्विषत्कुलमक्षयमपि क्षयं नयति । यस्य हि क्षयो विनाशो गृहं वा नास्ति स कथं नाशं गृहं वा नीयते इति विरोधः, अविरोधस्तु क्षयशब्दस्य विनाशार्थत्वादक्षयशब्दस्याविद्यमानगृहार्थत्वात् । गृहेभ्योऽरीनुत्सार्यायमपचयं प्रापयतीति वाक्यार्थः । अमुक्तनयः श्रितनीतिमार्गः । नयतेर्बाहुलकात् "एरच्" । विस्मयन्तेऽनेनेति विस्मयनीय इति करणेऽनीयर् ॥ ६६ ॥

**चलितोर्ध्वकबन्धसंपदो मकरव्यूहनिरुद्धवर्त्मनः ।**
**अतरत् स्वभुजौजसा मुहुर्महतः सङ्गरसागरानसौ ॥ ६७ ॥**

असौ राजा मुहुरसकृद् दुस्तरान् समरोदधीनात्मीयबाहुबलेनैवातरदाचक्रामेति पौरुषातिशयोक्तिः । कीदृशान् चलिता नृत्ता ऊर्ध्वाः कबन्धसंपदश्छिन्नोत्तमाङ्गदेहसङ्घा येषु, तथा मकराख्येन व्यूहेन रचनाविशेषेण निरुद्धवर्त्मनो नि-

षिद्धमार्गान् । यो हि बाहुबलेनाब्धीनाक्रामति तस्य महद्बलम् । कीदृशानब्धीन्, कस्य जलस्य बन्धो रचना निःस्पन्दता वा तस्य संपदुत्कर्षः, चलिता भुजास्फालनवशात् क्षुभिता अत एवोर्ध्वा कबन्धसंपद्येषाम् । यद्वा बध्यन्ते एभिरिति बन्धा नौवेष्टकादयः । कं च बन्धाश्च कबन्धास्तेषां संपदश्चलिता ऊर्ध्वा येषां ते चलितोर्ध्वकबन्धसंपदः, तथा मकरव्यूहेन यादःसङ्घेन निरुद्धवर्त्मनो निवर्तिततरणमार्गान् ॥ ६७ ॥

**न चिकीर्षति यः स्मयोद्धतं नृपतिस्तच्चरणोपगं शिरः ।**
**चरणं कुरुते गतस्मयः स्वमसावेव तदीयमूर्धनि ॥ ६८ ॥**

यो राजा दर्पोन्नतमुत्तमाङ्गं तत्पादगतं न विधित्सति तस्य शिरसि स एव पादमात्मीयं न्यस्यति, खलीकरोति तमित्यर्थः । गतस्मयो निवृत्तदर्पः, अकृतस्वबलविस्मय इत्यर्थः ॥ ६८ ॥

**स भुजद्वयकेवलायुधश्चतुरङ्गामपहाय वाहिनीम् ।**
**बहुशः सह शक्रदन्तिना सचतुर्दन्तमगच्छदाहवम् ॥ ६९ ॥**

स चैद्यश्चतुरङ्गां सेनां निषिध्य बाहुसहायः सन् असकृत् शक्रदन्तिना ऐरावणेन साकं रणमगच्छत् युयुधे । रथगजतुरगपदातिलक्षणानि चत्वार्यङ्गानि वाहिन्याः । कीदृशमाहवं सह चतुर्भिर्दन्तैर्वर्तते इति सचतुर्दन्तम्, ऐरावणस्य चतुर्दन्तत्वात् । विरुद्धं चैतत्—यत्र हि बलद्वयेऽपि दन्तिसद्भावः स चतुर्दन्त आहवः, यश्च सेनां हित्वा बाहुसहायः पदातिरेव युद्धवान् स कथं चतुर्दन्तमाहवं गच्छेत्, अविरोधस्तु शक्रगजस्य चतुर्विषाणत्वात् ॥ ६९ ॥

**अविचालितचारुचक्रयोरनुरागादुपगूढयोः श्रिया ।**
**युवयोरियदेव भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः ॥ ७० ॥**

तव चैद्यस्य चेयदेव भिद्यतेऽयमेव विशेषः, यत् त्वमुपेन्द्र इन्द्रसमीपवर्ती शक्रमुखप्रेक्षी, स चातीन्द्रोऽतिक्रान्तशक्रो जितशक्र इत्यर्थः, इति व्यतिरेकालंकारः । एष चार्थो हरेरुपेन्द्रसंज्ञत्वात् नतु तात्त्विकः । कीदृशयोर्युवयोरिति धर्मान्तरसाम्यमाह—स तावदविचालितमभेद्यं रणे वा निषेद्धुमशक्यं चारुचक्रं राष्ट्रं यस्य, तथा प्रीत्या लक्ष्म्या सेवितः । तवाप्यविचालितमजस्रं संनिहितं चारुचक्रं सुदर्शनाख्यम्, प्रेम्णा पद्मयालिङ्गितस्त्वम् ॥ ७० ॥

उपेन्द्राच्चैद्यस्य विशेषमाख्यायेदानीं हरादाह—

**भृतभूतिरहीनभोगभाग्विजितानेकपुरोऽपि विद्विषाम् ।**
**रुचिमिन्दुदले करोत्यजः परिपूर्णेन्दुरुचिर्महीपतिः ॥ ७१ ॥**

अपिर्विस्मये । चित्रमिदं यत्सर्वसादृश्ये-अजो भगवानीश्वरश्चन्द्रखण्डे रुचिं साक्तिं करोति, शशिकलाभरणत्वात्, राजा तु परिपूर्णेन्दुरुचिरखण्डमण्डलशशिकान्तिः, अतश्च हरस्य कलाशेषशशिरुचित्वात् चैद्यस्य तु संपूर्णेन्दुरुचित्वान्महान् विशेषः । रुचिरभिलाषः कान्तिश्च । कीदृशोऽजः स वेति साम्यमाह-भगवांस्तावत् भृतभूतिरूढभस्मा, अहीनभोगभाक् नागराजोपवीतः, विद्विषां त्रिपुरवासिनां विजितानेकपुरो दग्धत्रिपुरः । सोऽपि भृतभूतिर्धृतैश्वर्यः, अहीनभोगभागखण्डसुखसेवी, द्विषां च जितबहुपुरः ॥ ७१ ॥

**नयति द्रुतमुद्धतिश्रितः प्रसभाद्भङ्गमभङ्गरोदयः ।**
**गमयत्यवनीतलस्फुरद्भुजशाखाभृतमन्यमानतिम् ॥ ७२ ॥**
**अधिगम्य च रन्ध्रमन्तरा जनयन् मण्डलभेदमन्ततः ।**
**खनति क्षतसंहतिः क्षणादपि मूलानि महान्ति कस्यचित् ॥ ७३ ॥**
**घनपत्रभृतोऽनुगामिनस्तरसाकृष्य करोति कांश्चन ।**
**दृढमप्यपरं प्रतिष्ठितं प्रतिकूलं नितरां निरस्यति ॥ ७४ ॥**
**इति पूर इवोदकस्य यः सरितां प्रावृषिजस्तटद्रुमैः ।**
**क्वचनापि महानखण्डितप्रसरः क्रीडति भूभृतां गणैः ।७५।चक्कलकम् ।**

यो राजा भूभृतां गणैरितीत्थं क्रीडति रमते नदीनां प्रावृषिजो जलौघ इव कूलवृक्षैः । कथमित्याह-नयतीत्यादि । उद्धतिश्रितः उद्धतान् भूभृतो यः प्रसभं बलाद् द्रुतं शीघ्रं भङ्गं नयति भनक्ति नाशयति, अभङ्गुरोदयः स्थिरोन्नतिर्यश्चान्यं राजानमानतिं गमयति प्रह्वयति । कीदृशम् आनतिवशादवनीतले स्फुरन्तौ भुजावेव शाखा बिभर्ति यस्तम् । जलौघोऽप्युन्नतान् देवदार्वादींस्तटद्रुमान् वेगाद्भनक्ति, अन्यांश्च वेतसादींश्चलच्छाखाभुजान् नमयति, सोऽप्यभङ्गुरोदयोऽविनश्वराविर्भावो वार्षिकत्वात् ॥ ७२ ॥

किंच यः कस्यचिद्राज्ञो रन्ध्रं दोषमवसरं वा प्राप्य क्षणादेव महान्ति स्थिराण्यपि मूलानि प्रतिष्ठाकारणानि मूलभृत्यादीनि अन्ततः कार्यसमाप्तौ खन-

त्युन्मूलयति चालयति। क्षता संहतिः संहतत्वमेककार्यत्वं येन यत्र वा। किं कुर्वन् अन्तरा कार्यमध्ये मण्डलस्य राष्ट्रस्य चक्रस्य भेदं जनयन् उपजापं कुर्वन् अत एव क्षतसंहतिः। रन्ध्राधिगमे तावदसौ भेदयति यावदेककृत्या अपि मूलसचिवाश्चलन्ति। जलौघोऽपि द्रुमस्यान्तरा रन्ध्रं विवरं प्राप्य मण्डलस्य मूलदेशस्य भेदं क्षतिं जनयन् महान्त्यपि मूलान्युन्मूलयति। क्षतमूलसंहतिर्नाशितमूलनैरन्तर्यः॥ ७३॥

किंच कांश्चिद्राज्ञो घनपत्रभृतोऽपि संहतधोरणधारिणोऽपि तरसा बलेनाकृष्यानीयानुगामिनः पश्चाद्यायिनः करोति, तथापरमन्यं राजानं प्रतिकूलमप्रणतं सन्तं नितरां निरस्यति क्षिपति तिरस्करोति। दृढं भृशं प्रतिष्ठितं लब्धपदमपि बलेनापि समृद्धमित्यर्थः। जलौघोऽपि घनपत्रभृतः संहतकिसलययुक्तानपि द्रुमांस्तरसाकृष्यानुगामिनः करोति, अन्यं च द्रुमं दृढमपि प्रतिष्ठितं प्रतिकूलं निरस्यति कूलान्तरे क्षिपति॥ ७४॥

इति पूर इवोदकस्य यः सरितां प्रावृषिजस्तटद्रुमैः क्रीडति भूभृतां गणैर्महानुदात्तः क्वचनाप्यखण्डितप्रसरो न क्वचिदपि भग्नयात्रोऽनिवारितेच्छः। जलौघोऽपि महानुन्नतः प्रावृषेण्यत्वात्, अत एव न क्वचित् खण्डितप्रसरोऽनिवृत्तरयः। क्वचनेति चनश्चिदर्थे। अखण्डितप्रसर इत्यसमर्थसमासः, नञः क्वचिच्छब्देन सम्बन्धात्॥ ७५॥　चतुर्भिश्चक्कलकम्॥

**अलघूपलपङ्क्तिशालिनीः परितो रुद्धनिरन्तराम्बराः।**
**अधिरूढनितम्बभूमयो न विमुञ्चन्ति चिराय मेखलाः॥ ७६॥**
**कटकानि भजन्ति चारुभिर्नवमुक्ताफलभूषणैर्भुजैः।**
**नियतं दधते च चित्रकैरवियोगं पृथुगण्डशैलतः॥ ७७॥**
**इति यस्य ससंपदः पुरा यदवापुः सदनेष्वरिस्त्रियः।**
**स्फुटमेव समस्तमापदा तदिदानीमवनीध्रमूर्धसु॥७८॥विशेषकम्॥**

यस्य राज्ञो रिपुनार्यः ससंपदः समृद्धाः सत्य इतीत्थं यत् सदनेष्वन्तःपुरेषु पूर्वमवापुर्लेभिरे तदखण्डमेवाधुना विपत्तौ गिरिशृङ्गेषु स्फुटं नूनं प्राप्नुवन्ति। तथाहि--अधुना मेखला गिरिमध्यभागाः ताश्चिरमद्यापि न मुञ्चन्ति सदावासात्। कीदृशीर्महाशिलामालाशालिनीः समन्ताच्च व्याप्तनिःशेषाकाशाः। अरिस्त्रियः

कीदृश्यः, अधिरूढा आश्रिता नितम्बभूमयो मेखलान्ता याभिः। पूर्वमपि मेखला रशना नामुञ्चन् । कीदृशीर्महामणिमालाशालिनीः, तथा परितः समन्ताद्रुद्धं व्याप्तमवष्टब्धं वा निरन्तरं निर्विवरं नितरां वाम्बरं दुगूलं याभिः । अधिरूढा मेखलयाधिष्ठिता उन्नता वा पीवरा नितम्बभूमिः श्रोणीतटं यासां स्त्रीणां ता अधिरूढनितम्बभूमयः ॥

किंच नवं संप्रति मुक्तान्यविधवात्वात् त्यक्तान्यफलानि निरर्थकानि भूषणान्यङ्गदादीनि यैस्तैस्तथाविधैर्भुजैः स्वभावचारुभिरुपलक्षितास्ता अधुना कटकानि सानूनि श्रयन्ते, तथा पृथवो ये गण्डशैला मुक्तपाषाणास्तेषु चित्रकैः प्राणिविशेषैः सदा अवियोगं दधते, मृगैः सह वसन्तीत्यर्थः । पुरा हि भुजैः कटकान्यङ्गदानि भेजुः, गण्डेष्वेव च शैलेषु चित्रकैस्तिलकैः सम्बन्धं बभ्रुः । कीदृशैर्भुजैश्चारुभिः, नवानि मुक्ताफलानि भूषणं येषां तैः ॥ उक्तं च—यस्येत्थं सुखिताः प्रापुर्यद्गेहेषु रिपुस्त्रियः । आप्नुवन्त्यद्रिशृङ्गेषु तत्सर्वं दुःखिता अपि ॥ इति त्रिभिर्विशेषकोऽयम् ॥ ७६ ॥ ७७ ॥ ७८ ॥

**महतः कुकुरान्धकद्रुमानतिमात्रं दववद् दहन्नपि ।**
**अतिचित्रमिदं महीपतिर्यदकृष्णामवनिं करिष्यति ॥ ७९ ॥**

इदमत्यद्भुतं यद्राजा महतः कुकुरान्धकानेव द्रुमान् नितरां दावाग्निरिव दहन्नपि भुवमकृष्णां करिष्यति । यत्र किलाग्निर्महतो द्रुमान् दहति, तत्र भुवा कज्जलादिवशात् कृष्णया भाव्यम् । अथ चाकृष्णामवासुदेवाम्, सर्वान् वृष्णीन् कृष्णं च चैद्यो हनिष्यतीति वाक्यार्थः । कुकुरा अन्धकाश्च क्षत्रियविशेषाः कृष्णबान्धवाः । वैतालीयं वृत्तम् ॥ ७९ ॥

**परितः प्रमिताक्षरापि सर्वं विषयं प्राप्नुवती गता प्रतिष्ठाम् ।**
**न खलु प्रतिहन्यते कुतश्चित् परिभाषेव गरीयसी यदाज्ञा ॥ ८० ॥**

यदाज्ञा यदादेशो न कुतश्चिन्न कस्मादपि प्रतिहन्यते, सर्व एव तद्वशोऽनुतिष्ठतीत्यर्थः । कीदृशी प्रमिताक्षरापि इदं कार्यमिति स्वल्पवर्णापि समन्तात् सर्वं विषयं देशं व्याप्नुवती सती प्रतिष्ठां गतारोहं प्राप्ता, सर्वत्रोपतिष्ठतीत्यर्थः । अत एव परिभाषेव नियमतुल्या । 'इको गुणवृद्धी' इत्यादिका हि परिभाषा स्वल्पाक्षरापि परितः सर्वं विषयं "सिचि वृद्धि" रित्यादिकं व्याप्य प्रतिष्ठां गता न क्वचिद् व्याहन्यते सर्वत्रैवोपतिष्ठति । उक्तंच—"परिभाषा

एकदेशस्थिता सती सर्वं शास्त्रमभिज्वलयति प्रदीपवदि"ति । गरीयसी समर्था । खलुरवधारणे, नैव व्याहन्यते इत्यर्थः । प्रतिहन्यते इति कर्मकर्तरि लकारः । वृत्तमौपच्छन्दसिकम् ॥ ८० ॥

**यामूढवानूढवराहमूर्तिर्मुहूर्तमादौ पुरुषः पुराणः ।**
**तेनोह्यते सांप्रतमक्षतैव क्षतारिणा सम्यगसौ पुनर्भूः ॥ ८१ ॥**

सा भूस्तेन राज्ञा रिपूञ्जित्वा सांप्रतमधुना पुनरक्षता समग्रा सम्यगनवहेलया उह्यते पाल्यते । कासावित्याह—यां भुवं पुराणः पुरुषो भगवान् विष्णुरूढवराहमूर्तिः कृतसूकररूपः सन् आदौ पुरा मुहूर्तमूढवान् बिभरांचकार । या साक्षाद्भगवता मुहूर्तमात्रं धृता सा भूमिस्तेन सम्यगुह्यते इति विशेषोक्त्या सार्वभौमत्वकथनम् । अथ चोक्तिः—सा पुनर्भूर्वधूस्तेन सम्यग् विधिवदुह्यते परिणीयते यां पुराणपुरुषो वृद्धमनुष्य ऊढवानुपायंस्त । कीदृशः वरस्य जामातुरहो दिवसो वराहो विवाहदिवसः "राजाहः सखिभ्यष्टच्" । ऊढा धृता वराह एव मूर्तिर्देहो येन स ऊढवराहमूर्तिः, वृद्धत्वादुद्वाहसमनन्तरमेव यो मृत इत्यर्थः । अन्येन चेदुदूढा किमित्यन्य उद्वाहयतीत्याह—यतोऽक्षता अभ्रष्टयोनिः, तच्चाक्षतोद्वहनं सांप्रतं युक्तं शास्त्रदृष्टत्वात् । यदाह—"पुनरक्षतयोनित्वादुह्यते या यथाविधि"इति । सा पुनर्भूः । आख्यानिका वृत्तम् ॥ ८१ ॥

**रजोभिरुद्धूलितमाहवोद्धतैर्द्विषामथ क्षालितमङ्गनास्रुभिः ।**
**विलिप्यते यच्चरणद्वयं नमन्नरेन्द्रचूडामणिरश्मिवर्णकैः ॥ ८२ ॥**

'मलिनं रणरेणुभि' (१६ । ६२ श्लो०) रित्येतेनैवैतद्व्याख्यातम् । पुनरुक्तत्वाच्चास्य न तथा बाहुल्येन पाठः । अनादरत्वाच्च न व्याख्यातः, पूर्व[1]व्याख्यानाच्च विशेषतरं न किञ्चिदिति ॥ ८२ ॥

**भूयांसः क्वचिदपि काममस्खलन्तस्तुङ्गत्वं दधति च यद्यपि द्वयेऽपि ।**
**कल्लोलाः सलिलनिधेरवाप्य पारं क्षीयन्ते न गुणमहोर्मयस्तदीयाः॥८३**

अनेनोदधेरस्य विशेषमाह—यद्यपि समुद्रोर्मय एतद्गुणमहोर्मयश्चातिबहवो न क्वचित् स्खलन्ति नश्यन्ति, काममत्यर्थं चोन्नतास्तथाप्यब्धिकल्लोलाः पारं प्राप्य शीर्यन्ते क्षीयन्ते, नत्वेतद्गुणाः, ते हि नित्यमेव स्थिरा द्वीपान्तराण्यपि

---

१ 'स्याख्या' क. ग. पाठाः ।

प्राप्ताः । गुणानां तुङ्गत्वमुत्कृष्टत्वम् । गुणमहोर्मयो गुणमहावृन्दानि । शीर्यन्ते इति कर्मकर्तरि । तेनावाप्येति ल्यबुप[1]पद्यते । प्रहर्षिणी वृत्तम् ॥ ८३ ॥

अधुना रवेर्विशेषमाह—

**लोकालोकव्याहतं घर्मरश्मेः शालीनं वा धाम नालं प्रसर्तुम् ।**
**लोकस्याग्रे पश्यतो धृष्टमाशु क्रामत्युच्चैर्भूभृतो यस्य तेजः ॥ ८४ ॥**

यस्य राज्ञस्तेजः प्रतापो धृष्टत्वात् पश्यत एव लोकस्याग्रे उन्नतानपि भूभृतो नृपानाशु झगित्येव क्रामत्युल्लङ्घयति अभिभवति । तेजसो धार्ष्ट्यं तीव्रत्वम् । यदि वा इवार्थो बोद्धव्यो धृष्टमिवेति, धृष्टत्वात् किल सर्वसमक्षमन्याभिभवः क्रियते । स्यादेतत् सावित्रमपि तेज एवंविधमेवेत्याह—घर्मांशोश्चण्डांशोर्धाम तेज उच्चैर्भूभृतः पर्वतान् प्रसर्तुमाक्रामयितुं नालं न समर्थं, यतो लोकालोकव्याहतं लोकालोकाख्येन पृथिवीपर्य[2]न्तेन पर्वतेन निषिद्धप्रसरम्, नहि ततः परं भगवतस्तेजो याति । अतश्चोत्प्रेक्ष्यते—शालीनं वा अधृष्टमिव । यः किलाधृष्टः स लोकानामालोकेन व्याहन्यते, अतश्च रवेस्तेजो लोकालोकव्याहतं चाधृष्टं च, नृपतेस्तु धृष्टं । लोकस्य पश्यत एव भूभृत आक्रामतीति महान्विशेषः । शालिनी वृत्तम् ॥ ८४ ॥

**विच्छित्तिर्नवचन्दनेन वपुषां भिन्नोऽधरोऽलक्तकै-**
**रच्छाच्छे पतिताञ्जने च नयने श्रोण्यो लसन्मेखलाः ।**
**प्राप्तो मौक्तिकहारमुन्नतकुचाभोगस्तदीयद्विषा-**
**मित्थं नित्यविभूषणा युवतयः संपद्विपद्यपि ॥ ८५ ॥**

तस्येमे तदीयाः शैशुपालीया ये द्विषस्तेषां युवतयः कान्ताः संपदीव विपत्तावपि इत्थमनेन प्रकारेण नित्यविभूषणाः । तथाहि—संपदि तावत् वपुषां नवचन्दनेन विच्छित्तिर्विरचना अलक्तकेन यावकरसेनाधरो भिन्नो विशेषितः, नेत्रे च पतिताञ्जने अच्छाच्छे धवलप्रकारे, श्रोण्यो लसन्मेखलाः श्लिष्यद्रशनाः, उन्नतो यः कुचाभोगः स्तनविस्तारः स मौक्तिकहारं मुक्ताकलापं प्राप्तः, इत्थं संपदि नित्यविभूषणाः । आपद्यपि वपुषां नवेन चन्दनेन विच्छेदो वियोगः, अलक्तकैरोष्ठो भिन्नो वियुक्तः, नेत्रे च पतिताञ्जने भ्रष्टाञ्जने अत एवाच्छाच्छे, श्रोण्योऽलसन्मेखला अश्लिष्टकाञ्चीका नीरशना इत्यकारप्रश्लेषः । कुचाभोगश्च

---

१ 'त्पद्यते' क. ग. पाठः । २ 'क्र्क्रेण' क. ग. पाठः ।

मौक्तिकानां हारं मोषं वियोगं प्राप्तः, इत्यापद्यपि नित्यविभूषणाः संपदि विविधभूषणा आपद्यपि विगतभूषणाः । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

बीजाक्षरमाह—

**विनिहत्य भवन्तमूर्जितश्रीर्युधि सद्यः शिशुपालतां यथार्थाम् ।**
**रुदतां भवदङ्गनागणानां करुणान्तःकरणः करिष्यतेऽसौ ॥ ८६ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये षोडशः सर्गः ॥ १६ ॥

किं बहुना त्वां संयति संग्रामे सद्यो मारयित्वा राजा शिशुपालतां यथार्थां करिष्यते नामान्वर्थं विधास्यति त्वच्छिशूनां पालनात्, यतोऽसौ करुणान्तःकरणः करुणया वासितमन्तःकरणं मनो यस्य स करुणान्तःकरणो दयार्द्रचेताः । कदा विनिहत्य, भवदङ्गनागणानां रुदतां त्वल्ललना रुदतीरनादृत्येत्यर्थः । अर्जितश्रीरधीनलक्ष्मीको विक्रमार्जितसमृद्धिः । रणे त्वां हत्वा भवत्कान्तासु क्रोशन्तीषु भवत्पुत्रान् बालानेव कारुण्याद्राज्ये राजाभिषेक्ष्यतीति वाक्यार्थः । औपच्छन्दसिकं वृत्तम् । विपर्ययोऽलङ्कारः, इति भद्रम् ॥ ८६ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि-श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां षोडशः सर्गः ॥ १६ ॥

अथ

# शिशुपालवधकाव्ये

## सप्तदशः सर्गः



**इतीरिते वचसि वचस्विनामुना युगक्षयक्षुभितमरुद्गरीयसि ।**
**प्रचुक्षुभे सपदि तदम्बुराशिना समं महाप्रलयसमुद्यतं सदः ॥ १ ॥**

अथ तत्सदः सा सभा प्रचुक्षुभे क्षोभं गतम् । कथम् अम्बुराशिना सममब्धिना सह, समुद्रोऽपि तदा चकम्प इत्यर्थः । यद्वा सदोविशेषणमेतत् । कीदृशं सदो विस्तृतत्वाद् दुर्वगाहत्वाच्चोदधिना समं तुल्यम् । तथा महाप्रलये सर्वनाशे समुद्यतं विहितोद्योगम् । कदा चुक्षुभे अमुना दूतेन वाग्मिना इतीत्थं वचनेऽभिहिते सति सपदि तत्समनन्तरम् । कीदृशे वचसि युगक्षयक्षुभितमरुद्गरीयसि कल्पान्तोद्वृत्तवातप्रचण्डे, यथा युगक्षयक्षुभिते वाते वाति महाप्रलयसमुद्यतः समुद्रः क्षुभ्यत्येवं दूतोक्ते वचसि जगत्संजिहीर्षुर्भगवद्बलानिवेशोऽक्षुभ्यदिति वाक्यार्थः । प्रचुक्षुभे इति भौवादिकस्य क्षुभेस्तङ् । सर्गेऽस्मिन् रुचिरा वृत्तम् । जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ॥ १ ॥

तमेव क्षोभमाह—

**सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपृष्ठया[1] ।**
**मुहुर्मुहुर्दशनविलङ्घितौष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ॥ २ ॥**

अथ राजानो रुषा भेजिरे क्रुधाक्रान्ताः सरागया लोहितया कारणे कार्योपचारात् । तथा स्रुतं घनं प्रभूतं घर्मतोयं स्वेदाम्बु यया, रोषेण हि लौहित्यं स्वेदश्च जायते । तथा कराहत्या पाणिहननेन ध्वनितं पृथूरुपृष्ठं यस्यां यया वा, मुहुर्मुहुश्च दन्तैर्विलङ्घित आक्रान्त ओष्ठोऽधरो यस्यां यया वा, अत एव प्रियतमयेव कान्तासमया । यथा प्रिया कंचित्सेवते तथा तया ते क्रुधेत्यर्थः । कीदृश्या सरागयानुरक्तया, अत एव स्रुतघनघर्मतोयया । प्रेयःसंयोगाद्धि स्वेदादयो जायन्ते । तथा कराहत्या ध्वनितं पृथूरुपीठं यस्याः ॥ २ ॥

---

१ 'पीठया' ग. पाठः ।

सामान्येन नृपा इत्यभिधायाधुना विशेषेणाह—

**अलक्ष्यत क्षणदलिताङ्गदे गदे करोदरप्रहतनिजांसधामनि ।**

**समुच्छलच्छकलितपाटलोपलस्फुलिङ्गवान् स्फुटमिव कोपपावकः ३**

गदे गदाख्ये भगवदनुजे क्रोधाग्निः स्फुट इवालक्ष्यत मूर्त इव दृष्टः, यदि वा स्फुटं प्रत्यक्षमवैक्षि । कीदृशे क्रोधात् पाणितलताडितात्मीयस्क (न्द ? न्ध) देशेऽत एव क्षणेनैव दलिताङ्गदे पिष्टकेयूरेऽतश्च समुच्छलन्त उत्प्लवमानाः शकलिताः स्फुटिता ये पाटलोपलाः पद्मरागास्त एव स्फुलिङ्गास्ते विद्यन्ते यत्र स तथोक्तः । न तथाचात्र मत्वर्थीयं केचिदीषुः, यदाहुः-कर्मधारयान्मत्वर्थीये चिकीर्षिते प्रक्रियालाघवाद् बहुव्रीहिरेव नाय्य इति । केचित्तु लाघवमनाद्रियमाणा इच्छन्त्येव पचाद्यजन्तादिवत्षष्ठीसमासम्, यथा मनोरमेयं कन्येति । स्फुलिङ्गशब्दः पुंलिङ्गोऽपि, यथा क्षरदनलस्फुलिङ्गकणसंचयकण्ठकितमिति ॥ ३ ॥

**अवज्ञया यदहसदुच्चकैर्बलः समुल्लसद्दशनमयूखमण्डलः ।**

**रुषारुणीकृतमपि तेन तत्क्षणान्निजं वपुः पुनरनयन्निजां रुचम् ॥ ४ ॥**

बलो हली यदवहेलया वेगेनाहसत् तेन हसेनासौ कोपरक्तमपि स्वं गात्रं भूयस्तस्मिन् क्षणे स्वां कान्तिं प्रापयत् शुक्लमेव व्यधात्, यतोऽसौ हासवशात् स्फुरद्दन्तकिरणवलयः, क्रोधेनापि हि हासो भवति यथा "तहअ कुविएण हसिअं" इत्यादि ॥ ४ ॥

**यदुत्पतत्पृथुतरहारमण्डलं व्यवर्तत द्रुतमभिदूतमुल्मुकः ।**

**बृहच्छिलातटकठिनांसघट्टितं ततोऽभवद्भ्रमितमिवाखिलं जगत्॥५॥**

उल्मुको भगवत्सुतो यदभिदूतं दूतसंमुखं व्यवर्तत परिवृत्तः, ततो हेतोर्महापाषाणस्थलकर्कशेन स्कन्धेन घट्टितमाहतं सत् समग्रमेव जगद् भ्रमितमिवासीत् चलितमिवाभूत्, ज्ञायते जगत्परिवृत्तमिवेत्यर्थः । कथं व्यवर्तत उत्पतद् उद्गच्छत् समुच्छलत् पृथुतरं द्राघीयो हारमण्डलं मुक्ताकलापो यत्र तत् उत्पतत्पृथुतरहारमण्डलम् ॥ ५ ॥

**प्रकुप्यतः श्वसनसमीरणाहतिस्फुटोष्मभिस्तनुवसनान्तमारुतैः ।**

**युधाजितः कृतपरितूर्णवीजनं पुनस्तरां वदनसरोजमास्विदत् ॥ ६ ॥**

क्रुद्धस्य युधाजितो राजन्यविशेषस्य मुखपद्मं तनुवसनान्तमारुतैः कृतपरितूर्णवीजनमपि पुनस्तरामत्यर्थमस्विदत् घर्मितं, यदि तालवृन्तानिलैस्ताढ्विहितक्षिप्रवीजनं कथं तर्हि भृशं स्विन्नमित्याह–उच्छ्वासपवमानस्पर्शेन स्फुटोष्मभिः प्रकटोष्मभिर्भृशोष्णैः । वीजनं समाश्वासः । ईजतेर्विपूर्वस्य रूपम् ॥ ६ ॥

**प्रजापतिक्रतुनिधनार्थमुत्थितं व्यतर्कयज्ज्वरमिव रौद्रमुद्द्रुतः ।**
**समुद्यतं सपदि वधाय विद्विषामधिक्रुधं निषधमनौषधं जनः ॥ ७ ॥**

निषधाख्यं नृपं जनः समुद्द्रुतो भीतः प्रजापतिक्रतुनिधनार्थं युधिष्ठिराध्वरविनाशार्थं ज्वरमिवोत्थितं व्यतर्कयदूहामास, नृपतिमखदाहाय नूनमिदं ज्वरान्तरमजनीत्यवेदी ( दि ) त्यर्थः । पूर्वं किल रौद्रेण ज्वरेण वीरभद्राख्येन प्रजापतेर्दक्षस्य सवोऽधानि । कीदृशं निषधं रौद्रं घोरं, द्विषतां चाघाताय तत्क्षणं समुद्यतं कृतयत्नम्, अधिगता क्रुद्येन तमधिक्रुधं प्राप्तरोषम्, अनौषधमविद्यमानप्रशमनोपायम् । सोऽपि ज्वरो रौद्रो माहेश्वरो भगवद्द्विष्टानां वधोद्यतः सक्रोधो निरौषधश्च । प्रजापती राजा दक्षश्च । रौद्रः प्रतिभयो रुद्रसंबन्धी च ॥ ७ ॥

**परस्परं परिकुपितस्य पिंषतः क्षतोर्मिकाकनकपरागपङ्किलम् ।**
**करद्वयं सपदि सुधन्वनः स्वजैरनारतस्रुतिभिरधाव्यताम्बुभिः ॥८॥**

क्रुद्धस्य सुधन्वनोऽन्योन्यं करद्वयं हस्तयुग्मं पिंषतो मृद्नतः स्वजैरात्मोत्थैर्निरन्तरच्युतिभिरम्बुभिः स्वेदजलैस्तदधाव्यत क्षालितम् । कीदृशं पेषवशात् क्षतानां क्षुण्णानामूर्मिकाणां वालिकानां कनकपरागेण रुक्मरजसा पङ्किलं कर्दमितं लिप्तम् । धूलिजलयोः संबन्धात् किल पङ्कमुत्पद्यते अत एवा[1]धाव्यत । पङ्किलं हि करादि क्षाल्यते ॥ ८ ॥

**निरायतामनलशिखोज्ज्वलज्वलन्नखप्रभाकृतपरिवेशसंपदम् ।**
**अविभ्रमद्भ्रमदमलोल्मुकाकृतिं प्रदेशिनीं जगदिव दग्धुमाहुकः ।९।**

आहुकः प्रदेशिनीं तर्जनीमविभ्रमदुदवलयत् । एवंविधा ह्येते क्रोधाभिनयाः । कीदृशीं निरायतामृजुं द्राघीयसीं वा, तथा सप्तार्चिर्ज्वालावद् उज्ज्वलाभिर्लोहिनीभिरत एव ज्वलन्तीभिर्देदीप्यमानाभिर्नखप्रभाभिः कृता परिवेशसंपद-

१ 'व व्यधा' ग. पाठः ।

भिवेष्टनं यस्याः, अत एव भ्रमतोऽमलस्योल्मुकस्येव आकृतिः संस्थानं यस्याः । अतश्चोत्प्रेक्ष्यते—जगत् दग्धुमिवाबिभ्रमत् । परिवेशः परिवारणमभिव्याप्तिः ॥ ९ ॥

**दुरीक्षतामभजत मन्मथस्तथा यथा पुरा परिचितदाहधार्ष्ट्यया ।**
**ध्रुवं पुनः सशरममुं तृतीयया हरोऽपि न व्यषहत वीक्षितुं दृशा ॥१०॥**

मन्मथः कन्दर्पावतारः प्रद्युम्नस्तथा तेन प्रकारेण दुर्निरीक्षतां दुर्दर्शनत्वं वैषम्यमभजत शिश्राय, यथामुं प्रद्युम्नं ससायकं ध्रुवं निश्चितं भगवान् कामारिरपि पुनस्तार्तीयीकया दृष्ट्या द्रष्टुं न व्यषहत नाशकत् कदाचित् । ललाटेन नेत्रेण कदाचिदप्यसौ तं द्रष्टुं न व्यषहतेत्याह—पुरा पूर्वं परिचितमभ्यस्तं दाहे धार्ष्ट्यं प्रागल्भ्यं यस्याः । पुरा हि भगवता भवेन क्षणेन कामो भस्मीकृतः ॥ १० ॥

**विचिन्तयन्नुपनतमाहवं रसादुरः स्फुरत्तनुरुहमग्रपाणिना ।**
**परामृशत् कठिनकठोरकामिनीकुचस्थलप्रमुषितचन्दनं पृथुः ॥ ११ ॥**

पृथुः कार्ष्णिर्युद्धमागतमाकलयन् उरो भुजमध्यं कराग्रेण परामृ (ष?श) त् परामृष्टवान् । कीदृशं रसात् तोषात् परिस्फुरत्तनुरुहमुल्लसद्रोम रोमाञ्चितम्, तथा कठिनाः कर्कशाः कठोराः परिपूर्णा ये ललनास्तनतटास्तैः प्रमुषितमुत्पुंसितं मलयजं यस्य । स हि शृङ्गारी ॥ ११ ॥

**विलङ्घितस्थितिमभिवीक्ष्य रूक्षया रिपोर्गिरा गुरुमपि गान्दिनीसुतं**
**जनैस्तदा युगपरिवर्तवायुभिर्विवर्तिता गिरिपतयः प्रतीयिरे ॥ १२ ॥**

गान्दिनीसुतमक्रूरं परुषया असुहृद्वाचा उत्क्रान्तमर्यादं क्रुद्धं दृष्ट्वा लोकैस्तदा कल्पान्तवातैः कुलशैला विवर्तिता उन्मूलिताः प्रतीयिरे प्रतिपेदिरे ज्ञाताः । यत्रायं गुरुर्गम्भीरोऽपि स्थितिमुज्झति तत्र स्थावराणां का गणनेति भावः ॥१२॥

**विवर्तयन् मदकलुषीकृते दृशौ कराहतक्षिति कृतभैरवारवः ।**
**क्रुधा दधत्तनुमतिलोहिनीमभूत्प्रसेनजिद्गज इव गैरिकारुणः ॥१३॥**

प्रसेनजिन्नाम राजा सिन्दूरलोहितकरितुल्योऽभवत्, यतो रोषादतिरक्तं वपुर्वहन्, तथा मदाविले नेत्रे भ्रमयन्, कृतश्च भैरवो ध्वनिर्येन । कथं करेण

पाणिना आहता ताडिता क्षितिर्यत्र । गजोऽपि क्रुद्धो मदाविले दृशौ वलयति करेण च भुवं हत्वा भैरवं गर्जति । मदो वीर्यविकारो दानं च ॥ १३ ॥

**सकुङ्कुमैरविरलमम्बुबिन्दुभिर्गवेषणः परिणतदाडिमारुणैः ।**
**समत्सरस्फुटितवपुर्विनिःसृतैर्बभौ चिरं निचित इवासृजां लवैः ॥१४॥**

गवेषणाख्यो नृपोऽम्बुबिन्दुभिः स्वेदजललवैर्बभौ रेजे । कीदृशैः सकुङ्कुमैः काश्मीरकयुतैः, अत एव पक्कदाडिमफललोहितैः । अतश्चोत्प्रेक्ष्यते–असृजां लवैरविरलं संहतं चिरं निचित इव व्याप्तो यथा । रुधिरकणानां कोऽस्यागम इत्याह–समत्सरं रोषयुतमत एव स्फुटितं भग्नं यद्वपुस्ततो निःसृतैर्निर्यातैः ॥ १४ ॥

**ससम्भ्रमश्चरणतलाभिताडनस्फुटन्महीविवरवितीर्णवर्त्मभिः ।**
**रवेः करैरनुचिततापितोरगं प्रकाशतां शनिरनयद्रसातलम् ॥ १५ ॥**

शनिः सात्यकिस्तत्पिता वा ससंभ्रमः सवेगो रवेः करैः पातालं प्रकाशतामनयत् प्रकटीचकार । तस्य क्रुद्धस्य रसातले सूर्यभासां क आगम इत्याह–चरणतलाभिघातेन स्फुटन्त्या मह्या विवरैश्छिद्रैर्वितीर्णं वर्त्म येषां तैर्दत्तमार्गैः, अत एवानुचितमनभ्यस्तं तापिता उरगाः पृदाकवो यत्र रसातले ॥१५॥

**प्रतिक्षणं विधुवति सारणे शिरः शिखिद्युतः कनककिरीटरश्मयः ।**
**अशङ्कितं युधमधुना विशन्त्वमी क्षमापतीनिति निरराजयन्निव॥१६॥**

सारणाख्ये नृपे शिरो विधुवति मूर्धानं धुन्वति सति वह्निनिभा रुक्ममुकुटकिरणाः भूभृतो निरराजयन्निव नीराजितवन्त इव । किमर्थम्, अमी नृपा इदानीं निर्भयमेव युधं निधनं प्रविशन्तु, इत्यतो हेतोः । समरे हि प्रस्तुते राज्ञां नीराजनं शान्तिकर्म रक्षार्थं क्रियते । दहनसदृशमुकुटकिरणकपिशीकृतराजकत्वाद् उत्प्रेक्षैषात्र ॥ १६ ॥

**दधौ चलत्प्रथुरसनं विवक्षया विदारितं विततबृहद्भुजालतः ।**
**विडूरथः प्रतिभयमास्यकन्दरं ललत्फणाधरमिव कोटरं तरुः ॥ १७ ॥**

विडूरथसंज्ञो भूभृत् प्रतिभयं भयानकमास्यकन्दरं वदनविवरं दधौ बभार, यतो विवक्षयाभिधित्सया विदारितं विवृतं चलत्पृथुरसनं कम्पमानदीर्घ-

जिह्वं, विततः प्रसारिता बृहत्यो भुजा एव लता येन स तथोक्तः । कः किमिव दधातीत्याह—भुजाकारविततबृहल्लतो वृक्षो ललत्फणाधरं स्फुरद्भुजगं कोटरं विवरं नीडं धत्ते, तदपि प्रतिभयम् । राज्ञस्तरुरुपमानमास्यस्य कोटरं, जिह्वायाः फणी, भुजानां लताः ॥ १७ ॥

**समाकुले सदसि तथापि विक्रियां मनोऽगमन्न मुरभिदः परोदितैः ।**
**घनाम्बुभिर्बहुलितनिम्नगाजलैर्जलं नहि व्रजति विकारमम्बुधेः ॥ १८ ॥**

तथा पूर्ववत् सदसि संसदि समाकुलेऽपि क्षुभितेऽपि सति भगवतश्चेतो विकारं नाप विकृतिं न ययौ न चुक्षुभे । युक्तं चैतत्, यस्मात् उल्लासितसरित्तोयैरपि मेघजलैर्नैवाब्धिः क्षुभ्यति ॥ १८ ॥

**परानमी यदपवदन्त आत्मनः स्तुवन्ति च स्थितिरसतामसाविति ।**
**मुमोच न प्रकृतिमविस्मितः स्मितं मुखं दधच्छशधरमुग्धमुद्धवः ॥१९॥**

उद्धवो गुरुरित्यतो हेतोः प्रकृतिं न मुमोच स्वभावं न जहौ न चुकोपेत्यर्थः । कुत इत्याह—अमी दुर्जना यत्परानन्यान् अपवदन्ते निन्दन्ति, यच्चात्मनः स्वान् स्तुवन्ति, असावसतां खलानां स्थितिः स्वभावः । अतश्च प्रकृतिरेषा चैद्यस्य यत्कटुकभाषणं नासौ कोपस्थानमित्यवगच्छन् न चुक्षुभे । कीदृशोऽसौ अविद्यमानं विस्मितं विस्मयो यस्यासावविस्मितः । सर्वक्षोभेऽपि स्वयमक्षोभात् प्रायशोऽन्ये विस्मयन्ते, एते च क्षुभिता नतु वयमपीति । तथा मुखं दधत्, कीदृशं स्मितं विकसितं प्रहृष्टमत एव शशधरमुग्धं शशाङ्कमनोज्ञम् । "अपाद्वदः" इति तङि कृतेऽपवदन्त इति रूपम् । अपवादो गर्हा । यदुक्तम् "अपवादमुपक्रोशं निर्वादमवर्णवादमतिवादम् । ब्रुवते निन्दाभिख्यान्" इति ॥ १९ ॥

**निराकृते यदुभिरिति प्रकोपिभिः स्पशे शनैर्गतवति तत्र विद्विषाम् ।**
**मुरद्विषः स्वनितभयानकानकं बलं क्षणादथ समनह्यदाजये ॥ २० ॥**

अथ शौरेः सैन्यं क्षणादेवाजये युद्धाय समनह्यत् समवर्मयत् । कदेतीत्थं प्रकोपितैः क्रुद्धैर्यादवैर्निराकृते निर्भर्त्सिते तस्मिन् चैद्यस्य स्पशे दूते स्वैरं गते सति । कीदृग्बलं स्वनितभयानकानकं वादितभीषणसंज्ञापटहम् । आजिः

संयत् ॥ २० ॥

**मुहुः प्रतिस्खलितपरायुधा युधि स्थवीयसीरचलनितम्बनिर्वरा ।**
**अदंसयन्नरहितशौर्यदंसनास्तनूरयं नय इति वृष्णिभूभृतः ॥ २१ ॥**

वृष्णयश्च ते भूभृतो वृष्णिभूभृतः तनूर्मूर्तीरदंसयन् समनीनहन् । किं भयेन नेत्याह-अयं नय इति शास्त्रोक्ता नीतिरेषा यत् संनहनीयमिति नयेन समवर्मयन् नतु शरीररक्षायै । यतस्ता अरहितशौर्यदंसना अरहितमत्यक्तं शौर्यमेव दंसनं वर्म याभिर्यैर्वा पौरुषकवचिता इत्यर्थः । तथा युधि संयति मुहुरसकृत् प्रतिस्खलितानि प्रतिहतानि परायुधानि रिपुप्रहरणानि यासाम् । स्थवीयसीरतिस्थूलाः, अचलनितम्बैः पर्वतप्रस्थैर्निर्वरास्तुल्या, अद्रिद्रढीयसीरित्यर्थः । "स्थूलदूरेत्यादिना ईयसुनि लकारलोपे गुणे च स्थवीयसीरिति रूपम् । अदंसयन्नित्यात्मनेपदाभावश्चिन्त्यः ॥ २१ ॥

**दुरुद्वहाः क्षणमपरैस्तदन्तरे रणश्रवादुपचयमाशु बिभ्रति ।**
**महीभृतां महिमभृतां न संममुर्मुदोऽन्तरा वपुषि बहिश्च कञ्चुकाः॥२२**

राज्ञां तस्मिन्नन्तरे युद्धावसरे वपुषि देहेऽन्तरा चित्ते मुद उद्भवा न संममुर्न ववृतिरे, बहिश्च बाह्ये देहस्योपरि कञ्चुकाः कवचाः । तोषस्यागमने हेतुमाह-महिमभृतां माहात्म्ययुक्तानां तेजस्विनाम् अत एव । कीदृशे वपुषीति कञ्चुकावर्तने हेतुमाह-रणश्रवात् जन्याकर्णनादुपचयं वृद्धिं बिभ्रति दधति, मनोरथप्रार्थितसंग्रामश्रवणादुच्छ्वसिते इत्यर्थः । कीदृक्षा मुदः कञ्चुका वा अपरैरन्यैः क्षणमपि दुरुद्वहा दुर्धराः । नहि तां मुदं तं च कवचमधीरो दुर्बलश्च वोढुं शक्नोति । श्रुतिः श्रवः । "ऋदोरप्" ॥ २२ ॥

**सकल्पनं द्विरदगणं वरूथिनस्तुरङ्गिणो जयनयुजश्च वाजिनः ।**
**त्वरावतः स्वयमपि कुर्वतो नृपाः पुनःपुनस्तदधिकृतानतत्वरन् । २३ ।**

तत्रेभरथाश्वेऽधिकृतान्[1] स्वेच्छयैवेदमिदं कुर्वतोऽपि विदधानानपि राजानोऽसकृदतत्वरन् अचूचुदन् त्वरयामासुः । किं कुर्वतः द्विरदगणं हास्तिकं सकल्पनं शारिध्वजादियुक्तं तथा वरूथिनो रथान् तुरङ्गिणोऽश्वयुक्तान्, यदिवा तुरङ्गिणो रथान् वरूथिनो गुप्तिमतो रक्षायुतान् वाजिनश्चाश्वान् जयनयुजः स-

---

१ 'तास्तदधिकृतांस्तान्' क. ग. पाठः ।

मरोपकरणयुतान्, जयनं शस्त्रं यस्य पक्खरेति प्रसिद्धिः । अत एव स्वाधिकारव्यापृतत्वात् त्वरावतः सत्वरान् तत्रापि नृपा अतत्वरन् । त्वरयतेर्लङ्, च्लेश्चङ् । "अत् स्मृदत्वरप्रथम्रदस्तृस्पशाम्" ॥ २३ ॥

**युधे परैः सह दृढबद्धकक्ष्यया कलक्कणन्मधुपगणोपगीतया ।**
**अदीयत द्विपघटया सवारिभिः करोदरैः स्वयमथ दानमक्षयम् ॥ २४ ॥**

द्विपघटया गजतया सवारिभिः सजलैः करोदरैः पुष्करविवरैरात्मना प्रभूतं दानं मदोऽदीयत व्यतारि । समरदर्शनाद्धि सत्कुञ्जरा माद्यन्ति । कीदृश्या परैः सह युधे युद्धाय दृढा बद्धा कक्ष्या मध्यबन्धनं यस्याः, तथा कलं क्वणता मधुपकुलेनोपगीतया गीयमानया । योऽपि वीरो रणाय बद्धकक्ष्यः स वन्दिमागधमधुपैर्गीयमानयशाः सवारिभिः करैरक्षयं दानं ददाति ॥ २४ ॥

**सुमेखलाः सिततरदन्तचारवः समुल्लसत्तनुपरिधानसंपदः ।**
**रणैषिणां पुलकभृतोऽधिकन्धरं ललम्बिरे सदसिलताः प्रिया इव ॥ २५ ॥**

रणैषिणां युयुत्सूनामधिकन्दरं कण्ठे सत्यः प्रशस्ता असिलताः खड्गयष्टयो ललम्बिरे लम्बिताः प्रिया इव, प्रिया अपि तेषां निर्यतां गले लेगुरित्यर्थः । अधुना श्लेषः–असिलतास्तावत् शोभना मेखलाः कोशबन्धा यासां ताः सुमेखलाः । सिततरेण दन्तेन मुष्टिदेशस्थेन चारवश्चार्व्यः । समुल्लसन्ती सुश्लिष्टा स्फुरन्ती वा तनोः सूक्ष्मस्य परिधानस्य परिवारस्य कोशस्य संपदुत्कर्षो यासाम् । पुलकं गुणविशेषं बिभ्रतीति पुलकभृतः । प्रियास्तु सुमेखलाः सद्दशनाः अतिधवलदशनमनोहराः स्फुरत्तनुदुगूलसंपदः पुलकभृतो रोमाञ्चधारिण्यः ॥ २५ ॥

**मनोरमैः प्रकृतिमनोरमाकृतिर्भयप्रदैः समितिषु भीमदर्शनः ।**
**सदैवतैः सततमथानपायिभिर्निजाङ्गवन्मुरजिदसेव्यतायुधैः ॥ २६ ॥**

अथ भगवान्मुरारिरायुधैः खड्गचक्रगदाधनुर्भिरसेव्यताभाजि । कथं निजाङ्गवत् स्वशरीरैरिव । तेषां साम्यम्–आयुधैर्मनोरमैः भगवानपि स्वभावरम्यसंस्थानः । तैर्भयप्रदैः सोऽपि युधि भयानकालोकनः । तैः सदैवतैः सदा चानपायिभिरवियुक्तैः सोऽपि सदैवतः सनातनश्च । अङ्गं शरीरं, तच्च निरूप्यमाणं भगवानेव ॥ २६ ॥

**अवारितं गतमुभयेषु भूरिशः क्ष्माभृतामथ कटकान्तरेष्वपि ।**
**मुहुर्युधि क्षतसुरशत्रुशोणितप्लुतप्रधिं रथमधिरोहति स्म सः ॥ २७ ॥**

स देवः स्यन्दनमारोहति स्मारुरोह । कीदृशमुभयेषु द्वयेषु भूभृतां राजपर्वताख्यानां कटकान्तरेषु स्कन्धा¹वारमध्यसानुमध्याख्येषु अनिवारितमप्रतिषिद्धं सन्तं भूरिशो बहुशो गतं प्रविष्टं, तथा मुहुरसकृत् युधि संयति क्षता ये सुरशत्रवो दानवास्तेषां शोणितेन क्षतजेन प्लुता व्याप्ता प्रधिर्नेमिर्यस्य तत्तथोक्तम् । एतेन सांपरायिकं रथमारूढ इत्युक्तं भवति ॥ २७ ॥

**उपेत्य च स्वनगुरुपक्षमारुतं दिवस्त्विषा कपिशितदूरदिङ्मुखः ।**
**अकम्पितस्थिरतरयष्टि तत्क्षणं पतत्पतिः पदमधिकेतनं दधौ ॥ २८ ॥**

पतत्पतिः पक्षिनाथो गरुडस्तस्मिन् क्षणेऽधिकेतनं चिह्ने पदं दधौ स्थानं बबन्ध । कथम् अकम्पिता स्थेयसी स्थिरतरा सुदृढा यष्टिर्दण्डो यत्र । किं कृत्वा दिवः स्वर्गादुपेत्यागत्य । कथं क्षणं, स्वनेन वा गुरुर्दुःसहः पक्षवातो यत्र । कीदृगसौ त्विषा कनकभासा कपिशितानि पिशङ्गितानि दूरमत्यर्थं दिङ्मुखानि येन ॥ २८ ॥

**गभीरताविजितमृदङ्गनादया स्वनश्रिया हतरिपुहंसहर्षया ।**
**प्रमोदयन्नथ मुखरान् कलापिनः प्रतिष्ठते नवघनवद्रथः स्म सः॥ २९ ॥**

अथ रथः प्रतिष्ठते स्म चचाल । किं कुर्वन् नवघनवत् प्रावृषिकमेघ इव स्वनश्रिया मयूरान्नन्दयन् । रथचीत्कारं हि श्रुत्वा अभ्रस्वनाशङ्कया मयूरा हृष्यन्ति, अत एव मुखरान् सशब्दान् । कीदृश्या तया गाम्भीर्येण विजितो मुरजध्वनिर्यया, तथा हतरिपुहंसहर्षया क्षपितारिचक्राङ्कोद्धवया । वर्षाभ्रमपि प्रमोदितकलापि, गाम्भीर्याभिभूतमृदङ्गनादं हतहंसहर्षं च मानसगमनक्लेशात् ॥ २९ ॥

**निरन्तरस्थगितदिगन्तरं ततस्तदुच्चलद्बलमवलोकयञ्जनः ।**
**विकौतुकः प्रकृतमहाप्लवेऽभवद्विशृङ्खलप्रचलितसिन्धुवारिणि ॥३०॥**

समग्रावृताशाविवरं तत्सैन्यं प्रतिष्ठमानं पश्यंल्लोको विशृङ्खलप्रचलिते निर्मर्यादक्षुभिते सिन्धुवारिणि जलधिजले निष्कुतूहलोऽभवदासीत् दृष्टदर्शनात् प्रकृतः प्रस्तुतो महान् प्लवः पूरः क्षोभो यत्र तस्मिन्, कल्पान्ते किल जनस्य

१ 'न्दा' ख. ग. पाठः ।

समग्रव्याप्तहरिरिति क्षुभ्यत्युदधौ कौतुकं भवति, तच्चोच्चलद्वलं दृष्ट्वा दृष्टदृष्टव्यत्वात् न कुतूहलं पदं बध्नाति । प्रकृतीति पाठे प्रकृतिमहाप्लवे महाभूतसंक्षये कल्पान्ते विशृङ्खलं प्रचलितं यत् सिन्धुवारि तत्र जनो निःकौतुकोऽभवदिति व्यधिकरणे सप्तम्यौ ॥ ३० ॥

**बबृंहिरे गजपतयो महानकाः प्रदध्वनुर्जयतुरगा जिहेषिरे[1] ।**
**असंभवद्भृतगिरिगह्वरैरभूत् तदारवैर्दलित इव स्व आश्रयः ॥ ३१ ॥**

महेभा जगर्जुः, बृहत्पटहा दध्वनुः, जयाश्वा ववाशिरे । अत एव तेषां गजादीनामारवैः शब्दैः स्व आश्रयः शब्दस्यात्मीय आधार आकाशाख्यो दलित इवाभवत् भग्नतुल्य आसीत्, यतोऽसंभवद्भिः खेऽवर्तमानैस्तथा भृतगिरिगह्वरैः पूरितपर्वतगहनैरिति कर्मधारयः । बबृंहिरे इत्यात्मनेपदं चिन्त्यम् ॥ ३१ ॥

**अनारतं रसति जयाय दुन्दुभौ मधुद्विषः फलदलघुप्रतिस्वनैः ।**
**विनिष्पतन्मृगपतिभिर्गुहामुखैर्गताः परां मुदमहसन्निवाद्रयः ॥३२॥**

भगवद्दुन्दुभौ जयाय सततं ध्वनति सति प्राप्तगुरुहर्षत्वात् महीध्रा दरीवक्त्रैरहसन्निव । कीदृशैरिति हासज्ञाने हेतुमाह–निर्यत्केसरिभिः, यतः प्रतिबिम्बितगुरुप्रतिध्वनिभिः । यदा हि ढक्कास्ताड्यन्ते तदा तत्प्रतिध्वानेन क्षुभिताः सिंहा गुहाभ्यो निर्यान्ति अतश्च सिंहानां शौक्ल्यात् ज्ञायते भगवज्जयानन्दिता नगा हसन्तीति । हासो हि शुक्लः ॥ ३२ ॥

**जडीकृतश्रवणपथे दिवौकसां चमूरवे विशति सुराद्रिकन्धराः ।**
**अनर्थकैरजनि विदग्धकामिनीरतान्तरक्वणितविलासकौशलैः ॥३३॥**

विदग्धानां प्रौढानां कामिनीनां निधुवनमध्ये यन्मणितं तस्य ये विलासा लीलास्तत्र कौशलानि नैपुणानि तैर्निरर्थकैर्निष्फलैरजनि समपादि, कदा सुराद्रिकन्धराः चमूरवे विशति सति । कीदृशे देवानां बधिरितकर्णमार्गे । मेरुगुहासु हि देवा रमणीभिः सह रन्तुमारब्धाः यावच्च दुन्दुभिध्वनिभिः सर्वं व्यानशे तावन्मणितादेरश्रवणात् निरर्थकत्वम् ॥ ३३ ॥

**अरातिभिर्युधि सहयुध्वनो हतान् जिघृक्षवः श्रुतरणतूर्यनिःस्वनाः ।**
**अकुर्वत प्रथमसमागमोचितं चिरोज्झितं सुरगणिकाः प्रसाधनम् ३४**

---

[1] 'ही' क. ख. ग. पाठः ।

सुरगणिका अप्सरसो नवसंगमयोग्यमलंकरणमकुर्वत व्यधुः, यतोऽराति-भिर्युधि निहतान् जिघृक्षवो ग्रहीतुकामाः । कीदृशान् हतान् सह प्रकृतत्वाद्-रातिभिः साकं युध्यन्ते इति सहयुध्वनः । "सहे च" इति क्वनिप् । युद्धं प्रस्तुत-मिति कथं ता अमंसतेत्याह—आकर्णितसमरवादित्रध्वनयः । कीदृक् प्रसाधनं चिरोज्झितं बहुकालपरित्यक्तम्, संग्रामाभावे वीरसमागमाभावात् ॥ ३४ ॥

**प्रचोदिताः परिगतयन्तृकर्मभिर्निषादिभिर्विदितमताङ्कुशक्रियैः ।**
**गजाः सकृत्करतललोललालिकाहतासकृत्प्रणदितघण्टमाययुः ।३५।**

अथ गजाः स्तम्बेरमा आययुराजग्मुः सेनामध्यं प्राविक्षन्, यतो निषादि-भिराधोरणैः प्रचोदिताः प्रेरिताः । किंभूतैः परिगतं ज्ञातं यन्तृकर्म हस्तिव्या-पारो यैः, तथा विदिता ज्ञाता मता अभीष्टा अनुद्वेजिनी अङ्कुशक्रिया सृणि-व्यधकर्म यैः । यदि वास्माद् विद्धो बिभेतीत्येवं विदितं भयं यस्यां सा विदि-तभया अङ्कुशक्रिया येषां तैर्विदितभयाङ्कुशक्रियैः । कीदृशा गजाः करतलेन लो-लया त्वरितया लालिकया लालनेन सान्त्वनेन असकृदाहतास्फालिता, केचित्तु लालिकां कक्ष्यासंस्थानमाहननभाण्डमाहुः । करतले लोलया चटुलया लालिकया आहता इति । अत एवासकृत् पुनःपुनः प्रणादिता घण्टा यत्रागमे । सकृत् सदैकवारयोः, इत्य···यमे··· (?) ॥ ३५ ॥

**सविक्रमक्रमणचलैरितस्ततः प्रकीर्णकैः क्षिपत इव क्षिते रजः ।**
**व्यरंसिषुर्न खलु जनस्य दृष्टयस्तुरङ्गमादभिनवभाण्डभारिणः ॥३६॥**

लोकस्य दृष्टयोऽश्वान्न व्यरंसिषुर्न न्यवर्तन्त, अनवरतं दृष्टोऽसावित्यर्थः । कीदृशात् सविक्रममतितूर्णं विक्रमान्वितं वा यत् क्रमणं गमनं तेनेतस्ततश्चला-नि कम्प्राणि यानि प्रकीर्णकानि चामराणि तैः भूरेणुं क्षिपत इव निरस्यमानाद्य-था । तथा अभिनवभाण्डभारिणो नूतनालंकारधारिणः । भाण्डमश्वभूषणम् । व्यरंसिषुरिति लुङ् "यमिरमिनम्यातां सुक्च" ईट् च ॥ ३६ ॥

**चलाङ्गुलीकिसलयमुच्छ्रितैः करैरनृत्यत स्फुटकृतकर्णतालया ।**
**मदोदकद्रवकटभित्तिसङ्गिभिः कलस्वनं भ्रमरगणैरगीयत ॥ ३७ ॥**

**असिच्यत प्रशमितपांसुभिर्मही मदाम्बुभिर्धृतनवपूर्णकुम्भया ।**
**अवाद्यत श्रवणसुखं समुन्नमत्पयोधरध्वनिगुरु तूर्यमानकैः ॥ ३८ ॥**

**उदासिरे पवनविधूतवाससस्ततस्ततो गगनलिहश्च केतवः ।**
**यतः पुरः प्रतिरिपु शार्ङ्गिणः स्वयं व्यधीयत द्विपघटयेति मङ्गलम्॥३९॥**

भगवतः प्रतिरिपु विपक्षसंमुखं यतो गच्छतो द्विपघट्या इतीत्थं मङ्गलं शुभं स्वयं पुरोऽग्रे व्यधीयत । तथाहि–तया उच्छ्रितैः करैरनृत्यत नृत्तम् । कथं चलानि चटुलानि अङ्गुलीकिसलयानि करशाखापल्लवा यत्र । कीदृश्या तया स्फुटं कृतः कर्णतालः श्रोत्रविक्षेपो यया । तथा मधुपवृन्दैः करणभूतैस्तया मधुरध्वनि अगीयत गीतम् । कीदृशैः मदोदकेन द्रवा आर्द्रा दानाम्बुद्राविणी वा कटभित्तिर्गण्डस्थली तत्र सङ्गिभिर्लीनैः, किंच धृता नवाः पूर्णाः सुजाताः कुम्भा मस्तका यया तयैवंविधया अपास्तधूलिभिर्दानजलैरसिच्यत उक्षांबभूवे । तथा आनकैः पटहैः करणभूतैस्तया तूर्णमवादि वादितम् । कीदृशं श्रवणसुखं श्रोत्रसुखकारि तथा समुन्नमन्तः खे उद्गच्छन्तो ये पयोधरा मेघास्तेषां यो ध्वनिस्तद्वद् गुरु गम्भीरम् । तया नभःस्पृशोऽत एव च वातकम्पितपताका इतस्ततः केतवो ध्वजा उदासिरे उच्चिक्षिपे ऊर्ध्वीकृताः । इत्थं शौरेर्जयार्थं निर्यातस्य द्विपघटया स्वयं मङ्गलमकारि । अन्यस्यापि भटस्य रिपून् जेतुं गच्छतो वारविलासिनीजनतया स्वयं मङ्गलं क्रियते । तथाहि–तया कृतव्यक्ततालया चलदङ्गुलीकिसलया नृत्यते मधुरं च गीयते, तथा प्रशमितपांसुभिरम्बुभिर्मही सिच्यते, नवाश्च पूर्णकुम्भा धार्यन्ते, श्रोत्रसुखं च वाद्यते, उच्चाश्चलांशुकाः केतव उन्नाम्यन्ते ॥ विशेषकोऽयम् ॥ ३७ ॥ ३८ ॥ ३९ ॥

**न शून्यतामगमदसौ निवेशभूः प्रभूततां दधति बले चलत्यपि ।**
**पयस्यभिद्रवति भुवं युगावधौ सरित्पतिर्नहि समुपैति रिक्तताम्॥४०॥**

असौ निवेशभूः सेनासंनिवेशस्थानं चलत्यपि सैन्ये शून्यतां नागमत् रिक्ततां नाससाद, यतः प्रभूततां बाहुल्यं दधति बिभ्राणे बहुलत्वाद्धि ऊनत्वं न भवति । अत्रैव दृष्टान्तः–कल्पान्तेऽब्धिजले क्षोणीं व्यश्नुवाने सत्युदधिः सरित्पतित्वात् नैव रिक्ततामेति न शून्यत्वमेति ॥ ४० ॥

**यियासितामथ मधुभिद्विवस्वता जनो जरन्महिषविषाणधूसराम् ।**
**पुरः पतत्परबलरेणुमालिनीमलक्ष्यद्दिशमभिधूमितामिव ॥ ४१ ॥**

मधुभिदेव तेजस्वित्वात् वक्ष्यमाणधर्मयोगाच्च विवस्वान् अर्यमा तेन जि-

गमिषितामाशां लोकोऽभिधूमितामिवालक्षयत् धूमधूम्रामिवादर्शत्, यतः पुरोऽग्रे पतन्तं परबलरेणुं मलते बिभर्ति, अत एव जरढमहिषविषाणकर्बुराम् । यापि रविणा दिक् यियासिता साभिधूमितेत्युच्यते । यदुक्तम् "अङ्गारिणी दिग्रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता । प्रधूमिता यास्यति यां दिगीशः शेषाः प्रशस्ताः शुभदाश्च ताः स्यु" रिति ॥ ४१ ॥

**मनस्विनामुदितगुरुप्रतिश्रुतः श्रुतास्तथा न निजमृदङ्गनिःस्वनाः ।**
**यथा पुरः समरमुखोऽङ्गतद्विषद्बलानकध्वनिरुदकर्षयन् मनः ॥ ४२ ॥**

मानिनामुत्पन्नगम्भीरप्रतिस्वना अपि स्वमुरजध्वनयो न तथा मनोऽकर्षयन् रभसीचक्रुः युद्धे उत्कृष्टं व्यधुः, यथा पुरस्त्यसंग्रामप्रारम्भोत्थितः शत्रुसैन्यपटहनिनद उदकर्षयदुत्कृष्टं व्यधात् रणरसिकं चकार। परबलतूर्यश्रवणात् सुतरां युयुत्सा वीराणामुदपादीत्यर्थः ॥ ४२ ॥

**यथा यथा पटहरवः समीपतामुपाययौ स हरिवराग्रतःसरः ।**
**तथा तथा हृषितवपुर्मुदाकुला द्विषां चमूरजनि जनीव चेतसा ॥४३॥**

यथा यथा भगवद्वरपुरःसरः स तूर्यध्वनिर्निकटत्वं प्राप तथा तथा रिपुपताकिनी हृषितवपुः कण्टकितदेहा सती मुदाकुला हर्षव्यग्रा चेतसा अजनि बभूव, निर्भयहृदयासीदित्यर्थः । जनीव वधूरिव । सा हि यथा यथा वरस्य भर्तुरग्रेसरः पटहरवः सामीप्यमेति तथा तथा सरोमाञ्चा मुदाकुला च भवति । अग्रेऽग्रतः, आद्यादित्वात्तसिः । अग्रतः सरतीत्यग्रेसरः । "पुरोऽग्रतोऽग्रेषु सर्तेः" । हृषितामिति हृषि तुष्टावित्यस्य रूपम् । जनी महाराज्ञी ॥ ४३ ॥

**प्रसारिणी सपदि नभस्तले ततः समीरणभ्रमितपरागरूषिता ।**
**व्यभाव्यत प्रलयजकालिकाकृतिर्विदूरतः प्रतिबलकेतनावली ॥४४॥**

विदूरतो दूरादेव प्रतिबलकेतनावली शत्रुसैन्यचिह्नपङ्क्तिर्व्यभाव्यत आलुलोके चक्षुर्विषयं प्राप्ता । कीदृशी सपदि पटहरवानन्तरमेव नभस्तले खपृष्ठे प्रसारिणी प्रसृता । तथा वातक्षुब्धरजोधूसरितेत्यनिमित्तकथनम्, अतश्च प्रलयजकालिकाकृतिः कल्पान्तोदितमेघमालासंस्थाना । सापि नभःप्रसारिणी वातभ्रमितपरागरूषिता च ॥ ४४ ॥

**क्षणेन च प्रतिमुखतिग्मदीधितिप्रतिप्रभास्फुरदसिदुःखदर्शना ।**
**भयंकरा भृशमपि दर्शनीयतां ययावसावसुरचमूश्चमूभृताम् ॥ ४५ ॥**

असावसुरचमूर्दैत्यान्वयचैद्यपताकिनी चमूभृतां माधवभूभृतां क्षणेन दर्शनीयतां ययौ ऐत्, चिह्नालोकनात् क्षणेन दृष्टेत्यर्थः । कीदृशी भृशं नितान्तं भयंकरापि घोरापि । अपिर्विरोधे । या किल भयकारिणी सा कथं दर्शनीया रम्या स्यात् । तथा प्रतिमुखः प्रतिबलसंमुखो यस्तिग्मदीधितिश्चण्डांशुस्तस्य या प्रतिप्रभा प्रतिबिम्बिता कान्तिस्तया स्फुरन्त उल्लसन्तो येऽसयः कौक्षेयकाः तैर्दुःखदर्शना दुर्दर्शा दुरीक्षा । एतेनानिमित्तं सूचितम् । नहि रविः संमुखो जयाय । यापि दुःखदर्शना सा कथं दृश्यत्वं यातीत्यत्रापि विरोधः ॥ ४५ ॥

**पयोमुचामभिपततां दिवि द्रुतं विपर्ययः परित इवातपस्य सः ।**
**समक्रियः समविषमेष्वथ क्षणात् क्षमातलं बलजलराशिरानशे ।४६।**

अथ स माधवीयः सैन्याब्धिः क्षणेनैव परितः क्षोणीपृष्ठमानशे व्याप । कीदृशः समविषमेषु समक्रियः सुगदुर्गेषु तुल्यविक्रमः । क इव व्याप अब्दानां खे यातां यथातपस्य विपर्ययश्छाया द्रुतमाशु समन्तात् भुवमश्नुते ॥ ४६ ॥

**ममौ पुरः क्षणमिव पश्यतो महत् तनूदरश्रितभुवनस्य तस्य तत् ।**
**विशालतां दधति नितान्तमायते बलं द्विषां मधुमथनस्य चक्षुषि ।४७।**

तस्य भगवतस्तत् सैन्यं रिपुसैन्यं क्षणमिवाग्रे पश्यतः चक्षुषि महदपि ममौ ववृते, ईक्षणमात्रेणैव समग्रं बलमियदेतत् इति दृष्ट्यासौ पर्यच्छैत्सीदित्यर्थः । किंविशिष्टस्य तस्य तनावुदरे स्थितानि भुवनानि यस्य । किंभूतेऽक्षिण विशालतां दधति पृथुले भृशं चायते दीर्घे । एतदुक्तं भवति–स्वल्पे कुक्षौ यस्य जगन्ति ममुस्तस्य पृथुदीर्घेऽक्षिण यद्बलं वृत्तं तन्न चित्रमित्यर्थः ॥ ४७ ॥

**भृशस्विदः पुलकविकासिमूर्तयो रसाधिके मनसि निविष्टसाहसाः ।**
**मुखे युधः सपदि रतेरिवाभवन् ससंभ्रमाः क्षितिपचमूवधूगणाः ।४८।**

क्षितिपचम्व एव वध्वस्तासां गणा विसराः युधः समितो मुखे प्रारम्भे सपदि एकपदे एवंविधा अभवन्नासन् । किंविधाः भृशस्विदस्तीव्रघर्मिताः, पुलकविकासिमूर्तयो रोमोङ्गमोच्छ्वसितवपुषः, रसाधिके रोषबहले चेतसि निविष्टं कृतपदं साहसं दुःसाधं कर्म येषाम् । ससंभ्रमाः सत्वराः । एवंविधा नृपच-

मृगणा युधो मुखेऽभूवन् रतेरिव मुखे वधूगणाः । सुरतारम्भे हि वध्वो भृशस्विदः पुलकविकासिमूर्तयो रसाधिके मनसि निविष्टसाहसाश्च भवन्ति । रसोऽत्र शृङ्गारः, साहसं वैयात्यम् ॥ ४८ ॥

**ध्वजांशुकैर्ध्रुवमनुकूलमारुतप्रसारितैः प्रसभकृतोपहूतयः ।**
**यदूनभि द्रुततरमुद्यतायुधाः क्रुधारयः परमरयं प्रपेदिरे ॥ ४९ ॥**

अथ रिपवः क्रोधाद् वृष्णीन् प्रति परमं महान्तं रयं वेगं क्षोभं प्रपेदिरे प्राप्ताः, द्रुततरं त्वरितमुद्यतायुधा उद्गूर्णहेतयः । उत्प्रेक्ष्यते–ध्रुवं निश्चितं प्रशस्तवातवितानितैश्चिह्नपट्टैः प्रसभविहिताह्वानाः । यदूनां हि पृष्ठतो वायुर्वहति यश्चाहूयते स त्वरया यत्किंचिदपि गृहीत्वा वेगेनायाति ॥ ४९ ॥

**हरेरपि प्रति परकीयवाहिनीरधिस्यदं प्रववृतिरे चमूचराः ।**
**विलम्बितुं न खलु सहाः सहस्विनो विधित्सतः कलहमवेत्य विद्विषः ॥ ५० ॥**

भगवतोऽपि सैनिकाः परकीयवाहिनीर्विपक्षसेनाः प्रति अधिस्यदं वेगेन प्रववृतिरे डुढौकिरे । अपिः पूर्वापेक्षया समुच्चये । न केवलं यदूनभ्यरयः प्रवृत्ताः यावत्तेऽपि तान्प्रतीत्यर्थः । यस्मात् ये सहस्विनस्तेजस्विनस्ते विद्विषोऽभिमातीन् कलहं वैरं विधित्सतः चिकीर्षतोऽवेत्य बुद्ध्वा विलम्बितुं प्रतीक्षितुं न सहा न समर्थाः । वैरायमाणानरीन् अवगत्य सपद्येव युध्यन्ते इत्यर्थः ॥५०॥

**निवाततां दधदपि वर्म बिभ्रतः स्फुरन्मणिप्रसृतमरीचिसूचिभिः ।**
**निरन्तरं नरपतयो रणाजिरे रराजिरे शरनिकराचिता इव ॥ ५१ ॥**

संग्रामाङ्गने मूर्धाभिषिक्ता रेजुः । कीदृक्षाः वर्म कवचं दधतः । किंविधं निवाततां निच्छिद्रत्वं दधत्, तथोल्लसद्रत्ननिर्गतकिरणाङ्कुरैर्निरन्तरं व्याप्तम् । अतश्चोत्प्रेक्ष्यते–शरनिकराचिता इव सायकसमूहभरिता यथा । अपिर्विरोधे । यत् किल दंसनं नीरन्ध्रं तेन कथं कवची शराचितो भवेत् ॥ ५१ ॥

**अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति ।**
**बलैश्चलचरणविधूतमुच्चरद् घनावलीरुदचरत क्षमारजः ॥ ५२ ॥**

अथ क्षमारजः क्ष्मारेणुरुच्चरद् उद्गच्छत् मेघमाला उदचरत आचक्राम ।

कीदृशं जरत्कपोतकण्ठलोमपुञ्जधवलकान्ति धूलिकपोतधूसरमित्यर्थः । तथा सैन्यैश्चलाद्भिश्चरणैर्विधूतं प्रेरितम् । उच्चकैरुन्नम्रम् । उदचरतेति "उदश्चरः सकर्मकादि" ति तङ् । उच्चरदिति तु कर्माभावात् प्रत्युदाहरणम् ॥ ५२ ॥

**विषङ्गिभिर्भृशमितरेतरं क्वचित् तुरङ्गमैरुपरि निरुद्धनिर्गमा ।**
**चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः ॥ ५३ ॥**

अश्वैरनुपदं क्रमे क्रमे चलाचलैश्चटुलैः खुरैराहताः क्षोभिता अपि रेणवोऽध एव चिरं कचिद्विबभ्रमुः भ्रेमुः । यतः परस्परं भृशसङ्गित्वात् उपरि निरुद्धप्रसराः । चलाचलैरिति चलेरचि "चरिचलिपतिवधीनामच्याक् चाभ्यासस्ये"ति द्वित्वमाक् च ॥ ५३ ॥

**गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् ।**
**सिसृक्षतः सरसिजजन्मनो जनं बलस्य तु क्षयमुपनेतुमिच्छतः॥५४॥**

इह कमलसैन्ययोरयमेव भेदः–यत् ब्रह्मणो जनं स्रष्टुकामस्य रजोगुण उत्कटं विवृद्धमभूत्, बलस्य तु तं जिघांसतो रजो रेणुरासीत् । अन्यत् तु सर्वसादृश्यम् । तथाहि–ब्रह्मणस्तावत् गरीयसोऽत्युत्कृष्टस्य प्रचुरमुखस्य चतुर्वक्त्रस्य रागिणो लोहितस्य । बलस्यापि गरीयसो विस्तीर्णस्य प्रचुरमुखस्य बहुद्वारस्य रागिणो रणरसिकस्य । रजः कीदृशं ब्रह्मपक्षे उत्कटमुद्रिक्तं बलवत् अत एव व्यवहितः सत्त्वाख्यो गुणो येन तत् व्यवहितसत्त्वम् । रजसो ह्याधिक्ये विरिञ्चः प्रजाः सृजति । अपरत्र तु उत्कटं प्रभूतमत एव व्यवहितसत्त्वं पिहितप्राणि ॥ ५४ ॥

**पुरा शरक्षतिगलितानि संयुगे नयन्ति नः प्रसभमसृञ्जि पङ्कताम् ।**
**इति ध्रुवं व्यलगिषुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः ॥ ५५ ॥**

अनलसखस्याग्निसहचरस्य वायोः केतवो रेणवो ध्रुवं निश्चितमित्यतो हेतोरात्तभीतयो गृहीतभयाः सन्तः खमाकाशमुच्चकैः दूरं व्यलगिषुरारुरुहुः । "ह्ययन्तक्षणे" ति वृद्ध्यभावः । कुत इत्याह–संयुगे समरे शरक्षतिगलितानि सायकप्रहारस्रुतानि असृञ्जि क्षतजानि प्रसभं बलात् नोऽस्मान् पुरा अचिरादेव पङ्कतां नयन्ति कर्दमीकुर्वन्तीति धूलिदर्शनाद्वातानुमाने वातकेतुत्वं रेणोः । विना वायुमग्निर्न ज्वलतीति वायोरग्निसखत्वम्, एतदर्थप्रतिपिपादयिषया च रेणु-

ग्रहणमेव नाकारि ॥ ५५ ॥

**समुन्नमद्घननिकुरुम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः ।**
**क्वचिच्छरज्जलधरपिण्डपाण्डुरः खुरक्षतः क्षितितलरेणुरुद्ययौ ॥ ५६ ॥**

शफाहतं भूरज उद्ययौ उन्ननाम । कीदृशं भूमेर्नानात्वात् क्वचिद्देशे उद्गच्छदभ्रवृन्दधूसरम्, क्वचिच्च सौवर्णचूर्णपिशङ्गम्, क्वचित् द्रुतघनजलदशकलधवलम् । निर्जलोऽपि मेघो जलधर उच्यते, यथा अपचन्नपि पाचक इति । हिरण्यस्य विकारो हिरण्मयम् । चतुर्भिर्वर्णैर्यत्यभावादश्रव्यतात्र ॥ ५६ ॥

**महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि ।**
**विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजयः ५७**

दिगन्ता आशान्ता एव महत्त्वात् दन्तिन इभास्तेषां जलदा एव कार्ष्ण्यात् मदाम्बूनि दानवारीणि तेषां राजयो लेखाः ता विसारितां विकासं विस्तरमजिहत ईयुर्गताः, दिशो मेघा आवृण्वन्नित्यर्थः । अत्र हेतुः-कदा सेनासमुद्भूतरेणुनिकरे मुखलग्ने सति । कीदृश्यस्ताः कोकिलावलीमलीमसाः परभृतमालामलिनाः, दिङ्मुखेषु रजः प्रसृतमभ्ररूपमभवदिति तात्पर्यार्थः । यदापि सेनारजो महेभस्य मुखमावृणोति तदा तस्य कोकिलावलीनीला मदराजयो विसरन्ति । केचित्तु दिगन्तेषु दन्तिनो दिग्गजाः, जलदतुल्यं च मदाम्बु इत्याहुः । अनीकजे रजसि मुखलग्ने दिग्दन्तिनां मदराजयः प्रसस्रुरित्यर्थः । ओहाङो लाङि अजिहतेति रूपम् ॥ ५७ ॥

**शिरोरुहैरलिकुलकोमलैरमी मुधा मृधेऽमृषत युवान एव मा ।**
**बलोद्धतं धवलितमूर्धजानिति ध्रुवं जनाञ्जरत इवाकरोद्रजः ॥ ५८ ॥**

बलोद्धतं सैन्यचालितं रजो जनान् धवलितमूर्धजान् सितकेशान् व्यधिताकरोत् । उत्प्रेक्ष्यते-ध्रुवं निश्चितमिति अतो हेतोः जरत इव वृद्धानिव व्यधात् । कुत इत्याह-अमी जना मृधे प्रधने युवान एव मुधा वृथा मा मृषत मा प्राणान् त्याक्षुः । वृद्धस्य हि मरणं सफलं तरुणस्य तारुण्यान्मुधैव । तारुण्यमेषां कथमबोधीत्याह-भृङ्गश्रेणिसदृशैर्मूर्धजैर्यत उपलक्षिताः । ध्रुवशब्दसंनिधानादिवशब्दोऽत्रावधारणे नौपम्ये । मृषतेति लुङ् । "उश्चे" ति सिचः कित्त्वम् । माङाशङ्कायाम् ॥ ५८ ॥

**सुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परः ।**
**यतः क्षितेरवयवसंपदोऽणवस्त्विषां निधेरपि वपुरावरीषत ॥५९॥**

बहुभिः सुसंहतैरेककार्यैः निश्चितं तेजस्व्यपि परः परिभूयते । कथं ज्ञायते इत्याह—यतो यस्मात् भुव उर्व्या अवयवसंपदो रेणुनिकराख्या भगवतो भास्करस्य बिम्बमावरीषत, और्णविषुः तिरोदधुः । अत्र हि रेणूनां सुसांहत्यमेव कारणम् । आवरीषतेति "लिङ्सिचोरात्मनेपदेष्वि" तीडागमः । "वृतो वे" ति दीर्घः ॥ ५९ ॥

**द्रुतद्रवद्रथचरणक्षतक्ष्मातलोल्ललद्बहलरजोवगुण्ठितम् ।**
**युगक्षयक्षणनिरवग्रहे जगन्महोदधेर्जल इव मग्नमाबभौ ॥ ६० ॥**

जगत् सागरतोये इव मग्नं ब्रुडितमाबभौ रेजे । कुत इत्यत आह—द्रुतं मङ्क्षु द्रवन्तो गच्छन्तो ये रथचरणाश्चक्राणि तैः क्षतं यत् क्ष्मातलं तत उल्ललदुच्चलत् बहलं यद्रजस्तेनावगुण्ठितं परिवेष्टितम् । कीदृश्यब्धिजले युगक्षयः कल्पान्त एव क्षण उत्सवस्तेन निरवग्रहे उच्छृङ्खले सर्वव्यापिनि ॥ ६० ॥

**अनुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिनाम्बरश्रियः ।**
**दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणामविहरणीयतां ययुः॥६१॥**

जनानामाशाङ्गनाः क्षणमविहरणीयतामप्राप्यत्वं दुर्गमत्वं ययुरगुः, यतो रजस्वलाः रजःपूर्णाः, अत एवास्फुरन्ती रवेरेव मुखस्य दीप्तिर्यासाम् । तथा परिमलिनाम्बरश्रियो धूसरनभोलक्ष्मीकाः, अत एवाविलोकनक्षमा द्रष्टुमशक्याः, अतश्चाविहरणीयतां जग्मुः । याप्यङ्गना रजस्वला स्त्रीधर्मिणी सा लोकानामविहरणीया अगम्या अकाम्या भवति, सापि अनुल्लसद्वक्त्रकान्तिर्मलिनाम्बरा अदृश्या च भवति । यदुक्तम् "यद्यत् स्पृशति सा किंचिद्यदाक्रामति वा पदा । पश्यत्याभाषते वापि तदलक्ष्म्याभिभूयते" इति ॥ ६१ ॥

**निरीक्षितुं वियति समेत्य कौतुकात् पराक्रमं समरमुखे महीभृताम् ।**
**रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणः पलायत ।६२।**

सुरसमूहः संख्यारम्भे भूभृतां पौरुषं द्रष्टुं खे कुतूहलात् संगम्यापि पलायत प्रतीयाय । कदेति कारणमाह—धूलिपुञ्जेऽसंकुचितनयनकुवलयपीडाकारिणि । देवा ह्यनिमेषाः, अतश्चादर्णां रजोभयाद् दुद्रुवुः ॥ ६२ ॥

**विषङ्गिणि प्रतिपदमापिबत्यपो हताचिरद्युतिनि समीरलक्ष्मणि ।**
**शनैःशनैरुपचितपङ्कभारिकाः पयोधराः प्रययुरपेतवृष्टयः ॥ ६३ ॥**

अथ मेघा मन्दं मन्दं प्रययुः प्रतिजग्मुः, यत उपचितपङ्कभारिकाः अतिवृ (ष्टि ? द्ध) कर्दमभारवाहिनः । कदा समीरलक्ष्मणि वातध्वजे रजसि विषङ्गिणि लग्ने सति । अत एव प्रतिपदमनुक्षणम् अप ऊर्णांसि आपिबत्याचामति, तथा हताचिरद्युतिनि क्षपितशम्पे मेघानामपेतवृष्टित्वात्, जलवशाद्धि तडितो भवन्ति अतश्च जलस्य रेणुयोगेन कर्दमीभूतत्वाद् भारत्वे सति स्वैरगमनम् । योऽपि भारिको महाभारं गृह्णाति स शनैर्याति । उपचितं पङ्क[1]भारं वहन्तीति उपचितपङ्कभारिकाः पयोधराः । "भस्त्रादिभ्यः ष्ठन्" । यद्दिवा मत्वर्थीयः ॥ ६३ ॥

**नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनधिगतानि लेभिरे ।**
**चलच्चमूतुरगखुराहतोत्पतन्महीरजःस्नपनसुखानि दिग्गजैः ॥ ६४ ॥**

दिग्गजैश्चलद्भिश्चश्चद्भिश्चमूतुरगखुरैः सेनाश्वशफैराहतं क्षुण्णम् अनन्तरमुत्पतत् खं प्रसरत् यन्महीरजो भूरेणुस्तेन यत्स्नपनं स्नानं तेन यानि सुखानि तानि लेभिरे आसादितानि । गजानां हि धूलिस्नानादुपजोषं भवति । पूर्वं च तैस्तान्यनधिगतान्यप्राप्तानि, यतो वियद्गतैः खस्थैरत एव नभोनदीव्यतिकरेण स्वःसिन्धुसंपर्केण धौतमूर्तिभिः क्षालितदेहैः । योऽपि गजो धूलिस्नानं कुरुते स पूर्वं नद्यां स्नातीति जातिस्वभावः ॥ ६४ ॥

**गजव्रजक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा ।**
**नभस्तलं बहलतरेण रेणुना ततोऽगमत् त्रिभुवनमेकतामिव ॥ ६५ ॥**

ततो हेतोस्त्रीणि भुवनानि एकतामिव जग्मुरैक्यमिव प्रापुः । कुत इत्याह–यस्मात् हास्तिकपादक्षेपभारनम्रत्वात् उर्व्या रसातलं समग्रं व्यानशे व्यापि, खं चैव महीयसा रजसा, अतश्च सर्वस्यैव मृन्मयत्वात् ज्ञायते एकमेव जगत् त्रिभिर्भुवनैः सम्पन्नमिति ॥ ६५ ॥

**समस्थलीकृतविवरेण पूरिताः क्षमाभृतां बलरजसा महागुहाः ।**
**रहस्त्रपाविधुरवधूरतार्थिनां नभःसदामुपकरणीयतां ययुः ॥ ६६ ॥**

[1] 'पङ्कं भरन्ति' क. ख. ग. पाठः ।

अद्रीणां बृहत्यः कन्दराः सैन्यरेणुना व्याप्ताः सत्यो नभःसदां खेचराणां विद्याधरादीनामुपकरणीयतां ययुरुपयोग्यत्वं जग्मुः । यतो रह एकान्ते त्रपाविधुरवधूरतार्थिनां लज्जामूढनवोढानिधुवनाभिलाषिणाम्, त्रपाविधुरत्वाद्वधूनां रजासि रिरंसूनामित्यर्थः । यदा च रजसा गुहा व्याप्तास्तदान्येनान्योन्यं च दर्शनाभावादुपकरणीयत्वम् । रहसि सुरते त्रपाविधुराणामित्येवं वा योज्यम् । कीदृशेन रजसा समस्थलीकृतानि स्थलरूपतां प्रापितानि विवराणि कुहराणि येन तेन समस्थलीकृतविवरेण । उपकुर्वन्तीत्युपकरणीयाः ॥ ६६ ॥

**गते मुखच्छदपटसादृशीं दृशः पथस्तिरोदधाति घने रजस्यपि ।**
**मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥६७॥**

करिणः प्रति गजा वेगादभिययुरेव नतु न जग्मुः । कदाचिदन्योन्यदर्शनं स्यादित्याह—रेणौ दृशः पथो दृष्टिमार्गान् तिरोदधत्यावृण्वति सति, अत एव मुखच्छदपटसादृश्यं प्राप्ते । गजानां हि युध्यमानानां वदनावरणवसनं दीयते । कथं तर्हि संमुखं गता इत्याह—मदानिलैर्दानवातोपलम्भात् । कीदृशैः अधिगतं मधु रसो यैस्तानि अधिमधूनि फुल्लानि यानि चूतानि तद्वद्गन्धः सौरभं येषां तैरधिमधुचूतगन्धिभिः । केचित्तु अधिमधु मधौ वसन्ते ये चूता इत्याहुः । षित्त्वात् (ङीष्) ष्यञ् स्त्रियामपि वर्तते इति सादृशीति प्रयोगः । पथ इति शसन्तः ॥ ६७ ॥

**मदाम्भसा परिगलितेन सप्तधा गजाञ्जनः शमितमरुद्ध्वजानधः ।**
**उपर्यवस्थितघनपांसुमण्डलानलोकयत् ततपटमण्डपानिव ॥ ६८ ॥**

लोको मातङ्गानलोकयदद्राक्षीत् । कीदृशान् सप्तधा स्रुतेन दानाम्भसा अधो बुध्ने शमितमरुद्ध्वजान् क्षपितरेणून् उपरि त्वनष्टसंहतरेणुचक्रान् । अतश्चोत्प्रेक्ष्यते—ततानि प्रसारितानि पटमण्डपानि करक्ककानि येषां तान् ततपटमण्डपान् कृतवितानानिव । गण्डौ कुम्भौ तालु वक्षः करश्चेति सप्त मदसंस्रुतिस्थानानि । अत्र सर्गे रुचिरा वृत्तम् ॥ ६८ ॥

**अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृत-**
**स्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामनि ।**
**वर्षन्तः शममानयन्नुपलसच्छृङ्गारलेखायुधाः**
**काले कालियकायकालवपुषः पांसुं गजाम्भोमुचः॥६९॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये सप्तदशः सर्गः ॥ १७ ॥

कार्ष्ण्यान्महत्त्वाच्च गजा एवाब्दास्ते काले रणावसरे वर्षतौ मदं क्षरन्तः पांसुं रेणुं शममानयन् अन्तमनैषुः । मेघा अपि काले क्षरन्तः पांसुं शमयन्ति। कीदृशा गजा अम्भोमुचो वेति । अधुना श्लेषः । अन्यूना महती उन्नतिरुच्छ्रायो येषाम् । अतिमात्रं नितरां पृथवो विस्तीर्णाः, अत एव पृथ्वीधरश्रीभृतः पर्वताकारा इत्युभयत्रापि तुल्यम् । गजाः कनकावलीभिः कक्ष्यानक्षत्रमालाभिः सुवर्णपङ्क्तिभिः सौदामिनीदामनि विद्युद्गुणविषयामुपमां सादृशीं तन्वन्तो विस्तारयन्तो बिभ्रतः, तथा चोपलसन्ती द्योतमाना श्लिष्यन्ती[1] वा शृङ्गारलेखा गैरिकादिरागराजिरायुधानि च येषाम् । मेघा अपि विद्युद्वन्तः सलेखायुधाश्च भवन्ति । लेखायुधं सुरधनुः शक्रचापम् । तथा कालियाख्यस्य नागस्य कायो देहस्तद्वत् कालं कृष्णं वपुर्मूर्तिर्येषां, द्वयेऽपीति रूपकश्लेषसंकरोलंकारः । शार्दूलविक्रीडितं वृत्तम् । इति भद्रम् ॥ ६९ ॥

इति श्रीमहामहोपाध्यायवर्य्य-आनन्ददेवायनि—वल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायां सप्तदशः सर्गः ॥ १७ ॥

---

१ 'न्ते' क. पाठः ।

अथ

# शिशुपालवधकाव्ये

## अष्टादशः सर्गः



**संजग्माते तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण ।**
**पक्षच्छेदात्पूर्वमेकत्र देशे वाञ्छन्तौ वा सह्यविन्ध्यौ निलेतुम् ॥ १ ॥**

अथ तौ सैन्यसागरौ रयेण स्यदेन संजग्माते ढुडौकाते मिलितौ । कीदृशौ अपायानपेक्षौ मरणमप्यगणयन्तौ धीरनादौ निर्भयारवौ मुक्तसिंहनादावित्यर्थः । उत्प्रेक्ष्यते—पक्षच्छेदात् पूर्वं प्रथममेकस्थाने निलेतुमुपवेष्टुं संगन्तुमिच्छन्तौ सह्यविन्ध्याविव सपक्षौ पर्वताविव संगतावित्यर्थः । वा इवार्थे । संजग्माते इति "समो गम्यृच्छि" इति तङ् । सर्गेऽत्र शालिनी वृत्तम् । "म्तौत्गौ-गश्चेच्छालिनी वेदलोकैः" ॥ १ ॥

तमेव संगममाह—

**पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनी स्यन्दनस्थम् ।**
**इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ २ ॥**

सेना वाहिनी प्रत्यनीकस्य विपक्षसैन्यस्य रागाद्रसात् इत्थमङ्गेनाङ्गं भेजे सदृशेनावयवेन सदृशं तं शिश्राय । रथगजतुरगपदाति सेनाया अङ्गम् । तमेव प्रकारमाह—पत्तिः पदातिमेव एयायाजगाम, वाजी अश्वो वाहमश्वमेव, करी च दन्तिनमेव, तथा रथी रथिनमेवेति द्वन्द्वयुद्धम् । कस्येव भेजे वल्लभस्येव, यथा प्रियस्य कान्ता अनुरागादङ्गेनोर्वादिना अङ्गमूर्वादिकं भजते । पत्तिशब्द औणादिकः । एयायेति आङ्पूर्वस्येणो लिट्, आद्गुणः ॥ २ ॥

**रथ्याघोषैर्बृंहया वारणानामैक्यं गच्छन्वाजिनां हेषया च ।**
**व्योमव्यापी संततं दुन्दुभीनामव्यक्तोऽभूदीशितेव प्रणादः ॥ ३ ॥**

दुन्दुभीनां ढक्कानां प्रणादो ध्वनिरव्यक्तोऽभूदस्फुट एवासीत्, दुन्दुभिध्वनिभिर्निःसंदेहं न ज्ञायत इत्यर्थः । यतो रथ्याघोषैः स्यन्दनचीत्कारैः गजानां

च बृंहया गलगर्जितेन तथाश्वानां हेषया स्वनेनैक्यं गच्छन्नभेदं प्राप्नुवन्, अत एव व्योमव्यापी दिवस्पृक् । क इव ईशितेव ब्रह्मा यथा, स हि प्रणादः शब्दमयो व्योमव्यापी शब्दस्याकाशे लयात्, अव्यक्तः परमात्मरूपत्वात् ऐक्यं च शब्दान्तरैर्याति प्राणिभिर्वा जठरे वहनात् । रथानां समूहो रथ्या "खलगोरथा" दिति यत् ॥ ३ ॥

**रोषावेशाद्धावतः प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजस्य ।**
**दीर्घास्तिर्यग्वैजयन्तीसदृश्यः पादातस्य भ्रेजिरे खड्गलेखाः ॥ ४ ॥**

पादातस्य पत्तिपूगस्य खड्गलेखा असिलेखा भ्रेजिरे रेजुः । कीदृक्तस्य रोषात् सक्रोधत्वात् प्रत्यमित्रं शत्रुसंमुखं धावतः, तथा दूरमत्यर्थमुत्क्षिप्त उद्यतः स्थूलो बाहुरेव ध्वजश्चिह्नं येन, अत एव ता वैजयन्तीसदृश्यः पताकातुल्यास्तिर्यक् तिरश्चीनाः । पदातीनां समूहः पादातम् । "भिक्षादिभ्योऽण्" । भ्रेजिरे इति "फणानां च सप्ताना" मित्येत्वाभ्यासलोपौ ॥ ४ ॥

**वध्रावद्धा धोरितेन प्रयातामश्वीयानामुच्चकैरुच्छलन्तः ।**
**रौक्मा रेजुः स्थासका मूर्तिभाजो दर्पस्येव व्याप्तदेहस्य शेषाः ॥ ५ ॥**

अश्वीयानां वीतिवृन्दानां रौक्माः सौवर्णाः स्थासकाश्चन्द्रका रेजुश्चकाशिरे । उत्प्रेक्ष्यते—सर्वाङ्गीनस्य दर्पस्य तेजसो मूर्तस्य शेषा इव भागा यथा । कीदृशास्ते वध्रेष्वग्रिमेषु आबद्धा योजिता उच्छलन्तः स्फुरन्तः । कीदृशानामश्वीयानां धोरितेन गतिविशेषेण प्रयातां व्रजताम्, उच्चकैरुन्नतानाम् । अश्वानां समूहोऽश्वीयम् । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" ॥ ५ ॥

**सान्द्रत्वक्कास्तल्पलाश्लिष्टकक्ष्यामाङ्गीं शोभामाप्नुवन्तश्चतुर्थीम् ।**
**कल्पस्यान्ते मारुतेनापनुन्नाश्चेलुश्चण्डा गण्डशैला इवेभाः ॥ ६ ॥**

इभा द्विरदाश्चेलुः प्रतस्थिरे । कीदृशाः सान्द्रत्वक्का घनचर्माणः प्रहारसहा इत्यर्थः । तथा तल्पलायां पृष्ठवंशे श्लिष्टा लग्ना कक्ष्या मध्यबन्धनं रुक्मरज्जुर्यस्यास्ताम्, आङ्गीं शारीरीं चतुर्थीं शोभां कान्तिमाप्नुवन्तः प्राप्ताः, चत्वारिंशद्वर्षदेश्या इत्यर्थः । दश दशा हि दन्तिनः पुरुषस्येव । चण्डा उग्राः । उत्प्रेक्ष्यन्ते—कल्पान्तवातप्रेरिता गण्डशैला इव मुक्तपाषाणा यथा पर्वतैकदेशतुल्या इवेत्यर्थः ॥ ६ ॥

**संक्रीडन्ती तेजिताश्वस्य रागादुद्यम्यारादग्रकायोत्थितस्य ।**
**रंहोभाजामक्षधूः स्यन्दनानां हाकारं नु प्राजितुः प्रत्यनन्दत् ॥ ७ ॥**

रथानामक्षधूः संक्रीडन्ती प्राजितुर्हाकारं नु प्रत्यनन्दत् । अक्षस्यावयवविशेषस्य धूः काष्ठविशेषोऽक्षधूः । "अनक्षे" इति वचनात् समासान्ताभावः । सा संक्रीडन्ती कूजन्ती सती प्राजितुः सारथेः प्रोत्साहनार्थं हाशब्दमभिननन्देव, सुष्ठु रम्योत्तेजना कृतेति । कीदृशस्य रागाद्रसात् उद्यम्योद्यमं गृहीत्वा तेजिताः प्रोत्साहिता अश्वा येन । तथारात् दूरमत्यर्थमग्रकायेन पूर्वदेहेनोत्थितस्य, पूर्वकायेनोत्थाय हाकारपूर्वं तेजिताश्वस्येत्यर्थः । अत एव रंहोभाजां जविनां रथानाम् । अत एव च संक्रीडनात् ज्ञायते, साधु त्वया तेजिता अश्वा रम्यो हाकारः कृत इति मध्ये स्वरमाह । संक्रीडन्तीति "क्रीडोऽनुसंपरिभ्यश्चे" ति तङ् न भवति । "समोऽकूजने" इति निषेधात् । प्राजितेत्यजेर्वलादावार्धधातुके वीभावो विकल्पितः । नुरिवार्थे ॥ ७ ॥

**कुर्वाणानां संपरायान्तरायं भूरेणूनां मृत्युना मार्जनाय ।**
**संमार्जन्यो नूनमुद्धूयमाना भान्ति स्मोच्चैः केतनानां पताकाः ॥ ८ ॥**

केतनानां ध्वजानां पताका वैजयन्त्यो भान्ति स्म चकाशिरे । उत्प्रेक्ष्यते– ध्रुवं मृत्युनोर्वीरजसां परिमार्जनायापासनायोद्धूयमानाः चाल्यमानाः संमार्जन्यः शोधनिकाः, यतः संपरायान्तरायं समिद्विघ्नं कुर्वताम् । एतच्च प्राणहरस्य नेष्टम् । संमृज्यते शोध्यते प्रेर्यते धूलिराभिरिति संमार्जन्यः ॥ ८ ॥

**उच्चन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति ।**
**आस्फाल्यन्ते कार्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ९**

धन्विभिर्धानुष्कैः काममत्यर्थमुच्चन्नादं सशब्दं कार्मुकाणि कोदण्डानि आस्फाल्यन्ते स्म धूतानि । हस्त्यारोहैश्च यन्तृभिर्गजमस्तकान्याहतानि आस्फालितानि । कीदृशानि धनुःशिरांसि निष्ठुराणि कर्कशानि स्थूलान्यतनूनि, उच्चैरुच्चकानि तथा मण्डलत्वं दधन्ति परिणाहीनि आकर्षात्स्वभावाच्चेति सर्वं तुल्यम् । धन्व धनुः । 'धन्व धनुः कोदण्डं शरासनं कार्मुकं चापमि' ति वचनात् । "व्रीह्यादित्वादिनिः" ॥ ९ ॥

**घण्टानादा निःस्वना डिण्डिमानां ग्रैवेयाणामारवा बृंहितानि ।**
**आ[1]मित्येव प्रत्यवोचन् गजानामुत्साहार्थं वाचमाधोरणस्य ॥ १० ॥**

द्विपानामुत्साहार्थं तेजनार्थमाधोरणस्यारोढुर्वाक् सान्त्वगीस्ताम् अमून्या[2]मित्येव प्रत्यवोचन्, एवमेतन्नान्यथेति प्रतीपं जगदुरिव । यस्य किल वाग्दीयते तेन प्रतिवक्तव्यम् । कानीत्याह-घण्टानादाः किङ्किणीस्वनाः, डिण्डिमानां ढक्कानां निःस्वना रवाः, ग्रैवेयाणां ग्रीवाशृङ्खलानां चारवा झणत्काराः, तथा बृंहितानि गलगर्जितानि । ग्रीवासु भवं ग्रैवेयमाभरणात् यदन्यदन्ढ्वादि । "ग्रीवाभ्यश्च" ति ढञ् ॥ १० ॥

**यातैश्चातुर्विध्यमस्त्रादिभेदादव्यासङ्गैः सौष्ठवाल्लाघवाच्च ।**
**शिक्षाशक्तीः प्राहरन् दर्शयन्तो मुक्तामुक्तैरायुधैरायुधीयाः ॥ ११ ॥**

आयुधीया आयुधिकाः शस्त्रजीविनो मुक्तामुक्तैरायुधैः प्राहरन् जघ्नुः । मुच्यन्त इति मुक्तानि चक्रादीनि, अमुक्तानि खड्गादीनि । कीदृशैः चातुर्विध्यं चतुष्प्रकारत्वं यातैः प्राप्तैः, कुतोऽस्त्रादिभेदात् अस्त्रापास्त्रव्यस्त्रमहास्त्रान्यथात्वात् । अस्त्रं धनुः तदेव बहिःसंधानमपास्त्रम् । व्यस्त्रं परिघपरश्वधादि । आग्नेयादि महास्त्रम् । अस्त्रमपास्त्रं पाशः क्षेपणीयमिति केचित् । तथा अव्यासङ्गैरप्रातिहतैः, कुतः सौष्ठवात्सलीलत्वात् लाघवाच्च चातुर्यात्, अत एव शिक्षाशक्तीर्दर्शयन्तः, शिक्षा अभ्यासः शक्तिः सामर्थ्यं कौशलं वा ता आविर्भावयन्तः । आयुधेन जीवन्तीत्यायुधीयाः । "आयुधाच्छ च" । सुष्ठु इत्यस्य भावः सौष्ठवम् । "युवादित्वादण्" ॥ ११ ॥

**रोषावेशादाभिमुख्येन कौचित् पाणिग्राहं रंहसैवोपयातौ ।**
**हित्वा हेती मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासजेताम् ॥१२॥**

बाहुभ्यां बाहुभ्यां प्रहृत्य यद्युद्धं तद्बाहूबाहवि । "तत्र तेनेदमिति सरूप"-इति समासः । "इच् कर्मव्यतिहारे" । "अन्येषामपी" ति दीर्घः । तिष्ठद्गुप्रभृतित्वादव्ययीभावः । तत्र व्यासजेतां लेगतुः, व्यासक्तौ बाहुयुद्धं चक्रतुरित्यर्थः । किं कृत्वा रोषावेशात् क्रोधयोगाद् हेती हित्वा आयुधे त्यक्त्वा, अतश्च मल्लवन्मल्लाविव मुष्टिघातं मुष्टिना घ्नन्तौ ताडयन्तौ, तथा रंहसा जवेन पाणिग्राहं हस्तावेव गृहीत्वाभिमुख्येन संमुखमुपयातौ प्राप्तौ । पाणी गृहीत्वा पाणिग्राहम्

---

१ 'आसेतीव' क. ग. पाठः । २ 'सेतीव' ग. पाठः ।

"द्वितीयायां चे" ति णमुल् । मुष्टिना मुष्टिघातम् "करणे हन" इति णमुल् । यथाविध्यनुप्रयोगः । व्यासजेतामिति कर्मव्यतिहारे तङ् ॥ १२ ॥

**शुद्धाः सङ्गं न क्वचित्प्राप्नुवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः ।**
**अन्तःसेनं विद्विषामाविशन्तो युक्तं चक्रुः सायका वाजितायाः ॥१३॥**

सायका रोपा वाजितायाः पत्त्रवत्त्वस्य युक्तमुचितं चक्रुर्व्यधुः, परबलानि बभञ्जुरित्यर्थः । एतदेव वाजानां फलम् । कीदृशाः शुद्धाः सङ्गं प्रतीघातं न क्वचिदपि प्राप्नुवन्तो लभमानाः, दूरात् क्षिप्ताः सन्तः शीघ्रगामित्वं दर्शयन्तो, द्विषां चान्तःसेनं चमूमध्यं प्रविशन्तोऽत एव पत्त्रवत्त्वस्य युक्तकरणम् । अथ च वाजिताया अश्वत्वस्य युक्तं सदृशं चक्रुरिति भङ्गिभणितिः, तुरगसदृशक्रिया अभूवन्नित्यर्थः । तेऽपि शुद्धा जात्याः, अत एव न क्वचित् सङ्गमासादयन्तो दूरान्मुक्ताश्चातुर्यं दर्शयन्तो रिपुपृतनापरभागगामिनश्च । सेनाया अन्तः अन्तःसेनमित्यव्ययीभावः ॥ १३ ॥

**आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च ।**
**हेलालोला वर्त्म गत्वातिमर्त्यं द्यामारोहन्मानभाजः सुखेन ॥ १४ ॥**

मनस्विनोऽकृच्छ्रेण द्यां दिवमारोहन्नुत्पेतुः, मरणमात्रेण तदवाप्त्या । किं कृत्वा आजेः संयतोऽग्रिमं पौरस्त्यं प्रधानं वा स्कन्धं स्कन्धतुल्यं देशमाक्रम्य उल्लङ्घ्य उच्चैरुच्चम्, अथो अनन्तरं वीतशङ्कं निर्भयं शिर इव शिर आस्थायाधिष्ठाय जित्वा, ततोऽतिमर्त्यं मनुष्यस्य दुष्प्रापं वर्त्म मार्गं हेलालोला विलासचटुलाः सन्तो गत्वा प्राप्य, अतियुद्धं मानुषं कृत्वेत्यर्थः । ततो मृताः सन्तः सुखेन स्वर्गमारुरुहुः । योऽप्युच्चैः स्थानं सुखेनारोढुमिच्छति स उन्नतमंसमाक्रामति ततः शिरस्ततोऽतिमानुषं देशम् ॥ १४ ॥

**रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितैः स्थावराणि ।**
**केचिद्गुर्वीरेत्य संयन्निषद्याः क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ १५ ॥**

केचिद्गुर्वीर्दुस्सहाः संयन्निषद्याः समरापणानेत्य प्राप्य प्राणमूल्यैर्यशांसि क्रीणन्ति स्म अक्रीणन् । कस्मादसून्दत्त्वा कीर्तिग्रहणमित्याह—कीदृंशि यशांसि रोदोरन्ध्रं नभोविवरं व्यश्नुवानानि व्याप्नुवन्ति, तैस्तु अङ्गस्यान्तर्देहान्तरे मापितैः स्थापितैः, तथा तानि स्थावराणि स्थास्नूनि स्थिराणि, तैस्तु लोलैरस्थि-

रैरिति महदन्तरम् । लोको हि निकृष्टं विक्रीयोत्कृष्टं क्रीणीते । द्यौश्च पृथिवी च रोदसी । निषीदन्त्यस्यामिति निषद्या वणिक्पथः ॥ १५ ॥

**वीर्योत्सेकश्लाघि कृत्वापदानं संग्रामाग्रे मानिनां लज्जितानाम् ।**
**अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः ॥ १६ ॥**

मानिनां मनस्विनां नग्ना मागधाः संग्रामाग्रे रणशिरसि श्रीमत् श्रीशब्दाङ्कितं नाम नृपप्रातिपत्तिं श्रावयन्ति स्म पेठुः प्रकटीचक्रुः । कीदृशानां वीर्योत्सेकाभ्यां पौरुषाहंकाराभ्यां श्लाघते यत् तदपदानं महाकर्म कृत्वा लज्जितानां ह्रीतानामधृष्टानाम्, अत एवारिभिरज्ञातानामविदितानाम्, अतश्च तन्नामश्रावणं युक्तं सांप्रतम् । अविकत्थने हि महाकर्मकीर्तनमुचितम् ॥ १६ ॥

**आधावन्तः संमुखं धारितानामन्यैरन्ये तीक्ष्णकौक्षेयकाणाम् ।**
**वक्षःपीठैरा त्सरोरात्मनैव क्रोधेनान्धाः प्राविशन्पुष्कराणि ॥ १७ ॥**

अन्ये भटा धावन्तः कोपान्धत्वात् स्वयमेव शितखड्गानां फलकानि आ त्सरोः मुष्टिं यावत् उरस्तटैः प्राविशन् प्रविष्टाः, यतः परैरभिमुखं धारितानां धृतानां स्थापितानाम् ॥ १७ ॥

**मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्त आसीद्विशेषः ।**
**आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्ती संमुखो यः परोऽसौ॥१८॥**

तत्र रणेऽनीकयुग्मे ऐक्यं प्राप्तेऽपि प्रायेणायं विशेषो भेद आसीत् अभूत्, यदात्मीयाः स्ववर्ग्यास्ते ये पुरस्तादग्रतः पराञ्चः पराङ्मुखाः, यस्त्वभिमुखमभ्यावर्ती आगतः स परः, न कश्चित्तत्र पलायामासेति तात्पर्यार्थः । परा अञ्चन्तीति पराञ्चः, क्विप्, नलोपः, जस् । "उगिदचा" मिति नुमागमः ॥ १८ ॥

**सद्वंशत्वादङ्गसंसङ्गिनीत्वं नीत्वा कामं गौरवेणावबद्धा ।**
**नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित् स्वा कृपाणी ॥१९॥**

कस्यचित्सुभटस्यात्मीयैव कृपाणी छुरिका द्रोहं चक्रे व्यधात्, यतोऽन्येन हस्तं वञ्चयित्वा नीता, अतश्च तयैव हननाद् द्रोहः कृतः । कीदृश्यसौ सद्वंशत्वात् शोभनाङ्गयष्टित्वादङ्गसंसङ्गिनीत्वं कटीसंपर्कं नीत्वा काममत्यर्थं गौरवेणा-

देरेणावबद्धा ग्रथिता । वंशोऽत्र मध्यधारा । यापि स्वभार्यान्येन वञ्चयित्वा नीयते सा पत्युर्द्रोहं कुरुते, सापि सद्वंशत्वान्महाकुलीनत्वाद् गौरवेण शरीरसङ्गं नीता भवति ॥ १९ ॥

**नीते भेदं धौतधारानिपातादम्भोदाभे शात्रवेणापरस्य ।**
**सासृग्राजिस्तीक्ष्णमार्गस्य मार्गो विद्युद्दीप्रः कङ्कटे लक्ष्यते स्म॥ २० ॥**

अपरस्य योधस्य कङ्कटे कवचे तीक्ष्णमार्गस्य निस्त्रिंशस्य मार्गः पदं लक्ष्यते स्म आलुलोके । कीदृशे अम्भोदाभे कार्ष्ण्यात् घनसदृशे, तथा धौता संमार्जिता यासौ धारा त[1] (द्व ? स्या निपा) तनाद् विक्षेपेण भेदं नीते भग्नेऽतएवान्तःप्रवेशात् मार्गः सासृग्राजिः कीलालरेखायुतः, अत एव च विद्युद्दीप्रस्तडिद्भास्वरः, अतश्च लक्षणम्, सौदामिनीमण्डितमेघनिभं रुधिरच्छुरितखड्गधारापथं तनुत्रं प्रत्यभादिति वाक्यार्थः । शत्रुरेव शात्रवः । शितधारत्वादसेः तीक्ष्णमार्ग इति नाम ॥ २० ॥

**आ मूलान्तात्सायकेनायतेन स्यूते बाहौ मड्डुकश्लिष्टमुष्टेः ।**
**प्राप्यासातां वेदनां त्यक्तधैर्यादप्यभ्रश्यच्चर्म नान्यस्य पाणेः ॥ २१ ॥**

अन्यस्य भटस्य त्यक्तधैर्यात्पाणेरवसन्नादपि करात् चर्म फरं नाभ्रश्यत् । किं कृत्वा त्यक्तधैर्यात् असातां दुःखात्मिकां वेदनामनुभवं प्रप्यासाद्य, महतीं पीडां प्राप्येत्यर्थः । एतेनावसादे कारणमुक्तमिदानीं पीडाया अपि तदाह—कदा आ मूलान्तात् आ कक्ष्यान्तात् दीर्घेणेषुणा भुजे स्यूते विद्धे । कथं तर्हि नापतादित्याह—मड्डुके प्रचण्डे श्लिष्टमुष्टेः स्यूताङ्गुलीयकादिति करविशेषणम् । प्राप्येति त्यजिक्रियापेक्षं पौर्वकाल्यम । भ्रष्टधैर्यादिति तु पाठे समानकर्तृकत्वं दुर्घटम् । भ्रंशे हि धैर्यं कर्तृ वेदनाप्राप्तेस्तु पाणिः । यदि वा "विभाषाप" इति णिलोपपक्षे प्राप्येति रूपम् ॥ २१ ॥

**भित्त्वा घोणामायसेनाधिवक्षः स्थूरीपृष्ठो गार्ध्रपक्षेण विद्धः ।**
**शिक्षाहेतोर्गाढरज्ज्वेव बद्धं हर्तुं वक्त्रो नाशकद् दुर्मुखोऽपि ॥ २२ ॥**

स्थूरीपृष्ठो वाजी दुर्मुखोऽपि चपलमुखोऽपि मुखं हर्तुं चालयितुं नाशकत् न प्राभवत् । मुखकर्मण्यशिक्षितश्चलन्मुखो दुर्मुखः । दुर्मुखश्चेत् कथं नाहरदि-

---

१ 'तत्पत' ग. पाठः । २ संग्रहे इत्यर्थः ।

त्याह–घोणां नासां भित्त्वा विदार्य आयसेनायोमयेन दीर्घेण गार्ध्रपक्षेण नाराचविशेषेणाधिवक्षो वक्षसि यतो विद्धस्ताडितः स्यूतः । उत्प्रेक्ष्यते–शिक्षाहेतोर्मुखकर्म शिक्षयितुं गाढया रज्ज्वा वरत्रया बद्धमिव । बद्धो हि न चलति । अयसो विकार आयसः । गार्ध्रा गृध्रसंबन्धिनः पक्षा यस्य स गार्ध्रपक्षः ॥ २२ ॥

**कुन्तेनोच्चैः सादिना हन्तुमिष्टान्नाजानेयो दन्तिनस्त्रस्यति स्म ।**
**कर्मोदारं कीर्तये कर्तुकामान् किं वा जात्याः स्वामिनो ह्रेपयन्ति ।२३।**

आजानेयः कुलीनोऽश्वो दन्तिनो गजान्न त्रस्यति स्म नाभैषीत् न पलायांचक्रे। कीदृशात् सादिनाश्ववारेण कर्त्रा कुन्तेन प्रासेन जिघांसितात् उच्चैरुन्नतात् । नवैतच्चित्रं न बिभाय, यतो यशोऽर्थमुत्कृष्टं व्यापारं चिकीर्षून् प्रभून् किं जात्या महाकुलीना लज्जयन्ति, स चाजानेयत्वात् जात्यः । आजानेयाः कुलीनाः स्युः ( इत्यमरः । ) सादी च महत्कर्म गजवधं चिकीर्षुरश्वत्रासाच्चासौ लज्जेत । वाशब्दः पूर्वाक्षेपे, किंशब्दोऽसंभावनापूर्वके प्रश्ने । असंभावनापरश्च प्रश्नपूर्वको विधिः प्रतिषेधं तात्पर्येणावगमयति, यथा किं देवदत्तः पापानि कुरुते । तेन नैव ह्रीपयन्तीति वाक्यार्थः ॥ २३ ॥

**जेतुं जैत्राः शेकिरे नारिसैन्यैः पश्यन्तोऽधो लोकमस्तेषुजालाः ।**
**नागारूढाः पार्वतानि श्रयन्तो दुर्गाणीव त्रासहीनास्त्रसानि ॥ २४ ॥**

अरिसैन्यैर्विपक्षानीकैर्नागारूढा द्विपस्था जेतुमभिभवितुं न शेकिरे न सोढाः, यतो जैत्रा जिष्णवः पौरुषान्विताः, तथा नागारूढत्वात् लोकमधोऽधस्तात् पश्यन्तः, ऊन[1]बलं वा अवगच्छन्तोऽस्तेषुजालाः क्षिप्तशरनिकराः, त्रासहीना भयवर्जिताः । अतश्चोत्प्रेक्ष्यते—त्रसानि जङ्गमानीव पार्वतानि दुर्गाणि कोट्टानाश्रयन्तः । यो हि अद्रिदुर्गं श्रयति स त्रासहीनो जैत्रश्च भवति लोकं चाधः पश्यति ॥ २४ ॥

**विष्व[2]द्रीचीर्विक्षिपन् सैन्यवीचीराजावन्तः क्वापि दूरं प्रयातम् ।**
**बभ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ वाद्यो मण्डलं गोर्वराहः ॥२५॥**

कश्चित् सुहृत् आजौ रणभुवि अन्तर्मध्ये बभ्रामेतस्ततो जगाम, यतः क्वापि दूरं प्रयातं प्रियं बन्धुं दिदृक्षुरीक्षितुमिच्छुः, अत एव विष्व[3]द्रीचीः सर्व-

---

१ 'नं' क. ग. पाठः । २ 'श्व' क. ग. पाठः । ३ 'श्व' क. ग. पाठः ।

व्यापिनीः सैन्यवीचीर्बलोर्मीर्विक्षिपन् प्रेरयन् । क इवेत्याह–गोमण्डलं भूवलयं क्वापि दूरं नष्टं दिदृक्षुर्भगवान् आदिवराहः सिन्धावन्तरब्धिमध्ये विष्व[1]द्रीचीर्वीचीर्विक्षिपन् निरस्यन् बभ्राम । वा इवार्थे । विष्व[2]क् समन्तादञ्चन्तीति विष्वद्रीच्यः । "विष्व[3]ग्देवतयोश्चे" ति टेरद्र्यादेशः । विष्व[4]द्रीच इति पाठे वीचिशब्दस्य पुंस्त्वं दुर्लभम् ॥ २५ ॥

**यावच्चक्रे नाञ्जनं बोधनाय व्यस्तारज्ञो हस्तिचारी मदस्य ।**
**सेनास्वानाद्दन्तिनामात्मनैव स्थूलास्तावत् प्रावहन् दानकुल्याः॥२६॥**

हस्तिना अवश्यं चरति यातीति हस्तिचारी निषादी मदस्य बोधनाय दानस्योत्थापनाय यावदञ्जनमाहननं क्रियाविशेषं वा न चक्रे नारेभे, तावदेव दन्तिनां स्वयमेव स्थूला दीर्घा दानकुल्या मदनद्यः प्रावहन् प्रसस्रुः, कुतः सेनास्वानादनीककलहात् । युद्धकाले हि युयुत्सुरवाकर्णनादेव सत्कुञ्जरा मदं श्च्योतन्ति । कीदृशो हस्तिचारी व्यस्तारं मदस्योत्थापनं जानातीति व्यस्तारज्ञो हस्तिव्यवहारपण्डितः ॥ २६ ॥

**क्रुध्यन् गन्धादन्यनागाय दूरादारोढारं धूतमूर्धावमन्य ।**
**घोराराव‌ध्वानिताशेषदिक्के धिक्के नागः पर्यणंसीत् स्व एव ॥ २७ ॥**

कश्चित् गजो निज एव धिक्के कलभे पर्यणंसीत् परिणतो निपपात । यतः प्रतिद्विपाय गन्धात् मदगन्धोपलब्ध्या दूरादेव क्रुध्यन् । किं कृत्वा आरोढारं यन्तारमवमन्यावज्ञाय, अत एव धूतमूर्धा कम्पितमस्तकः । कीदृशे धिक्के घोरेण भीष्मेणारवेण गलगर्जितेन ध्वानिता मुखरिता अशेषा दिशो येन । स्व इति ज्ञातित्वात् सर्वनामसंज्ञाभावः । पुत्रो हि कथं न ज्ञातिः । अष्टादशवर्षः करी धिक्कः । पर्यणंसीदिति लुङ् ॥ २७ ॥

**प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि ।**
**क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः प्रेक्षांचक्रे नैव किंचिन्मदान्धः ॥२८॥**

कश्चित् पीलुर्नैव किंचित्प्रेक्षांचक्रे अदर्शत् । कदाचिन्मुखपटाच्छादितः स्यान्नेत्याह—शात्रवीये द्विपेऽभ्यर्णे सति सादिना प्रास्तवक्त्रच्छदोऽपि क्षिप्तमुखावरणोऽपि । कदाचिन्मीलिताक्षो भवेन्नेत्याह—कोपनिर्भरभीषणनिवृत्तनयनो-

१ 'श्व' क. ग. पाठः । २ 'श्व' क. ग. पाठः । ३ 'श्व' क. ग. पाठः । ४ 'श्व' क. ग. पाठः ।

ऽपि । अत्र च गजालोकनमेव कारणम् । कथं तर्हि नैक्षतेत्याह—मदान्धो दानपिहितनेत्रः । अत्रापि तदेव कारणम् । अन्योऽपि मदान्धो न किंचित्पश्यति ॥ २८ ॥

**तूर्णं यावन्नापनिन्ये निषादी वासश्चक्षुर्वारणं वारणस्य ।**
**तावत्पूगैरन्यनागाधिरोहः कादम्बानामेकपातैरसीव्यत् ॥ २९ ॥**

यन्ता अनीकपस्य दृष्टिरोधकं वासो मुखपटाख्यं यावन्नापनिन्ये न निरासे तावदेवान्यनागाधिरोहः प्रतिसादी तूर्णं कादम्बपूगैः शरजालैस्तदसीव्यत्, मुखलग्नं चकारेति चातुरोक्तिः । कीदृशैः एकः पातो येषां तैरेकपातैः संततगामिभिः । अन्यनागमधिरोहतीत्यन्यनागाधिरोहः ॥ २९ ॥

**आस्थद्दृष्टेराच्छदं चाप्रमत्तो याता यातः प्रत्यरीभं द्विपस्य ।**
**मग्नस्योच्चैर्वर्हभारेण शङ्कोरावव्राते ईक्षणे च क्षणेन ॥ ३० ॥**

प्रत्यरीभं प्रतिपक्षद्विपसंमुखं यातो गच्छतः करिणोऽप्रमत्तोऽवहितो याता यन्ता दृष्टेराच्छदं मुखपटमास्थत् चिक्षेप, तावदेव महतः शङ्कोः शिवकस्य ब्रुडितस्य संबन्धिना वर्[1]हभारेण पक्षाभोगेन तस्येक्षणे नेत्रे आवव्राते प्यधायिषातां पिहितौ । चशब्दौ समुच्चयं[2] ब्रुवाणावेककालत्वमाहतुः । आस्थदिति लुङ् "अस्यतेस्थुक्" । यात इति शत्रन्तः । आवव्राते इति वृञः कर्मणि । शङ्कुरायुधविशेषो वर्हिवर्हलक्षणः ॥ ३० ॥

**यत्नाद्रक्षन् सुस्थितत्वादनाशं निश्चिन्तोऽन्यश्चेतसा भावितेन ।**
**अन्त्यावस्थाकालयोग्योपयोगं दध्रेऽभीष्टं नागमापद्धनं वा ॥ ३१ ॥**

कश्चित्सादी नागं द्विपं दध्रेऽरुधत्, रणभुवं न न्यवीविशदित्यर्थः । यतोऽन्त्यो योऽवस्थाकालो दशासमयस्तत्र योग्यमुचितमुपयोगमुपकारिणम् । यदा हि अन्ये हता भीताश्च भवन्ति तदा तस्यावसरः । तथा अनाशमक्षयं, कुतः सुस्थितत्वात् निरपाये देशे स्थितत्वात्, अत एवासौ निश्चिन्तो निर्भयः, तथा भावितेनावहितेन चेतसा यत्नादादरात् तं रक्षन् पालयन् । नूनमवसाने मयानेन दुष्करं कर्म कार्यमिति चेतसो भावना । किमिव दध्रे आपद्धनं वा सं[3]चयार्थमिव । यथा कश्चिद्भावितेन चेतसा यत्नाद्रक्षन् आपत्काले धनं धारयति न

१ 'वा' ख. पाठः । २ 'ये' ख. पाठः । ३ 'स्वर्थाया' क. ख. पाठः ।

व्ययीकुरुते, यतोऽन्त्यावस्थाकाले दारिद्र्यदशाख्ये तस्यार्थस्य[1] योग्य उपयोगः, तदपि च शोभने स्थाने स्थापितत्वादनाशं भवति, अतश्चासौ निश्चिन्तः। योग्योपयोगमिति कर्मधारयः। उपयोग उपकारी। यदि वा बहुव्रीहिः, उपयोगस्तु व्यापारः ॥ ३१ ॥

**अन्योन्येषां पुष्करैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नवालाः ।**
**उन्मूर्धानः संनिषद्यापराभिः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥३२॥**

हस्तिनः प्रायुध्यन्त प्रकर्षेण युयुधिरे, कथं स्पष्ट उत्कटो दन्तध्वनी रदनारवो यत्र। कीदृशास्ते अन्योन्येषां परस्परं पुष्करैः कराग्रैर्दानोद्भेदान् मदस्रुतिमार्गान् आमृशन्तः स्पृशन्त इति जातिस्वभावः। उच्चैरुच्चा भुग्नवालाः कुञ्चितपुच्छाः, उन्मूर्धान उत्क्षिप्तशिरसो गात्रमुच्चीकृत्येत्यर्थः। तथा अपराभिः पश्चात्पादभागैः संनिषद्य सम्यग् नत्वा ॥ ३२ ॥

**द्राघीयांसः संहताः स्थामभाजश्चारूदग्रास्तीक्ष्णतामत्यजन्तः ।**
**दन्ता दन्तैराहताः सामजानां भङ्गं प्रापुर्न स्वयं सामजाताः ॥ ३३ ॥**

सामजानां हस्तिनां संबन्धिनो दन्ता दन्तैराहतास्ताडिताः सन्तो भङ्गं जग्मुरस्फुटन्, नतु स्वयं सामजाता हस्तिनो भग्नाः पलायिताः। सामजानामिति करिणां[2] विशेषणं नतु दन्ता इत्यस्य द्विःसामजग्रहणात्, अन्यथा ह्येवं वक्तव्यं स्यात्–दन्तैराहताः सामजानां दन्ता भग्ना नतु ते स्वयमिति। कीदृशा दन्ताः सामजा वा, दन्तास्तावत् द्राघीयांसो दीर्घतराः संहताः स्थूला अविरलाः, स्थामभाजो बलवन्तः "विद्याद्बलं सहः स्थाम द्युम्नं तरः शुष्मम्"। यद्वा स्थेमभाजोऽतिस्थिरा दृढाः, चारवो वर्णाढ्याः, उदग्रा भीषणाः तीक्ष्णत्वममुञ्चन्तः। सामजा अपि द्राघिष्ठाः संहताश्च घटाबन्धात्, स्थामभाजश्चारवः उदग्रास्तीक्ष्णा अकातराः। अतिशयेन दीर्घा द्राघीयांसः "प्रियस्थिरे"त्यादिना ईयसुनि द्राघादेशः। स्थेमेति तु पाठे जयादित्यमतेन स्थिरशब्दस्य पृथ्वादित्वादिमनिच् "प्रियस्थिरे"ति स्थादेशः ॥ ३३ ॥

**मातङ्गानां दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः ।**
**लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥ ३४ ॥**

---

१ 'स्य तस्योपयोग्यः' क. ख. ग. पाठः। २ 'करण' क. ग. पाठः।

मातङ्गानां द्विपानां चामरेषु प्रकीर्णकेषु प्रकाममत्यर्थं वह्निर्ज्वलितोऽपि सैनिकैर्न व्यज्यते स्म न लक्षितः, यतो माञ्जिष्ठेषु मञ्जिष्ठया रक्तेषु, अतश्च सावर्ण्यादपरिज्ञानम् । कुतस्त्योऽग्निः दन्तसंघट्टजन्मा रदनसंपेषसमुत्थः, तथा हेमच्छेदच्छायानि कनकभङ्गकान्तीनि चञ्चन्ति स्फुरन्ति शिखाग्राणि ज्वालान्ता यस्य स तथोक्तः ॥ ३४ ॥

**ओषामासे मत्सरोत्पातवातश्लिष्यद्दन्तक्ष्मारुहाघर्षणोत्थैः ।**
**यौगान्तैर्वा वह्निभिर्वारणानामुच्चैर्मूर्धव्योम्नि नक्षत्रमाला ॥ ३५ ॥**

अग्निभिर्गजानामुच्चेषु शिरोनभस्सु नक्षत्रमाला आयानावलिरोषामासे दग्धा । कैर्दग्धा मत्सरो रोषः स एवोत्पातवातो नाशहेतुत्वादनिमित्तसमीरणस्तेन श्लिष्यन्तो मिलन्तो ये दन्ता विषाणास्त एव स्थौल्यात् क्ष्मारुहा द्रुमास्तेषामाघर्षणं संघट्टस्तत उत्थानं जन्म येषां तैः, अतश्च यौगान्तैर्वा कल्पावसानवह्नितुल्यैः । उत्पातवातश्लिष्यत्क्ष्मारुहसंपेषोत्थैर्युगान्ताग्निभिः किलोच्चैर्व्योम्नि नक्षत्रमाला तारावलिर्दह्यते । ओषामासे इति कर्मणि लकारः । "उषविदजागृभ्योऽन्यतरस्याम्" ॥ ३५ ॥

**सान्द्राम्भोदश्यामले सामजानां वृन्दे नीताः शोणितैः शोणिमानम् ।**
**दन्ताः शोभामापुरम्भोनिधीनां कन्दोद्भेदा वैद्रुमा वारिणीव ॥३६॥**

द्विपानां घनाघननीले विसरे रदनाः शोभामापुर्बभ्रुः, यतः शोणितैः शोणिमानं नीता लोहितैर्लौहित्यमापादिताः । क यथा किं केषां शोभते इत्याह— अम्भोनिधीनां वारिणि मेघश्यामे वैद्रुमाः कन्दोद्भेदा विद्रुमाङ्कुरा उद्गता यथा शोभां प्राप्नुवन्ति । श्याम एव श्यामलः । यद्वा श्यामं गुणं लातीति श्यामलः ॥ ३६ ॥

**आकम्प्राग्रैः केतुभिः संनिपातं तारोदीर्णग्रैवनादं[1] व्रजन्तः ।**
**मग्नानङ्गे गाढमन्यद्विपानां दन्तान्दुःखादुत्खनन्ति स्म नागाः ॥३७॥**

गजाः प्रतिगजानां गात्रे गाढं मग्नान् दन्तान् कृच्छ्रादुच्चख्नुः, यतः कम्प्रकोटिभिश्चिह्नैः संनिपातं संश्लेषं मिश्रीभावं यान्तः । कथं तारो महान् उदीर्ण उत्थितो ग्रैवाणां ग्रीवाशृङ्खलानां नादो रवो यत्र । यदा ह्येषां केतवोऽन्योन्यं

---

१ 'द्री' क. पाठः ।

संबद्धास्तदा दुःखेनाङ्गविश्लेषो भवति इति केतुसंनिपातात् गाढमग्नत्वाच्च दन्तानां दुरुत्खनत्वम् । 'ऋ गता' वित्यस्य उदीर्णशब्दः ॥ ३७ ॥

**उत्क्षिप्योच्चैरस्फुरन्तं रदाभ्यामीषादन्तः कुञ्जरं शात्रवीयम् ।**
**शृङ्गप्रोतप्रावृषेण्याम्बुदस्य स्पष्टं प्रापत्साम्यमुर्वीधरस्य ॥ ३८ ॥**

ईषा रथकीलिका तत्तुल्यौ तैक्ष्ण्याद्दन्तौ यस्य स ईषादन्तो दन्ती उच्यते । स परकीयमिभमस्फुरन्तं मृतं रदाभ्यां विषाणाभ्यामुच्चैरुत्क्षिप्य शिखरच्युतवार्षिकघनाघनस्याद्रेरखण्डं सादृश्यं लेभे । शत्रुरेव शात्रवस्तस्येदं शात्रवीयम् । प्रावृषि भवः प्रावृषेण्यः ॥ ३८ ॥

**भग्नेऽपीभे स्वे परावृत्य देहं योद्‌ध्रा सार्धं व्रीडया मुञ्चतेषून् ।**
**साकं यातुः संमदेनानुबन्धी दूनो[1]ऽभीक्ष्णं वारणः प्रत्यरोधि ॥ ३९ ॥**

केनचित् योद्‌ध्रा योधेनानुबन्धी उत्तम्भको बाधमानो वारणः प्रतिगजः प्रत्यरोधि वारितः । किं केवलो नेत्याह—यातुः सादिनः संमदेनोद्धवेन सह, इभे निरस्ते यन्तुरपि भग्नत्वाद्धर्षो निरासीत्यर्थः । कदाचित् तस्य स्वेभो मत्तो भवेदित्याह—निजे गजे भग्नेऽपि पलायितेऽपि । कथं तर्हि प्रत्यरोधि । देहं परावृत्य व्यावृत्येषूनस्यता व्रीडया साकं, पलायमाने करिणि या लज्जा तामपि स्वयमभग्नत्वात् त्यजतेत्यर्थः । कीदृक् वारणः अभीक्ष्णमत्यर्थं दूनो योद्‌धृशरैः पीडितोऽत एव रोधितः ॥ ३९ ॥

**व्याप्तं लोकैर्दुःखलभ्यापसारं संरम्भित्वादेत्य धीरो महीयः ।**
**सेनामध्यं गाहते वारणः स्म ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ४० ॥**

कश्चित् द्विपः संरम्भित्वात् क्षोभादेत्य सेनामध्यं गाहते स्म जगाहे व्यलोडयत् । कीदृशं महीयोऽतिविस्तीर्णं यतो योधैर्व्याप्तम्, अत एव दुःखलभ्यापसारं कृच्छ्रप्राप्यनिर्गमनम् । कथं तर्हि जगाहे धीरत्वात् । कः किमिव, यथा पूर्वं प्राक्कल्पान्ते आदिदेवस्य विष्णोरुदरान्तः कुक्षिमध्यं ब्रह्मा ब्राह्मणो मार्कण्डेयो जगाह । तदपि सर्वैर्लोकैर्व्याप्तं दुःखलभ्यापसारं महीयश्च, सोऽपि धीरो निर्मोहः । अन्तःशब्दस्यात्रानधिकरणप्रधानता चिन्त्या ॥ ४० ॥

**भृङ्गश्रेणिश्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः ।**
**निर्भीकत्वादाहवेऽनाहतेच्छो हृष्यन् हस्ती हृष्टरोमेव रेजे ॥ ४१ ॥**

---

1 'नूनं' क. ख. ग. पाठः ।

दन्ती रेजे बभौ । किंभूतो निर्भीकत्वात् त्रासशून्यत्वात् आहवे मृधेऽनाहतेच्छोऽनष्टवाञ्छः, तथा अयोमयत्वादलिपङ्क्तिनीलच्छवीनां नाराचानां समूहैः स्तोमैः स्यूतो नीरन्ध्रं निर्विवरं देहो यस्य, अतश्च हृष्यन् प्रीतिं प्राप्नुवन् । उत्प्रेक्ष्यते—हृष्टरोमेव कण्टकित इव । नाराचवृन्दानि हृषितरोमस्थानीयानि । योऽपि हि हृष्यति स हृष्टरोमानाहतेच्छश्च भवति । हृष्टशब्दे "हृषेर्लोमस्वि"ति इट् विभाषितः ॥ ४१ ॥

**आताम्राभा रोषभाजः कटान्तादाशूत्खाते मार्गणे धूर्गतेन ।**
**निश्चो[1]तन्ती नागराजस्य जज्ञे दानस्याहो लोहितस्योत[2] धारा॥४२॥**

रोषभाजः क्रुद्धस्य महेभस्य आताम्राभा लोहिनी स्रवन्ती धारा किं दानस्य मदस्य जज्ञे उत्पन्ना जाता आहोस्वित् लोहितस्य रुधिरस्य, सावर्ण्यात् संशयः । कदा धूर्गतेन सादिना कटान्तात् गण्डदेशान्मार्गणे रोपे तूर्णमुद्धृते, अतश्च द्वयस्यापि संभवः । शराहतत्वाद्रक्तस्य गण्डसामीप्याच्च मदस्य । जज्ञे इति जनेः कर्तरि तङ् "गमहने"त्युपधालोपः ॥ ४२ ॥

**क्रामन् दन्तौ दन्तिनः साहसिक्यादीषादण्डौ मृत्युशय्यातलस्य ।**
**सैन्यैरन्यस्तत्क्षणादाशशङ्के स्वर्गस्योच्चैरर्धमार्गाधिरूढः ॥ ४३ ॥**

अन्यः कश्चिद्भटः सैन्यैस्तत्क्षणात् तदानीं स्वर्गस्य दिवोऽर्धमार्गाधिरूढ आशशङ्के समभावि । यतः करिण उच्चौ दन्तौ साहसिकत्वात् क्रामन् आरोहन् । कीदृशौ मृत्युशय्यातलस्यान्तकखट्वाया ईषादण्डौ बाहू इति रूपकम् । ईषातुल्यौ दण्डौ स्तम्भाविवेत्यर्थः । केचित्तु दन्तिनं मृत्युशय्यातलेन रूपयन्ति । भीषणत्वात् मृत्युशय्यातलतुल्यस्य दन्तिनो दन्तावीषादण्डतुल्यौ क्रामन्नित्यर्थः ॥ ४३ ॥

**कुर्वञ्ज्योत्स्नाविप्रुषां तुल्यरूपस्तारस्ताराजालशारामिव द्याम् ।**
**खड्गाघातैर्दारिताद्दन्तिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघः॥४४॥**

कृपाणप्रहारताडितात् करिकुम्भात् प्रोच्छलन्निर्गच्छन् मुक्ताफलनिकरो रेजे । तारः सितः, अत एव ज्योत्स्नाविप्रुषां चन्द्रिकाकणानां तुल्यरूपः सदृशाकारः । तथा प्रोच्छलितत्वात् दिवं ताराजालशारामिव कुर्वन् उडुनिकरकि-

---

१ 'श्च्यो' ख. पाठः । २ 'स्येव' ख. पाठः ।

र्मीरां यथा विदधत् । खड्गाघातं दारितादिति केचित् पठन्ति । तत्र खड्गस्य हेतुत्वविवक्षया "हिंसार्थानां च समानकर्मणा" मिति णमुल्, यथा दण्डोपघातं गाः कालयतीति । सामीप्यविवक्षायां वा "समासत्तौ" इत्यनेन । यदि तु करणत्वं खड्गादेः स्यात् तत्पूर्वविप्रतिषेधे "करणे हन" इत्यनेन णमुलि सति कषादित्वाद्यथाविध्यनुप्रयोगो भवेत् । यथासिघातं हन्ति शरघातं हन्तीति ॥ ४४ ॥

**दूरोत्क्षिप्तक्षिप्रचक्रावकृत्तं मत्तो हस्तं हस्तिराजः स्वमेव ।**
**भीमं भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषं पिपेष ॥ ४५ ॥**

कश्चिन्मत्त[1]हस्ती सरोषत्वात् निजमेव करं चरणेनासृक्पङ्कपेषं पिपेष असृक्पङ्केन रक्तकर्दमेन पिष्टवान् । "स्नेहने पिषः" इति णमुल् । कीदृशं हस्तं भुवि लोलमानं लुठनशीलम्, यतो दूरोत्क्षिप्तेन क्षिप्रेणाशुगामिना चक्रेणावकृत्तं लूनं, भीमं भयकारिणम् ॥ ४५ ॥

**आपस्काराल्लूनगात्रस्य भूमिं निःसाधारं गच्छतोऽवाङ्मुखस्य ।**
**लब्धायामं दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ४६ ॥**

अन्यस्य करिणो भुवि पततः स्वमेव दन्तयुग्मं द्राघीयस्त्वादुत्तम्भनत्वमवष्टम्भनत्वं प्रापत् ययौ, स्वेनैव रदयुगलेन धृत इत्यर्थः । कीदृशस्य तस्येति पा (ठे?ते) हेतुमाह—लूनगात्रस्य च्छिन्नपूर्वकायस्य । किमवधि आपस्कारात् आ जङ्घामूलात्, अपस्कारं यावच्छिन्नस्येत्यर्थः । अतो निःसाधारं निरवलम्बं भूमिं गच्छतोऽवनौ पित्सतः, अतोऽपिचावाङ्मुखस्याधोवदनस्य । एवंविधे चावसरे लब्धायामेन पादस्थानीयेन स्वदन्तयुग्मेनासौ पतन्नरोधि । गात्रं गजपूर्वकायः । अपस्करो जानुमूलम् । केचित्तु किल गात्रं करमाहुः, तन्मूलं चापस्कारम् । साधारमवलम्बनम् । आयामो दैर्घ्यम् । उत्तम्भनं धारणम् ॥ ४६ ॥

**लब्धस्पर्शं भूव्यधाद्व्यथेन स्थित्वा किंचिद्दन्तयोरन्तराले ।**
**ऊर्ध्वाधोसिक्षुण्णदन्तप्रवेष्टं जित्वोत्तस्थे नागमन्येन सद्यः ॥ ४७ ॥**

अन्येन योधेन महेभमभिभूय सद्यस्तत्क्षणात् उत्तस्थे उत्थितम् । कीदृशम् भूव्यधादुर्वीतलाघाताल्लब्धस्पर्शं मयायं हत इति प्राप्तसुखम् । तस्य ह्ययं

---

[1] 'त्तो' ख. पाठः ।

स्वभावः, एवं भित्त्वा मया भूर्विद्धेति, तत्त्वतस्तु भुवमेव विद्धवान् यतः स दन्तान्तराले स्थितः । तत्रच क्षणमासित्वा ऊर्ध्वीकृतेनाधोसिना खड्गविशेषेण दन्तौ प्रविष्टश्च बाहुः तेनास्याव्यथत्वात् क्षुण्णा भग्नः, ततस्तं जित्वा उदस्थात् । प्रवेष्टो बाहुः । यदुक्तम् 'भुजः प्रवेष्टश्च दोर्बाहु' रिति । केचित्तु दन्तयोरधोभागं दन्तप्रवेष्टमाहुः ॥ ४७ ॥

**हस्तेनाग्रे वीतभीतिं गृहीत्वा कंचिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः ।**
**आलीनानां व्योम्नि तस्यैव हेतोः स्वर्गस्त्रीणामर्पयामास नूनम् ॥ ४८ ॥**

कंचिद्वीरं वीतभीतिं निर्भयं व्यालो दुष्टहस्ती कराग्रेणादायोर्ध्वं क्षिप्तवान् नभसि प्रैरयत् । उत्प्रेक्ष्यते—नूनं तदर्थमेव खे आलीनानां संगतानामप्सरसामर्पयामास ददौ । रणे हतान् किल दिव्याङ्गना नयन्ति । उच्चैर्व्यालः क्षेपो वा ॥ ४८ ॥

**कंचित् दूरादायतेन द्रढीयःप्रासप्रोतस्रोतसान्तःक्षतेन ।**
**हस्ताग्रेण प्राप्तमप्यग्रतोऽभूदानैश्वर्यं वारणस्य ग्रहीतुम् ॥ ४९ ॥**

द्विपस्य कंचिद्भटं दूरात्प्राप्तमपि कराग्रेणाग्रतः पुरस्तात् ग्रहीतुमानैश्वर्यमसामर्थ्यमभूत्, आदातुं न शशाकेत्यर्थः । यतोऽभ्यन्तरे क्षतेन हिंसितेन, कुतो द्रढीयसा कर्कशेन प्रासेन कुन्तेन प्रोतं विद्धं स्रोतो विवरं यस्य तेन द्रढीयःप्रासप्रोतस्रोतसा । स हि योधं दूरादानीयाग्रे क्षिप्त्वा यावदादित्सति तावत् कुन्तेनास्य करस्रोतो भग्नम् । आयतेन पृथु[1]लेनेति दूरात्प्राप्तिकारणम् । अनीश्वरस्य भाव आनैश्वर्यम् । "नञः शुचीश्वरक्षेत्रज्ञ" इत्युभयपदवृद्धिः । अग्रादग्रतः ॥ ४९ ॥

**तन्वाः पुंसो नन्दगोपात्मजायाः कंसेनेव स्फोटितायाः गजेन ।**
**दिव्या मूर्तिर्व्योमगैरुत्पतन्ती वीक्षामासे विस्मितैश्चण्डिकेव ॥५०॥**

कस्यचित्पुंसो योधस्य द्विपेनास्फोटितायाः उत्क्षिप्य पातितायास्तन्वा वपुष उत्पतन्ती दिव्या मूर्तिरात्माख्या भोगतनूर्वा सकौतुकैर्व्योमगैर्नभश्चरैर्वीक्षामासे ददृशे । केन कुतः किमिवेत्याह—यथा नन्दगोपात्मजाया औग्रसेनिगोपालकदुहितुस्तन्वाः कंसेनास्फोटितायाः उत्पतन्ती भगवती चण्डिका निद्रा व्योमगैः

1 'थुतले' ख. पाठः ।

पूर्वमीक्षिता ॥ एवं ह्यागमः "पुरा नारद आगम्य कंसमाह यथा तव । व-सुदेवात्मजो मृत्युर्भावीत्युक्त्वा तिरोदधौ ॥ ततोऽसौ देवकीगर्भान्सर्वाञ्जाताञ्ज-घान ह । अथैवं भगवान्बुद्ध्वा निद्रामाह यथा व्रज ॥ नन्दगोपाद्यशोदायां संभव त्वं यथासुखम् । देवक्यां वसुदेवात्तु जायेऽहमपि तत्त्वतः ॥ अहं यशो-दां यास्यामि त्वं देवि भज देवकीम् । आवयोर्गर्भव्यत्यासात्कंसो गच्छतु मू-ढताम् ॥ ततस्त्वां गृह्य चरणैः शिलायां निरसिष्यति । निरस्यमाना गगने स्थानं प्राप्स्यसि शाश्वतम्" इति ॥ ५० ॥

**आक्रम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददानः करेण ।**
**सास्थिस्वानं दारुवद्दारुणात्मा कंचिन्मध्यात्पाटयामास दन्ती॥ ५१ ॥**

कंचिद्भटं दुष्टद्विपो मध्यात्पाटयामास व्यदारयत् दारुवत्काष्ठं यथा, यतो-ऽस्थिस्वनयुतम् । किं कृत्वा एकां जङ्घां पादाग्रेणाक्रम्यावष्टभ्य अन्यां तूच्चैन करेणाददानो गृह्णन् ॥ ५१ ॥

**शोचित्वाग्रे भृत्ययोर्मृत्युभाजोरर्यः प्रेम्णा नो तथा वल्लभस्य ।**
**पूर्वं कृत्वा नेतरस्य प्रसादं पश्चात्तापमाप दाहं यथान्तः ॥ ५२ ॥**

कस्यचित् द्वौ सेवकौ वाल्लभ्यलब्धप्रसादोऽपरोऽसंविभक्तस्तदग्रे च द्वाव-पि प्रमीतौ, अतस्तयोः स्वामी द्वयोरपि पुरतोऽग्रे[1] मृत्युभाजोर्मृतयोः शोचित्वा रुदित्वा न तथा वल्लभस्य प्रेम्णा प्रीतिवशादन्तर्हृदये दाहमाप संतापदुःखं लेभे, यथा इतरस्यासंविभक्तस्य पूर्वं प्रसादमकृत्वा जीवनमदत्त्वा पश्चात्तापादनुशयव-शात् कष्टमसंविभक्तो वराको ममारेति । नञात्र करोतेः संबन्धः, तेनापि प्र-सादस्य । प्रसादमकृत्वेत्यर्थः । अर्यः स्वामिवैश्ययोः ॥ ५२ ॥

**उत्प्लुत्याराद्र्धचन्द्रावलूने वक्त्रेऽन्यस्य क्रोधदष्टौष्ठदन्ते ।**
**सैन्यैः कण्ठच्छेदलीने कबन्धाद्भूयो बिभ्ये वल्गतः सासिपाणेः॥ ५३ ॥**

बलैः सासिपाणेः कबन्धात् भूयो बिभ्ये त्रेसे, खड्गप्रहारभयमाशङ्कितम् । स्वस्थात् किल तस्मात् तैरादौ भीतमिति भूयःशब्दार्थप्रतीतिः । कदा बिभ्ये अन्यस्य भटस्याराद् दूरात् वक्त्रे मुखेऽर्धचन्द्रावलूने भल्लकृत्ते, अत एवोत्प्लुत्य तदीये कण्ठच्छेदे लीने संश्लिष्टे क्रोधेन दष्टो[2]ष्ठा लुप्ताधरा दन्ता रदना यस्य

१ 'अतः' ख. पाठः । २ 'ष्टोऽवलु' ख. पाठः ।

तस्मिन् क्रोधदष्टौष्ठदन्ते, कोपाद्दशनैरोष्ठं विभुज्य कबन्धस्योपरिस्थित इत्यर्थः । कीदृशात् कबन्धात् सासिपाणेः सखड्गहस्तात् अत एव वल्गतो वलनान् कुर्वाणात् । अतश्च सैन्यैराशङ्कितं-किमयं भूयोऽप्यस्माकं कदनं न कुर्यादिति ॥ ५३ ॥

**तूर्यारावैराहितोत्तालतालैर्गायन्तीभिः काहलं काहलाभिः ।**
**नृत्ते चक्षुःशून्यहस्तप्रयोगं काये कूजन् कम्बुरुच्चैर्जहास ॥ ५४ ॥**

कम्बुः शङ्ख उच्चैस्तारं कूजन् ध्वनन् जहासाहसदिवेत्युत्प्रेक्षा । कदेति हासे हेतुमाह-काये कबन्धे नृत्ते नर्तितुं प्रवृत्ते सति। केन तूर्यारवैर्वादित्रघोषैः, तथा काहलाभिः सुषिरा[1]प्रवादनैः करणभूतैः । कीदृशैस्तूर्यारावैः आहित उत्पादित उत्ताल उद्भटस्तालः चञ्चत्पुटादिको ध्वनिमात्रं वा यैः । काहलाभिः कीदृशीभिः काहलं परुषं भीषणं वा गायन्तीभिर्गानमिव कुर्वतीभिः । कथं नृत्ते चक्षुःशून्यो दृष्टिरहितो हस्तप्रयोगः कराभिनयो यत्र । अत एव च हासः । यदा किल दृष्ट्याननुगतहस्तप्रयोगं नृत्यते परुषमुल्वणतालं च गीयते तदा पार्श्वस्था हसन्ति ॥ ५४ ॥

**प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये तुल्यं मुक्तैराकिरन्ति स्म कंचित् ।**
**एकौघेन स्वर्णपुङ्खैर्द्विषन्तः सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ॥ ५५ ॥**

कंचिद्वीरममी अमीभिराचकरुः छादयामासुः । के कैरित्याह-द्विषन्तोऽरय एकौघेनैकप्रवाहेण स्वर्णपुङ्खैः शरैः, नभश्चराः सिद्धा माल्यैः पुष्पवर्षैः साधुवादैः स्तुतिप्रोत्साहनादिभिः। द्वयेऽपि शत्रवः सिद्धाश्च सर्वैश्च तैस्तुल्यमुक्तैर्युगपद्दीरितैः किमर्थमाकिरन्ति स्मेत्याह-यतः स्वसैन्ये निजबले भङ्गभाजि पलायितेऽपि प्रत्यावृत्तं प्रतीपमागतं युद्धाय संमुखमित्यर्थः ॥ ५५ ॥

**बाणक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् ।**
**संरब्धानां भ्राम्यतामाजिभूमौ वारी वारैः सस्मरे वारणानाम्॥५६॥**

वारणानां वारैः पीलूनां संघैर्वारी सस्मरे बन्धनस्थानं स्मृतम् । कीदृशानामिति स्मरणे कारणमाह-बाणक्षिप्तारोहाणि शरप्रेरितसादीनि अत एव शून्यान्यासनानि पर्याणानि येषाम्, अतश्चान्यसैन्यैः परबलैर्ग्रहीतुं बद्धुं[2] प्रक्रान्तानां

---

१ 'सुषिरता' क. ख. ग. पाठः । २ 'न्धुं' ग. पाठः ।

प्रस्तुतानामत एव संरब्धानां क्षुभितानां, तथाजिभूमौ भ्राम्यतां रणोर्व्यां पलायमानानाम् । वार्यामपि ते संरब्धा वनभुवि च भ्राम्यन्तो भवन्ति, यतोऽन्यैर्जिघृक्षिताः वानेयत्वाच्चारोहशून्याः । अटव्यां यत्रेभा बध्यन्ते सा वारी । "वसिवपी" तीञ् । "कृदिकारादि" ति ङीप् । सस्मरे इति कर्मणि ॥ ५६ ॥

**पौनःपुन्यादस्रगन्धेन मत्तो मृद्नन् कोपाल्लोकमायोधनोर्व्याम् ।**
**पादे लग्नामन्त्रमालामिभेन्द्रः पाशी[1]कल्पामायतामाचकर्ष ॥ ५७ ॥**

कश्चित् द्विपराजश्चरणलग्नामन्त्रमालामाचकर्षाकृष्टवान् । कीदृशः अस्रगन्धेन क्षतजामोदेन मत्तः क्षीवोऽत एवायोधनोर्व्यां रणभुवि जनं पौनःपुन्यादसकृत् मृद्नन् मथ्नन् । तां कीदृशीमायतां दीर्घां पाशीकल्पामन्दूदेश्याम् । अयःशृङ्खला हि पादे करिणः क्रियते । ईषदसमाप्ता पाशी[2] पाशीकल्पा ॥ ५७ ॥

**कश्चिन्मूर्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य ।**
**उच्छ्श्वास प्रस्थिता तं जिघृक्षुर्व्यर्थीकृता नाकनारी मुमूर्छ ॥ ५८ ॥**

कश्चिद्भटो गाढप्रहारस्तीव्रक्षतत्वान्मूर्छामेत्य मोहं प्राप्यापि उच्छ्श्वास निर्ववार, यतः शीतलैः करिशीकरैरुक्षितः, अतश्च तं ग्रहीतुमागता दिव्यस्त्री मुमूर्छ मुमोह यतो व्यर्थीकृता निष्फलाभिप्राया । सा हि तं परासुमवेत्यादातुमैच्छत् समाश्वस्ते तु तस्मिन्नसौ विफलमनोरथा ॥ ५८ ॥

**लूनग्रीवात् सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः ।**
**त्रेसे मुग्धैः सैंहिकेयानुकारात् सभ्रूभङ्गादप्सरोवक्त्रचन्द्रैः ॥ ५९ ॥**

अन्यस्य योधस्य वक्त्रात् मुग्धैर्मनोज्ञैरप्सरोवक्त्रचन्द्रैर्दिव्यस्त्रीलपनशशिभिः त्रेसे बिभ्ये । यतः शरेण कृत्तकन्दरात् अत एव द्यामुत्पतिष्णोरुद्गतात्, अत्युच्चैर्बृहतः सैंहिकेयानुकाराद्राहुतुल्यात् सभ्रूभङ्गात् भ्रुकुटिभीषणात्, अतश्च त्रासो युक्तः । अत एव वक्त्रस्य चन्द्रत्वम् । शशी हि राहोस्त्रस्यति । मुग्धत्वं त्वपर्वण्यपि ग्रासभयात् । सिंहिकाया अपत्यं सैंहिकेयः, तमनुकरोतीति "कर्मण्यण्" ॥ ५९ ॥

**वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम ।**
**त्यक्त्वा नाग्नौ देहमेति स्म यावत्पत्नी सद्यस्तद्वियोगासहिष्णुः ॥६०॥**

---

१ 'दी' ख. ग. पाठः । २ 'दीपादी' ख. ग. पाठः ।

यावत् स्वभार्या वह्नौ देहं दग्ध्वा युद्धे वृत्तं मृतं वीरं तत्क्षणमेव विरहासहत्वात् नैति स्म न प्राप, तावत् त्वरितं काचिद्दिव्यस्त्री तमालिङ्ग्य रिरंसया गहनं ययाविति दम्पत्योः सात्त्विकत्वोक्तिः ॥ ६० ॥

**त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः ।**
**प्राप्याखण्डाद्देवभूयं सतीत्वादाशिश्लेष स्वैव कंचित्पुरन्ध्रिः ॥ ६१ ॥**

कंचिद्भटं स्वैव पुरन्ध्रिर्महिला[१] आशिश्लेष सस्वजे । किं कृत्वा अखण्डादलुप्तात् सतीत्वाद्भर्तृशरणत्वात् देवभूयं देवत्वं प्राप्य । कीदृश्यसौ हस्तिनीस्था सती तं पतिं युधि गतासुं दृष्ट्वा सपद्येव स्नेहादुद्गतासुर्नष्टप्राणा, अतश्च परलोके सैव तमाश्लिक्षत् । देवभूयं देवभवनं देवत्वम् "भुवो भावे" इति क्यप् । पुरन्ध्रिशब्दः पृषोदरादिः ॥ ६१ ॥

**स्वर्गे वासं कारयन्त्या चिराय प्रत्यग्रत्वं प्रत्यहं धारयन्त्या ।**
**कश्चिद्भेजे नाकनार्या परस्मिंल्लोके लोकं प्रीणयन्त्येह कीर्त्या ॥ ६२ ॥**

कश्चिद्भटः परलोके दिव्यस्त्रिया भेजे शिश्रिये, इहलोके च कीर्त्या । अधुना श्लेषः । कीदृश्याप्सरसा चिरं स्वर्गे वासं स्थितिं कारयन्त्या कुर्व(न्त्या-? त्या) स्वार्थे णिच् । तथा प्रत्यहमनुदिनं प्रत्यग्रत्वं तारुण्यं बिभ्रत्या, लोकं प्रीणयन्त्या प्रीतियुक्तं कुर्व(न्त्या ? त्या,) कीर्त्यापि स्वर्गवासं चिराय कारयन्त्या । यदुक्तम् "रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी । तावत्किलायमध्यास्ते सुकृती वैबुधं पदम्" ॥ इति । प्रत्यहं प्रत्यग्रत्वं धारयन्त्या समरमरणेन स्थिरत्वात्, लोकं प्रीणयन्त्या हर्षयन्त्या । अहन्यहनि प्रत्यहम् "अनश्च" इति टच् । प्रीणयन्त्येति "धूञ्प्रीञोर्नुग्वक्तव्यः" ॥ ६२ ॥

**गत्वा नूनं वैबुधं सद्म रम्यं मूर्छाभाजामाजगामान्तरात्मा ।**
**भूयो दृष्टप्रत्ययाः प्राप्य संज्ञां साधीयस्ते यद्रणायाद्रियन्त ॥ ६३ ॥**

एवमुत्प्रेक्षैषा[२]–मूर्छाभाजां मोहभाजामन्तरात्मा चेतना रम्यं वैबुधं सद्म नाकलोकं गत्वा नूनमाजगाम पुनः प्राप्तः । कुत इत्याह–ते योधाः संज्ञां प्राप्य चेतनां लब्ध्वा दृष्टप्रत्यया लब्धनिश्चयाः सन्तो भूयो यत्साधीयः सुष्ठुतरां रणायाद्रियन्त युद्धेऽभिन्यविशन्त । यदि चैवं न स्यात् तत्कस्मादिदानीमत्यर्थं

१ 'हे' ग. पाठः । २ 'क्षेयं' ग. पाठः ।

युयुधिरे, तस्मात् नूनं तदन्तरात्मभिः समरहतानां लोकाः स्वयं दृष्टाः । अतिशयेन साधु साधीय इत्यादरविशेषणम् । रणायेति तादर्थ्ये चतुर्थी क्रियाग्रहणाद्वा । आद्रियन्तेति दृङः कर्तरि लङ् ॥ ६३ ॥

**कश्चिच्छस्त्राबाधमूढोऽपवोढुर्लब्ध्वा भूयश्चेतनामाहवाय ।**
**व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तश्चात्मा का च लोकानुवृत्तिः ।६४।**

कश्चिद्वीरः संज्ञां प्राप्य भूय आहवाय व्यावर्त्तिष्ट युधाय व्यावृत्तः । कीदृशः शस्त्राबाधमूढः आयुधपीडानिश्चेतनः । कदा व्यावर्तिष्ट सख्युः सुहृद उच्चैस्तारं क्रोशतः पूत्कुर्वतः, मा तावद्युद्धाः समाश्वसिहि, रुदतो वा । कीदृशस्यापवोढुराक्रष्टुः, स हि मूढस्तेन रणाङ्गनादाकृष्टः । सखा चेत् क्रोशति किमित्ययुद्धेत्याह–त्यक्तश्चात्मा का च लोकानुवृत्तिः । धार्यमाणे ह्यात्मन्यन्योन्योपरोधो युक्तः स च मुमूर्षुः किं तस्य लोकचित्तग्रहणेन । प्रथमश्चो हेतौ, द्वितीयोऽवधारणे । यस्मात् त्यक्त आत्मा तस्मान्निष्फलैव लोकानुवृत्तिरित्यर्थः । एककालसूचनार्थौ वा । यदैवात्मा त्यक्तस्तदैव लोकानुवृत्तिर्न भवतीत्यर्थः । सख्युरिति "षष्ठी चानादरे । ख्यत्यात्परस्ये[1]"ति उत्वम् ॥ ६४ ॥

**भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात् कौचिदेकेषुणैव ।**
**अन्योन्यावष्टम्भसामर्थ्ययोगादूर्ध्वावेव स्वर्गतावप्यभूताम् ॥ ६५ ॥**

कौचिद्योधौ स्वर्गतावपि मृतावपि ऊर्ध्वावुच्चावपतितावभूतां बभूवतुः । कीदृशौ अरिणा दूरमाकृष्य एकेषुणैव नेदीयस्त्वाद्भिन्नोरस्कौ विद्धवक्षसौ, अतश्चान्योन्यावष्टम्भसामर्थ्ययोगात् परस्परधारणशक्तिसंबन्धादूर्ध्वत्वम् । स्वः स्वर्गं गतौ स्वर्गतौ संस्थितौ ॥ ६५ ॥

**भिन्नाञ्शस्त्रैर्मोहभाजोऽभिजातान् हन्तुं लोकं[2] वारयन्तः स्ववर्गम्[3]।**
**जीवग्राहं ग्राहयामासुरन्ये योग्येनार्थः कस्य न स्याज्जनेन ॥ ६६ ॥**

अन्ये वीरा अभिजातान् कुलीनान् जीवग्राहं जीवत एव ग्राहयामासुर्ग्राहितवन्तो नामीमरन् । कीदृशान् शस्त्रैरायुधैर्भिन्नान् विद्धान् अतश्च मोहभाजो मूर्छितान् । कीदृशास्ते जिघांसुं निजवर्गं वारयन्तो निवर्तयन्तः, मा एनान् वधिष्टेति । किं कैश्चित्रम् यतो योग्येन भव्येन जनेन कस्यार्थः प्रयोजनं न स्यात्,

---

१ 'स्य चे' क. ख. ग. पाठः । २ 'लोलं' ख. ग. पाठः । ३ 'सैन्य' ख. ग. पाठः ।

शत्रोरपि तेनार्थो भवेत् ते च योग्या अभिजातत्वात् । जीवन्तीति जीवाः, जीवान् गृहीत्वा जीवग्राहं "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति णमुल् ॥ ६६ ॥

**भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि ।**
**आहारार्थं प्रेतराजस्य रूप्यस्थालानीव स्थापितानि स्म भान्ति॥६७॥**

आतपत्राणि भान्ति स्म चकाशिरे । कीदृशानि भग्नैर्दण्डैर्भूमौ पर्यस्तानि भिन्नदण्डत्वात् क्षितौ पतितानि, प्रौढचन्द्रद्युतीनि जरढशशधरधवलानि, अतश्चोत्प्रेक्ष्यते–प्रेतराजस्यान्तकस्याहाराय रूप्यस्थालानीव रजतपात्राणीव । रणे किल मृत्युना प्राणिनोऽत्तव्याः ॥ ६७ ॥

**रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का[1] मुक्ताहाराः पार्थिवानां व्यसूनाम् ।**
**सैन्यान्सास्थीन् खादतो रक्तरक्ता नष्टा नूनं प्रेतराजस्य दन्ताः॥६८॥**

मृतानां राज्ञामुरस्तः पतिताः काश्मीरलिप्ता मुक्ताहारा रेजुर्बभुः । उत्प्रेक्ष्यते–अस्थिसहितान् जन्तून् अश्वेभरथपत्तिलक्षणान् भक्षयतो मृत्योर्नूनं रुधिरच्छुरिता दशना नष्टा लुठिताः । 'हासाल्लक्ष्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पीतरक्तासवस्ये' ति पाठान्तरम् ॥ ६८ ॥

**निम्नेष्वोघीभूतमस्त्रक्षतानामस्रं भूयो यच्चकासांचकार ।**
**रागार्थं तत्किंनु कौसुम्भमम्भः संव्यानानामन्तकान्तःपुरस्य॥६९॥**

अस्त्रक्षतानां शस्त्रप्रहतानामस्रमसृक् निम्नेषु भागेषु ओघीभूतमेकस्थं यच्चकासांचकार बभासे, तत् किमन्तकान्तःपुरस्य मृत्युशुद्धान्तस्य संव्यानानां वाससां रागार्थं लोहितीकरणाय कौसुम्भं माहारजनमम्भः पानीयं स्यादिति संशयोऽलंकारः । कुसुम्भेन रक्तं कौसुम्भम् ॥ ६९ ॥

**रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्रैः ।**
**रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्संख्येऽसंख्याः प्रासरन् द्वीपवत्यः ॥ ७० ॥**

तस्मिन् संख्ये रणे रक्ताम्भोभिः कीलालाम्बुभिरसंख्या अनन्ता द्वीपवत्यो नद्यः प्रासरन् ऊढाः । स्यादेतत्, पूर्वं जामदग्न्यस्यैवंविधमेव युद्धमभूत् कोऽ-

---

१ 'क्तान्मु' क. ग. पाठः ।

त्रातिशय इत्याह—रामेण राजन्यरुधिरैः चित्रमाश्चर्यरूपं ह्रदानां पञ्चकं समन्तपञ्चकाख्यं त्रिःसप्तकृत्व एकविंशत्या वारैः कृतम्, इह तु क्षणादेवेति महान्विशेषः । उपमेयस्य चित्रत्वे उपमानस्य चित्रतरत्वं प्रतीयते, तच्चित्रमिदं त्वतिचित्रमित्यर्थः । त्रीन् वारान् त्रिः "द्वित्रिचतुर्भ्यः सुच्" । सप्त वारान् सप्तकृत्वः । "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" । सप्त च त्रिभिर्गुणिता एकविंशतिर्भवति । पञ्च परिमाणमस्य पञ्चकम् । "संख्यायाः संज्ञे" ति कन् ॥ ७० ॥

**संदानान्तादस्त्रिभिः शिक्षितास्त्रैराविश्यान्तः शातशस्त्रावलूनाः ।**
**कूर्मौपम्यं व्यक्तमन्तर्नदीनामैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीनाम्॥७१॥**

असृङ्मयीनां नदीनां रक्तसरितामन्तर्मध्ये ऐभा अङ्घ्रयः करिचरणा व्यक्तं स्फुटं कूर्मौपम्यं कच्छपसाम्यं प्रापन् लेभिरे । यतोऽस्त्रिभिरायुधीयैः शिक्षितास्त्रैरभ्यस्तायुधैरधस्तलमाविश्य संदानान्ताद् गुल्फप्रदेशात् शातशस्त्रावलूनास्तीक्ष्णखड्गच्छिन्नाः, अतश्च ज्ञायते असृक्सरितामिमे कूर्मा इति । नदीषु किल कूर्मैर्भाव्यम् । अङ्घ्रिशब्देऽहि गतौ "इदितो नुम् धातोः । "वङ्क्र्यादित्वात्"- क्रिन्, अनुस्वारे कृते हकारस्य ययभावात्परसवर्णाभावः । केचित्तु तन्निपातयन्ति । शातशब्दे "शाच्छोरन्यतरस्या" मितीत्वं विभाषितम् ॥ ७१ ॥

**पद्माकारैर्योधवक्त्रैरिभानां कर्णभ्रष्टैश्चामरैर्हंसशुभ्रैः ।**
**सोपस्काराः प्राभवन्नस्रतोयस्रोतस्विन्यो वीचिषूच्चैस्तरद्भिः ॥७२॥**

अस्रतोयस्रोतस्विन्यो रक्ताम्बुनद्यः प्राभवन् जज्ञिरे उत्पन्नाः । कीदृश्यः सरसिजसदृशैः सुभटवदनैः करिणां च कर्णपतितैः सितच्छदधवलैः चामरैरुच्चोर्मिषु प्लवमानैः सोपस्काराः सालंकारा भूषिताः । "संपर्युपेभ्य" इति सुडागमः । नद्यो हि पद्मैर्हंसैश्च भूष्यन्ते । चामरैरेव हंसैरिति तु पाठे रूपकम् ॥ ७२ ॥

**उत्क्रान्तानामामिषायोपरिष्टादध्याकाशं बभ्रमुः पत्रवाहाः ।**
**मूर्ताः प्राणा नूनमद्याप्यपेक्षामासुः कायं त्याजिता दारुणास्त्रैः ॥७३॥**

पत्त्राणि वहन्ति बिभ्रतीति पत्रवाहाः पत्रिणो भासाद्याः, अध्याकाशमा-

---

१ 'योधवक्त्रैस्तथेभानां कर्णभ्रष्टैर्हंसशुभ्रैश्चामरैः' ख. पाठः ।

काशे उत्क्रान्तानां मृतानामुपरिष्टात् निकटे आमिषायामिषार्थं बभ्रमुर्भ्रान्ताः । उत्प्रेक्ष्यते–नूनं मूर्ता असवो देहमद्याप्यपेक्षामासुः प्रत्यैक्षन्त, यतो दारुणास्त्रैस्त्याजिता हापिताः, अतश्चाकाले वयमुद्वासिता भूयः प्रविशाम इति प्रतिपालयन्ते ॥ ७३ ॥

**आतन्वद्भिर्दिक्षु पक्षाग्रवातं प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखेषु ।**
**आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात् पत्रिपूगैरपायि ॥ ७४ ॥**

सैन्यानां रुधिरं पूर्वमजीवैर्ज्यामुक्तैरप्राणैर्वा पत्रिपूगैः शराख्यैरपायि पपे, पश्चात् तैर्जीवैः प्राणद्भिः कङ्कगृध्रादिभिः । कीदृशैः आशासु पत्रप्रान्तमारुतमातन्वद्भिः, दूराच्च शीघ्रमागतैः वक्त्रेषु च शितैरित्युभयत्रापि तुल्यम् । अजीवैरित्यत्र जीवा ज्या, जीवः प्राणः । जीवैरिति जीवन्तीति जीवाः । अपायीति कर्मणि "आतो युक् चिण्कृतोः" ॥ ७४ ॥

**तेजोभाजां यद्रणे संस्थितानामादत्तीव्रं सार्धमङ्गेन नूनम् ।**
**ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्ताजग्दीप्तजिह्वा ववाशे ॥ ७५ ॥**

दीप्ता ज्वलन्ती जिह्वा यस्याः सा दीप्तजिह्वा शिवा ववाशे सस्वान । कीदृशी तत्तेजो नूनं निश्चितं ज्वालाव्याजेनार्चिश्छलेन अन्तर्हृदयात् ताजक् आशु उद्वमन्ती मुञ्चन्ती, किं तत् रणे मृधे संस्थितानां मृतानामोजोभाजां तेजस्विनामङ्गेन सार्धं वपुषा सह यदादत् बुभुजे, यतस्तीव्रं दुःसहं दीप्तजिह्वत्वात् । एषोत्प्रेक्षा । शिवाया हि मुखात् ज्वाला निःसरन्ति । आददिति "अदः सर्वेषा" मिति लङ्यडागमः ॥ ७५ ॥

**नैरन्तर्यच्छन्नदेहान्तरालं दुर्भक्षस्य ज्वालिना वाशितेन ।**
**योद्धुर्बाणव्रातमादीप्य मांसं पाकापूर्वस्वादमा[१]दे शिवाभिः ॥ ७६ ॥**

शिवाभिः सृगालीभिर्योद्धुर्भटस्य मांसं पिशितमादे जग्धम् । किं कृत्वा ज्वालिनार्चिष्मता वाशितेन स्वनेन बाणव्रातं शरनिकरमादीप्य दग्ध्वा, अत एव मांसपाकवशात् अपूर्वो नवः स्वादो मृष्टता यस्य तत् पाकापूर्वस्वादम् । कीदृक् बाणव्रातं नैरन्तर्येण सामग्र्या छन्नं छादितं देहान्तरालं गात्रमध्यं येन, अत एव योद्धुर्दुर्भक्षस्य अत्तुमशक्यस्य, अतश्च तैरेवेषुभिर्ज्वालिना वाशितेन पलं पक्त्वा भुक्तम् । आदे इति कर्मणि लिट् ॥ ७६ ॥

---

१ 'शे' क. पाठः ।

**ग्लानिच्छेदि क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं पाचिताजीर्णशेषम् ।**
**स्वादुंकारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यष्वनद्व्यस्वनच्च ॥ ७७ ॥**

क्रोष्टा सृगालो डिम्बं प्लीहानं व्यष्वनद्बुभुजे अत एव व्यस्वनच्च ववाशे, वाशमानो जघासेत्यर्थः । कथं व्यस्वनत् स्वादुंकारं स्वादुं कृत्वा "स्वादुमि णमुल्" अतिश्रद्धयेत्यर्थः । तथा कालखण्डोपदंशं कालखण्डं यकृत् उपदश्य किंचिद्भुक्त्वा, "उपदंशस्तृतीयाया" मिति णमुल् । कालखण्डस्य दंशं प्रति कर्मत्वं डिम्बभोजने तु करणत्वमेव । तथा रक्तमेवारिष्टं पानविशेषं क्षुत्प्रबोधाय बुभुक्षोत्पादनाय पीत्वा । कीदृशं ग्लानिच्छेदि आलस्यनाशि, यतः पाचिताजीर्णशेषं क्वथितापक्वान्नशेषम् । द्रव्यपानवद्धि असृक्पाने जीर्णिर्भवति । रक्तडिम्बकालखण्डान् क्रोष्टा आददित्यर्थः । योऽप्याढ्यः स्वादु मांसादनं भुङ्क्ते स पूर्वं गुलिकामश्नाति ततो ग्लानिच्छेदि निरस्ताशेषाजीर्णशेषं पानम् । व्यष्वनदिति "वेश्च स्वनो भोजने" इति षत्वम् । व्यस्वनदिति तु शब्दार्थत्वात् तत्प्रत्युदाहरणम् ॥ ७७ ॥

**क्रव्यात्पूगैः पुष्करैरानकानां प्रत्याशाभिर्मेदसो दारितानि ।**
**भुञ्जानो हि प्राणिसङ्घं रणोर्व्यां नूनं कालो व्याददावाननानि ॥ ७८ ॥**

आनकानां पटहानां पुष्कराणि मुखानि क्रव्यात्पूगैर्गृध्रादिव्रातैर्मेदसः प्रत्याशाभिः मेदोभ्रान्त्या यान्याभीलानि कृच्छ्रोत्पाट्यानि दारितानि पाटितानि, तान्युत्प्रेक्ष्यन्ते—नूनं ध्रुवं प्राणिसंघं रथगजतुरगमनुष्यं भुञ्जानः कालो मृत्युराननानि मुखानि व्याददौ व्यकासयत्, जन्तूनत्तुमाभीलानि कृच्छ्रदायीनि मृत्युरास्यानीव विवृतवानित्यर्थः । आनकपुष्करस्य शुक्लत्वान्मेदोभ्रान्तिः । यदुक्तम् "आदावेव मया ज्ञातं पूर्णमेतद्धि मेदसः । अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च" ॥ इति । 'आभीलमुच्यते कृच्छ्रम्' अत्र कृच्छ्रदायित्वाच्च कृच्छ्रत्वम् । क्रव्यमत्तीति क्रव्यादाममांसभक्षः । "क्रव्ये चे" ति विट् ॥ ७८ ॥

**कीर्णा रेजे साजिभूमिः समन्तादप्राणद्भिः प्राणभाजां प्रतीकैः ।**
**बह्वारब्धैरर्धसंयोजितैर्वा रूपैः स्रष्टुः सृष्टये कर्मशाला ॥ ७९ ॥**

सा आजिभूमिः संग्रामोर्वी रेजे दिद्युते । कीदृशी प्राणिनामप्राणद्भिः छिन्नत्वान्निश्चेष्टैः प्रतीकैरङ्गैः समन्तात् कीर्णा व्याप्ता, अतश्चोत्प्रेक्ष्यते—स्रष्टुर्विश्वक-

१ 'आभीलानि प्राणिनः प्रत्यवस्यन् कालो नूनं' ख. पाठः ।

मेरणः सृष्टये कर्मशालेव व्यापारस्थानमिव । कीदृशी बह्वारब्धैः किंचिच्छेषैस्तथार्धशेषैः सामिघटितैः रूपैर्दारुदेहैर्व्याप्ता । तक्षादिकर्मशाला ह्येवंविधैव भवति । वा इवार्थे भिन्नक्रमो रूपशब्दात् पुरोऽवसेयः । बह्वारब्धैरिति, बह्विति क्रियाविशेषणम् । उत्प्रेक्षोपमालंकारः । शालिनी वृत्तम् ॥ ७९ ॥

आयान्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः ।
आसीत् तोयैर्मुहुरिव महद्वारिधेरापगानां
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम् ॥ ८० ॥

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये अष्टादशः सर्गः ॥ १८ ॥

राजकानीकिनीनां चैद्यनृपपूगसेनानां श्रीपतेर्भगवतो लक्ष्मीनाथस्य सैन्यैरनीकैः समं सार्धमित्थमुक्तेन प्रकारेण मुहुरसकृत् दोलायुद्धं संशयरणमासीदभूत्, किं परे जयन्ति किं भगवद्बलानीत्यर्थः । कीदृशीनाम् अविरतरयमनिवृत्तवेगमायान्तीनां यत औद्धत्यभाजां दर्पिष्ठानाम् । कीदृशैः सैन्यैः अलघुभिर्विस्तीर्णैः, ऊर्मिमद्भिर्वृन्दस्थितैः । कथमासीत् कृतो गुरुतरो महीयान् ध्वानो जयारवो यत्र, युद्धविशेषणं वा । कस्य संबन्धिभिः कैः कासामिवेत्याह—वारिधेस्तोयैरापगानामिव, यथा सरितामविरतरयमायान्तीनाम् औद्धत्यभाजां क्षुभितानामब्धेर्जलैरलघुभिः सकल्लोलैश्च सह विहितगुरुकलकलं महद्दोलायुद्धं भवति तथा भगवतः सैन्यैः परपृतनानामभूदित्यर्थः । उपमाश्लेषोऽलंकारः । मन्दाक्रान्ता वृत्तम् । श्रीशब्दलक्ष्मत्वात् काव्यस्य सर्वसर्गसमाप्तौ श्रीशब्दप्रयोग इति भद्रम् ॥ ८० ॥

इति श्रीमहामहोपाध्यायवर्य्य—आनन्ददेवायनि-वल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायामष्टादशः सर्गः ॥ १८ ॥

अथ

# शिशुपालवधकाव्ये

## एकोनविंशः सर्गः



**अथोत्तस्थे रणाटव्यामसुहृद्वेणुदारिणा ।**

**नृपाङ्घ्रिपौघसंघर्षादग्निवद्वेणुदारिणा ॥ १ ॥**

अथानन्तरं वेणुदारिणा राजन्यविशेषेण रणाटव्यां समरारण्ये उत्तस्थे उत्थितम् उद्योगोऽभाजि । कुतः नृपा एवाङ्घ्रिपाः पादपास्तेषामोघः समूहस्तस्य यः संघर्षः स्पर्धा ततः, रिपुस्पर्धयेत्यर्थः । कीदृशेन असुहृदः शत्रव एवासारत्वात् वेणवो मृदुकाष्ठविशेषाः, तान् दारयति क्षपयतीत्यसुहृद्वेणुदारी तेन । केनेवोत्तस्थे अग्निनेवाग्निवत् । यथा पादपनिघर्षादटव्यां वेणुदारको वह्निरुत्तिष्ठति तथा । सर्गेऽस्मिन्नानुष्टुभं छन्दः श्लोकानां प्रायेण वृत्तम् । "पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्" ॥ पर्यायेण चैकस्मिन् श्लोके यमकादीनामेकः शब्दालंकारोऽपरत्र तूपमादीनामेको[1]ऽर्थालंकारश्च ॥ १ ॥

**आपतन्तममुं दूरादूरीकृतपराक्रमः ।**

**बलोऽवलोकयामास मातङ्गमिव केसरी ॥ २ ॥**

अमुं वेणुदारिणमागच्छन्तमूरीकृतपराक्रमोऽङ्गीकृतपौरुषो बलो हलधरो दूरादवलोकयामास, हली युयुत्सया तं जग्राहेत्यर्थः । मातङ्गमिव केसरी, यथा द्विपमापतन्तं पौरुषाश्रयेण सिंहो दूरादवलोकयति । उपमालंकारः ॥ २ ॥

**जजौजोजाजिजिज्जाजी तं ततोऽतिततातितुत् ।**

**भाभोऽभीभाभिभूभाभूरारारिररिरीररः ॥ ३ ॥**

ततोऽनन्तरं तं वेणुदारिणम् अरिः शत्रुर्बलाख्य आर आजगाम अभियुयुजे । कीदृशः जजौजोजाजिजित्, 'जज जजि युद्धे' जजन्तीति जजा योद्धार-

1 'का' क. ग. पाठः ।

स्तेषामोजस्तेजो बलं वा जजौजः ततो जायते उत्पद्यते या आजिः समित् तां जयत्यभिभवति इति जजौजोजाजिजित् योद्धृबलसमुत्थसमरजेता । तथा सुष्ठु जजति युध्यतीति जाजी सुभटः । तथा अतितताततितुत्, अतिशयेन ततान् विस्तीर्णान् साधनयुक्तान् ये अतन्ति उपरि गच्छन्ति ते अतितताततिनः, तानपि तुदति पीडयतीति अतितताततितुत् महाबलभृज्जेता । भाभो नक्षत्रकान्तिः सितत्वात्, अभीभाभिभूभाभूः, अभियो निर्भया ये इभा द्विपास्तेषामभिभूः अभिभावनीया भाः कान्तिस्तस्या भूः, भवत्यस्मादिति भूः स्थानम्, मत्तद्विपपरिभाविदीप्तिनिलयः । तथा अरिरीररः, अरा विद्यन्ते येषां ते अरिणो रथाः चक्राणि वा तैः रिणन्ति घ्नन्ति ये ते अरिरिणो रथिनश्चक्रक्षेपका वा, तेषामीरं प्रेरणं राति ददातीति अरिरीररः, सवाहनायुधजिष्णुः । प्रतिपादमनुप्रासोऽलंकारः । "एकद्वित्रान्तरितं व्यञ्जनमविवक्षितस्वरं बहुशः । आवर्तते निरन्तरमथवा यदसावनुप्रासः" ॥ ३ ॥

भवन् भयाय भूतानामाकम्पितमहीतलः ।
निर्घात इव निर्घोषभीमस्तस्यापतद्रथः ॥ ४ ॥

तस्य बलस्य रथोऽपतत् स्यन्दनं निर्ययौ । कीदृशः सैन्यानां भयाय त्रासाय भवन्, आकम्पितमहीतलः चालितमहीपृष्ठः, निर्घोषभीमश्चीत्काररवभयानकः, अत एव निर्घात इव उद्घाततुल्यः। सोऽपि जनभयंकरः कम्पितमहीतलो निर्घोषभीमश्च । उपमाश्लेषोऽलंकारः ॥ ४ ॥

रामे रिपुः शरानाजिमहेष्वास विचक्षणे ।
क्रोधादथैनं शितया महेष्वा स विचक्षणे ॥ ५ ॥

रिपुर्वेणुदारी रामे हलधरे शरानास सायकांश्चिक्षेप । कीदृशे आजिमहेषु समरोत्सवेषु विचक्षणे पण्डिते समरव्यापाराभिज्ञे । अथानन्तरमेनं रिपुं वेणुदारिं स रामः कोपात् शितया तीक्ष्णया महेष्वा पृषट्केन विचक्षणे जघान । इषुशब्दः स्त्रीपुंसयोः । विचक्षणे इति क्षणेर्लिटि रूपम् । सन्दष्टयमकमलंकारः । एवमुत्तरत्र ॥ ५ ॥

दिशमर्कमिवावाचीं मूर्छां गतमपावहत् ।
मन्दप्रतापं तं सूतः शीघ्रमाजिविहायसः ॥ ६ ॥

तं वेणुदारिं सूतः सारथिराजिविहायसो रणाकाशात् आशु अपावहत् आचकर्ष, यतो मूर्छां गतं मोहं प्राप्तम् अत एव मन्दप्रतापं स्वल्पतेजसम् । कमिव कः कुतोऽपवहतीत्याह–यथा अवाचीं दिशं दक्षिणामाशां रविं गतं मन्दप्रतापं सूतोऽरुणो विहायसः खात् आशु आकर्षति । दक्षिणायने हि रविर्मृदुतेजाः शीघ्रगामी च भवति । मूर्छाया अवाची दिगुपमानम् । रूपकोपमाश्लेषसंकरोऽलंकारः ॥ ६ ॥

कृत्वा शिनेः सालचमूं सप्रभावा चमूर्जिताम् ।
ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम् ॥ ७ ॥

शिनेः सात्यकेश्चमूः सेना ऊर्जितामदीनां तेजस्विनीं वाचं ब्राह्मीं ससर्ज उदैरयत् । किं कृत्वा शिशुपालपक्षस्य साल्वस्य चमूं वाहिनीं जितां कृत्वाभिभूय । कीदृश्यसौ सप्रभावा प्रभावान्विता बलवती, तथा वक्त्रैः करणभूतैः फुल्लाब्जसप्रभा विकसितसरसिजकान्तिः, फुल्लाब्जैः समाना प्रभा यस्या इति कृत्वा । शिनिः साल्वं जित्वा प्रहृष्टो जगर्जेति वाक्यार्थः ॥ ७ ॥

उल्मुकेन द्रुमं प्राप्य संकुचत्पत्रसंपदम् ।
तेजः प्रकिरता दिक्षु सप्रतापमदीप्यत ॥ ८ ॥

उल्मुकेन भगवत्सुतेन द्रुमं चैद्यवर्ग्यं प्राप्यासाद्य सप्रतापं तेजोन्वितमदीप्यत चकाशे । कीदृशम् संकुचन्ती भयात्पिण्डीभवन्ती पत्रसंपत् वाहनसमृद्धिर्यस्य, तेन तु तेजो दिक्षु मुञ्चता । यदप्युल्मुकमर्धदग्धकाष्ठं तत्संकुचत्पत्रसंपदं म्लायत्किसलयनिचयं द्रुमं प्राप्य दिक्षु तेजः प्रकिरत् सप्रतापं देदीप्यते । अविशेषश्लेषोऽलंकारः ॥ ८ ॥

पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः ।
तयैव वाचापगमं ययाचापमुदा युधः ॥ ९ ॥

रुक्मी भीष्मकात्मज उदायुध उद्गूर्णप्रहरणः सन् यया वाचा गिरा पृथोर्भगवत्सुतस्य धनुरध्यक्षिपत् जगर्हे, तयैव वाचा अपमुदा दीनया गतहर्षया युधः समरादपगमं निःसरणं ययाचाध्यैषीत्, प्रसीद मा प्रहार्षीः श्रान्तोऽस्म्यप[1]यामीति ॥ ९ ॥

1 'पहायामि' क. पाठः ।

**समं समन्ततो राज्ञामापतन्तीरनीकिनीः ।**
**कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः ॥ १० ॥**

कार्ष्णिः कृष्णसुतो नृपसेनाः परितो युगपदायान्तीरेकोऽसहायः प्रत्यग्रहीत् प्रत्यैच्छत्, यथा समन्तत आपतन्तीर्नदीरेकोऽब्धिः प्रतीच्छति ॥ १० ॥

**दधानैर्घनसादृश्यं लसदायसदंसनैः ।**
**तत्र काञ्चनसच्छाया ससृजे तैः शराशनिः ॥ ११ ॥**

तत्र कार्ष्णौ तैररिभिः काञ्चनसच्छाया स्वर्णगौरी शराशनिः सायकोल्का ससृजे निरासे । कीदृशैः लसदायसदंसनैः श्लिष्यदयोमयकवचैः, अतश्च कार्ष्ण्यात् घनसादृश्यमभ्रसाम्यं बिभ्रद्भिः । मेघो हि कनककान्तिमशनिं मुञ्चति । उपूपध्मानीयानामभावान्निरोष्ठ्योऽयं श्लोकः ॥ ११ ॥

**नखांशुमञ्जरीकीर्णामसौ तरुरिवोच्चकैः ।**
**बभौ बिभ्रद्धनुःशाखामधिरूढशलीमुखाम् ॥ १२ ॥**

असौ कार्ष्णिस्तदा चापलतां बिभ्रत् बभौ रेजे । कीदृशीं नखांशव एव मञ्जरी तया कीर्णां व्याप्ताम्, अधिरूढशिलीमुखां संधितशराम् । क इव बभौ उच्चैस्तरुरिव, सोऽपि मञ्जरीकीर्णां शाखामारूढभृङ्गावलिं बिभर्ति ॥ १२ ॥

**प्राप्य भीममसौ जन्यं सौजन्यं दधदानते ।**
**विध्यन्मुमोच न रिपूनरिपूगान्तकः शरैः ॥ १३ ॥**

असौ कार्ष्णिर्जन्यं रणं प्राप्य रिपून्न मुमोच नोपैक्षत, सायकैर्विध्यन् इषुभिस्ताडयन्, अरिपूगान्तकः शत्रुसंघमृत्युः, आनते सौजन्यं सुजनतां बिभ्रत्, त्वय्यस्मीति वादिनमविध्यन्नित्यर्थः । अन्ताक्षराणां पादादावावृत्तत्वादन्तयमकमिदम् ॥ १३ ॥

**कृतस्य सर्वक्षितिपैर्विजयाशंसया पुरः ।**
**अनेकस्य चकारासौ बाणैर्बाणस्य खण्डनाम् ॥ १४ ॥**

असौ कार्ष्णिर्बाणैः बाणासुरस्यानेकस्य सबलस्य खण्डनां हिंसां चकार व्यधात् । कीदृशस्य सकलराजकैर्विजयाशङ्कया पुरोऽग्रे नियुक्तस्य यतोऽनेक-

१ 'चस्त' क. ग. पाठः ।

स्य, अथ चानेकस्य बाणस्य बहूनां शराणां बाणैश्छेदमकरोदित्युक्तं वक्रोक्त्या, शरैः शरान् स चिच्छेदेत्यर्थः । तेऽपि विजयाशङ्कया राजभिरग्रे क्षिप्यन्ते । उक्तिश्लेषोऽलंकारः ॥ १४ ॥

**या बभार कृतानेकमाया सेना ससारताम् ।**

**धनुः स कर्षन् रहितमायासेनाससार ताम् ॥ १५ ॥**

स कार्ष्णिः तां सेनामाससार अभीयाय । कां तां या सेना कृतानेकमाया विहितबहुच्छला सती ससारतां सबलत्वं दध्रे । किं कुर्वन् धनुराकर्षन्, कथमायासेन क्लेशेन रहितं विना सलीलमित्यर्थः । यदिवा आयासेन स्फोटभयेन वर्जितमिति धनुर्विशेषणम् ॥ १५ ॥

**ओजो महौजाः कृत्वाधः स क्षणादुत्तमौजसः ।**

**कुर्वन्नाजावमुख्यत्वमनयन्नाम मुख्यताम् ॥ १६ ॥**

स कार्ष्णिराजौ युधि स्वं नाम मुख्यतां प्राधान्यमनयत् प्रापयत् रिपुपरिभवकरणात् । उत्तमौजसो द्रुपदात्मजस्य क्षणादेव तेजोऽधः कृत्वाभिभूय, यतोऽसौ महातेजास्तेजस्वी, अत एव तस्यामुख्यत्वमप्राधान्यं कुर्वन् जनयन् । शत्रुणाभिभूतस्य हि कीदृक् प्राधान्यम् । अथच तस्यामुख्यत्वं गौणत्वमर्थशून्यत्वं कुर्वन् स्वनाम मुख्यतां सार्थकत्वमनयादित्यर्थान्तरप्रतीतिः । नह्युत्तमौजसः स्वनाम्नि प्रवृत्तिनिमित्तमस्ति, तेनोत्तमौजसोऽधःकृतत्वात् कार्ष्णौ तु महौजस्त्वं विद्यते इति मुख्यता ॥ १६ ॥

**दूरादेव चमूर्भल्लैः कुमारो हन्ति स स्म याः ।**

**न पुनः सांयुगीं ताश्च कुमारोहन्ति सस्मयाः ॥ १७ ॥**

स कुमारः पृथुः प्रद्युम्नो वा दूरादेव याः सस्मया दर्पिष्ठाश्चमूः सेना हन्ति स्म जघान, ताश्चम्वः पुनः सांयुगीं कुं रणभुवं नारोहन्ति स्म नारूढाः, मृतत्वात्पलायनाद्वा ॥ १७ ॥

**निपीड्य तरसा तेन मुक्ताः काममनास्थया ।**

**उपाययुर्विलक्षत्वं विद्विषो न शिलीमुखाः ॥ १८ ॥**

तेन कुमारेण तरसा बलान्निपीड्य अनास्थया मुक्ताः सन्तो विद्विषो बिल-

क्षत्वं ययुर्न शराः । शत्रवो हि तेनोपताप्य भराभावान्मुक्ताः सन्तो विलक्षा विनष्टाः । नहि तेषु कस्यचिद्भरः, शरास्तु तेनाकृष्यावहेलया क्षिप्ता विलक्षतां लक्षादन्यत्र न जग्मुरपितु शरव्य एव पतिताः । व्यतिरेकः ॥ १८ ॥

**तस्यापदानैः समरे सहसा रोमहर्षिभिः ।**

**सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः ॥ १९ ॥**

तस्य कार्ष्णेः खस्थैर्देवैर्महर्षिभिः समं महामुनिभिः साकं समरे रणे सारो बलमशंसि स्तुतः । कीदृशैस्तदीयैरपदानैरुत्कृष्टैर्व्यापारैः सहसा अप्रतर्कितं रोमहर्षिभिः सरोमाञ्चैः कण्ठकितैः ॥ १९ ॥

**सुगन्धयद्दिशः शुक्लमम्लानि कुसुमं दिवः ।**

**भूरि तत्रापतत् तस्मादुत्पपात दिवं यशः ॥ २० ॥**

तत्र कुमारे दिवः खात् भूरि प्रभूतं कुसुममपतदभ्रश्यत्, तस्मात् तु प्रद्युम्नात् यशः श्लोको दिवमुत्पपात द्यामारुरोह, कृतयशस्यकर्मत्वात् देवैरस्य पुष्पवर्षममोचीत्यर्थः । कीदृशं कुसुमं दिशः काष्ठाः सुगन्धयदामोदयत्, शुक्लं सितम्, अम्लानि विकसितम् । यशोऽप्याशाः सुगन्धयत् व्याप्नुवदित्यर्थः । शुक्लं स्थूलं वा । सुगन्धि सितं च यश इत्यौपचारिको व्यवहारः । अम्लानमनष्टं नवम् । परिवृत्तिश्लेषसंकरोऽलंकारः ॥ २० ॥

**सोढुं तस्य द्विषो नालमपयोधरवा रणम् ।**

**ऊर्णुनाव यशश्च द्यामपयोधरवारणम् ॥ २१ ॥**

तस्य कार्ष्णेः रणं मृधं रिपवः सोढुं नालं न समर्थाः, अत एवापगतो योधानां भटानां रवः सिंहनादो येषां तेऽपयोधरवाः । अतश्च तस्य यशो द्यां दिवमूर्णुनाव पिदधे व्याप । कीदृशम् अविद्यमानं पयोधरैर्मेघैर्वारणं निवृत्तिर्यस्य तदपयोधरवारणं, मेघपथमुल्लङ्घ्य स्वर्जगामेत्यर्थः ॥ २१ ॥

**केशप्रचुरलोकस्य पर्यस्कारि विकासिना ।**

**शेखरेणेव युद्धस्य शिरः कुसुमलक्ष्मणा ॥ २२ ॥**

कुसुमलक्ष्मणा कन्दर्पावतारेण प्रद्युम्नेन युद्धस्य रणस्य शिरो मस्तकं पर्यस्कारि भूषितमिति । कर्मणि लुङ् । च्लेश्चिण् । "संपर्युपेभ्यः करोतौ भूषणे"-

इति सुडागमः । शिर इव शिरः । कीदृशस्य केशवत् कचवत् प्रचुराः प्रभूता लोका योधा यस्य । यद्वा कस्य जलस्येशः पतिः केशोऽब्धिस्तद्वत्प्रचुरलोकस्य । कीदृशेन तेन विविधं कसति गच्छति वल्गतीति विकासी, तेन विकासिनानेकमार्गविचारिणा । केनेव पर्यस्कारि शेखरेणेवोत्तंसेनेव, केशैः प्रचुरो बहुलः केशेषु वा प्रचुरः सक्तो यो लोकस्तस्य यथा आपीडेन शिरः परिष्क्रियते । कीदृशेन विकासिना प्रफुल्लेन । तथा कुसुमानि लक्ष्म चिह्नं यस्य तेन कुसुमलक्ष्मणा सपुष्पेण नतु पत्रवता ॥ २२ ॥

सादरं युध्यमानापि तेनान्यनरसादरम् ।
सा दरं पृतना निन्ये ह्रीयमाना रसादरम् ॥ २३ ॥

सा पृतना चमूः सादरं सश्रद्धं युध्यमानापि तेन प्रद्युम्नेन (अरमत्यर्थं) दरं भयं निन्ये नीता, अत एव रसाद्वीराख्यात् ह्रीयमाना त्याज्यमाना । कीदृशं दरम् अन्येषामभीतानामपि नराणां सादमवसादमनुद्योगं राति ददातीत्यन्यनरसादरम् । पलायने हि सति नराणामनुद्योगो भवति । ह्रीयमानक्रियाविशेषणं वैतत् । ह्रीयमानेति कर्मकर्तरि ॥ २३ ॥

इत्यालिङ्गितमालोक्य जयलक्ष्म्या झषध्वजम् ।
क्रुद्धयेव क्रुधा सद्यः प्रपेदे चेदिभूपतिः ॥ २४ ॥

अथ स शिशुपालः क्रुधा रुषा प्रपेदे आश्रितः । उत्प्रेक्ष्यते—क्रुद्धयेव । किं कृत्वेति क्रुधः क्रोधे निमित्तमाह—इति पूर्वोक्तेन प्रकारेण झषध्वजं प्रद्युम्नं जयश्रियालिङ्गितं दृष्ट्वा । यदा किल कंचिद्रम्यं पतिं नायिकालिङ्गति तदान्या नारी तत्स्पर्धया तमीश्वरं प्रतिपद्यते ॥ २४ ॥

अहितानभि वाहिन्या स मानी चतुरङ्गया ।
चचाल वल्गत्कलभसमानीचतुरङ्गया ॥ २५ ॥

स चैद्यो मानी साभिमानश्चतुरङ्गया सेनया अहितानभि शत्रून्प्रति चचाल जगाम । कीदृश्या वल्गन्तः कलभसमा अनीचास्तुरङ्गा यस्याः, उच्चत्वात्करिपोतकदघ्ना वीतयो यस्या इत्यर्थः ॥ २५ ॥

ततस्ततधनुर्मौर्वीविस्फारस्फारनिःस्वनैः ।
तूर्यैर्युगक्षयक्षुभ्यदकूपारानुकारिणी ॥ २६ ॥

सकारनानारकासकायसाददसायका ।
रसाहवा वाहसारनादवाददवादना ॥ २७ ॥ +

लोलासिकालियकुला यमस्येव स्वसा स्वयम् ।
चिकीर्षुरुल्लसल्लोहवर्मश्यामा सहायताम् ॥ २८ ॥

सा सेना गमनारम्भे रसेनासीदनारता ।
तारनादजना मत्तधीरनागमनामया ॥ २९ ॥*(चक्कलकम्)

ततः सा चैद्यसेना गमनारम्भे प्रस्थानप्रस्ता[1]वे रसेन रणश्रद्धया अनारता अनिवृत्ता आसीदभूत्, रोषेणाभीयायेत्यर्थः । कथं मत्ताः प्रभिन्ना धीरा निर्भया नागाः करिणो यत्र तत् मत्तधीरनागं भवनम् । कीदृशी तारनादा उच्चकलकला जना योधा यस्यां सा तारनादजना ॥ —तथा युगक्षये कल्पान्ते क्षुभ्यन् कम्पमानो योऽकूवारः सागरस्तमनुकरोति विडम्बयति या सा युगक्षयक्षुभ्यदकूवारानुकारिणी । कैः[2] तूर्यैर्वादित्रैः । कीदृशैः तता आकृष्टा या धनुर्मौर्व्यश्चापज्यास्तासां यो विस्फारः क्रेङ्कारस्तेन स्फारनिःस्वनैर्महारवैः ॥ —तथा सकारनानारकासकायसाददसायका । करणं कारः, अरीणां समूह आरं, सकाराणि नानाविधानि च यान्याराणि रिपुवृन्दानि तेषां कासो भ्रमणं वल्गनं तथा काया देहास्तेषां साददा अवसाददायिनः सायका मार्गणा यस्याः सा तथोक्ता, यदीयाः शरा द्विषां गमनं कायं च खण्डयन्तीत्यर्थः । रसेन रागेण नतु भयेन आहवो युद्धं यस्याः सा रसाहवा । तथा वाहसाराणां वाहनश्रेष्ठानां हयादीनां यो नादो हेषितादिः स एव वाद इव वादस्तं द्यन्ति खण्डयन्ति वादनानि तूर्याणि यस्यां सा वाहसारनादवाददवादना । व्याख्यान्तराणां निरर्थक-

सर्वतोभद्रः

| + स | का | र | ना | ना | र | का | स |
|---|---|---|---|---|---|---|---|
| का | य | सा | द | द | सा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |

मुरजबन्धः

| * सा | सेना | गम | नार | म्भे |
|---|---|---|---|---|
| र | सेना | सीद | नार | ता |
| ता | रना | दज | नाम | त्त |
| धी | रना | गम | नाम | या |

१ 'स्था' ख. पाठः ।
२ 'केन' क. ग. पाठः ।

त्वादनादरोऽस्माकम् । सति हि स्पष्टे व्याख्याने दुष्टव्याख्यानप्रतिपत्तिर्मोहायैव, नच ताः कवेर्विवक्षिताः । सर्वथा वाचयितुं शक्यत्वात् सर्वतोभद्रोऽयं न्यासः ॥ —सहायतां चिकीर्षुः कर्तुकामा स्वयं यमस्येव स्वसा यमुनेव । कस्य साहाय्यमिति चेत्, प्रकृतत्वात् यमस्यैव । यमेन किल प्राणिनो घात्याः, तत्स्वसा च भ्रातृस्नेहात् तान् घ्नन्ती साहायकं कृतवती भवति । किं सेनाया यमुनया सारूप्यं येनैष तर्क इत्याह–कीदृशी लोला असय एव नीलत्वात् कालियकुलं यस्याः, तथा उल्लसद्भिः स्फुरद्भिर्लोहवर्मभिरायसकवचैः श्यामा कृष्णा । यमुना किल नीलजला कालियाहिकुलवसतिश्च ॥ चक्कलकमेतत् ॥ २६ ॥ ॥ २७ ॥ २८ ॥ २९ ॥

**धौतधारासयः प्रष्ठाः प्रातिष्ठन्त क्षमाभुजाम् ।**
**शौर्यानुरागनिकषः सा हि वेलानुजीविनाम् ॥ ३० ॥**

पार्थिवानां प्रष्ठा अग्रेसराः संमार्जितधारं खड्गमुदीर्य प्रातिष्ठन्त युद्धाय प्रस्थिताः । यस्मात् सेवकानामसौ वेला शौर्यस्यानुरागस्य च निकषः परीक्षा । युद्धसमये हि भृत्यानां पौरुषस्नेहौ लक्ष्येते । यदुक्तम् "अवाति वायौ नहि तूलराशेर्गिरेश्च कश्चित्प्रतिभाति भेदः । उपस्थिते विप्लव एव पुंसां सारेतरत्वं प्रतिभाव्यतेऽन्तः" इति ॥ ३० ॥

**दिवमिच्छन् युधा गन्तुं कोमलामलसंपदम् ।**
**दधौ दधानोऽसिलतां कोऽमलामलसं पदम् ॥ ३१ ॥**

तदा कः पुरुषोऽमलां धौतामसिलतां खड्गवल्लीं दधानोऽलसं मन्दं पदं क्रमं दधौ न्यधित, सर्व एव रयेण रणभुवं प्राविक्षदित्यर्थः । यतो युधा युद्धेन दिवं स्वर्गं गन्तुमिच्छन् यियासुः । कीदृशीं द्याम्, कोमला सच्छाया उपभोगयोग्या अमला निर्मला दुःखवर्जिता संपत् समृद्धिर्यत्र तां कोमलामलसंपदम् ॥ ३१ ॥

**कृतोरुवेगं युगपद् व्यजिगीषन्त सैनिकाः ।**
**विपक्षं बाहुपरिघैर्जङ्घाभिरितरेतरम् ॥ ३२ ॥**

सुभटाः समकालं द्वयं व्यजिगीषन्त विजिग्यिरे । "विपराभ्यां जेः" । किमित्याह–भुजायुधैररिं परस्परं तु जङ्घाभिः स्ववर्ग्यानपि हि ते अग्रिमस्कन्धं

प्रविशन्तोऽतिशिशयिषन्ते । कीदृशं विपक्षम्, कृत उरुर्महान् वेगो यस्य येन वा, इतरेतरं तु कृत ऊर्वोर्वेगो येन तं कृतोरुवेगम् ॥ ३२ ॥

**वाहनाजनि मानासे साराजावनमा ततः ।**
**मत्तसारगराजेभे भारीहावज्जनध्वनि ॥ ३३ ॥**

ततोऽनन्तरं तस्मिन् साराजावुत्कृष्टयुद्धे वाहना वाहिनी अनमा अप्रह्वा अजनि जाता, दुर्जया समपद्यत । कीदृशे साराजौ मानमहंकारमस्यति नाशयतीति मानासे परस्य दर्पच्छेत्तरि । तथा मत्ता दर्पिताः सारगा उत्कृष्टगामिनो राजेभा नृपकरिणो यत्र । यदिवा मत्तानां बलं गच्छन्त्याक्रामन्ति राजेभा यत्रेति योज्यम् । कथमजनि भारिणः सनाहादिभारयुक्तस्य ईहावतः समरकर्मव्यापृतस्य जनस्य भटलोकस्य ध्वनिः हत गृह्णीतागच्छतेत्यादिको यत्र तत् भारीहावज्जनध्वनि । येषां त्वाजिशब्दः स्त्रियामेव वर्तते तेषामेवं योजना । तस्यां साराजौ मत्तसारगो यो राजेभस्तत्र वाहना अजनि तद्विषयं वाहनं जातम्, परबलमहेभाः प्रेरिता इत्यर्थः । कीदृशे राजेभे मानासे दर्पनाशके । अत्रैव प्रातिलोम्येनार्थान्तरम् ॥ ३३ ॥

**निध्वनज्जवहारीभा भेजे रागरसात्तमः ।**
**ततमानवजारासा सेना मानिजनाहवा ॥ ३४ ॥**

सा सेनानीकिनी रागरसात् द्वेषानुबन्धात् तमो भेजे अन्धकारमाप, क्रोधावेशान्न किंचिदप्यैक्षतेत्यर्थः । कीदृशी निध्वनन्तो गर्जन्तो जवहारिणो वेगगामिन इभा द्विपा यत्र । तथा ततो विस्तीर्णो मानवजः शूरसमुत्थ आरा- (वो ? सो) ध्वनिर्यत्र । तथा मानिजनस्य वीरलोकस्याहवो युद्धं यत्र सा मानिजनाहवा ॥ ३४ ॥

**अभग्नवृत्ताः प्रसभादाकृष्टा यौवनोद्धतैः ।**
**चक्रन्दुरुच्चकैर्मुष्टिग्राह्यमध्या धनुर्लताः ॥ ३५ ॥**

धनुर्लताः चापवल्ल्य उच्चैस्तारं चक्रन्दुः चुकूजुः, यतो यौवनोद्धतैः प्रसभाद्बलेनाकृष्टाः आस्फालिता अभग्ना अत्रुटिता वृत्ता आकर्षणवशाच्चक्रीभूताः, तथा मुष्टिना ग्राह्यमवष्टभ्यं मध्यं यासां ता मुष्टिग्राह्यमध्याः । अथचोक्तिः—या मुष्टिग्राह्यमध्याः कृशोदर्यस्ता युवभिर्बलादाकृष्टाः केशानाकृष्य हृताः सत्य उच्चकैः क-

न्दन्ते, यतोऽभग्नवृत्ता अनष्टचारित्राः । 'कदि क्रदि आह्वाने रोदने च' त्यस्य चक्रन्दुरिति रूपम् । अपरस्त्वात्मनेपदी ॥ ३५ ॥

**करेणुः प्रास्थितानेको रेणुर्घण्टाः सहस्रशः ।**
**करेऽणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ ॥ ३६ ॥**

अनेको बहुसंख्यः करेणुर्हास्तिकं प्रास्थित, अतश्च सहस्रशो घण्टाः रेणुरकणन् । तथा करे पुष्करेऽणुः सूक्ष्मपरिमाणः शीकरो वमथुर्जज्ञे उदपादि, तेन शीकरेण रेणुर्धूलिः शमं ययौ जगाम ॥ ३६ ॥

**धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः ।**
**सरोषसंभ्रमैर्बभ्रे रौद्र एव रणे रसः ॥ ३७ ॥**

द्विपैर्द्विरदैः धृतप्रत्यग्रशृङ्गाररसरागैरपि समरे रौद्र एव रसो बभ्रे धृतः । अपिर्विरोधे । यैः किल नवशृङ्गाररसेन राग उह्यते ते कथं रौद्ररसं बिभृयुः, तयोर्वैलक्षण्यात् । अनुरक्तयोर्हि पुंनार्योर्मनोहरवेशो रतिप्रकृतिः शृङ्गारः, क्रोधप्रकृतिस्तु रौद्रः । अविरोधस्तु शृङ्गारशब्दस्य गैरिकादिरागवाचकत्वात् । धृतः प्रत्यग्रः शृङ्गाररसरागो गैरिकादिद्रव[1]रजनं यैः । रोषेण संभ्रमो रोषसंभ्रमः सह तेन वर्तन्ते इति सरोषसंभ्रमास्तैः क्रोधव्याप्तैः ॥ ३७ ॥

**न तस्थौ भर्तृतः प्राप्तमानसंप्रतिपत्तिषु ।**
**रणैकसर्गेषु भयं मानसं प्रति पत्तिषु ॥ ३८ ॥**

पत्तिषु पदातिषु मानसं प्रति मनःसु भयं त्रासो न तस्थौ नासीत्, यतो भर्तृतः प्रभोः सकाशात् प्राप्तो मानः पूजा तया संप्रतिपत्तिः प्रसादो नामचिह्नादिको यैस्तेषु प्राप्तमानसंप्रतिपत्तिषु, तथा रणे एकः सर्ग उत्साहो येषां तेषु । यश्चैवंविधः स कथं त्रस्येत् ॥ ३८ ॥

**बाणाहिपूर्णतूणीरकोटरैर्धन्विशाखिभिः ।**
**गोधाश्लिष्टभुजाशाखैरभूद्भीमा बलाटवी ॥ ३९ ॥**

असौ बलाटवी सैन्यारण्यानी धन्विशाखिभिर्धानुष्कवृक्षैर्भीमाभूत् भयदाजनि । कीदृशैर्बाणैरेवाहिभिः पूर्णाः तूणीरास्तूणाः एव कोटराः कुहराणि येषां तैः, तथा गोधाभिस्तलैर्बाहुत्रैराश्लिष्टा वेष्टिता भुजा एव शाखा येषां तैः । अटव्य-

१ 'वण' ख. पाठः ।

पि सायकसदृशसर्पसंपूर्णतूणनिभकोटरैर्गोधाश्लिष्टभुजानिभलतैर्वृक्षैर्भीमा भवति। अत्र गोधा प्राणिविशेषः ॥ ३९ ॥

**नानाजाववजानाना सा जनौघघनौजसा ।**
**परानिहाहानिराप तान्वियाततयान्विता ॥ ४० ॥**

सा चैद्यसेना इहास्यां नानाजौ नानाविधायां युधि तान् परानरीन् वृष्णीन् आप आससाद । कीदृशी जनौघस्य बलवृन्दस्य घनं बहु यदोजस्तेनावजानाना अवज्ञां कुर्व (न्ती ? ती) । यद्विा ओजसा अवजानाना जनौघघनेति व्याख्येयम् । "अकर्मकादि" ति तङ् । तथा अहानिरनाशा वियाततया अप्रतिभया अन्विता अनुगता । प्रतिलोमानुलोमपादोऽयम् ॥ ४० ॥

**विषमं सर्वतो भद्रचक्रगोमूत्रिकादिभिः ।**
**श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ ४१ ॥**

तदुच्चैर्बलं व्यूहैः रचनादिभिः सर्वतो विषमं दुष्प्रवेशमभूत् । कैस्तैर्व्यूहैः भद्रचक्रगोमूत्रिकादिभिः । कैरिव किमित्याह–सर्वतोभद्रचक्रगोमूत्रिकामुरजखड्गशूलहलादिभिर्दुष्करश्लोकैर्यथा महाकाव्यं विषमं दुर्बोधं भवति । यत्र सर्वे रसालंकाराः सर्वाणि च काव्यस्थानानि चतुर्वर्गबन्धाश्च क्रियन्ते तन्महाकाव्यं शिशुपालवधादिकम् ॥ ४१ ॥

**संहत्या सत्त्वतां चैद्यं प्रति भास्वरसेनया ।**
**ववले योद्धुमुत्पन्नप्रतिभा स्वरसेन या ॥ ४२ ॥**

अथ सत्त्वतां यदूनां संहत्या वृन्देन चैद्यं प्रति शिशुपालमभि ववले वलितं परिवृत्तम् । कीदृश्या भास्वरसेनया दीप्रवाहिन्या । या च स्वरसेनात्मवीर्येणैव योद्धुमुत्पन्नप्रतिभा संजातधार्ष्ट्या नतु परप्रेरणया । सात्त्वतामिति केचित्पेठुः तदयुक्तम् । एवं हि सात्त्वतैरिति भाव्यम् ॥ ४२ ॥

**विस्तीर्णमायामवती लोललोकनिरन्तरा ।**
**नरेन्द्रमार्गं रथ्येव पपात द्विषतां बलम् ॥ ४३ ॥**

**वारणागगभीरा सा साराभीगगणारवा ।**
**कारितारिवधा सेना नासेधा वरितारिका ॥ ४४ ॥**

सा सेना यदुवाहिनी द्विषतां बलं रिपुसैन्यं पपात प्रविवेश । केवलं राजमार्गं यथा रथ्या विशति । नगररथ्यानां हि राजमार्गे समागमः । कीदृक् बलं तं वा विस्तीर्णमसंकटम् । कीदृशी सेना रथ्या वा आयामवती द्राघीयसी, तथा लोलैराकुलैर्लोकैर्निरन्तरा नीरन्ध्रा, तथा वारणागगभीरा करिनगदुर्विगाहा, सारा उत्कृष्टा बलवती, अभीगानामप्राप्तभयानां गणानां वृन्दानामारवो जयध्वनिर्यस्यां सा अभीगगणारवा । भियं गच्छन्तीति भीगाः ततोऽन्येऽभीगाः । तथा कारितोऽरिवधः शत्रुक्षयो यया सा कारितारिवधा । स्वार्थे णिच् । यथा रामो राज्यमकारयत् । अविद्यमान आसेधो बाधा यस्याः सा अनासेधा निरातङ्का । केचित्तु आसेधं प्रवेशमाहुः । वारणागगभीरत्वादरीणामनासेधा दुष्प्रवेशेत्यर्थः । तथा वरिताः प्रार्थिताः 'मया सह युध्यध्वम्' इत्थमरयो विपक्षा यया सा वरितारिका । वर ईप्सायाम् । प्रतिलोमानुलोमपादोऽयम् ॥४३।४४॥

**अधिनागं प्रजविनो विकसत्पिञ्छचारवः ।**
**पेतुर्बर्हिणदेशीयाः शङ्कवः प्राणहारिणः ॥ ४५ ॥**

शङ्कवः कुन्ता अधिनागं द्विपेषु पेतुरभ्रश्यन् । कीदृशाः प्राणहारिणोऽसुमुषः, प्रजविनो वेगगामिनः, यतो विकसता प्रसरता पिञ्छेन पत्त्रभारेण चारवो रम्याः, अत एव बर्हिणदेशीया मयूरकल्पाः । बर्हिणाः किलाधिनागं सर्पेषु रयेण पतन्ति, विकसत्पिञ्छचारवश्च, प्राणहारिणो नागानामेव । बर्हिणशब्दे "फलबर्हाभ्यामिनच्" ॥ ४५ ॥

**प्रवृत्ते विलसद्ध्वानं साधनेऽप्यविषादिभिः ।**
**ववृषे विकसद्दानं युधमाप्य विषाणिभिः ॥ ४६ ॥**

दन्तिभिर्युधमाप्य रणमासाद्य दानं ववृषे मदो वृष्टः । कीदृशैः साधने सैन्ये प्रवृत्तेऽपि युध्यमानेऽपि अविषादिभिरभीतैः । कथं प्रवृत्ते विलसन् विलासान्वितो ध्वानो जयारवो यत्र तद्विलसद्ध्वानं सशब्दमित्यर्थः । कीदृक् दानं विकसत् वृद्धिं[1] गच्छत् । अन्येऽपि वीराः साधने साटोपं प्रवृत्तेऽपि अविषण्णा युधमाप्य दानं बहु वितरन्ति । गोमूत्रपातसारूप्याद्गोमूत्रिकाबन्धोऽयम् ॥४६॥

**पुरः प्रयुक्तैर्युद्धं तद्वलितैर्लब्धशुद्धिभिः ।**
**आलापैरिव गान्धर्वमदीप्यत पदातिभिः ॥ ४७ ॥**

---

१ 'द्धिं' ग. पाठः ।

तद्युद्धं रणं पदातिभिः पत्तिभिरदीप्यत शुशुभे । कीदृशैः पुरोऽग्रतः प्रयुक्तैः स्थापितैर्वलितैर्भ्रान्तैर्मण्डलप्रचारिभिः, लब्धशुद्धिभिरुपधापरीक्षितैः, कातरत्वादिदोषरहितैरित्यर्थः । आलापैरिव गान्धर्वं, यथा आलापैः स्वरालप्तिभिर्गान्धर्वं गेयं शोभते, तैरपि पुरःप्रयुक्तैरादौ कृतैर्वलितैरावृत्तैः, स्वराणामावृत्त्या लब्धशुद्धिभिर्निर्दोषैरविकृतैः ॥ ४७ ॥

**केनचित् स्वामिनान्येषां मण्डलाग्रानवद्यता ।**
**प्रापे कीर्तिप्लुतमहीमण्डलाग्रानवद्यता ॥ ४७ ॥**

अन्येन सुभटेन स्वामिना निजनिस्त्रिंशेनान्येषां परेषां मण्डलाग्रान् कृपाणान् अवद्यता छिन्दता अनवद्यता प्रापे अगर्ह्यत्वं लेभे, साधुवादः प्राप्तः । कीदृशी सा कीर्त्या प्लुतं यशसा व्याप्तं महीमण्डलाग्रं भूवलयपृष्ठं यया सा कीर्तिप्लुतमहीमण्डलाग्रा ॥ ४८ ॥

**हर्तुं[1] विद्विषतस्तीक्ष्णः सममेव सुसंहतेः ।**
**परिवारात् पृथक् चक्रे खड्ग आत्मा च केनचित् ॥ ४९ ॥**

केनचिद्वीरेणारीन् निरसितुं परिवारात् कोशात् परिच्छदाच्च[2] खड्ग आत्मा च युगपदेव पृथक् चक्रे पृथक् कृतः । वृन्दान्निर्यायासिमाकृष्य कश्चित् सपत्नानक्षणीदित्यर्थः । कीदृक् खड्ग आत्मा च, तीक्ष्णः शितः पौरुषान्वितश्च । कीदृशात् परिवारात् सुसंहतेर्दुर्भेदात् । घनत्वमेकयोगक्षेमता च संहतिः ॥ ४९ ॥

**अन्येन विदधेऽरीणामतिमात्राविलासिना ।**
**उद्गूर्णेन चमूस्तूर्णं मतिमात्रा विलासिना ॥ ५० ॥**

अन्येन विलासिना युद्धविलासान्वितेन अरीणामरातीनां चमू सेना उद्गूर्णेनोद्यतेनासिना कौक्षेयकेण तूर्णं क्षिप्रमतिमात्राविला विदधे, अतिमात्रं नितरामाविला कलुषा भयाकुला अकारि । कीदृशी मात्रामल्पत्वमतिक्रान्ता अतिमात्रा सुविस्तीर्णा । यदिवा तेन मतिमात्रा मतेर्बुद्धेर्मात्रा जनन्या प्राज्ञेनेत्यर्थः ॥ ५० ॥

**सहस्रपूरणः कश्चिल्लूनमूर्धासिना द्विषः ।**
**तदोर्ध्व एव काबन्धीमभजन्नर्तनक्रियाम् ॥ ५१ ॥**

---

१ 'न्तुं' क. ग. पाठः । २ 'च्च यथाक्रमं' ख. पाठः ।

कश्चिद्भट ऊर्ध्व एव काबन्धीं नर्तनक्रियामभजत् कबन्धवन्ननर्तेत्यर्थः । यतः खड्गेन कृत्तरिपूत्तमाङ्गः, अत एव सहस्राणि पूर्यन्ते आप्यायन्ते समाश्वस्यन्तेऽनेनेति सहस्रपूरणः । यदा शत्रून् हत्वा ववल्ग तदा स्ववर्ग्या जहृषुः । कबन्धोऽपि द्विषः संबन्धिनासिना लूनमूर्धा सन्नूर्ध्व एव नृत्यति, सोऽपि सहस्रपूरणः । सहस्रे हि हते कबन्ध उत्तिष्ठतीति वार्ता ॥ ५१ ॥

**शस्त्रव्रणमयश्रीमदलंकरणभूषितः ।**
**ददृशेऽन्यो रावणवदलङ्करणभूषितः ॥ ५२ ॥**

अपरो रावण इव ददृशे बुबुधे भीषणत्वात् । कीदृशः शस्त्रव्रणमयैः श्रीमद्भिरलंकरणैर्भूषितोऽलंकृतः । रावणाद्व्यतिरेकमाह—अलङ्कायां रणभुवि उषितोऽवस्थितः । तस्य तु लङ्का समरावनिरासीत् ॥ ५२ ॥

**द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः ।**
**सिक्तश्चास्रैरुभयथा बभूवारुणविग्रहः ॥ ५३ ॥**

अन्यो भट उभयथा द्वाभ्यां प्रकाराभ्यामरुणविग्रहोऽभूत्, अनूरुनिभदेहो लोहिताङ्गश्चासीदित्यर्थः । यतो द्विषद्विशसनच्छेदेन रिपुकरवाललवनेन निरस्तमूरुयुगं यस्य, अतश्चारुणस्येव विग्रहो यस्येति अरुणविग्रहः । ऊरुच्छेदाच्चास्रैरसृग्भिः सिक्त उक्षितोऽतश्चारुणो लोहितो विग्रहो यस्य सोऽरुणविग्रहः ॥५३॥

**भीमतामपरोऽम्भोधिसमेऽधित महाहवे ।**
**दाक्षे कोपः शिवस्येव समेधितमहा हवे ॥ ५४ ॥**

अपरोऽन्यो भटस्तस्मिन्नम्भोधिसमे सागरसदृशे महाहवे बृहद्रणे भीमतामधित घोरत्वं दध्रे । क क इव, दाक्षे हवे दक्षयज्ञेऽब्धितुल्ये भगवतः शिवस्येव ईश्वरस्य यथा कोपो भीमत्वं दधौ, रौद्रो हि क्रोधोऽत्युग्रः । कीदृशः कोपोऽपरो वा समेधितं वर्धितं महस्तेजो यस्य येन वा स समेधितमहाः ॥ ५४ ॥

**दन्तैश्चिच्छिदिरे कोपात् प्रतिपक्षं गजा इव ।**
**परनिस्त्रिंशनिर्लूनकरवालाः पदातयः ॥ ५५ ॥**

पत्तयः प्रतिपक्षं क्रोधाद्दन्तैर्दशनैश्चिच्छिदिरे अच्छैत्सुः । यतः परनिस्त्रिंशनिर्लूनकरवालाः रिपुकृपाणकृत्तकौक्षेयकाः गजा इव, परखड्गच्छिन्नहस्तपुच्छा यथा करिणः कोपादरिं दन्तैर्विषाणैश्छिन्दन्ति ॥ ५५ ॥

**रणे रभसनिर्भिन्नद्विपपाटविकासिनि ।**
**न तत्र गतभीः कश्चिद्विपपाट विकासिनि ॥ ५६ ॥**

तत्र रणे समीके विकासिनि प्रसृते परां भुवं प्राप्ते न कश्चिदपि विपपाट पलायांचक्रे, यतो गतभीर्निर्भयः, विकासित्वात्तु निःसरणं प्राप्तम् । कीदृशे रभसेनौत्सुक्येन निर्भिन्नद्विपा हतकुञ्जराः पाटविकानां चतुराणामसयः खड्गा यत्र । पाटवं विद्यते येषां ते पाटविकाः । रभसेन निर्भिन्नानां द्विपानां पाटविकां पाटवमस्यति क्षिपतीति केचित् ॥ ५६ ॥

**यावन्न सत्कृतैर्भर्तुः स्नेहानृण्यं यियासुभिः ।**
**अमर्षादितरैस्तावत् तत्यजे युधि जीवितम् ॥ ५७ ॥**

सत्कृतैः पूजितैर्लब्धप्रसादैरत एव प्रभोः स्नेहस्यानृण्यमस्तेयत्वं जिगमिषुभिर्यावत् समिति जीवितं न तत्यजे प्राणा नामुच्यन्त तावदेवेतरैरसत्कृतैरमर्षात् क्रोधात् तनुस्त्यक्ता, पूर्वं ते मृता इत्यर्थः ॥ ५७ ॥

अथ कस्मात्ते जीवितं जहतीत्याह—

**अयशोभिदुरा लोके कोपधा मरणादृते ।**
**अयशोभिदुरालोके कोपधामरणादृते ॥ ५८ ॥**

एवंविधे लोके जने मरणात् प्राणत्यागादृते तद्वर्जं का अन्या अयशोभिदुरा अकीर्तिनाशिनी उपधा उपायः, मरणेनैव यशोऽस्यास्तीत्यर्थः । अयेनानुकूलेन दैवेन शोभते इत्ययशोभी, दुःखेनालोक्यत इति दुरालोकः, तेजस्वित्वात् दुर्दर्शः । ततः कर्मधारयः । सत्कृतानामेतेन मरणे युक्तत्वमुक्तम्, यदि हि पलायेरंस्तदयशो भवेत् । अन्यच्च कोपस्य धामनि स्थाने, असत्कृतो हि कुपितो भवति । रणादृते युद्धोद्यते । पूर्ववत्कर्मधारयः । कोपस्य धाम यद्रणं तत्रादृते इति वा योज्यम् । एतेनाप्यसत्कृतानां मरणे युक्तत्वमुक्तम् । यदि हि ते रणं प्राप्य सत्कृता अपि क्रुद्धा अपि जीवितं रक्षेयुस्तन्न किंचित् तैः कृतं स्यात् । अर्धद्वयसादृश्यात् समुद्गसदृशत्वेन समुद्गयमकमिदम्

**स्खलन्ती न क्वचित् तैक्ष्ण्यादभ्यग्रफलशालिनी ।**
**अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा ॥ ५९ ॥**

शाङ्गीकैः शक्तिप्रहरणैर्लोहजा अयोमयी शक्तिरायुधविशेषोऽमोचि अभ्यमित्रं क्षिप्ता, नतु शरीरजा देहोत्था सामर्थ्याख्या । कीदृशी सा लोहजा तावत् तैक्ष्ण्यात् शितत्वात् न क्वचित् स्खलन्ती अप्रतिहता, अभ्यग्रेणाग्रवर्तिना फलेन शल्येन शलत्याशु गच्छतीत्यभ्यग्रफलशालिनी । इतराप्यभ्यग्रेणादूरवर्तिना फलेन लाभेन शालिनी श्लाघमाना तैक्ष्ण्यात् तेजस्वित्वान्न क्वचित् स्खलन्ती । तुल्यार्थाः "उपकण्ठाभ्यर्णसनीडसविधनिकटासन्नाः । अभ्यग्रसमीपाभ्याशसव[1]कान्तिकसदेशाश्च" ॥ ५९ ॥

**आपदि व्यापृतनया रुषा युयुधिरे नृपाः ।**
**आप दिव्या पृतनया विस्मयं जनता तया ॥ ६० ॥**

राजानो रोषेण युयुधिरे । कीदृशाः आपदि व्यसने व्यापृतनया योजितधनुर्वेदनीतयोऽत्यक्तमर्यादा वा, अत एव तया पृतनया सेनया दिव्या जनता देवमुनिविद्याधरादिका विस्मयमाप विसिस्मिये, चित्रीयमाणा जाता । चित्रं मरणकालेऽपि समयान्न चलन्तीति ॥ ६० ॥

**स्वगुणैरा फलप्राप्तेराकृष्य गणिका इव ।**
**कामुकानिव नालीकांस्त्रिणताः सहसामुचन् ॥ ६१ ॥**

त्रिणता धनूंषि नालीकान् सायकानमुचन् चिक्षिपिरे सहसा झगिति । किं कृत्वा स्वगुणैर्निजज्याभिः आ फलप्राप्तेः फलिकां यावदाकृष्य । काः कानिव गणिकाः कामुकानिव, यथा वेश्याः स्वगुणैः रूपलावण्यमाधुर्यादिभिः आ फलप्राप्तेः आ धनलाभात् नालीकान्मुग्धकामुकान् सहसाकृष्य स्वीकृत्यानन्तरं मुञ्चन्ति त्यजन्ति । त्रिषु मध्येऽन्त्योश्च नताः कुटिलास्त्रिणताः । "पूवपदात्संज्ञायामग"-इति णत्वम् ॥ ६१ ॥

**वाजिनः शत्रुसैन्यस्य समारब्धनवाजिनः ।**
**वाजिनश्च शरा मध्यमविशन् द्रुतवाजिनः ॥ ६२ ॥**

शत्रुसैन्यस्य विपक्षानीकस्य मध्यमन्तरे वाजिनो घोटका अविशन्नविक्षन्त । कीदृशस्य समारब्धनवाजिनः प्रस्तुतापूर्वसमरस्य, तथा शराश्च बाणा अपि शत्रुसैन्यस्य मध्यमविशन् । कीदृशाः वाजाः पक्षा विद्यन्ते येषां ते वाजिनः, तथा

[1] 'वेशा' ख. पाठः ।

द्रुतं क्षिप्रं वजन्ति यान्तीति द्रुतवाजिनः, आशुगा द्वयेऽपि ॥ ६२ ॥

**पुरस्कृत्य फलं प्राप्तैः सत्पक्षाश्रयशालिभिः ।**
**कृतपुङ्खतया लेभे लक्षमप्याशु मार्गणैः ॥ ६३ ॥**

मार्गणैः शरैराशु मङ्क्षु लक्षमपि लेभे शरव्यमपि प्रापि । कुतः कृतपुङ्खतया सपुङ्खत्वेन, नहि पुङ्खहीनस्य गतिः । पुङ्ख उपरिभवो भागः । अपिः प्रतीयमानार्थान्तरत्वेन विस्मये । कीदृशैस्तैः फलं शल्यं पुरस्कृत्याग्रेकृत्य प्राप्तैरुपलक्षं गतैः, तथा सद्भिः पक्षैः शोभनैर्वाजैराश्रयणमाश्रयः तेन शलन्त्याशु गच्छन्ति ये[1] तैः सत्पक्षाश्रयशालिभिः । येऽपि मार्गणा याचकाः कृतपुङ्खाश्चतुरास्ते लक्षमप्याशु लभन्ते किं पुनरूनम् । शतसहस्रं लक्षम् । तेऽपि फलं धनं पुरस्कृत्य संधाय प्राप्ताः । तथा सन्तः पक्षा सहाया यस्य तथाविधो य आश्रयस्तेन शालिनः श्लाघमानाः । आश्रीयत इत्याश्रयोऽनुग्राहकः । यावद्धि सत्पक्षाश्रयो नास्ति तावत्कथं प्रभूतं लभ्यते ॥ ६३ ॥

**रक्तस्रुतिं जपासूनसमरागामिषुव्यधात् ।**
**कश्चित् पुरः सपत्नेषु समरागामिषु व्यधात् ॥ ६४ ॥**

कश्चिद्भटोऽग्रवर्तिषु रिपुषु रक्तस्रुतिं रुधिरधारां व्यधात् चक्रे । कुतः इषुव्यधाच्छरताडनात् । कीदृशीं जपासूनसमरागां जपाख्यकुसुमसदृशरागाम् । कीदृशेषु सपत्नेषु समरागामिषु रणागतेषु ॥ ६४ ॥

**रयेण रणकाम्यन्तौ दूरादुपगताविभौ ।**
**गतासुरन्तरा दन्ती वरण्डक इवाभवत् ॥ ६५ ॥**

इभावन्तरा द्विपयोर्मध्ये गतासुः संस्थितो दन्ती वरण्डक इवाभवत्, वरण्डकतुल्योऽभवत् । क्रीडायुद्धे हस्तिनां रोधकं काष्ठादिकूटं वरण्डकः । रोधकः समपद्यतेत्यर्थः । कीदृशाविभौ रयेण स्यदेन दूरादुपगतौ प्राप्तौ, यतो रणकाम्यन्तौ युयुत्सू । रणमिच्छन्तौ रणकाम्यन्तौ । "काम्यच्च" । इभाविति "अन्तरान्तरेण (योगे ? युक्ते)" इति द्वितीया । पृथग्विभक्तिनिर्दिष्टयोरेवान्तरायुक्तयोर्द्वितीयेति न सर्वमतम् ॥ ६५ ॥

---

१ 'यैः' क. ग. पाठः ।

**भूरिभिर्भारिभिर्भीरा भूभारैरभिरेभिरे ।**
**भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ६६ ॥**

इभा द्विपाः इभैः प्रतिद्विपैरभिरेभिरे डुडौकिरे संजग्मिरे । अभिपूर्वस्य रभेः संघा[1]तार्थत्वात् । कीदृशैः भूरिभिर्बहुभिः, भारिभिः कङ्कटपताकादिभारयुक्तैः, अत एव भूभारैर्भूमेर्भारभूतैः भेरीरेभिभिर्दुन्दुभिनिर्घोषैः । भेरीवद्रेभन्ते इति कृत्वा । अभ्राभैर्घनकालैः, अभीरुभिर्निर्भयैः । इभाः कीदृशाः भियं कम्पं रान्ति ददती[2]ति भीराः भयप्रदाः । अनुप्रासोऽलंकारः ॥ ६६ ॥

**निशितासिलतालूनैस्तथा हस्तैर्न दन्तिनः ।**
**युध्यमाना यथा दन्तैर्भग्नैरापुर्विहस्तताम् ॥ ६७ ॥**

हस्तिनो युध्यमानाः भग्नैश्चूर्णितैर्दन्तैर्यथा विहस्ततामापुर्लेभिरे, न तथा तीक्ष्णखड्गवल्लीकृत्तैर्हस्तैः करैः । हस्तैः किल कृत्तैर्मुख्यतो विहस्तत्वं युक्तं नतु दन्तैः, तर्हि निर्दन्तत्वं युक्तम् । कथं तर्ह्येवमिति चेत्, विहस्तशब्दस्य निष्प्रत्तिपत्त्यर्थत्वात् । विहस्ततां किंकर्तव्यतामूढत्वं प्रापुरित्यर्थः । दन्तप्रहरणत्वात्तेषाम् ॥ ६७ ॥

**निपीडनादिव मिथो दानतोयमनारतम् ।**
**वपुषामदयापातादिभानामभितोऽगलत् ॥ ६८ ॥**

इभानां मदाम्बु निर्भरं सर्वतोऽगलत् सुस्राव, गात्राणामदयापातात् निर्घृणपरिणामात् । उत्प्रेक्ष्यते—मिथोऽन्योन्यं निपीडनादिव, यत् किल वस्त्रादि बलवन्निपीड्यते ततोऽम्बु गलति । संयोगाक्षराणामभावादसंयोगोऽयम् । "हलोऽनन्तराः संयोगः" ॥ ६८ ॥

**रणाङ्गनं सर इव प्लावितं मदवारिभिः ।**
**गजः पृथुकराकृष्टशतपत्रमलोडयत् ॥ ६९ ॥**

द्विपः समराजिरमलोडयत् विलु[3]लीचकार । कीदृशं दानाम्बुभिः प्लावितं पूर्णम्, तथा पृथुकरेणाकृष्टानि शतं पत्राणि धोरणानि यत्र । किमिव सर इव, यथा गजस्तोयप्लावितं स्थूलहस्ताकृष्टशतपत्रं सरो विलोडयति । शतपत्रं पद्मम् ॥ ६९ ॥

---

१ 'गार्थ' ख. पाठः । २ 'न्ती' क. ग. पाठः । ३ 'क' ख. पाठः ।

**शरक्षते गजे भृङ्गैः सुविषादिनिषादिनि ।**
**रुतव्याजेन रुदितं तत्रासीदतिसीदति ॥ ७० ॥**

तत्र रणे सायकाहते हस्तिनि सति अलिभिर्गुञ्जितव्याजेन रुदितमासीत् अरोदि । सुष्ठु विषादी खिन्नो निषादी यन्ता यत्र तस्मिन् सुविषादिनिषादिनि । यदि वा विषादी चासौ निषादी सह तेन वर्तते तस्मिन् । यतोऽतिसीदति शरक्षतत्वात् प्राप्तावसादेऽतो ज्ञायते आश्रयाभावात् भृङ्गा रोदन्तीति ॥ ७० ॥

**अन्तकस्य पृथौ तत्र शयनीय इवाहवे ।**
**दशनव्यसनादीयुर्मत्कुणत्वं मतङ्गजाः ॥ ७१ ॥**

तत्राहवे संगरे मतङ्गजा दशनव्यसनाद्विषाणविनाशात् मत्कुणत्वमीयुर्जग्मुः । निर्दन्तो दन्ती मत्कुणः । दशनव्यसनग्रहणं तु मत्कुणस्य रूपनिरूपणार्थं श्लेषार्थं च । कीदृशे आहवे पृथौ विस्तीर्णे, तथान्तकस्य शयनीय इव भीषणत्वान्मृत्युतल्पतुल्ये । अथच मत्कुणत्वं क्षुद्रजन्तुविशेषरूपत्वं प्रापुरित्युक्तम् । शयनीये किल दशनव्यसनादसृक्पानगर्धान्मत्कुणा आयान्ति ॥ ७१ ॥

**अभीकमतिकेनेद्धे भीतानन्दस्य नाशने ।**
**कनत्सकामसेनाके मन्दकामकमस्यति ॥ अर्धभ्रमः*॥७२॥**
**दधतोऽपि रणे भीममभीक्ष्णं भावमासुरम् ।**
**हताः परैरभिमुखाः सुरभूयमुपाययुः ॥ ७३ ॥**

तत्र रणे परैः संमुखा हताः सुरभूयमुपाययुर्देवत्वं प्रापुः । कीदृशाः भीमं घोरं भावं रौद्ररूपमासुरमप्यभीक्ष्णं दधतः । अपिर्विरोधे । ये किलासुरं भावमसुरत्वं बिभ्रति ते कथं देवत्वं प्रापुः । कीदृशे रणे अभीकमतिकेन निर्भयचित्तेन भटलोकेनेद्धे दीप्ते भासिते, तथा भीतानामानन्दस्य प्रहर्षस्य नाशने क्षपके । रणं दृष्ट्वा कातरा मुह्यन्ति । कनन्ती देदीप्यमाना कान्तियुक्ता सकामा

* अर्धभ्रमः

| अ | भी | क | म | ति | के | ने | द्धे |
|---|---|---|---|---|---|---|---|
| भी | ता | न | न्द | स्य | ना | श | ने |
| क | न | त्स | का | म | से | ना | के |
| म | न्द | का | म | क | म | स्य | ति |

सप्रद्युम्ना संपन्नमनोरथा वा सेना चमूर्यत्र तस्मिन् कनत्सकामसेनाके । मन्दः स्वल्पः काम इच्छाभिलाषो यस्य तं मन्दकामकं हीनचित्तमसात्त्विकमस्यति क्षिपमाणे । अर्धभ्रमणादर्धभ्रमोऽयं नतु सर्वतोभद्रः स हि सर्वतो भ्राम्यति ॥ ७२ ॥ ७३ ॥

**येनाङ्गमूहे व्रणवत् सरुचा परतोमरैः ।**
**समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः ॥ ४७ ॥**

येन वीरेण सरुचा कान्तिमता परतोमरैः शत्रुशरैर्व्रणवत् क्षतिमदङ्गमूहे धृतं, सोऽमरैर्देवैः समत्वं साम्यं ययौ प्राप, अतिपौरुषात्कान्तिमत्त्वाच्च देवनिभ एवासावित्यर्थः । खड्गत्सरावसिमुष्टौ तथा चापे धनुषि रतः सक्तो बहुप्रहरण इत्यर्थः ॥ ७४ ॥

**निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।**
**पाणिनीयमिवालोचि धीरैस्तत् समराजिरम् ॥ ७५ ॥**

तद्रणाङ्गनं धीरैः सुभटैरेवालोचि द्रष्टुं शकितं नतु कातरैः, यतो निपातिता हताः सुहृदः स्वामिनः पितृव्या भ्रातरो मातुलाश्च यत्र तत्तथोक्तम् । उपलक्षणं चैतत् पितृपितामहजामात्रादीनामपि निपातितत्वात्, अतश्च रौद्ररणदर्शनं धीराणामेवोपपद्यते । किमिवालोचि पाणिनीयमिवाष्टकमिव । व्याकरणं हि धीरा एवालोचयन्ति नतु सुकुमारमतयः । तत्रापि सुहृदादयो निपातिताः साधुत्वाभ्युपगमाय स्वरूपेणोच्चारिताः । तद्यथा "सुहृद्दुर्हृदौ मित्रामित्रयोः" । "स्वामिन्नैश्वर्ये" । "पितृव्यमातुलमातामहपितामहाः" । "नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृभ्रातृजामातृपितृदुहितृ" । पाणिनिनोक्तं पाणिनीयम् ॥ ७५ ॥

**अभावि सिन्ध्वा संध्याभ्रसदृग्रुधिरतोयया ।**
**हृते योद्धुं जनः पांसौ स दृग्रुधि रतो यया ॥ ७६ ॥**

सिन्ध्वा नद्या अभावि उदपादि । (कया? कीदृश्या) संध्याभ्रस[1]दृग्रुधिरतोयया रुधिरनद्येत्यर्थः । तथा[2] यया सिन्ध्वा दृग्रुधि दृष्टिरोधके पांसौ रेणौ

---

१ 'सदृक् संधिका[3]लघनसदृक्षं रुधिरं रक्तं तोयं यस्यास्तया संध्याभ्रसदृग्रुधिरतोयया' क. ग. पाठः । २ तया कया, ख. पाठः । ३ 'वेला' ग. पाठः ।

हते सति स जनो भटलोको भूयो योद्धुं प्रहर्तुं रतः प्रवृत्तः । दृशौ रुणद्धीति दृग्रुत् ॥ ७६ ॥

**विद्लत्पुष्कराकीर्णाः पतच्छङ्खसमाकुलाः ।**
**तरत्पत्ररथा नद्यः प्रासर्पन् रक्तवारिजाः ॥ ७७ ॥**

अ[1]सृक्तोयोद्भवा नद्यः प्रासर्पन् प्रसस्रुरूहुः । कीदृश्यः विदलद्भिर्विशीर्णैः पुष्करैः कराग्रैराकीर्णा व्याप्ताः, पतद्भिर्भ्रश्यद्भिः शङ्खैर्गजालङ्कारैः समाकुलाः, तथा तरन्ति प्लवमानानि पत्राणि यानानि रथाश्च यासु, प्रसर्पन्ति च ॥ ७७ ॥

**असृज्जनोऽक्षतिमानवमज्जवसादनम् ।**
**रक्षःपिशाचं मुमुदे नवमज्जवसादनम् ॥ ७८ ॥**

अक्षतिमान् शस्त्रव्रणितो जनोऽसृगवमत् कीलालमसुस्रुवत् । अत एव रक्षःपिशाचं मुमुदे । रक्षांसि पिशाचाश्च ननन्दुः । कीदृगसृक् जवसादनं रयरोधकं पिच्छिलत्वात् । कीदृग्रक्षःपिशाचं नवः प्रत्यग्रो मज्जा वसा तददनं भोजनं यस्य तत् नवमज्जवसादनम् । रक्षःपिशाचमिति समाहारे द्वन्द्वः ॥ ७८ ॥

**चित्रं चापैरपेतज्यैः स्फुरद्रक्तशतहृदम् ।**
**पयोदजालमिव तद्वैराशंसनमाबभौ ॥ ७९ ॥**

तद्वैराशंसनं रणमाबभौ रेजे । कीदृशम् अपेतज्यैश्छिन्नगुणैश्चापैः कोदण्डैश्चित्रं निर्भरम् । तथा स्फुरन्तो रक्तशतह्रदा रक्तकुल्या यत्र । यदि वा स्फुरद्रक्ताः शतं ह्रदा यत्र । किमिवाबभौ पयोदजालमिव घनपटलं यथा, तदप्यपेतज्यैः स्वभावनिर्गुणैश्चापैः शक्रधनुर्भिश्चित्रम् । तथा स्फुरन्त्यो रक्ताभाः शतह्रदास्तडितो यत्र । यदि वा स्फुरन्त्यो रक्ता लोहित्यः शतह्रदा यत्र ॥ ७९ ॥

**बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके ।**
**अशोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके ॥ ८० ॥**

इहात्र सैन्येऽनीके बन्धौ विपन्ने मृते सति अनेकेन नरेण बहुभिर्नृभिस्तस्यान्तिके समीपेऽशोचि रुदितम् । तथा घण्टाभिर्न रेणे न क्वणितं, यतस्तस्मिन् हतदन्तिके मारितगजे ॥ ८० ॥

---

[1] 'रक्तवारिणो जाता रक्तवारि असृ' ग. पाठः ।

कृत्तैः कीर्णा मही रेजे दन्तैर्गात्रैश्च दन्तिनाम् ।
क्षुण्णलोकासुभिर्मृत्योर्मुसलोलूखलैरिव ॥ ८१ ॥

करिणां रदनैर्गात्रैश्च छिन्नैराकुला मही रेजे । उत्प्रेक्ष्यते–मृत्योर्मुसलोलूखलैरिव । कीदृशैः क्षुण्णाः पिष्टा लोकासवः प्राणिप्राणा यैर्येषु वा । "राजदन्तादिष्वि" ति परनिपातस्यानित्यत्वात् मुसलोलूखलैरिति प्रयोगः । यदि वा मुसलसहितान्युलूखलानीति शाकपार्थिवादित्वात्समासः ॥ ८१ ॥

युधमित्थं विधूतान्यमानवानभियो गतः ।
चैद्यः परान्पराजिग्ये मानवानभियोगतः ॥ ८२ ॥

स चैद्यः चेदिराजः इत्थं परानभिमातीन् पराजिग्ये व्यजेष्ट । कथम् अभियोगतोऽभियोगादुद्यमात् । कीदृशोऽसौ युधं गतो रणं प्राप्तः, मानवान् दर्पयुक्तः । कीदृशान् परान् विधूताः कम्पिता अन्ये मानवाः पुरुषा यैस्तान्, अभियो निर्भयान् । पराजिग्ये इति "विपराभ्यां जे" रिति तङ् । "संल्लिटो"रिति कुत्वम् ॥ ८२ ॥

अथ वक्षोमणिच्छायाच्छुरितापीतवाससा ।
स्फुरितेन्द्रधनुर्भिन्नतडितेव तडित्वता ॥ ८३ ॥
नीलेनानालनलिननिलीनोल्ललनालिना ।
ललनाललनेनालंलीलालानेन लालिना ॥ ८४ ॥
अपूर्वयेव तत्कालसमागमसकामया ।
दृष्टेन राजन्वपुषा कटाक्षैर्विजयश्रिया ॥ ८५ ॥
विभावी विभवी भाभो विभाभावी विवो विभीः ।
भवाभिभावी भावावो भवाभावो भुवो विभुः ॥ ८६ ॥
उपैतुकामैस्तत्पारं निश्चितैर्योगिभिः परैः ।
देहन्यासकृतोद्योगैरदृश्यत परः पुमान् ॥ ८७ ॥

अथानन्तरं परः पुमान् परमपुरुषो भगवान् वासुदेवः परैर्विपक्षैरदृश्यतालुलोके । कीदृशो वपुषा देहेन राजन् भासमानः । कीदृशेन वक्षोमणेः कौस्तुभस्य च्छायया कान्त्याच्छुरिते संभिन्ने आपीते पिङ्गे वाससी अंशुके यस्य तेन,

अतश्च स्फुरता इन्द्रधनुषा भिन्ना तडित् यस्य तेन तादृशेन तडित्वतेव मेघेनेव, लसमानवासवचापविशेषितविद्युत्कजलदतुल्येनेत्यर्थः ।—तथा नीलेन श्यामेन, आनालादामृणालात् नलिने लीलापद्मे निलीनाः श्लिष्टा उल्ललनाश्चटुला उ[१]ल्लासिनो वा अलयो भ्रमरा यस्य तेन आनालनलिननिलीनोल्ललनालिना । केचित्तु अविद्यमाननालं यन्नलिनं नाभीपुण्डरीकमित्याहुः । ललनानां सीमन्तिनीनां ललनेन क्रीडनेनाभीप्सितेन अलमत्यर्थं लीलानां विलासानामालानेन बन्धनस्तम्भनिभेन, सर्वा लीलास्तत्र स्थिता इत्यर्थः । लालिना साध्ववश्यं ललति परश्रियमाप्तुमिच्छति इति लाली तेन लालिना ।—तथा विजयश्रिया जयलक्ष्म्या कटाक्षैरपाङ्गेक्षितैर्दृष्टेनालोकितेन, यतस्तत्कालं यः समागमस्तत्र सकामा साभिलाषा । चैद्यं हि सा त्यक्त्वा भगवन्तं जिघृक्षते । उत्प्रेक्ष्यते—अपूर्वयेवाभिनवयेव । या किल नवोढा समागमोत्सुका सा कान्तं कटाक्षैरीक्षते भगवतस्तु जयलक्ष्मीरजस्रं संनिहिता ।—अन्यच्च कीदृशो भगवान् विभवतीति विभावी विभुः सर्वव्यापी, विभव ऐश्वर्यं विद्यते यस्य स विभवी, भाभः कान्त्या ऋक्षनिभः, यतो विभां दीप्तिं भावयति प्रापयतीति विभाभावी, विना गरुडेन वातीति विवः । विभीर्निर्भयः । भवं संसारं भक्तानामभिभवति क्षपयतीति भवाभिभावी मोक्षदः । भावान् पदार्थानवतीति भावावो जगत्पालकः । भगवतो भवस्य महादेवभट्टारकस्येव अभवोऽनुत्पत्तिरजत्वं यस्य स भवाभावः । भुवो भूमेर्विभुः स्वामी उद्धरणात्, एवंविधोऽपि भगवान् परैरदृश्यत । कीदृशैः तस्य देवस्य पारमन्तमुपैतुकामैः प्रेप्सुभिः, तं जिगीषुभिरित्यर्थः । निश्चितैर्युद्धाय कृतनिश्चयैः, योगिभिः संनद्धैः । "योगः संनहनोपायध्यानसंगतियुक्तिषु" । देहन्यासे शरीरत्यागे कृतोद्योगैर्विहितयत्नैः, मरणमप्यङ्गीकृत्य तज्जिगीषया युयुत्सुभिरित्यर्थः । योऽपि परः सर्वोत्कृष्टः पुरुष आत्माख्यः स परैरुत्कृष्टैर्योगिभिः समाधिवद्भिर्जैगीषव्यप्रभृतिभिरेव दृश्यते । कीदृशैः तस्य भगवतः पारमवसानं प्राप्तुकामैस्तत्सायुज्यं यियासुभिरित्यर्थः । निश्चितैर्निःसंदेहैः विदितवेद्यत्वात् । पञ्चभिः कुलकम् ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥

**ते श्रिया घनयानस्तरुचा सारतया तया ।**
**यातया तरसा चारुस्तनयानघयाश्रितम् ॥ ८८ ॥**

---

१ 'विला' ख. पाठः ।

**विद्विषोऽद्विषुरुद्वीक्ष्य तथाप्यासन्निरेनसः ।**
**अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥ ८९ ॥**

तं देवं श्रियाश्रितं दृष्ट्वा विद्विषो द्विषन्तोऽद्विषुर्निनिन्दुः, तथापि एवमपि ते निरेनसो देवदर्शनान्निष्पापा आसन्नभूवन् । यस्माद्भेषजमौषधं पाचनादिकमरुच्यमपि अप्रियमपि प्रकृत्यैव व्याधिहरम् । नहि कटुकौषधविमुखस्य भैषज्यं रोगं हन्ति, अतो यद्यपि ते देवाया[1]भ्यसूयन्ते तथापि पुण्यदर्शनत्वाद्भगवांस्तेषामपि पापमपास्यति । कीदृशं तं श्रिया पद्मया तरसा बलादाश्रितमाश्लिष्टम् । कीदृश्या घनया अतनीयस्या, अनस्तरुचा अत्यक्तकान्त्या, तथा तया सर्वप्रसिद्धया सारतया भगवदुत्कर्षेण यातया देवसमीपं प्राप्तया, चारुस्तनया रम्यपयोधरया । "स्वाङ्गाच्चोपसर्जनादि" ति ङीष् विकल्पितः । अनघया निष्पापया । प्रतिलोमानुलोमार्धोऽयम् । विद्विषन्तीति विद्विषः क्विप् । अद्विषुरिति "द्विषश्चे" ति झेर्जुस् । रोगं हन्तीति रोगघ्नम् । "अमनुष्यकर्तृके चे" ति टच् ॥ ८८ ॥ ८९ ॥

**विदिते दिवि केऽनीके तं यातं निजिताजिनि ।**
**विगदं गवि रोद्धारो योद्धा यो नतिमेति न ॥ ९० ॥**

तं देवं यातमुपर्यागतं के गवि रोद्धारः, न केचिदपि रिपुषु सन्ति ये तमभ्यागतं निवारयन्तीत्यर्थः । कीदृशं तं यो भगवान् दिवि अनीके दिव्यसेनायां योद्धा युध्यते नतु नतिमेति, अतश्च यो दे[2]वसेनास्वप्यभीतः स कथं युध्यमानो भूमिष्ठैर्निवार्यते । कीदृशेऽनीके विदिते सर्वप्रसिद्धे, यतो निजिताजिनि पराभूतान्यसैन्ये । कीदृशं तं विगदं युध्यमानमपि निष्पीडम्, [3]विविधा वा गदा यस्य विशिष्टा वा गदा कौमोदकी यस्य तं विगदम् । प्रातिलोम्येनापि पठ्यमानस्यास्यैष एवार्थः ॥ ९० ॥

**नियोद्यमाणेन पुनः कर्मण्यतिगरीयसि ।**
**आरोप्यमाणोरुगुणं भर्त्रा कार्मुकमानमत् ॥ ९१ ॥**

कार्मुकं धनुरानमत् कुटिलमभूत्, यतो भर्त्रा प्रभुणा देवेन आरोप्यमाण उत्क्षिप्यमाण उरुर्दीर्घो गुणो ज्या यस्य, यतोऽतिदुष्करे कर्मणि शत्रुवधाख्ये

---

१ 'यासू' ख. पाठः । २ 'दिव्य' ख. पाठः । ३ 'यदिवा वि' ख. पाठः ।

भूयोऽपि नियोक्ष्यमाणेन व्यापारयिष्यता । यः किलातिगुरौ व्यापारे भर्त्रा नियोक्तुमिष्यते तस्यासौ गुणानारोपयते, स चाधिकार्युक्तवचनवशीकृतहृदयो नमति ॥ ९१ ॥

**तत्र बाणाः सुपरुषः समधीयन्त चारवः ।**
**द्विषामभूत् सुपरुषस्तस्याकृष्टस्य चारवः ॥ ९२ ॥**

तत्र कार्मुके सुपरुषश्चारुपर्वाणो बाणाः समधीयन्त अयोज्यन्त संहिताः । चारवो रम्याः । तस्य च धनुष आकृष्टस्यारवः क्रेंकारो द्विषां सुष्ठु नितरां परुषः कर्णकटुकोऽभूत्, तत्कार्मुकध्वनिररीनभीषयदित्यर्थः ॥ ९२ ॥

**पश्चात्कृतानामप्यस्य नराणामिव पत्रिणाम् ।**
**यो यो गुणेन संयुक्तः स स कर्णान्तमागमत् ॥ ९३ ॥**

पत्रिणां शराणां पश्चात्कृतानामपि पृष्ठस्थानामपि यो यो गुणेन शिञ्जिन्या संयुक्तो योगं गतः सोऽस्य भगवतः कर्णान्तमुपश्रोत्रमागमत् प्राप्तः, आकर्षवशादिति भावः । नराणामिव, यथा पश्चात्कृतानां तिरस्कृतानामपि मध्याद्यो यो गुणेन शौर्यादिना युक्तः स कर्णान्तमागच्छति ढौकं लभते ॥ ९३ ॥

**प्रापे रूपी पुरारेपाः परिपूरी परः परैः ।**
**रोपैरपारैरुपरि पुपूरेऽपि पुरः परैः ॥ ९४ ॥**

स भगवान् परैर्विपक्षैः प्रापे आसेदे । कीदृशः पुरा पूर्वं रूपी वराहनरसिंहवामनादिबहुरूपः[1] । अरेपाः अपापोऽव्यसनी । परिपूरी सर्वव्यापी, पर उत्कृष्टः । किंच परैरन्यैरिरिभिः पुरोऽग्रे उपरि पृष्ठे अपारैरसंख्यै रोपैः पृषत्कैः पुपूरे प्रोच्छ्रूयत (?) । कैश्चित्प्राप्तः कैश्चिच्च च्छादित इत्यपिशब्दार्थः ॥९४॥

**दिङ्मुखव्यापिनस्तीक्ष्णान् ह्रादिनो मर्मभेदिनः ।**
**चिक्षेपैकक्षणेनैव सायकानहितांश्च सः ॥ ९५ ॥**

स भगवानेकक्षणेनैव युगपदेव शरानरींश्च चिक्षेप ऐलिलत् । कीदृशान् इषून् आशावदनप्रसृतान् निशितान् सपक्षध्वनीन् अरुन्तुदांश्च । द्विषोऽपि सर्वा आशा व्याप्य स्थितान्, तीक्ष्णानभिसरान् ह्रादिनः सकलकलान् मर्मभेदिनः परुषवा[2]दित्वात् ॥ ९५ ॥

---

१ 'भिः रूपैर्व' ख. पाठः । २ 'भाषि' ख. पाठः ।

**शरवर्षी महानादः स्फुरत्कार्मुककेतनः ।**
**नीलच्छविरसौ रेजे केशवश्छलनीरदः ॥ ९६ ॥**

असौ केशवः शौरिः छलनीरदोऽभ्रं रेजेऽदिद्युतत् । शरवर्षी इषुक्षेपी महानादः सिंहध्वनिमान्, स्फुरन्ती द्योतमाने कार्मुककेतने चापचिह्ने यस्य स स्फुरत्कार्मुककेतनः । नीलच्छविः श्यामकान्तिः । जलदोऽपि शरं तोयं वर्षति, महागर्जितः स्फुरत्कार्मुकमिन्द्रधनुरेव केतनं ध्वजो यस्य कृष्णवर्णश्च । उत्प्रेक्षाश्लेषसंकरोऽलंकारः । अत्र तुर्यपादाक्षराणि पादत्रितय एवान्तर्भवन्तीति गूढचतुर्थोऽयम् ॥ ९६ ॥

**न केवलं जनैस्तस्य लघुसंधायिनो धनुः ।**
**मण्डलीकृतमैकान्ताद्बलमैक्षि द्विषामपि ॥ ९७ ॥**

तस्य देवस्य लघुसंधायिनः कृतहस्तस्य जनैर्न केवलं धनुरेव मण्डलीकृतमाकर्षवशात् चक्रीकृतमैक्षि, शत्रुसैन्यमपि भयात् पुञ्जीभूतमेवास्तेत्यर्थः । लघु शीघ्रं संदधातीति लघुसंधायी तस्य ॥ ९७ ॥

**लोकालोकी कलोऽकल्ककलिलोऽलिकुलालकः ।**
**कालोऽकलोऽकलिः काले कोलकेलिकिलः किल ॥ ९८ ॥**
**अक्षितारासु विव्याध द्विषतः स तनुत्रिणः ।**
**दानेषु स्थूललक्षत्वं नहि तस्य शरासने ॥९९॥ (युगलकम्)**

स भगवानच्युतस्तनुत्रिणः कवचयुक्तानरीन् अक्षितारासु नेत्रकनीनिकासु विव्याधाभैत्सीत् । ननु देवं स्थूललक्षमित्याहुस्तत्कथमेवमित्याह—तस्य देवस्य दानेषु स्पर्शनविषयेषु स्थूललक्षत्वमौदार्यं न पुनः शरासने इषुक्षेपे चापे वा । स्थूललक्षत्वं महत् शरव्यभेत्तृत्वम् । धनुषा ह्यसौ सूक्ष्ममपि लक्षं विध्यत्येव । कीदृशोऽसौ लोकालोकी निखिलभुवनदर्शी ज्ञाननयनत्वात् । कलो मधुरभाषी । कल्कन दम्भेन कलिलो गहनः कल्ककलिलः, न कल्ककलिलोऽकल्ककलिलः । कलाविति पाठे, कलौ युद्धे कल्केन मायया कलिलो गहनो दुर्निरीक्ष इति व्याख्येयम् । अलिकुलालको भृङ्गश्रेणिश्यामकेशः । कालः कृष्णः प्राणिक्षयकरो वा । यदुक्तम् "कालोऽस्मि लोकक्षयकृ" दित्यादि । अकलो निष्कलः । अकलिर्निर्वैरः, काले पूर्वसमये कोलकेलिकिलः कोलः सूकरस्तस्य केलिः क्रीडा

तया किलति क्रीडति । किलेत्यागमे ॥ ९८ ॥ ९९ ॥

**वररोऽविवरो वैरिविवारी वारिरारवः ।**
**विववार वरो वैरं वीरो रविरिवौर्वरः ॥ १०० ॥**

स देवो वैरमनुशयं विववार व्याचख्यौ, रिपून् जघानेत्यर्थः। कीदृशो वर-मभीष्टं राति ददातीति वररः । अविद्यमानं विवरं छिद्रमस्येत्यविवरो निर्दोषः। वैरिणोऽरीन् विशेषेण वृणीते युद्धार्थं प्रार्थयते इति वैरिविवारी । वारिरस्या-ब्दस्येवारवः सिंहनादो यस्य स वारिरारवः । वरः श्रेष्ठः । वीर एकपुरुषः, यद्विवा धर्मवीरो युद्धवीरः । तथा तेजस्वित्वात् उत्प्रेक्ष्यते–और्वरो भौमो रवि-रिव सूर्यो यथा ॥ १०० ॥

**मुक्तानेकशरं प्राणानहरद्भूयसां द्विषाम् ।**
**तदीयं धनुरन्यस्य न विषेहे सजीवताम् ॥ १०१ ॥**

तदीयं धनुर्भगवच्छार्ङ्गं क्षिप्तासंख्येषुत्वात् बहूनां भ्रातृव्याणां प्राणानहरत् असूनादत्, यस्मात् तदन्यस्य सजीवतां सस्फुरत्वं न चक्षाम, मयि स्थिते क-थमेते वराका जीवन्तीति । अथच सजीवतां समौर्वीकत्वं न सेहेऽन्यस्य धनु-ष इति भङ्गिभणितिः । मयि ध्रियमाणे कथमन्यधनुषां जीवा बध्यन्ते इति ॥ १०१ ॥

**राजराजी रुरोजाजेरजिरेऽजोऽजरोऽरजाः ।**
**रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः ॥ १०२ ॥**

स भगवान् आजेरजिरे संगराङ्गने राजराजीर्नृपपङ्क्तीः रुरोज अभाङ्क्षीत्, अत एव रराज शुशुभे । कीदृशः अजः सनातनः । अजरोऽक्षयः । अरजा नि-र्गुणः आत्मरूपत्वात् । रजोग्रहणं गुणत्रयोपलक्षणम् । राति ददातीति राः दा-ता, ईजानां कुत्सितानामरीणां द्विषां जूरो हिंसा ततो जाता उत्पन्ना ईजारि-जूरजा यासावूर्जा तामर्जयतीति ईजारिजूरजोर्जार्जी । राश्चासावीजारिजूरजो-र्जार्जी चेति कर्मधारयः । ये तु "रेजृ दीप्ता"विति धातुषु पठन्ति तेषामेवंविधं व्याख्येयम् । रेजन्तीति रेजाः, रेजांस्तेजस्विनोऽरीन् जूर्यते हिनस्तीति रेजारि-जूर्दीप्तारिघाती । तथा अजान्महेश्वरादूर्जं बलमर्जितवानित्यजोर्जार्जी शिवादाप्त-बलः । तथा च भगवान्पाराशर्यः–"मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु । अ-

प्रमेयबलात्मा त्वं नारायण भविष्यसि ॥ अपि चेत्समरं गत्वा भविष्यसि ममाधिकः ,,इति । ऋजुरकपटः । अजर्जरोऽक्षीणः, माययाप्ययुध्यमानो निर्बाध इत्यर्थः ॥ १०२ ॥

**उद्वृत्तान् द्विषतस्तस्य निघ्नतो द्वितयं पपुः ।**
**पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः ॥ १०३ ॥**

तस्य देवस्योद्वृत्तान् दुर्वृत्तान् द्विषतो निघ्नतः सायका द्वितयं पपुः । तत्र पपुरिति पिबतेः पातेश्च तुल्यं रूपम् । अतश्च न ज्ञायते किं शरैः पीतं किंच पालितमिति विषयविभागार्थमाह—पानार्थे पिबतौ धातौ शरा रुधिरं क्षतजं पपुः पीतवन्तः, रक्षार्थे धातौ भुवनं पपुः ररक्षुः, शत्रून्निघ्नन् जगदपासीदित्यर्थः । उद्वृत्तवधेन हि भुवनं रक्षितं भवति । यद्यपि च शरा रुधिरं भुवनं च पपुरित्येतावतैव विवक्षितोऽर्थः प्रतीयते तथापि वैचित्र्यार्थमेवमुक्तम् । विचित्रा हि कवीनामुक्तयः ॥ १०३ ॥

**क्रूरारिकारी कोरेकः कारकः कारिकाकरः ।**
**कोरकाकारकरकः करीरः कर्करार्करुक् ॥ १०४ ॥**
**विधातुमवतीर्णोऽपि लघिमानमसौ भुवः ।**
**अनेकमरिसंघातमकरोद् भूमिवर्धनम् ॥ १०५ ॥**

असौ देवोऽनेकं रिपुनिवहं भूमिवर्धनं मृतमकरोत्, बहूनरीनमीमरदित्यर्थः । कीदृशोऽसौ भुवो लघिमानं विधातुं भारमपासितुमवतीर्णोऽपि स्वर्गात् गामागतोऽपि । अपिर्विरोधे । यः किलारिवधेन भूमेर्लाघवं कर्तुमागतः स कथमरिसंघं भूमौ वृद्धिं गतं कुर्यात्, तद्वृद्ध्या हि भुवो नितरां भारो भवेत् । अविरोधस्तु वर्धनशब्दस्योपसंपन्नार्थत्वात् ॥—अन्यच्च कीदृशोऽसौ क्रूरानरीन् किरति कृणाति च क्रूरारिकारी चण्डारातिनाशनः । कोरुर्व्याः एकः कारकः कर्ता पालकः । कारिकाणां क्रियाणां जगत्सर्गस्थितिसंहारव्यापाराणामाकरः स्थानम् । कारिकाशब्दे "धात्वर्थनिर्देशे ण्वुल् वक्तव्यः" इति ण्वुल् । कोरकाकारौ मुकुलनिभौ करौ पाणी यस्य स कोरकाकारकरकः कलिकानिभहस्तः । कः समासान्तः । करिण ईरयतीति करीरो द्विपक्षेपकः । कर्करोऽतिकठोरो योऽर्कस्तस्येव रुग्दीप्तिर्यस्य स कर्करार्करुक् चण्डचण्डांशुचण्डः ॥ १०४ ॥ १०५ ॥

**दारी दरदरिद्रोऽरिदारूदारोऽद्रिदूरदः ।**
**दूरादरौद्रोऽददरद्रोदोरुद् दारुरादरी ॥ १०६ ॥**

स भगवान् दूरादेवारिदारु शत्रुकाष्ठमददरत् व्यदारयत् बिभेद, भेत्तव्यत्वादरीणां दारुत्वम् । कीदृशोऽसौ दृणाति दुष्टानिति दारी । यद्विवा बहवो दारा विद्यन्ते यस्य स दारी । दरेण त्रासेन दरिद्रो रहितो निर्भयः । उदारो मुक्तकरः । अद्रिवत् दुःखेन दृश्यते विलिख्यते इत्यद्रिदूरदः शैलकाठिनः । अरौद्रः स्वभावसौम्यः । रोदसी द्यावापृथिव्यौ रुणद्धि व्याप्नोतीति रोदोरुत् सर्वव्यापी । ददाति तच्छील इति दारुः सर्वप्रदः । आदरी साधुष्वादरवान् । अददरदिति दारयतेर्लुङ् चङ् ॥ १०६ ॥

**एकेषुणा संघतिथान् द्विषो भिन्दन् द्रुमानिव ।**
**स जन्मान्तररामस्य चक्रे सदृशमात्मनः ॥ १०७ ॥**

स देवस्तरूनिव अक्लेशेनैकेषुणैव संघतिथान् बहूनरीन् भिन्दन् दारयन् आत्मन एव सदृशं चक्रे । कस्यात्मनः जन्मान्तरे रामाभिधानस्य । नारायणांशेन दाशरथिना किल पूर्वमेकेनैव शरेण सप्त ताला भिन्नाः । संघस्य पूरणं संघतिथः "बहुपूगे" ति थुक् ॥ १०७ ॥

**शूरः शौरिरशिशिरैराशाशैराशु राशिशः ।**
**शरारुः श्रीशरीरेशः शुशूरेऽरिशिरः शरैः ॥ १०८ ॥**

शौरिर्भगवान् शरैः पृषत्कैः आशु शीघ्रम् अरिशिरः शत्रुमस्तकं शुशूरे जघान चकर्त । "शूरी हिंसास्तम्भनयोः" । कथं राशिं राशिं राशिशो बहुशः । कीदृशः शूरः पौरुषान्वितः । शरारुर्दुष्टनाशकः । "शृवन्दोरारुः" । श्रीशरीरस्य लक्ष्मीवपुष ईशः प्रभुः । कीदृशैः शरैः अशिशिरैरुपतापिभिः, वान्तास्राग्नित्वाद्वा तप्तैः । आशाशैर्दिग्व्यापिभिः, आशा अश्नुवते इति कृत्वा । क्वचित्तु शरारुश्रीशरैरीश इति पाठः । "ईश ऐश्वर्ये" भगवान् । शरैस्तु शरारुश्रीशरैः शरारूणां हिंसकानां श्रियं समृद्धिं शृणन्ति ये तैः शरारुश्रीशरैर्दुर्जनलक्ष्मीक्षेपकैः । शृणन्तीति शराः, पचाद्यच् । शरारुश्रियः शरा इति षष्ठीसमासः । द्व्यक्षरः । एवं दश द्व्यक्षराः सर्वे ॥ १०८ ॥

**व्यक्तासीदरितारीणां यत्तदीयास्तदा मुहुः ।**
**मनोहृतोऽपि हृदये लेगुरेषां न पत्रिणः ॥ १०९ ॥**

अरीणां भगवद्द्विषां तदा तस्मिन् कालेऽरिता शत्रुता व्यक्ता प्रकटासीद्-भूत्, आदौ तु न तथा । कुत इत्याह–यत् तदीयाः पत्रिणो माधवेषवो मनोहृतोऽपि रम्या अपि हृदये न लेगुर्न लगिताः । शत्रोः किल मनोहार्यपि हृदये न लगति चित्तं नावर्जयति ते च शरा मनोहारिणः, तेषां मनांसि हरन्ति प्राणान् मुष्णन्तीति कृत्वा, हृदये च न लेगुर्वक्षो भित्त्वा निर्गतत्वात् ॥ १०६ ॥

**नामाक्षराणां मलना मा भूद्भर्तुरिति स्फुटम् ।**
**अगृह्णन्त पराङ्गानामसूनस्रं न मार्गणाः ॥ ११० ॥**

भगवच्छराः पराङ्गानामरिकायेभ्यः स्फुटं निश्चितमतोऽस्मात्कारणात् असून् प्राणानगृह्णन्त आददिरे, नत्वस्रं रुधिरम् । कुत इत्याह–भर्तुः प्रभोर्नामाक्षराणां संज्ञावर्णानां मलना उत्पुंसना मा भूदिति । शरा हि सर्वस्य स्वनामाङ्किता भवन्ति अस्रादाने नामाक्षराणि नश्येयुः, तदग्रहणं तु तीक्ष्णत्वेनाशुभेदात् । इचुयशानामभावादतालव्योऽयम् ॥ ११० ॥

**आच्छिद्य योधसार्थस्य प्राणसर्वस्वमाशुगाः ।**
**ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम् ॥ १११ ॥**

आशुगा विशिखा योधसार्थस्य भटवृन्दस्य दूरादेव प्राणसर्वस्वं हृत्वा भूमावदर्शनं जग्मुः पातालमाविविशुः । कथमैकागारिकवत् चौरवत्, यथा चौरः सर्वस्वं हृत्वा क्वाप्यदर्शनं याति । एकागारः प्रयोजनमस्यैकागारिकः । "ऐकागारिकट् चौरे" ॥ १११ ॥

**भीमास्त्रराजिनस्तस्य बलस्य ध्वजराजिनः ।**
**कृतघोराजिनश्चक्रे भुवः सरुधिरा जिनः ॥ ११२ ॥**

स जिनो हरिस्तस्य बलस्यारिसैन्यस्य भुवः सरुधिराश्चक्रे, रिपुरक्तेनोर्वीर्निर्भरीचकारेत्यर्थः । कीदृशस्य बलस्य भीमा घोरा अस्त्रराजय आयुधपङ्क्तयो यस्य तस्य भीमास्त्रराजिनः । "इकोऽचि विभक्तावि" ति नुम् । ध्वजैः राजते इति ध्वजराजिनः चिह्नरम्यस्य । कृता घोरा आजिः संयद्येन तस्य कृतघोराजिनः ॥ ११२ ॥

**मांसव्यधोचितमुखैः शून्यतां दधदक्रियम् ।**
**शकुन्तिभिः शत्रुबलं व्यापि तस्येषुभिर्नभः ॥ ११३ ॥**

अरिसैन्यं शकुन्तिभिः कङ्कभासाद्यैः शकुनैर्व्यापि व्यानशे, तस्य च देवस्येषुभिर्नभो व्याप्तम् । शौरिशितशरहतरिपुपिशितजिघत्सया गृध्राद्या रणाजिरे बभ्रमुरित्यर्थः । कीदृशैः मांसव्यधे पिशितताडने उचितं योग्यं मुखं चञ्चुः शल्यं च येषाम् । कीदृक् बलं शून्यतां निःसंज्ञत्वं दधत् बिभ्रत्, अत एवाक्रियं स्वकार्याक्षमं, नभोऽपि शून्यमक्रियं च ॥ ११३ ॥

दाददो दुद्दुद्दादी दाददो दूददीददोः
दुद्दादं दददे दुद्दे ददाददददोऽददः ॥ ११४ ॥

पूर्वप्रक्रान्तो भगवान् विष्णुः दुद्दे दुद्दादं दददे रिपौ शस्त्रं ददौ । तृतीयपादाद्वाक्यार्थावगतिः । दुद्द इति "टुदु उपतापे" दवनं दुत् उपतापः । क्विप् तुक् । दुतं ददातीति दुद्दः शत्रुः । "आतोऽनुपसर्गे कः" । तस्मिन् दुद्दे । दुद्दादमिति "दद दाने" दुत्पूर्वः । दुतं पीडां ददते रातीति दुद्दादमायुधम् । "कर्मण्यण्" । दद(ते ? दे) इति "दद दाने" इत्यस्यैव लिटि ताङि च[१] रूपम् । हरिः शत्रुष्वस्त्राणि निरासेत्यर्थः । इदानीं प्रकरणप्राप्तहरिविशेषणानि सर्वाणि । कीदृक् भगवान् दाददः । ददनं दादो दानं, दद्यते इति वा धनम् । घञ् । दादं ददातीति दाददः उदितः । "आतोऽनुपसर्गे कः" । तथा दुद्दुद्दादी । दुतमुपतापं साधूनां ददते इति दुद्दा अरुन्तुदाः, तेषामपि दुतं पीडां ददते तच्छीलो दुद्दुद्दादी जगदुपतापिनां तापदः । ददेर्णिनिः । तथा दाददः । "देङ् रक्षणे" दानं दा रक्षा । संपदादित्वाद्भावे क्विप् । प्रत्ययलक्षणस्यानिर्दिष्टत्वात्संस्थाशब्दवदीत्वाभावः । दां ददते इति दाददो भुवनरक्षाविधायी । तथा दूददीददोः । "दूङ् परितापे" । दवनं दूः तापः तां ददतीति दूदाः रक्षःप्रभृतयः । "दीङ् क्षये" । दयनं दीः हानिः तां ददतीति दीदाः । "आतोऽनुपसर्गे कः" । दोरिति दमेर्डोस् । दूदानां दीदा दोषः भुजा यस्य स दूददीददोः जगत्कण्टकक्षयकारिबाहुः । तथा ददाददददः । ददन्ते इति ददाः सर्वप्रदाः "पचाद्यच्" । न ददन्ते इत्यददा लुब्धाः तेभ्यो ददः दाता अभीष्टसाधकः । "ददातिदधात्योर्विभाषे" ति दात्रः शः । भगवान् किल सर्वेषां समवर्ती । यदाह "न मे द्वेष्योऽस्ति न प्रियः" इति । तथा अददः । अदन्तीत्यदाः हिंसकाः । "पचाद्यच्" । घस्लादेशं च प्रपूर्वस्यैव स्मरन्ति । तान् द्यति खण्डयतीति अददः शत्रुघ्नः । पूर्ववत्कः । एष तावत् प्रकटोऽर्थो हृद्यत्वादस्माभिरादृतः । व्याख्यान्तराण्यपि सर्वत्रात्र संस्कृतमतान्न दुष्कराणि किंतु प्रतिप-

---

१ 'चङि' क. ख. ग. पाठः ।

त्तिगौरवं स्यात्, नच तानि कवेर्विवक्षितानि । अनुप्रासोऽलंकारः ॥ ११४ ॥

**प्लुतेभकुम्भोरसिजैर्हृदयक्षतिजन्मभिः ।**
**प्रावर्तयन्नदीरस्रैर्द्विषां तद्योषितां च सः ॥ ११५ ॥**

स भगवान् अरीणां तन्नारीणां चास्रैर्नदीः प्रावर्तयत् अजनयत्, द्विषतामस्रैरसृग्भिः स निम्नगाः कृतवान्, शत्रुललनानां चास्रैर्नयनवारिभिः । कीदृग्भिः अस्रैः प्लुताः पूरिता व्याप्ता यथाक्रममिभकुम्भाः कुचाश्च यैः । तथा हृदयक्षतितो जन्म येषां तैः । रुधिराण्यपि वक्षसि भिन्ने निर्यान्ति, अस्राण्यपि हृदयस्य दुःखवशात् ॥ ११५ ॥

**सदामदबलप्रायः समुद्धतरसो बभौ ।**
**प्रतीतविक्रमः श्रीमान् हरिर्हरिरिवापरः ॥ ११६ ॥**

हरिर्विष्णुर्बभौ रेजे । कीदृशः सदा नित्यं मदः क्षीवता यस्य स सदामदो यो बलो हलधरस्तं प्रीणात्यानन्दयतीति सदामदबलप्रायः । परत्वात् "कर्मण्यण्" । समुद्धता प्रोद्धृता रसा भूर्येन समुद्धतरसः । वराहरूपेण हि भगवता जलमध्यात् क्षितिरुद्धृता । प्रतीतः प्रसिद्धो विक्रमः पौरुषं यस्य स प्रतीतविक्रमः । श्रीमांल्लक्ष्मीवान् । अविद्यमानाः परे शत्रवो यस्य सोऽपरः । क इव बभौ हरिरिन्द्रो यथा । सोऽपि कीदृशः सन्नुत्कृष्टः, तथा आमं लोकपीडां ददातीत्यामदो यो बलासुरस्तं प्रकर्षेणायते गच्छत्य'र्दयतीति आमदबलप्रायः । संश्चासावामदबलप्रायश्चेति कर्मधारयः । सह मुदा हर्षेण वर्तते इति समुत् । हतो निरस्तोऽमृतभक्षणाद्रसो विषं येन स हतरसः । प्रतीताः संमुखमागता योद्धुं ये तेषु विक्रमः पौरुषं यस्य स प्रतीतविक्रमः । श्रीर्देवाधिपत्यलक्ष्मीर्विद्यते यस्य स श्रीमान् । अः उपेन्द्रः परोऽनुजो यस्य सोऽपरः । एष एकोऽर्थः ॥१॥ द्वितीयस्तु–स हरिर्बभौ । कीदृशः दाम रज्जुं दितवान् छिन्नवानिति दामदः । तथा बलं सामर्थ्यं प्रायेण बाहुल्येन यस्य स बलप्रायः । यस्य हि शाश्वतिकं बलं न स्यात् स कथं शैशवेऽपि दाम च्छिन्द्यात् । दामदश्चासौ बलप्रायश्च दामदबलप्रायः । समुद्धतेषु सदर्पेषु रसो रोषो जिगीषा यस्य स समुद्धतरसः । प्रतीताः सर्वत्र ख्याता विक्रमा विशिष्टाः क्रमाः पादविक्षेपा यस्य स प्रतीतविक्रमः प्रसिद्धत्रिविक्रमः । श्रीमान् नृपलक्ष्मीयुतः । अपरार्थः पूर्ववत् । यदिवा आप्यते

१ 'आनन्दय'

काम्यते इत्यापो मोक्षः तं राति ददातीत्यापरो मुक्तिदः । हरिरिव सिंह इव सोऽपि सदा अजस्रं मदो दानं येषां ते सदामदाः करिणः तान् बलेन शौर्येण प्रायते अभियुङ्क्ते इति सदामदबलप्रायः । समुद्धतश्चण्डो रसो रौद्राख्यो यस्य स समुद्धतरसः । प्रतीतविक्रमः प्रसिद्धपौरुषः । यदिवा प्रतीतः ख्यातो वेगवतो वेः शकुनस्येव क्रमः पादन्यासो यस्य । श्रीमान् मृगपतित्वात् । अपरो निःसपत्नः । एष द्वितीयोऽर्थः २ ॥ तृतीयस्तु–हरिर्बभौ । कीदृशः सदः दानं दा तया सह वर्तते इति सदः । अविद्यमानो मदश्चेतोविकारो यस्येत्यमदः, सदश्चासावमदश्चेति सदामदः । बलं हलिनं प्राति पूरयत्याप्याययतीति बलप्रः । "आतोऽनुपसर्गे कः" । एतिरायः आगमनम् । "एरच्" । बलप्रो हलधरतोषयिता आयः संप्राप्तिर्यस्य स बलप्रायः । भगवति ह्यागते बलभद्रो हृष्यति । सदामदश्चासौ बलप्रायश्चेति कर्मधारयः । समुदः परितुष्टान् जहति त्यजन्ति क्षपयन्तीति समुद्धाः दुष्टप्राया उच्यन्ते । कप्रत्ययः । सुष्ठु समुद्धाः समुद्धतराः तान् स्यति अन्तं नयतीति समुद्धतरसः कण्ठकक्षेपी । प्रतीतविक्रमः प्रसिद्धपौरुषः । श्रीमान् सर्वसमृद्धियुक्तः । अविद्यमानः पर उत्कृष्टोऽस्मादित्यपरः सर्वश्रेष्ठः ॥–हरिरिव सूर्य इव । "शिवशौरीन्द्रचन्द्रार्ककपिकेकिशुकोरगान् । यमवाय्वग्निसिंहाश्वश्यामकद्रून् हरीन् विदुः" । कीदृशोऽसौ सतामामं रोगं दाति लुनातीति सदामदः, अत एव तेषामेव यद्बलं तस्य प्रा पूरणं बहूकरणं तत्रायोऽनुकूलः । भगवान् किल रोगं नाशयन् महद्बलं ददाति । सदामदश्चासौ बलप्रायश्चेति कर्मधारयः । अत एव समुत् प्रतीतः । हृतः क्षपितो घर्मकाले रसो जलं येन स हृतरसः । भगवान् हि ग्रीष्मसमये सर्वरसान् पिबति । यदुक्तम् "सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ।" इति । प्रतीताः प्रहृष्टाः प्रतिगता वा विक्रमा ययवो यस्य प्रतीतविक्रमः । विक्रमन्ते इति विक्रमा अश्वाः । अश्वानां हि गतिविशेषो विक्रमणम् । श्रीमांस्तेजोलक्ष्मीसंपन्नः । आ समन्ताज्जगत्पिपर्ति पालयतीत्यापरः । पचाद्यच् । अत्र च विविधमनोरुचिप्रतिपत्तिप्रसाधनार्थमर्थषट्कमस्माभिर्व्याख्यायि, नतु कवेरेषोऽभिप्रायः । परमार्थतस्तु प्राकरणिकस्यार्थस्यैकत्वादुपमानयोश्च द्वित्वादर्थत्रयवाचित्वमन्यत्र चाभिमतम् ॥ ११६ ॥

द्विधा त्रिधा चतुर्धा च तमेकमपि शत्रवः ।
पश्यन्तः स्पर्धया सद्यः स्वयं पञ्चत्वमाययुः ॥ ११७ ॥

तं हरिमेकमपि भयवशादरयो द्विधा त्रिधा चतुर्धा चेक्षमाणाः सन्तः स्वयं तत्क्षणादेव पञ्चत्वमाययुर्मरणं प्रापुः । भीताः किल भयदं सर्वत्र पश्यन्तो म्रियन्ते । उत्प्रेक्ष्यते—स्पर्धया किलैष चतुष्ट्वं यावत् प्राप्तो वयमिदानीमेतमतिशयितुं कथं पञ्चत्वं पञ्चसंख्यात्वं न प्राप्नुम इति तत्स्पर्धयेव स्वयं पञ्चत्वं जग्मुः ॥ ११७ ॥

स दैवसंपन्नवपूरणेषु
सदैव संपन्नवपू रणेषु ।
महो दधेऽस्तारिमहा नितान्तं
महोदधेस्तारि महानितान्तम् ॥ ११८ ॥

स भगवान् रणेषु समरेषु नितान्तमत्यर्थं महस्तेजो दधे बभार । कीदृशेषु दैवसंपद्विध्यानुकूल्यसमृद्धिरेव नवं प्रत्यग्रं पूरणं साधनं येषु तानि दैवसंपन्नवपूरणानि तेषु । कीदृशोऽसौ सदैव नित्यमेव संपन्नं परिपूर्णं समृद्धियुक्तं वपुः शरीरं यस्यासौ संपन्नवपुः । तथास्तमाप्तमरीणामरातीनां महस्तेजो येन सोऽस्तारिमहाः । तथा महान् सर्वोन्नतः । कीदृशं महः महोदधेरब्धेरितान्तं प्राप्तावसानं सागरोत्तीर्णम् । तथा तरति प्लवते इति तारि नभोव्यापि । संपुटयमकमिदम् । यस्य प्रथमपादोऽपरेण, तृतीयश्च चतुर्थेन समः तत्संपुटयमकं युग्मकापरसंज्ञम् । वृत्तमुपेन्द्रवज्रा ॥ ११८ ॥

इष्टं कृत्वार्थं पत्रिणः शार्ङ्गपाणे-
रेत्याधोमुख्यं प्राविशन् भूमिमाशु ।
शुद्ध्या युक्तानां वैरिवर्गस्य मध्ये
भर्त्रा क्षिप्तानामेतदेवानुरूपम् ॥ ११९ ॥

शार्ङ्गपाणेर्विष्णोः शरा इष्टमभिप्रेतमर्थं प्रयोजनमरिवधाख्यं विधायाधोमुखाः सन्तः तूर्णं क्षितिं प्राविशन् प्रविष्टाः । मुखेन हीषवः पतित्वा रसातलं यान्ति । युक्तं चैतत्, यदधोमुखत्वं प्राप्य भूमिं प्राविशन् । यस्मात् ये शुद्ध्या युक्ताः शौचान्विता गुणवन्तः, अथच वैरिवर्गस्य मध्ये क्षिप्ता गणिताः एते मम शत्रुतुल्या इति तेषामेतदेवानुरूपं यदधोमुखत्वं प्राप्य परिभवाद्रसातलप्रवेशः । तेऽपि शराः शुद्धा निर्विषत्वात्सरलत्वाच्च, देवेन वैरिमध्ये क्षिप्ताः प्रेरि-

ताः । वैश्वदेवी वृत्तम् । "मौ यौ पञ्चाश्वो वैश्वदेवीति नाम्ना" । अर्थान्तरन्यासोऽलंकारः ॥ ११९ ॥

**सत्त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो**
**लब्धाघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ।**
**मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरे-**
**रेकौघैः समकालमभ्रमुदयी रोपैस्तदा तस्तरे ॥१२०॥**

स भगवान् वासुदेवः पुरोऽग्रवर्ति अभ्रमाकाशं तदा समकालं युगपदेकौघैरविच्छिन्नैरेव प्रवाहप्रवृत्तैः रोपैः शरैस्तस्तरे पिदधे । किं कृत्वा आजिरभसात् समरौत्सुक्यात् मानविशिष्टमुन्नतियुक्तं सत्त्वं शौर्यमालम्ब्य गृहीत्वा । संपदापदोर्निर्विकारता मनसः सत्त्वम् । तथा मुदा तोषेण हरेः सिंहस्य नादं ध्वनिं कामं निकाममत्यर्थं मुक्त्वा सिंहवन्नदित्वा । कीदृशोऽसौ भव्यो योग्यः अभिप्रेतानामर्थानां पात्रभूतः । तथा लब्धा प्राप्ता अघक्षयेण शुद्धिर्यस्मादसौ लब्धाघक्षयशुद्धिः, श्रीवत्सस्य लक्षणविशेषस्य भूमिः स्थानं श्रीवत्सभूमिर्वक्ष उच्यते । उद्धुरतरा अत्युन्नता श्रीवत्सभूमिर्यस्य स उद्धुरतरश्रीवत्सभूमिः पीनवक्षा इत्यर्थः । अपास्तभीस्त्यक्तभीर्वीरत्वात्, परमृगव्याधः शत्रुहरिणलुब्धकः, उदयी जयलक्ष्मीसंयुक्तः । कवेर्माघस्य काव्यस्य च शिशुपालवधस्य यन्नाम तदन्तर्वर्तित्वात् गर्भे यस्य तत् कविकाव्यनामगर्भं कविकाव्यनामाङ्कं चक्रं षडरमनेन श्लोकेन र[1]च्यते । तत्र पदत्रितयं षडराः, प्रत्यरं तृतीयाक्षररचितं कविनाम माघकाव्यमिदमिति । षष्ठाक्षररचितं काव्यनाम शिशुपालवध इति । रेफो नाभिस्थाने । ओघेरिति व्याध इति च "वा शरी" ति विसर्जनीयान्तावेव । चतुर्थस्तु पादो नेमिस्थाने, प्रत्य[2]रमध्येऽक्षरद्वयम् ॥

१ 'भ्राम्यते' क. पाठः । २ 'त्यक्षर'

न्यासः ।




शार्दूलविक्रीडितं वृत्तम् । चित्रमलंकारः । श्रीशब्दलक्ष्मत्वात् काव्यस्य सर्वसर्गसमाप्तौ श्रीशब्दप्रयोग इति भद्रम् ॥ १२० ॥

इत्यानन्ददेवायनि-वल्लभदेवविरचितायां माघकाव्यसारटीकायां संदेहविषौषध्याख्यायामेकोनविंशः सर्गः ॥ १९ ॥

अथ

# शिशुपालवधकाव्ये

## विंशः सर्गः ।



**मुखमुल्लसितत्रिरेखमुच्चैर्भिदुरभ्रूयुगभीषणं दधानः ।**
**समिताविति विक्रमं न मृष्यन् गतभीराह्वत चेदिराण्मुरारिम् ॥१॥**

अथ चेदिराट् चैद्यः समितौ संयति भगवन्तं मुरारिमाह्वत स्पर्धमान आहूतवान् । यतः इति पूर्वोक्तं तस्य विक्रमं न मृष्यन्नसहमानः, गतभीर्निर्भयः । तथा मुखं दधानः । कीदृशमुल्लसितत्रिरेखं स्फुरमाणराजित्रयं, तथा भिदुरभ्रूयुगभीषणं कुटिलमुखरोमराजिभयानकम् । आह्वतेति "स्पर्धायामाङ" इति तङ्, "आत्मनेपदेष्वन्यतरस्या" मिति च्लेरङादेशः । चेदिषु राजते इति चेदिराट् "संपदादि" सूत्रेण क्विप् । अथवा राजशब्दसमानार्थो राड्शब्दोऽप्यस्ति, यदुक्तम्—"राजा च[1] पार्थिवो राड्भूरदिमूर्धाभिषिक्ताश्च । एवं च षष्ठीसमासः । औपच्छन्दसिकं वृत्तमत्र सर्गे । तल्लक्षणं तु—बणलघुर्लुगयुगग्राणलग्युद्वैतालीयं गन्तु[2]मौपवेदम् (?) ॥ १ ॥

**शितचक्रनिपातसंप्रतीक्षं वहतः स्कन्धगतं च तस्य मृत्युम् ।**
**अभिशौरि रथोऽथ चोदिताश्वः प्रययौ सारथिरूपया नियत्या ॥२॥**

अथ तस्य चैद्यस्य रथोऽभिशौरि भगवत्संमुखं प्रययौ प्रतस्थे । कीदृशस्य स्कन्धगतं मृत्युं वहतः । स्कन्धे चेदन्तकोऽस्य स्थितस्तत्कथं न ममारेत्याह–शितचक्रनिपातसंप्रतीक्षं तीक्ष्णसुदर्शनाभिघातं प्रतिपालयमानम् । कीदृग् रथः सारथिरूपया नियत्या विधिना चोदिताश्वः, सूतरूपमाश्रित्य दैवमेतस्य मरणाय रणभुवमश्वान् प्रेरयति । चशब्द उत्तरक्रियापेक्षया समुच्चयार्थः ॥ २ ॥

**अभिचैद्यमगाद्रथोऽपि शौरेरवनिं जागुडकुङ्कुमाभिताम्रैः ।**
**गुरुनेमिनिपीडनावदीर्णव्यसुदेहस्रुतशोणितैर्विलिम्पन् ॥ ३ ॥**

---

१ 'ऽथ' ग. पाठः । २ 'भं' क. पाठः ।

भगवतोऽपि रथोऽभिचैद्यमगात् । अपिः पूर्वापेक्षया समुच्चयं ब्रुवन् एककालत्वमाह । चैद्यस्य रथोऽभिशौरि ययौ हरेरपि तदभिमुखमयादित्यर्थः । शोणितैरुर्वीं विलिम्पन्, कुतस्त्यैर्गुर्वी या नेमिः प्रधिस्तया यन्निपीडनं ताडनं तेन विदीर्णाः पिष्टा व्यसूनां मृतानां ये देहास्ततः स्रुतैर्निर्यातैः । जगुडो देशविशेषस्तद्भवं यत् कुङ्कुमं तद्वदभिताम्रैर्लोहितैः । जगुडः कश्मीराश्च कुङ्कुमाकराः ॥ ३ ॥

**स निरायतकेतनांशुकान्तः कलनिक्काणकरालकिङ्किणीकः ।**
**विरराज रिपूद्धृतिप्रतिज्ञामुखरो मुक्तशिखः स्वयं नु मृत्युः ॥ ४ ॥**

स भगवद्रथो विरराज बभौ । कीदृशः निरायतः सरलः केतनांशुकान्तो ध्वजपटकोटिर्यस्य स निरायतकेतनांशुकान्तः लम्बमानवैजयन्तीकः । तथा कलनिक्काणा मधुरस्वानाः कराला भास्वरा सशब्दाः किङ्किणीका घण्टिका यस्य स कलनिक्काणकरालकिङ्किणीकः । अतश्चोत्प्रेक्ष्यते—शत्रुक्षयप्रतिज्ञामुखरो मुक्तशिखः स्वयं नु मृत्युरन्तक इव । वैजयन्त्याः शिखोपमानम् ॥ ४ ॥

**सजलाम्बुधरारवानुकारी ध्वनिरापूरितदिङ्मुखो रथस्य ।**
**प्रगुणीकृतकेकमूर्ध्वकण्ठैः शितिकण्ठैरुपकर्णयांबभूवे ॥ ५ ॥**

रथस्य स्यन्दनस्य ध्वनिश्चीत्कारो व्याप्ताशाविवर उद्ग्रीवैर्मयूरैरश्रावि । यतोऽमुक्ताम्भोभ्र[1]गर्जितसदृशः । कथं श्रुतः वर्षभ्रान्त्या प्रगुणीकृता केका वाशितं यत्र । वर्षासु प्रहर्षात् नितरां केकायन्ते । निर्जलोऽपि मेघोऽम्बुधरादिभिः शब्दैरुच्यते । यथा—अपचन्नपि सूदः पाचक इति सजलग्रहणम् ॥ ५ ॥

**अभिवीक्ष्य विदर्भराजपुत्रीकुचकश्मीरजचिह्नमच्युतोरः ।**
**चिरसञ्चितयापि चेदिराजः सहसावाप रुषा तदैव योगम् ॥ ६ ॥**

चैद्यो बहुकालार्जितयापि रुषा सहसा तदैव तदानीमेव योगं सम्बन्धमवाप भेजे । यदि तस्य नित्यस्था क्रुत् तत् कस्मादसौ तदैव युयुजे इत्याह—भगवद्वक्ष एवंविधं दृष्ट्वा भेजे इति संबन्धः । कीदृशं विदर्भराजपुत्रीकुचकश्मीरजचिह्नं भीष्मकात्मजास्तनकुङ्कुमाङ्कम् । भगवान् किल रुक्मिणीमाश्लिष्य योद्धुं निरगमत् । सा च पूर्वं पित्रा शिशुपालाय दत्ताभूत् भगवता तु बलादना-

---

१ 'निर्भराभ्रगर्जितः' ग. पाठः ।

यि । ततः प्रभृत्यसौ चुक्रोध । अतश्चिरसंचितयापि रुषा वैरकारणदर्शनात् तदैवासौ तयायुज्यत । योऽपि कामी स कामुकान्तरस्य नायिकाचिह्नान्यालोक्य निजया कान्तया युज्यते ॥ ६ ॥

**जनिताशनिशब्दशङ्कमुच्चैर्धनुरास्फालितमध्वनन् नृपेण ।**
**चपलानिलबोध्यमानकल्पक्षयकालाग्निशिखानिभस्फुरज्ज्यम् ॥७॥**

नृपेण चेदिराजा चापमास्फालितं सदुच्चैरध्वनत् ननाद । कीदृशं जनिताशनिशब्दशङ्कं कृतवज्रनादभ्रान्ति । तथा चपलेन वेगवता अनिलेन वायुना बोध्यमानो वद्ध्यमाणो यः कल्पक्षयकालाग्निर्युगान्तसमयवह्निस्तस्य या शिखा ज्वाला तन्निभा तत्सदृशी स्फुरन्ती कम्पमाना ज्या मौर्वी यस्य तत्तथोक्तम् ॥७॥

**समकालमिवाभिलक्षणीयग्रहसंधानविकर्षणापवर्गैः ।**
**अथ साभिसरं शरैस्तरस्वी स तिरस्कर्तुमुपेन्द्रमभ्यवर्षत् ॥ ८ ॥**

अथ स चैद्यस्तरस्वी बलवानुपेन्द्रं हरिं साभिसरं ससहायं रोपैस्तिरस्कर्तुं प्रोर्णवितुमभिभवितुमभ्यवर्षदसिचत् । कीदृशैः चातुर्याद्युगपदिवाभिलक्षणीया दृश्या ग्रहसंधानविकर्षणापवर्गाः आदानयोजनाभिकर्षणक्षेपा येषां तैः । अभिसरन्तीत्यभिसरा भृत्याः । उक्तं च–“अनुसरमनुप्लवं वै सहायमनुजीविनं तथाभिसरम्” ॥ ८ ॥

**ऋजुताफलयोगशुद्धिभाजामुरुपक्षाश्रयिणां शिलीमुखानाम् ।**
**गुणिना नतिमागतेन संधिः सह चापेन समञ्जसो बभूव ॥ ९ ॥**

पृषत्कानां कोदण्डेन सह संधिः संधानं समञ्जसः समीचीनो बभूव । साधु तेन शराश्चापे संधिता इत्यर्थः । किंभूतानां ऋजुता स्पष्टता फलयोगः शल्यसंबन्धः, शुद्धिर्निर्विषत्वं गतिनिर्दोषता वा, ता भजन्ते श्रयन्ते ये तेषाम् । तथा उरूणां विस्तीर्णानां कङ्कादिपत्राणां य आश्रयः स विद्यते येषाम् । किंविशिष्टेन धनुषा गुणिना सज्येन, नतिमागतेनाकर्षकुटिलेन । अथच समञ्जसो युक्तोऽभूदित्यर्थान्तरम् । ये किल ऋजवः स्पष्टाशया महाफलाश्च शुद्धाश्च सपक्षाश्च तेषां गुणवता नम्रेण च सह संधिरनुरूपो भवति ॥ ९ ॥

**अविषह्यतमे कृताधिकारं वशिना कर्मणि चेदिपार्थिवेन ।**
**अरसद् धनुरुच्चकैर्दृढार्ति[1]प्रसभाकर्षणवेपमानजीवम् ॥ १० ॥**

---
१ ‘महार्ति’ ग. पाठः ।

धनुरुच्चकैस्तारमरसद् दध्वान । कीदृशं वशिना स्वप्रभुणा चेदिपार्थिवेन चैद्येन अविषह्यतमे दुष्करे कर्मणि रिपुवधाख्ये कृताधिकारं नियुज्यमानम् । तथा आकर्षवशाद् दृढार्ति भृशाटनिपीडं प्रसभं च बलात्कारेण यदाकर्षणं तेन वेपमाना स्फुरन्ती जीवा ज्या शिञ्जिनी यस्य तत् तथोक्तम् । अथ चोक्तिः— यः किल वशिना इद्धशासनेन पार्थिवेन दुःसहे व्यापारे राजस्थानादिके विहितनियोगः स यदा केनचित् स्खलितेन सभायामाकृष्यते तदा स वेपमानजीवश्चलत्प्राणो भवति । अत एव दृढयार्त्या उच्चैः रसति फूत्कुरुते । जीवा ज्या असवश्च ॥ १० ॥

**अनुसन्ततिपातिनः पटुत्वं दधतः शुद्धिभृतो गृहीतपक्षाः ।**
**वदनादिव वादिनोऽथ शब्दाः क्षितिभर्तुर्धनुषः शराः प्रसस्रुः॥११॥**

अथ चैद्यस्य कोदण्डान्मार्गणाः प्रसस्रुः निर्गताः[2] । कीदृशाः अनुसन्ततिपातिनो निरन्तरगामिनः । पटुत्वं दधतः चातुर्ययायिनः, शुद्धिभृतो निर्विषाः सरलगामिनो वा, गृहीतपक्षाः पत्रिणः एवंविधाः शराश्चापात् प्रसस्रुः वदनादिव वादिनः शब्दाः । यथा उद्ग्राहयितुर्मुखाच्छब्दा घटपटाकाशादयो निर्यन्ति[3] । तेऽप्यनवरतप्रसारिणः पटत्वशब्दार्थप्रतिपादने चातुर्यात् शुद्धिभृतः संस्कृताः । गृहीतः पक्षो नित्यः शब्दः इत्यादिको यैः ॥ ११ ॥

**गवलासितकान्ति तस्य मध्यस्थितघोरायतबाहुदण्डनासम् ।**
**ददृशे कुपितान्तकोन्नमद्भ्रूयुगभीमाकृति कार्मुकं जनेन ॥ १२ ॥**

तस्य चैद्यस्य चापं कुपितान्तकोन्नमद्भ्रूयुगभीमाकृति जनेन ददृशे रुषितमृत्युकुटिलभ्रूयुग्मभयानकाकारमालुलोके, यतो गवलासितकान्ति महिषविषाणकृष्णच्छवि । तथा मध्ये स्थितो घोरो दीर्घश्च बाहुदण्ड एव नासा घोणा यस्य । भ्रूमध्ये हि नासया भाव्यम् ॥ १२ ॥

**तडिदुज्ज्वलजातरूपपुङ्खैः खमयः[4]श्याममुखैरभिध्वनद्भिः ।**
**जलदैरिव रंहसोत्पतद्भिः पिदधे संहतिशालिभिः शरौघैः[5] ॥ १३ ॥**

अथ शरौघैरिषुपूरैः खं विष्णुपदं पिदधे व्यानशे जलदैरिव, यथाब्दैः खमाव्रियते । शरैस्तावत् तडिदुज्ज्वलस्य जातरूपस्य सुवर्णस्य पुंखा येषां तैः ।

१ 'पूत्' ग. । २ 'निरीयुः' ग. । ३ 'निर्यान्ति' ग. । ४ 'अयसा' क. । ५ 'शरैः खं' क. पाठः ।

तथा अयसा शस्त्रेण श्याममुखैः कृष्णप्रान्तैरभिध्वनद्भिः शब्दायमानैः, यतो रंहसोत्पतद्भिः स्यदेन व्रजद्भिः । संहत्या संहतत्वेन शालन्ति यान्तीति संहतिशालिभिर्नीरन्ध्रगामिभिः । मेघैरपि तडित उज्ज्वलं जातं रूपं येषाम्, अयोवत् श्याममुखैः कृष्णप्रान्तैरभिध्वनद्भिर्गर्जद्भिः । रंहसा जवेन[1] उत्पतद्भिः, संहतिशालिभिर्बाहुल्यश्लाघिभिः । पिदधे इति कर्मणि । "वष्टि भागुरिरल्लोप" मित्यकारलोपः ॥ १३ ॥

**शितशल्यमुखावभिन्नमेघक्षरदम्भः स्फुटतीव्रवेदनानाम् ।**

**स्रवदस्रुततीव चक्रवालं ककुभामौर्णविषुः सुवर्णपुङ्खाः ॥ १४ ॥**

सुवर्णपुङ्खाः शराः ककुभां चक्रवालं दिग्वलयमौर्णविषुः प्यधुः । कीदृशं शितैः शल्यमुखैः फलप्रान्तैरवभिन्नेभ्यो विदीर्णेभ्यो मेघेभ्यः क्षरत् स्रवदम्भो नीरं यस्य तत् शितशल्यमुखावभिन्नमेघक्षरदम्भः । अतश्चोत्प्रेक्ष्यते—स्रवन्ती श्च्योतन्ती अस्रुततिर्बाष्पसंहतिर्यस्य तत् स्रवदस्रुततीव । यतस्तासां स्फुटतीव्रवेदनानां शरप्रहारात् प्रकटदुःसहपीडानाम् । यो हि शरप्रहारभिन्नः पीडितः स वाष्पायते । और्णविषुरिति ऊर्णुञो लुङ् "च्लेः सिच्" इट् "विभाषोर्णो" रित्यङित्त्वपक्षे "ऊर्णोतेर्विभाषे" ति वृद्धिविकल्पः । "आडजादीनाम्, आटश्च" ॥ १४ ॥

**अमनोरमतां यती जनस्य क्षणमालोकपथान्नभःसदां च ।**

**रुरुधे पिहिताहिमद्युतिर्द्यौर्विशिखैरन्तरिताच्युता धरित्री ॥ १५ ॥**

चैद्यबाणैर्जनस्य सैन्यलोकस्य नभःसदां च खेचराणामालोकपथाद् दर्शनमार्गात् यथाक्रमं द्यौर्धरित्री च क्षणं रुरुधे रुद्धा निवर्तिता । नभसि हि शरच्छन्ने जनास्तत् नाद्राक्षुः । धरायां तु रणेक्षणलालसा नभसदः । कीदृक्षा द्यौः क्ष्मा च क्रमेणाच्छादितसूर्या स्थगितमाधवा च, अत एवामनोरमतां यती अहृद्यत्वं यान्ती ॥ १५ ॥

**विनिवारितभानुतापमेकं सकलस्यापि मुरद्विषो बलस्य ।**

**शरजालमयं समं समन्तादुरु सद्मेव नराधिपेन तेने ॥ १६ ॥**

चैद्येन सर्वस्यैव शौरिसैन्यस्य रुद्धरविकिरणमेकमसाधारणं समन्तादख-

[1] 'आटोपेन' ग. पाठः ।

एडं सायकवृन्दमयं महद्वेश्मेव तेने भवनमिव कृतम् । तनोतिरेवमादौ करोत्यर्थान्न भिद्यते । यथा-"लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः । एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता" इति ॥ १६ ॥

**इति चेदिमहीभृता तदानीं तदनीकं दनुसूनुसूदनस्य ।**
**वयसामिव चक्रमक्रियाकं परितोऽरोधि विपाठपञ्जरेण ॥ १७ ॥**

चेदीनां जनपदस्य महीभृता राज्ञा शिशुपालेन दनुसूनुसूदनस्य दानवान्तकस्य विष्णोरनीकं सैन्यं विपाठपञ्जरेण शरजालेनेतीत्थं परितः समन्तादरोधि रुद्धं व्याप्तम्, अत एवाक्रियाकं निष्क्रियं, वयसामिव चक्रं पक्षिपूगं यथा । यथा केनचित् पतद्यूथं पञ्जरेण जालेन परितो निरुद्धं निष्क्रियं च क्रियते । दनुसूनुसूदनादयो नन्द्यादिषु बोद्धव्याः । युन् तु सूदेर्निषिद्धः ॥ १७ ॥

**इषुवर्षमनेकमेकवीरस्तदरिप्रस्तुतमच्युतः पृषत्कैः ।**
**अथ वादिकृतं प्रमाणमन्यैः प्रणिरास प्रतिवादिवत्प्रमाणैः ॥ १८ ॥**

अथानन्तरं तदरिप्रस्तुतं चैद्यप्रारब्धमनेकं बहुमिषुवर्षं शरदुर्दिनमेकवीरो भगवानच्युतः पृषत्कैर्विशिखैः प्रणिरास प्रैरयत् । यथा वादिकृतं पूर्वपाक्षिकोद्ग्राहितं प्रमाणं हेतुमन्यैः प्रमाणैर्बलवत्तरैः प्रतिवादी उत्तरपाक्षिको निरस्यति क्षिपति । एकश्चासौ वीर एकवीरः "पूर्वकालैके" ति समासः । एकशब्दः प्रधानार्थः वीरश्रेष्ठ इत्यर्थः । वीरः सर्वगुणान्वितः । प्रकृतार्थसमर्थको हेतुरत्र प्रमाणम् ॥ १८ ॥

**परिकुञ्चितकूर्परेण तेन श्रवणोपान्तिकनीयमानगव्यम् ।**
**ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवानुकारमुच्चैः ॥ १९ ॥**

धनुः शार्ङ्गमुच्चैस्तारं ध्वनति स्म ररास । कीदृशं तेन भगवता परिकुञ्चितकूर्परेण वेल्लितबाहुमध्येन श्रवणोपान्तिकं कर्णसमीपं नीयमाना प्राप्यमाणा गव्या ज्या यस्य । अतश्च मेघान्ते शरदि मत्ताः क्षीवास्तथा प्रचुरा बहुसंख्याका ये क्रौञ्चा हंसास्तेषां रवानुकारं कूजितविडम्बकम् । समकालवाशमानानेकक्रौञ्चकूजिततुल्यक्रेङ्कारमित्यर्थः ॥ १९ ॥

**उरसा विततेन पातितांसः स मयूराञ्चितमस्तकस्तदानीम् ।**
**क्षणमालिखितो नु सौष्ठवेन स्थिरपूर्वापरमुष्टिराबभासे ॥ २० ॥**

स भगवांस्तदा सौष्ठवेन प्रावीण्येन साध्ववस्थानेन क्षणं लिखित इवाबभासे चित्रन्यस्त इव बुबुधे ज्ञातः । कीदृशः विततेन विशालेनोरसोपलक्षितः, पातितांसो नमितस्कन्धः, मयूराञ्चितमस्तको बर्हिणरम्यशिरस्क[1] उदग्रीव इत्यर्थः । स्थिरपूर्वापरमुष्टिर्निष्कम्पपाणिद्वयनिश्चलाकर्षः । लिखितोऽप्येवंविध एव भवति ॥ २० ॥

**स्तनतो नितरां रयेण गुर्व्यस्तडिदाकारचलद्गुणादसंख्याः ।**
**इषवो धनुषः सशब्दमाशु न्यपतन्नम्बुधरादिवाम्बुधाराः ॥ २१ ॥**

अथ शार्ङ्गिणः शार्ङ्गादिषवः सध्वानं रयेण वेगेन न्यपतन् पेतुः, मेघादिवाम्भोवृष्टयः । कीदृशादत्यर्थं ध्वनतः तथा विद्युत्संस्थानस्फुरन्मौर्वीकात् । मेघो हि तडित्वान् भवति । इषवस्तु गुर्व्यो महत्योऽसंख्याः प्रभूताः । श्लेषः सुगमः । इषुशब्दः स्त्रीपुंसयोर्वर्तते ॥ २१ ॥

**शिखरोन्नतनिष्ठुरांसपीठः स्थगयन्नेकदिगन्तमायतान्तः ।**
**निरवर्णि सकृत्प्रसारितोऽस्य क्षितिभर्तेव चमूभिरेकबाहुः ॥ २२ ॥**

अस्य देवस्यैको बाहुः सैन्यैः क्षितिभर्तेव निरवर्णि वर्णितो[2]ऽवगतः । यतः शिखरवदुन्नतं कर्कशमंसपीठं यस्य । अत एवैकं दिगन्तमाशाभागं स्थगयन् पिदधत् । आयतो दीर्घोऽन्तोऽधोभागः । सकृदिव च प्रसारितः, इष्वादानादर्शनात् सन्ततं शरान् क्षिपन्नित्यर्थः । क्षितिभृदपि उच्चकठिनशिखरो भवति, स्थगितैकदिगन्तश्च, आयतश्च सकृत्प्रसारितश्च ॥ २२ ॥

**तमकुण्ठमुखाः सुपर्णकेतोरिषवः क्षिप्रमिषुव्रजं परेण ।**
**विभिदामनयन्त कृत्यपक्षं नृपतेर्नेतुरिवायथार्थवर्णाः ॥ २३ ॥**

तमिषुव्रजं शरपूगं परेण चैद्येन मुक्तं सुपर्णकेतोर्गरुडध्वजस्य अकुण्ठमुखाः शितशल्याः शरा विभिदामनयन्त भेदमनैषुरच्छैत्सुः । यथा नेतुर्जिगीषोः सत्का अयथार्थवर्णा नृपतेर्जेतव्यस्य राज्ञः कृत्यपक्षं भेद्यवर्गं भेदयन्ति । कृत्या

१ 'मस्तकः' ग. । २ 'पर्वततुल्यो निर्वर्णितः, ग. पाठः ।

विमानितप्रत्याख्यातक्रुद्धलुब्धभीताः । स च भेदः पूर्वमुक्तस्वरूपः "अज्ञातदोषै-र्दोषज्ञै" रिति (२—११३) । ते चाकुण्ठमुखाः सप्रतिभाः । विभिदेत्यङ्गन्तः । अयथार्थवर्णा इति तैलपायिकावञ्चरसंज्ञाः ॥ २३ ॥

**दयितैरिव खण्डिता मुरारेर्विशिखैः संमुखमुज्ज्वलाङ्गलेखैः ।**
**लघिमानमुपेयुषी पृथिव्यां विफला शत्रुशरावलिः पपात ॥ २४ ॥**

चैद्यशर[1]परम्परा भुव्यपतत् । यतो भगवत्पत्रिभिरभिमुखं खण्डिता छिन्ना, अतश्च विफला शल्यरहिता, अत एव लघिमानमुपेयुषी लाघवं प्राप्ता । कीदृ-शैर्विशिखैरुज्ज्वलं रम्यमङ्गं लेखा च येषां तैः । कैरिव खण्डिता दयितैरिव, । यथा काचिन्नायिका उज्ज्वलाङ्गलेखैः प्रियैः खण्डिता विसंवादिता, अत एव लाघवं यती विफला निरर्थका भुवि खेदात् पतति । "निद्राकषायमुकुलीकृत-ताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः । यस्या रतोऽपि[2] गृहमेति पतिः प्र-भाते सा खण्डितेति कथिता[3] कविभिः पुराणै" रिति ॥ २४ ॥

**प्रमुखेऽभिहताश्च पत्रवाहाः प्रसभं माधवमुक्तवत्सदन्तैः ।**
**परिपूर्णतरं भुवो गतायाः परतः कातरवत् प्रतीपमीयुः ॥ २५ ॥**

पत्रवाहाश्चैद्यपत्रिणो भुवो भूमितः परिपूर्णतरमत्यर्थं गताया अतिक्रान्ता-या अपि परतोऽनन्तरं प्रतीपमीयुः प्रति[4]जग्मुः । यदि कृष्णसमीपं ते प्राप्ताः किमिति प्रति[5]ययुरित्याह—माधवमुक्तवत्सदन्तैः शौरिप्रेरितभल्लैः प्रमुखे शल्याग्रे प्रसभं बलादभिहता विद्धाः । क इव प्रतीपमीयुः कातरवत् । यथा परतः स-पत्नात् सभयैः प्रतीपमीयते । आक्रम्यापि समग्रां भुवं प्रमुखे वदने विपक्षक्षि-प्तशराभिहतत्वात् । पत्राणि वहन्तीति पत्रवाहा इषवः । वत्सदन्ता नाराच-विशेषाः । चशब्दः पूर्वापेक्षया समुच्चये ॥ २५ ॥

**इतरेतरसन्निकर्षजन्मा फलसंघट्टविकीर्णविस्फुलिङ्गः ।**
**पटलानि लिहन् बलाहकानामपरेषु क्षणमज्वलत् कृशानुः ॥ २६ ॥**

अन्येषु इषुषु क्षणं कृशानुराश्रयाशोऽज्वलदज्वालीत् । कुतस्त्यः परस्पर-संपेषसमुत्थः, शल्याभिघातोद्भ्रान्तकणः, मेघानां च वृन्दानि लिहन् क्षपयन् ॥ २६ ॥

---

१ 'चैद्येषुप' ग. । २ 'कुतोपि' ग. । ३ 'गदिता' ग. । ४ 'प्रत्या' ग. । ५ 'प्रत्या' ग. पाठः ।

**शरदेव शरश्रिया विभिन्ने विभुना शत्रुशिलीमुखाभ्रजाले ।**
**विकसन्मुखवारिजाः प्रकाशं बभुराशा इव यादवध्वजिन्यः ॥२७॥**

अथ माधववाहिन्यः प्रकटं बभुरशोभन्त । कदा विभुना देवेन शरमेघपटले सायकसमृद्ध्या विभिन्ने नाशिते, अत एव च ता विकसन्मुखवारिजाः प्रफुल्लवक्त्रपद्माः । कयेव कस्मिन् विभिन्ने किं यथेत्याह—शरदेवाशा इवेति । घनात्ययेन यथाभ्रजाले क्षपिते विकसद्वारिजमुखा दिशः प्रकाशं शोभन्ते । उपमानयोर्द्वित्वादिवशब्दावपि द्वावेव युक्तावित्यलङ्कारविदः ॥ २७ ॥

**स दिव समचिच्छदच्छरौघैः कृततिग्मद्युतिमण्डलापलापाम् ।**
**ददृशेऽथच तस्य चापयष्ट्या[1] इषुरेकैव जनैः सकृद्विकृष्टा ॥ २८ ॥**

स देव इषुनिवहैर्द्यां समचिच्छदत् ऊर्णुनाव । अत एव निह्नुतरविबिम्बाम् । तत्राप्यस्य धनुर्लतायाः[2] एकैवेषुः सकृदाकृष्टा बलैरलक्षीति लाघवोक्तिः । अथचेति विस्मये । नह्येकेन शरेण नभश्छाद्यते ॥ २८ ॥

**भवति स्फुटमागतो विपक्षान्न सपक्षोऽपि हि निर्वृतेर्विधाता ।**
**शिशुपालबलानि कृष्णमुक्तः सुतरां तेन ततान तोमरौघः ॥ २९ ॥**

तेन हेतुनाच्युतमुक्तः शरपूगः चैद्यसैन्यान्यत्यर्थं ततापापीडयत् । येन सपक्षात् प्राप्तः सपक्षोऽपि सवर्ग्योऽपि सुखकारी निश्चितं न भवति । यदि हि स्यात् तत्तोमरौघः सपक्षत्वान्न तापयेत् । अरिणा तु क्षिप्तत्वात्पीडाकार्येव ॥ २९ ॥

**गुरुवेगविराविभिः पतत्रैरिषवः काञ्चनपिङ्गलाङ्गभासः ।**
**विनतासुतवत्तलं भुवः स्म व्यथितभ्रान्तभुजङ्गमं विशन्ति ॥ ३० ॥**

इषवो भगवच्छरा भुवस्तलं पातालं विशन्ति स्म प्राविशन्, विनतासुतवद् गरुडा इव, यतो व्यथितभ्रान्तभुजङ्गमम् । वैनतेयेषु भूतलं प्रविष्टेषु अहयो भीता भ्राम्यन्तश्च भवन्ति । कीदृक्षा इषवः, गुरुवेगविराविभिर्दुःसहजवशब्दायमानैः पक्षैरुपलक्षिताः, काञ्चनपिङ्गलाङ्गभासः कनकपिशङ्गदेहच्छवयः । सुपर्णा अप्येवंविधा एव ॥ ३० ॥

---

1 'ष्ट्यां' ग. पाठः । 2 'यां' ग. पाठः ।

**शतशः परुषाः पुरोऽपशङ्कं शिशुपालेन शिलीमुखाः प्रयुक्ताः ।**
**परमर्मभिदोऽपि दानवारेरपराधा इव न व्यथां वितेनुः ॥ ३१ ॥**

दानवारेर्विष्णोः शरा व्यथां न वितेनुः पीडां न चक्रुः । कीदृशाः चैद्येन निर्भयं गणशोऽग्रे क्षिप्ताः, परुषास्तीक्ष्णाः, अत एव मर्मभिदोऽरुन्तुदाः । एवंविधा अपि नाव्यथयन्त अपराधा इव । यथा तेन शतशोऽग्रे कर्णकटुका मर्मस्पृशश्चापराधा निःशङ्कं प्रयुक्ताः कृता भगवतो व्यथां न चक्रुः क्रोधं नाजीजनन् ॥ ३१ ॥

**विहिताद्भुतलोकसृष्टिमाये जयमिच्छन् किल मायया मुरारौ ।**
**भुवनक्षयकालयोग्यनिद्रे नृपतिः स्वापनमस्त्रमाजहार ॥ ३२ ॥**

अथ चैद्यो विष्णौ स्वापनमस्त्रमाजहार नैद्रमस्त्रं प्रयुयुजे, यतो मायया छलेन किल जयमिच्छन् । कीदृशे तत्र विहिता अद्भुता आश्चर्यरूपा लोकानां सृष्टिलक्षणा माया येन, तथा भुवनक्षयकाले योग्योचिता निद्रा यस्य । किलोपहासे । यः किलात्मना मायिकस्तं माययासौ मुग्धो जिगीषते । यश्च कल्पापायसमये निद्रालुस्तस्य स्वापनमस्त्रं मुञ्चति । स्वापयतीति स्वापनम् ॥ ३२ ॥

**सलिलार्द्रवराहदेहनीलो विदधद् भास्करमर्थशून्यसंज्ञम् ।**
**प्रचलायतलोचनारविन्दं विदधे तद्बलमन्धमन्धकारः ॥ ३३ ॥**

अथ तद्बलं भगवत्सैन्यमन्धकारोऽन्धं विदधे निर्दृष्टि चकार, यतः प्रचलायितलोचनारविन्दं निद्रायमाणनयनकमलम् । कीदृगसौ उदकक्नूतक्रोडकायकृष्णस्तथा प्रभाकरमर्थशून्यसंज्ञमभिधेयरहितनामानं विदधत् प्रवृत्तिनिमित्ताभावात् । नहि तदासौ भासः कृतवान्, अस्त्रमहिम्ना तमोबलीयस्त्वात् ॥ ३३ ॥

**गुरवोऽपि निषद्य यन्निदद्रुर्धनुषि क्ष्मापतयो न वाच्यमेतत् ।**
**क्षपितापदि जाग्रतोऽपि नित्यं ननु तत्रैव हि तेऽभवन्निषण्णाः ॥ ३४ ॥**

गुरवो धीरा अपि महीपाश्चापे निषद्य संश्लिष्य यत् निदद्रुः शिश्यिरे सुप्ताः, एतन्न वाच्यं न दोषः, यतो जाग्रतोऽपि ते तत्रैव नाशितविपत्तौ निषण्णाः सक्ता अभूवन्, अतश्चाशयिता अपि ये धनुषि निषण्णास्तेषां सुप्तानां तत्र निषदने का वाच्यता ॥ ३४ ॥

**श्लथतां व्रजतस्तथा परेषामगलद्धारणशक्तिमुज्झतः स्वाम् ।**
**सुगृहीतमपि प्रमादभाजां मनसः शास्त्रमिवास्त्रमग्रपाणेः ॥ ३५ ॥**

तथान्येषां राज्ञां प्रमादभाजां मूढानामग्रपाणेः कराग्रादस्त्रमायुधं सुग्रहीत-मपि दृढावष्टब्धमपि अगलदभ्रश्यत् । यतो निद्रावशाच्छैथिल्यं प्राप्तादत एव निजां धारणशक्तिमवष्टम्भनसामर्थ्यमुज्झतस्त्यक्तवतः । कुतः किमिव मनसः शास्त्रमिव । यथा सुगृहीतमपि शास्त्रं विद्या प्रमादभाजामवलिप्तानां चित्ताद् ग-लति । मनोऽपि श्लथत्वं व्रजत् ग्रहणशक्तिमुज्झति ॥ ३५ ॥

**उचितस्वपनोऽपि नीरराशौ बलयादोनिधिमध्यगस्तदानीम् ।**
**भुवनत्रयकार्यजागरूकः स परं तत्र परः पुमानजागः ॥ ३६ ॥**

तत्र रणे स भगवान् परः पुमान् परमपुरुषः सैन्यार्णवान्तर्गतः परं केव-लमजागः जजागार न सुष्वाप । कदाचिदर्णवमध्ये नासौ शयीतेत्याह—जल-निधावभ्यस्तनिद्रोऽपीति । कथं तर्ह्यजागः इत्याह—भुवनत्रयकार्यजागरूको ज-गत्त्रितयचिन्तासावधानो यतोऽसौ । तस्मिन् किल सुप्ते जगन्ति नश्यन्ति । जागरणशीलो जागरूकः । अजागरिति जागर्तेर्लङ्, तिप्, अदादित्वाच्छपो लु-क्, गुणः "उरण् रपरः" हलङ्यादिलोपः । स परस्तत्र पुमानजागरेकः इति पाठान्तरम् ॥ ३६ ॥

**अथ सूर्यरुचीव तस्य दृष्टावुदभूत् कौस्तुभदर्पणं गतायाम् ।**
**पटु धाम ततो न चाद्भुतं तद्विभुरर्केन्दुविलोचनः किलासौ ॥ ३७ ॥**

अथानन्तरं तस्य देवस्य दृष्टौ दृशि कौस्तुभमेव दर्पणं गतायां ततः कौ-स्तुभात् पटु चण्डं धाम तेज उदभूदुदतिष्ठत् सूर्यरुचीव । यथा रवितेजस्यादर्शे गते ततो दर्पणात् तेज उद्भवति, एवं मणेर्देवदृशि । नचैतदद्भुतं, यस्मादसौ देवः किलार्केन्दुविलोचनो रविशशिनयनः । यदुक्तं "चन्द्रादित्यौ चक्षुषी" इति । अतश्च यथोपमाने नाश्चर्यं तथात्रापि ॥ ३७ ॥

**महतः प्रणतेष्विव प्रसादः स मणेरंशुचयः ककुब्मुखेषु ।**
**व्यकसद्विकसद्विलोचनेभ्यो ददालोकमनाविलं बलेभ्यः ॥ ३८ ॥**

स मणेरंशुचयः कौस्तुभकिरणनिकरो दिङ्मुखेषु व्यकसत् प्रससार । किं कुर्वन् विकसद्विलोचनेभ्य उन्मिषन्नेत्रेभ्यः सैन्येभ्योऽनाबिलमकलुषमालोकं दर्शनं

ददद्वितरन् । पूर्वं हि तानि प्रचलायतलोचनान्यभवन् । किमिव क्वेव विकसतीत्याह—महतः प्रणतेष्विव प्रसादः, उत्तमप्रसादो यथा सेवकेषु विकसति, सोऽपि नेत्रविकासं ददाति । तुष्टे हि प्रभौ चक्षूंषि प्रसरन्ति ॥ ३८ ॥

**प्रकृतिं प्रतिपादुकैश्च पादैश्चक्लृपे भानुमतः पुनः प्रसर्तुम् ।**
**तमसोऽभिभवादवाप्य मूर्छामुदजीवत् सहसैव जीवलोकः ॥ ३९ ॥**

रवेः किरणैर्भूयः प्रसर्तुं चक्लृपे प्रसरणाय प्रववृते प्रसृतम् । यतः प्रवृत्तिं स्वभावं तेजोरूपं प्रतिपादुकैः प्रतिपन्नैरत एव जीवलोको जगत् सहसैव उदजीवदप्राणत् उच्छ्वसितः । तमोभिभवान्मूर्छां मोहमासाद्य । चक्लृपे इति भावे "कृपो रो लः" ॥ ३९ ॥

**गतसन्तमसैर्जवेन भूयो यदुयोधैर्युधि रेधिरे द्विषन्तः ।**
**ननु वारिधरौघरोधमुक्तः सुतरामुत्तपते पतिः प्रभाणाम् ॥ ४० ॥**

शौरिबलैर्गतसन्तमसैर्नष्टमोहैः सद्भिः पुनर्वेगेन द्विषन्तोऽरातयो रेधिरे जघ्निरे । यस्मान्मेघपटलावरणात् निर्यातो भास्करोऽत्यन्तमुत्तपते देदीप्यते । "उद्विभ्यां तपः" । रेधिरे इति कर्मणि, । "रध हिंसाया" मित्यस्यैत्वाभ्यासलोपौ । ननुर्हेतौ ॥ ४० ॥

**व्यवहार इवानृताभियोगं तिमिरं निर्जितवत्यथ प्रकाशे ।**
**रिपुरुत्फणभीमभोगभाजां भुजगानां जननीं जजाप विद्याम् ॥४१॥**

अथ रिपुश्चैद्यो भुजगानां जननीं सर्पोत्पादनीं विद्यां मन्त्रं जजाप जपितवान् । कीदृशामुत्फणभीमभोगभाजाम् ऊर्ध्वकन्धरशरीरजुषाम् । कदा जजाप, प्रकाशे कौस्तुभालोके तिमिरं तमो निर्जितवति क्षपितवति । कस्मिन्निव किं, व्यवहारे न्याये अनृताभियोगमिवालीकोद्योगं यथा जितवति । धनं मे धारयत्ययमित्यलीकवादी साक्षिलेख्याभावात् शाठ्यात् जीयते । भिन्नविभक्तिकानामौपम्यं दुर्घटमिति व्यवहारशब्दात् प्रकाशानुरोधेन सप्तम्युत्पत्तिः । एवमन्यत्र ॥ ४१ ॥

**पृथुदर्विभृतस्ततः फणीन्द्रा विषमाशीभिरनारतं वमन्तः[1] ।**
**अभवन् युगपद्विलोलजिह्वाद्वयलीढोभयसृग्विभागमाविः ॥ ४२ ॥**

---

१ 'स्रवन्तः' ग. पाठः ।

अथ फणीन्द्राः सर्पश्रेष्ठा आविरभवन् उदपद्यन्त । कीदृशाः पृथुदर्वीभृतो दीर्घभोगभाजः । दर्वी आ नासिकायाः कृकाटिकां यावद् देहः । तथा आशीभिर्दंष्ट्राभिः सन्ततं विषमुद्वमन्तो मुञ्चन्तः । कथमाविर्भूता युगपच्चपलेन रसनाद्वयेन लीढावुभयसृग्विभागावास्यपर्यन्तौ यत्राविर्भावे । व्यवहितप्रयोगोऽत्र न तथा न्याय्यः ॥ ४२ ॥

**कृतकेशविडम्बनैर्विहायो विजयं तत्क्षणमिच्छुभिश्छलेन ।**
**अमृताग्रभुवः पुरेव पुच्छं वडवाभर्तुरवारि काद्रवेयैः ॥ ४३ ॥**

काद्रवेयैर्नागैर्विहायः खमवारि व्यानशे । कीदृशैः कृतकेशविडम्बनैर्विहितकचानुकारैर्बालसदृशैः कार्ष्ण्यादित्यर्थः । तथा तत्क्षणं छलेन मायया विजयमरिपराभवमभिलाषुकैः । किमिवावारि, पुरा बडवाभर्तुः पुच्छमिव । यथा पुरा पूर्वमब्धिमथने वडवाभर्तुरश्वस्य पुच्छं वालधिः काद्रवेयैरवारि आश्रायि । कस्याश्वस्य, अमृताग्रभुवोऽमृतज्येष्ठस्योच्चैःश्रवसः । कीदृशैस्तैः कृतं केशेषु बालेषु विलम्बनमालम्बोऽवस्थितिर्यैः । यतश्छलेन विजयैषिभिः । एवं हि श्रूयते—पुरा किल दक्षदुहितरौ कश्यपभार्ये कद्रूविनते व्यवदताम् । पूर्वा आह—उच्चैःश्रवसः कृष्णं पुच्छम्, अपरा तु श्वेतमिति, पणश्च दासभावः । ततः कद्रूर्विषण्णा नागानाह-पुत्रकाः दास्यं गतामेव मां वित्त । वलक्षवालधिरश्वराजः, कुरुतोपायं रक्षत जननीमिति । ततः शेषवासुकिप्रमुखा दर्पिष्ठा नागपञ्चशती तामाह—रभसकृतप्रतिज्ञे ! त्वं नो माता सापि तु मातृष्वसा, किं शक्यमत्रास्माकम् । अपरो दयालुस्तक्षक आह—अम्ब ! धीरा भव, अहमश्वेन्द्रस्य सर्पगणैः सह पुच्छं कृष्णं करोमि, इत्युक्त्वा प्रावृणोत् ॥ ४३ ॥

**दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः ।**
**भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चाः ॥ ४४ ॥**

अक्षीण्येवाकर्णनाच्छ्रवांसि श्रोत्राणि येषां ते अक्षिश्रवसो नागा बभुः । किंभूताः, मुखे वदने विशालाः पृथुलास्तत आनुपूर्व्या परिपाट्या तनिमानं तानवं बिभ्रतः । अत एव नाटकविस्तारा इव । कीदृशा भरतज्ञेन कविना प्रणीतेन रचितेन काव्येन कविकर्मणा वस्तुना ग्रथिताः सम्बद्धा अङ्काः परिच्छेदा येषाम्, अत एव मुखे मुखसंधौ विशालाः, सर्वस्यैव नाटकीयवस्तुन उपक्षिप्त-

१ 'चटुलेन' ग. पाठः ।

त्वात् । ततः क्रमेण प्रतिमुख-गर्भ-विमर्श-निर्वहणसंधिषु तानवं दधते, उपक्षिप्तस्यार्थस्य समाप्तत्वात् । ब्राह्मणादेराकृतिगणत्वात् काव्यशब्दः साधुः । अन्यथा हि "इगन्ताच्च लघुपूर्वात्" इत्यण् स्यात् ॥ ४४ ॥

**सविषश्वसनोद्धतोरुधूमव्यवधिम्लानमरीचि पन्नगानाम् ।**
**उपरागवतेव तिग्मभासा वपुरौदुम्बरमण्डलाभमूहे ॥ ४५ ॥**

तिग्मभासा तीक्ष्णांशुनोपरागवतेव राहुग्रस्तेनेव वपुरौदुम्बरमण्डलाभं ताम्रचक्रताम्रम् ऊहे धृतम् । यतः पन्नगानां गूढपादानां सविषेण श्वसनेन शूत्कारवातेन उद्धतस्तीव्रः क्षुभित उरुर्महान् यो धूमस्तेन यो व्यवधिरन्तर्धानं तेन म्लाना निस्तेजस्का मरीचयो भासो यस्य तत्तथोक्तम् । उपरागेऽप्येवंविधमेव ॥ ४५ ॥

**शिखिपिञ्छकृतध्वजावचूलक्षणसाशङ्कविवर्तमानभोगाः ।**
**यमपाशवदाशु बन्धनाय न्यपतन् वृष्णिबलेषु लेलिहानाः ॥ ४६ ॥**

लेलिहाना भुजगाः कालपाशा इव यदुसैन्येषु बन्धनार्थं क्षिप्रं न्यपतन्, यादवा बन्धं प्राविशन् । कीदृशाः शिखिपिञ्छैर्मयूरबर्हैः कृतेभ्यो ध्वजावचूलेभ्यः चिह्नचामरेभ्यः क्षणं साशङ्कास्त्रस्ता अत एव विवर्तमानभोगाः पराङ्मुखदेहाः । शिखिनो हि सर्पभुजः । अत्यर्थं लिहन्तीति लेलिहानाः सर्पाः । यङन्ताल्लिहो लटः शानच् ॥ ४६ ॥

**पृथुवारिधिवीचिमण्डलान्तर्विलसत्फेनवितानपाण्डुराणि ।**
**दधति स्म भुजङ्गमाङ्गमध्ये नवनिर्मोकरुचं ध्वजांशुकानि ॥ ४७ ॥**

ध्वजांशुकानि केतुपताका भुजङ्गमाङ्गमध्ये आशीविषभोगान्तरे नवनिर्मोकरुचं नूतनाहित्वक्कान्तिं दधति स्म बभ्रुः । सर्पैरेते निर्मोका उत्सृष्टा इति ज्ञायन्ते इत्यर्थः । कीदृंशि तानि, उरुजलराशिकल्लोलवलयमध्ये स्फुरन् यो डिण्डीरराशिस्तद्वद् धवलानि । भुजङ्गमानां वीचय उपमानम्, अंशुकानां तु फेनाः ॥ ४७ ॥

**कृतमण्डलिबन्धमुल्लसद्भिः शिरसि प्रत्युरसं विलम्बमानैः ।**
**व्यरुचज् जनता भुजङ्गभोगैर्दलितेन्दीवरमालभारिणीव ॥ ४८ ॥**

दन्दशूकदेहैर्जनता बलं व्यरुचत् व्यद्योतिष्ट । कीदृशैर्मूर्धनि उल्लसद्भिः श्लिष्यद्भिः । कथं, कृतो मण्डलिबन्धो मण्डलिकावस्थानं यत्र वलयरूपेणेत्यर्थः । तथा प्रत्युरसं उरसि विलम्बमानैः स्रंसमानैः । "प्रतेरुरसः सप्तमीस्थात्" । अतश्चोत्प्रेक्ष्यते—दलितेन्दीवरमालभारिणीव, प्रफुल्तनीलोत्पलस्रग्धारिणीव । यथा दलितामिन्दीवरमालां बिभर्तीति ताच्छील्ये णिनिः । "इष्टकेषीकामालानां चिततूलभारिषु" इति ह्रस्वः ॥ ४८ ॥

**परिवेष्टितमूर्तयश्च मूलादुरगैरा शिरसः सरत्नपुष्पैः ।**

**दधुरायतवल्लिवेल्लितानामुपमानं मनुजा महीरुहाणाम् ॥ ४९ ॥**

मनुजाः पञ्चजना महीरुहाणामनोकुहानामुपमानं दधुः साम्यमूहुः । यत उरगैः पृदाकुभिर्मूलादारभ्य आ शिरसः शिरसि यावत् परिवेष्टितमूर्तयोऽवष्टब्धदेहाः । सह रत्नैरेव पुष्पैर्वर्तन्ते ये तैः सरत्नपुष्पैः । कीदृशानां वृक्षाणाम्, आयतवल्लिवेल्लितानां दीर्घलतावेष्टितानाम् ॥ ४९ ॥

**बह[1]लाञ्जनपङ्कपट्टनीलद्युतयो देहमितस्ततः श्रयन्तः ।**

**दधिरे फणिनस्तुरङ्गमेषु स्फुटपर्याणनिबद्धवध्रलीलाम् ॥ ५० ॥**

फणिनश्चक्षुश्रवसस्तुरङ्गमेषु स्फुटामनूनां पर्याणनिबद्धवध्रलीलां पल्यनयोजितचर्मरज्ज्वनुकारं दधिरे बिभरांबभूवुः । यतः प्रभूतकज्जलकर्दमसूतिकृष्णच्छवयः, इतस्ततः सर्वत्रैव कायं वेष्टयन्तः । केचित्तु पट्टमशुकमाहुः । तत्राञ्जनेन पट्टमंशुकं रज्यते नवेति विचार्यमेतत् ॥ ५० ॥

**प्रसृतं रभसादयोभिनीला प्रतिपादं परितोऽभिवेष्टयन्ती ।**

**तनुरायतिशालिनी महाहेर्गजमन्दूरिव निश्चलं चकार ॥ ५१ ॥**

महाहेर्व्यालेन्द्रस्य तनुर्मूर्तिः रभसात् प्रसृतं गजं निश्चलं चकार बबन्ध । कीदृशी, अयोभिनीला तीक्ष्णवत्कृष्णा, तथा प्रतिपादं सर्वं चरणं समन्तादभिवेष्टयन्ती, यत आयतिशालिनी दैर्घ्यशालिनी अतश्च अन्दूरिव शृङ्खलातुल्या । साप्यायसी नीला दीर्घा गजचरणबन्धनी च ॥ ५१ ॥

**अथ सस्मितमीक्षितादवज्ञाललितैकोन्नमितभ्रु माधवेन ।**

**निजकेतुशिरःश्रितः सुपर्णादुदपप्तन्नयुतानि पक्षिराजाम् ॥ ५२ ॥**

---

[1] 'बहु' ग. पाठः ।

अथानन्तरं सुपर्णाद्गरुडात् पक्षिराजां गरुत्मतामयुतानि लक्षाणि उदपप्तन् पेतुर्निर्जग्मुः, यतो भगवता ईक्षिताद् दृष्टात् । कथं, सस्मितं सहासं । हासस्य तु चैद्यो मां किल नागपाशैर्बन्द्धुमिच्छतीति कारणम् । तथा अवज्ञया सावहेलं ललिता सविलासा एका उन्नमिता उत्क्षिप्ता भ्रूर्मुखरोमराजिर्यत्र, अक्षिनिकोचेन चोदितादित्यर्थः । सुपर्णस्य तत्र कोऽवसर इत्याह—निजकेतुशिरःश्रितः स्वचिह्नशृङ्गसेविनः । गरुडध्वजो ह्यसौ । उदपप्तन्निति लृदित्वादङ् । "पतः पुम्" । पक्षिराडिति पूर्ववत् ॥ ५२ ॥

**द्रुतहेमरुचः खगाः खगेन्द्रादलघूदीरितनादमुत्पतन्तः ।**
**क्षणमैक्षिषतोच्चकैश्चमूभिर्ज्वलतः सप्तरुचेरिव स्फुलिङ्गाः ॥ ५३ ॥**

खगाः सुपर्णाश्चमूभिरैक्षिषत दृष्टाः । कीदृशाः, गलितकनककान्तयः, गरुडात् सध्वानमुद्गताः । उच्चकैरुच्चात् । अतश्च देदीप्यमानात् सप्तरुचेरयुगार्चिष उत्पतन्तः कणा इव । तेऽप्येवंविधाः । ऐक्षिषतेति ईक्षेः कर्मणि लुङ्, च्लेः सिच्, झस्यादादेशः ॥ ५३ ॥

**उपमानमलाभि लोलपक्षक्षणविक्षिप्तमहाम्बुवाहमत्स्यैः ।**
**गगनार्णवमन्तरा सुमेरोः कुलजानां गरुडैरिलाधराणाम् ॥ ५४ ॥**

गगनमेवापारत्वाद् व्याख्यास्यमानधर्मयोगाच्चार्णवोऽब्धिः, तस्यान्तरा मध्ये गरुडैर्वैनतेयैः मेरुवंशानामिलाधराणामद्रीणाम् उपमानं साम्यमलाभि प्रापि लब्धम् । कीदृशैश्चटुलैः पतत्रैः क्षणं प्रेरिता महाम्बुवाहा मेघा एव मत्स्याः पृथुरोमाणो यैः । पर्वता ह्यब्धौ महामत्स्यान् चिक्षिपिरे । सुमेरुग्रहणं पक्षाणां सौवर्णत्वप्रतिपादनार्थम् । द्वित्वं यत्र न लक्ष्यते तत्रान्तरायुक्ते द्वितीया न भवतीति नास्ति निश्चयः इति, गगनार्णवाद् द्वितीया भवत्येव । भट्टशङ्करस्तु गगनं चार्णवश्चेति द्वन्द्वमाह तदसत्, उपमेयेनार्णवस्य सम्बन्धाभावात् । नहि गरुडाः समुद्रमध्यस्थाः । पृथग्विभक्तिनिर्दिष्टयोरन्तरायुक्तयोः द्वितीयेति स्मरणाच्चैवमपि न स्यात् ॥ ५४ ॥

**पततां परितः परिस्फुरद्भिः परिपिङ्गीकृतदिङ्मुखैर्मयूखैः ।**
**सुतरामभवद् दुरीक्षबिम्बस्तपनस्तत्किरणैरिवात्मदर्शः ॥ ५५ ॥**

पततां वीनां किरणैः समन्तादुल्लसद्भिः कृच्छ्रालोकनीयमण्डलः सूर्य आ-

सीत् तत्किरणैरिवात्मदर्शः, तपनमयूखैर्यथा मुकुरो दुर्दर्शो भवति । परिपिञ्जीकृतदिङ्मुखैः सौवर्णत्वात् स्वभावाच्च । आत्मा दृश्यतेऽस्मिन्नित्यात्मदर्श आदर्शः ॥ ५५ ॥

**दधुरम्बुधिमन्थनाद्रिमन्थभ्रमणायस्तफणीन्द्रपित्तजानाम् ।**
**रुचमुल्लसमानवैनतेयद्युतिभिन्नाः फणभारिणो मणीनाम् ॥ ५६ ॥**

स्फुरणशीलसुपर्णकान्तिच्छुरिताः फणिनो मणीनां रुचं दीप्तिं दधुरूहुः । केषां मणीनाम्, अम्बुधिर्मथ्यतेऽनेनेति अम्बुधिमन्थनोऽब्धिक्षोभको योऽद्रिमन्थः पर्वतवैशाखो मन्दराख्यस्तस्य भ्रमणेन परिवर्तनायस्तः क्षुभितः फणीन्द्रो यो वासुकिस्तस्य यत्पित्तं धातुविशेषस्ततो जातानामुत्पन्नानां मरकतानामित्यर्थः । तान्येव हि भ्रमणायासाद्वासुकिरुद्वमदित्यभियुक्ताः । बहुव्यस्तेषां जातयः काचरत्वाच्च तेषामुपमानम् । सर्पा हि नीलाः कनककान्तिच्छुरिताश्च काचराः । मथ्यतेऽनेनेति मन्थः क्षुब्धः ॥ ५६ ॥

**अभितः क्षुभिताम्बुराशिधीरध्वनिराकृष्टसमूलपादपौघः ।**
**जनयन्नभवद् युगान्तशङ्कामनिलो नागविपक्षपक्षजन्मा ॥ ५७ ॥**

नागविपक्षपक्षजन्मा गरुडपतत्रभवोऽनिलो नभस्वान् अभवदुत्तस्थौ । कीदृशः उभयतटाकम्पितार्णवगम्भीरारवः, तथा उन्मूलितसजटतरुपूगः, अत एव कल्पावसानभ्रान्तिं कुर्वन् ॥ ५७ ॥

**प्रचलत्पतगेन्द्रपत्रवातप्रसभोन्मूलितशैलदत्तमार्गैः ।**
**भयविह्वलमाशु दन्दशूकैर्विवशैराविविशे स्वमेव धाम ॥ ५८ ॥**

अथ दन्दशूकैर्दंष्ट्राविषैस्त्रासाकुलं निजमेव धाम स्थानं पातालमाशु आविवेश प्रविष्टम्, यथागतमगामीत्यर्थः । कीदृशैः प्रचलतां भ्राम्यतां पतगेन्द्राणां गरुडानां पत्रवातैरङ्गरुहपृषद्भिः प्रसभं बलादुन्मूलिता उत्खाता[1] ये शैला अहार्यास्तैर्दत्तो मार्गोऽवतरणपथो येषां तैः, उन्मूलिताद्रिविवरप्रविष्टैरित्यर्थः । विवशैः किंकर्तव्यतामूढैः । गर्हितदंशशीला दन्दशूकाः सर्पाः "लुपसद" इति यङ् । "जपजभ" इति नुक् । "यजजपदशाम्" इत्यूकः ॥ ५८ ॥

---

१ 'उद्धाताः' ग. पाठः ।

**खचरैः क्षयमक्षयेऽहिसैन्ये सुकृतैर्दुष्कृतवत् तदोपनीते ।**
**अयुगार्चिरिव ज्वलन् रुषाथो रिपुरौदर्चिषमाजुहाव मन्त्रम् ॥ ५६ ॥**

अथ रिपुश्चैद्य औदर्चिषं मन्त्रमाग्नेयीं विद्यामाजुहावाह्वत् जजाप कथानायकस्य शत्रुम् । कविरपि तथाह—कदा, तस्मिन्नक्षयेऽप्यहिसैन्ये सर्पव्राते तदा खचरैः पक्षिभिः क्षयं नीते शमिते सति, सुकृतैर्दुष्कृते यथा । बह्वपि पापं पुण्यानि क्षपयन्ति । कीदृगरिः अग्निरिव क्रोधात् ज्वलन् । आजुहावेति ह्वेञो लिट् । "अभ्यस्तस्य च" इति संप्रसारणम् ॥ ५६ ॥

**सहसा दधदुद्धताट्टहासश्रियमुत्त्रासितजन्तुना स्वनेन ।**
**विततायतहेतिबाहुरुच्चैरथ वेताल इवोत्पपात वह्निः ॥ ६० ॥**

अथाग्निरशङ्कितमुत्पपात उद्ययौ । कीदृशः, भीषितजनेन रवेणोद्धतचण्डाट्टहासश्रियं दधत्, चटचटाशब्दयुक्त इत्यर्थः । तथा वितता विस्तीर्णा आयता दीर्घा हेतयो ज्वाला एव बाहवो यस्य । उच्चैरुन्नत एव, वेताल इव । सोऽपि भीषितजनेनारवेण उद्धतां चण्डामट्टहासश्रियं धत्ते । दीर्घांश्च भुजान् प्रसार्य जन्तून् भीषयते, उच्चैश्च ॥ ६० ॥

**चलितोद्धतधूमकेतनोऽसौ रभसादम्बररोहिरोहिदश्वः ।**
**द्रुतमारुतसारथिः शिखावान् कनकस्यन्दनसुन्दरश्चचाल ॥ ६१ ॥**

अम्बररोही नभोव्यापी रोहिदश्वोऽग्निश्चचाल प्रससार रभसाद्वेगेन । "हर्यश्वं हरिदश्वं च रोहिदश्वं च पण्डिताः । वदन्ति पृषदश्वं च शक्रसूर्यानलानिलान् " ॥ कीदृशोऽसौ चलित उद्धतो धूम एव केतनं ध्वजो यस्य, द्रुतमारुतसारथिर्वेगवद्वातसूतः । वातवशाद्धि वह्निर्देदीप्यते । शिखावान् सज्वालः, कनकस्यन्दनवत् सुवर्णरथवत् सुन्दरो रम्यः । स्यन्दनोऽपि रभसाच्चलन्नेवंविधो भवति । चलितोद्धतकेतनोऽम्बररोही, द्रुतसारथिः शिखावान् सपताकः ॥ ६१ ॥

**ज्वलदम्बरकोटरान्तरालं बहलार्द्राम्बुदपत्रबद्धधूमम्[1] ।**
**परिदीपितदीर्घकाष्ठमुच्चैर्वनवह्निश्चमुवोष जातवेदाः ॥ ६२ ॥**

---

१ 'बहुला' ग. पाठः ।

जातवेदाश्चित्रभानुर्विश्वमुवोष जगद् ददाह, वनमरण्यमिव इत्यक्लेशकथनम् । कीदृग् विश्वं, ज्वलद् देदीप्यमानमम्बरमेव कोटरान्तरालमालयमध्यं यस्य, बहलेषु[1] चार्द्राम्बुदेष्वेव पत्रेषु बद्धो धूमो यस्य, परिदीपिता दग्धा दीर्घाः काष्ठा दिशो यत्र । वनमप्यग्निदग्धं ज्वलत्कोटरान्तरालं बहलपत्रबद्धधूमं[2] दीप्तदारु च भवति ॥ ६२ ॥

**गुरुतापविशुष्यदम्बुशुभ्राः क्षणमालग्नकृशानुताम्रभासः ।**
**स्वमसारतया मषीभवन्तः पुनराकारमवापुरम्बुवाहाः ॥ ६३ ॥**

अम्बुवाहा निजं रूपं भूयो लेभिरे कृष्णिमासादनात् । कीदृशाः पूर्वं गुरुणा तापेन क्षपितैर्जलैर्धवलास्ततो मनागालग्नेन वह्निना लोहिताः, ततोऽप्यसारतया रिक्तत्वेन मषीभवन्तः कज्जलं संपद्यमानाः, अतश्च काष्र्ण्यासादनात् स्वाकारप्राप्तिः । अभ्राणि हि प्रकृत्या कृष्णानि ॥ ६३ ॥

**ज्वलितानललोलपल्लवान्ताः स्फुरदष्टापदपत्रपीतभासः ।**
**क्षणमात्रभुवामभावकाले सुतरामापुरिवायतिं पताकाः ॥ ६४ ॥**

पताका वैजयन्त्योऽभावकाले दाहसमये क्षणमात्रभुवां विद्युतामिवायतिं दैर्घ्यं सुतरामापुर्लेभिरे, तडिन्निभा अलक्ष्यन्तेत्यर्थः । यतो ज्वलितेनानलेन लोलाः कम्प्राः पल्लवान्ता यासाम् । तथा स्फुरद्भिरष्टापदपत्रैः सुवर्णपत्रैः पीतभासः पिङ्गकान्तयः । अभावापेतुश्च (?) क्षणमात्रस्थायिन्योऽपि विद्युतोऽपि लसत्कार्तस्वरनिभपीतभासः । अष्टापदशब्दे "अष्टनः संज्ञाया" मिति दीर्घः । क्षणमात्रं भवन्ति द्योतन्ते इति क्षणमात्रभुवोऽचिरांशवः ॥ ६४ ॥

**निखिलामिति कुर्वतश्चिराय द्रुतचामीकरशारितामिव द्याम् ।**
**प्रतिघातसमर्थमस्त्रमग्नेरथ मेघङ्करमस्मरत् मुरारिः ॥ ६५ ॥**

अथानन्तरं भगवान् मेघङ्करमब्दोत्पादकं वारुणमस्त्रमस्मार्षीत् जजाप । कीदृशमग्नेराश्रयाशस्य प्रतिघातसमर्थं विनाशक्षमम् । कीदृशस्य, इतीत्थं समग्रां दिवं द्रुतेन गालितेन चामीकरेण महारजतेन शारितामिव चिरं कुर्वतः। मेघं करोतीति मेघङ्करम् । "मेघर्तिभयेषु कृञः" इति खश् ॥ ६५ ॥

---

१ 'बहुलेषु' ग. । २ 'हु' ग. पाठः ।

**चतुरम्बुधिगर्भधीरकुक्षेर्वपुषः संधिषु लीनसर्वसिन्धोः ।**
**उदगुः सलिलात्मनस्त्रिधाम्नो जलवाहावलयः शिरोरुहेभ्यः ॥ ६६ ॥**

त्रिधाम्नो विष्णोः शिरोरुहेभ्यः केशेभ्यो जलवाहावलयो मेघमाला उदगुर्निरीयुः आविरभवन् । कीदृशस्य, चत्वारोऽम्बुधयो गर्भेऽभ्यन्तरे यस्य स चतुरम्बुधिगर्भो, धीरो गम्भीरः कुक्षिरुदरं यस्य । तथा शरीरसंधिषु संलग्ननिखिलनदीकस्य, यतः सलिलात्मनो जलरूपस्य । यदुक्तम्—"यस्य केशेषु जीमूता नद्यः सर्वाङ्गसंधिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः" ॥ त्रिधामेति भगवतोऽन्वर्था संज्ञा । त्रीणि भूर्भुवःस्वर्लक्षणानि धामान्यास्पदं यस्येति कृत्वा । क्वचित्तु 'सलिलात्मकत्रिधाम्नः' इति पाठः । तत्र सलिलात्मकानि त्रीणि धामानि केशसन्धिकुक्षिस्थानानि यस्येति विग्रहः । उदगुरिति "इणो गा लुङि । गातिस्थाघुपाभूभ्यः" इति सिज्लुक् ॥ ६६ ॥

**ककुभः कृतनादमास्तृणन्तस्तिरयन्तः पटलानि भानुभासाम् ।**
**उदनंसिषुरभ्रमभ्रसंघाः सपदि श्यामलिमानमानयन्तः ॥ ६७ ॥**

अभ्रसंघा घनाघनस्तोमा अभ्रं खमुदनंसिषुरुत्पेतुः । किं कुर्वन्तः, दश दिशः सध्वानमास्तृणन्तः ऊर्णुवानाः । तथा रविमयूखानां पटलानि जालानि तिरयन्तः स्थगयन्तः, श्यामलिमानमानयन्तः प्रापयन्तः, प्रकृतत्वात् खस्यैव । तिरस्करोति "तत्करोति" इति णिच् । "णाविष्ठवत्प्रातिपदिकस्य" तीष्ठवत्त्वात् "इष्टेमेयःसु टेः" इति टिलोपः । उदनंसिषुरिति 'णमु प्रह्वत्वे' उत्पूर्वः, लुङ् च्लेः सिच् "यमरमनमातां सक्च" इति इड्भावः सक्च । अनुस्वारः । "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस् । अभ्राणि विद्यन्ते यस्य तदभ्रं नभः । "अर्शआदिभ्योऽच्" । श्याम एव श्यामलस्तद्भावः श्यामलिमा । वर्णवाचित्वादिमनिच् ॥ ६७ ॥

**तपनीयनिकाषराजिगौरस्फुरदुत्तालतडिच्छटाट्टहासम् ।**
**अवबद्धसमुद्धताम्बुवाहध्वनिताडम्बरमम्बरं बभूव ॥ ६८ ॥**

अम्बरं नभः तदेवंविधमभूत् । कीदृशं, तपनीयस्य यो निकाषो निकषणमश्मन्युल्लेखस्तस्य तेन वा या राजिर्लेखा तद्वद् गौरी द्योतमाना उत्ताला उन्नता उल्वणा वा या तडिच्छटा विद्युद्विच्छित्तिः सैवानुपहतो हासो यस्य

तत् तथोक्तम् । हासस्य त्वन्योन्यजिगीषयास्त्रयुद्धेन सुखोत्पादनं हेतुः । तथावबद्धः अनुबद्धः समुद्धतस्तारोऽम्बुवाहानां मेघानां ध्वनितमेव आडम्बरः तूर्यरवो यस्य तत् अवबद्धसमुद्धताम्बुवाहध्वनिताडम्बरम् । तूर्यस्य तु युद्धमेव कारणम् ॥ ६८ ॥

**सवितुः परिभावुकैः मरीचीन् रचिताभ्यङ्गमतङ्गजाङ्गभाभिः ।**
**जलदैरिति विस्फुरद्भिरुच्चैर्विदधे केतनतेव धूमकेतोः ॥ ६९ ॥**

उल्लसद्भिरुन्नम्रैर्धूमकेतोः केतनतेव विदधे धूमत्वमिव कृतम् । यो हि धूमकेतुस्तस्य धूम एव केतनम् । चैद्यास्त्रजनितस्याग्नेर्मेघा धूमरूपा अभवन्नित्यर्थः । कीदृग्भिर्जलदैः, सवितुर्हरिदश्वस्य मरीचीन् अभीशून् परिभावुकैरभिभाविभिः, तथा रचिताभ्यङ्गमत्यर्थदत्तस्नेहं यन्मतङ्गजाङ्गं पीलुप्रतीकं तद्वत् भा दीप्तिर्येषाम्, अतिकृष्णैरित्यर्थः । धूमोऽप्येवंविधः । परिभावुकैरिति "लषपत" इत्युकञ् । तत्प्रयोगे च मरीचिशब्दात् "नलोकाव्ययनिष्ठा" इति कर्मणि कृत्षष्ठीनिषेधः ॥ ६९ ॥

**ज्वलतः शमनाय चित्रभानोः प्रलयाप्लावमिवाभिदर्शयन्तः ।**
**ववृषुर्वृषनादिनो नदीनामतटारोपितवारि वारिवाहाः ॥ ७० ॥**

जलदा देदीप्यमानस्य चित्रभानोराशुशुक्षणेर्निर्वापणाय तोयं ववृषुर्मुमुचुः । कथं, नदीनामतटेभ्योऽप्युपर्यारोपितमुत्प्लावितं वारि यत्र तदतटारोपितवारि । नद्यो यत्र स्थलान्याचक्रमुरित्यर्थः । अत एव प्रलयाप्लावमिव कल्पान्तोदकपूरमिवाभिदर्शयन्तः । युगान्ते किल सर्वमुदकव्याप्तमासीत् । वृषा दान्ता इव ये नदन्ति गर्जन्ति ते वृषनादिनः । "कर्तर्युपमाने" इति णिनिः ॥ ७० ॥

**मधुरैरपि भूयसा स मेध्यैः प्रथमं प्रत्युत वारिभिर्दिदीपे ।**
**पवमानसखस्ततः क्रमेण प्रणयक्रोध इवाशमीन्निनादैः ॥ ७१ ॥**

पवमानसखोऽग्निर्मेध्यैराब्दैर्वारिभिः प्रथमं पूर्वं प्रत्युत भूयसातिशयेन दिदीपेऽज्वलीत् । मधुरैः प्रथमप्रवृत्तत्वाद् विरलैः यदिवा माधुर्यगुणयुक्तैः । मेघ्यं हि कं मधुरम् । अपिर्विस्मयपूर्वके विरोधे । मधुरं किल गुडादिकं न दीपनमपितु जाड्यकरम् । तीक्ष्णं हि दीपनमिति वैद्याः । ततोऽनन्तरमसौ क्रमेण वेगवद्वर्षवशादशमीत् ननाश, निनादैः प्रणयक्रोध इव । निनादैः सान्त्ववचनै-

मधुरैरप्यनुद्वेगकरैरपि यथा प्रणयक्रोधः प्रीतिकोपोऽपमानाख्यः प्रत्युत पूर्वं नितरां दीप्यते ! एवंविधो ह्येष प्रमदास्वभावः । मेघेषु भवो मेघ्यः । "दिगादिभ्यो यत्" । पवते इति पवमानो वायुः । "पूङ्यजोः शानच्" । तस्य सखा अग्निः सहचरत्वात् । "राजाहःसखिभ्यष्टच्" । ननु यत्राग्निस्तत्र वायुः न-तु यत्र वायुस्तत्राग्निः, अत्र च वायोः सहचरत्वं विवक्षितमतश्च बहुव्रीहिरत्र वाचकः इति कथं टजुत्पत्तिः । अत्रोपाध्यायप्रकाशवर्ष आह 'षष्ठीसमासेऽप्यत्र बहुव्रीह्यर्थोऽन्तर्भवत्येव, यो हि यस्य सखा तस्यासावपि सखा भवति । एवमन्यत्रापि । यथा भारवेः—"ओजसापि खलु नूनमनूनं सत्सहायमुपयाति जयश्रीः । यद्विभुः शशिमयूखसखा सन्नाददे विजयचापमनङ्गः" इति ॥ ७१ ॥

**परितः प्रसभेन नीयमानः शरवर्षैरवसायमाश्रयाशः ।**
**प्रबलेषु कृती चकार विद्युद्व्यपदेशेन घनेष्वनुप्रवेशम् ॥ ७२ ॥**

अभ्राणां सतडित्त्वेन अग्नेश्च शान्त्या कविरूहामास–शरवर्षैस्तोयसेकैः प्रसभेन बलात् परितोऽवसायमन्तं नीयमान आश्रयाशोऽग्निः प्रबलेषु महत्सु मेघेषु विद्युद्व्यपदेशेन तडिद्व्याजेनानुप्रवेशमन्तरावस्थानमकरोत् । यतः कृती ज्ञः शास्त्रज्ञः । एवं किलोक्तं बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वेति । आश्रयं स्थानम अश्नाति दहतीत्याश्रयाशः कृष्णवर्त्मा । शरं नीरे शरो बाणे इति कोशात् ॥ ७२ ॥

**प्रयतः प्रथमं हुताशनस्य क्वचिदालक्ष्यत मुक्तमूलमर्चिः ।**
**बलभित्प्रहितायुधाभिघातत्रुटितं पक्षिपतेरिवैकपत्रम् ॥ ७३ ॥**

वह्नेर्नाशं व्रजतो गच्छतो मुक्तमूलं त्यक्तसंधिस्थानं क्वचिदेवंविधमर्चिर्ज्वाला आलक्ष्यत ददृशे । किंविधं, बलभिदा शक्रेण प्रहितेन क्षिप्तेनायुधेन वज्रेण योऽभिघातः प्रहारस्तेन त्रुटितं छिन्नं पक्षिपतेर्गरुडस्यैकं पत्रमिव स्वर्णपक्षमिव । वज्राभिघाताद् गरुडेन शक्ररोषशमनार्थमेकं पत्रमुत्सृष्टमासीदित्यागमः ॥ ७३ ॥

**व्यगमन् सहसा दिशां मुखेभ्यः शमयित्वा शिखिनं घनाघनौघाः ।**
**उपकृत्य निसर्गतः परेषामुपरोधं नहि कुर्वते महान्तः ॥ ७४ ॥**

घनाघनौघाः सजलजलधरजालानि आशामुखेभ्यः सहसाग्निं शमयित्वा व्यगमन् यथागतं ययुः । अत्रार्थान्तरन्यासः । ये महान्त उत्तमास्ते निसर्ग-

तः स्वभावादुपकृत्योपकारं कृत्वा अन्येषामुपरोधं न कुर्वते । ये हि स्वभावोपकारिणस्ते उपकृत्यादर्शनं यान्ति । यदुक्तम्—"इयमुच्चधियामलौकिकी महती वापि कठोरचित्तता । उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया" ॥ मेघाश्च महान्तो यदि च वर्षित्वा न गच्छेयुस्तत् तेषामुपरोधः स्थगनं कुतो भवेत् ॥ ७४ ॥

**कृतदाहमुदर्चिषः शिखाभिः परिषिक्तं मुहुरम्भसा नवेन ।**
**विगताम्बुधरव्रणं प्रपेदे गगनं तापितपायितासिलक्ष्मीम् ॥७५॥**

गगनं विष्णुपदं तापितपायितासिलक्ष्मीं पूर्वं तापित उत्तेजितः पश्चात् पायितो दत्तपानीयो जले ब्रुडितो योऽसिस्तीक्ष्णधारः[1] तस्य लक्ष्मीं शोभां प्रपेदे प्राप । यतः पूर्वमुदर्चिषः शिखाभिर्वह्निज्वालाभिः कृतदाहं दग्धं ततो नवेन नीरेण परिषिक्तं कृतसेकमुक्षितम्, विगताश्चाम्बुधरा एव व्रणानि तुषकणानि यस्य । खड्गेऽपि तापितपायिते व्रणानि नश्यन्ति । पातेर्णिचि "शाच्छासाह्वाम्" इति युकि क्ते पायितमिति रूपम् । औपच्छन्दसिकं वृत्तम् ॥ ७५ ॥

**इति नरपतिरस्त्रं यद्यदाविश्चकार**
**प्रकुपित इव रोगः क्षिप्रकारी विकारम् ।**
**भिषगिव गुरुदोषच्छेदिनोपक्रमेण**
**क्रमविदथ मुरारिः प्रत्यहंस्तत्तदेव ॥ ७६ ॥**

नरपतिः शिशुपालः क्षिप्रकारी चतुरः इतीत्थं यद्यत् स्वापनादिकमस्त्रमाविश्चकार प्रयुयुजे तत्तदनन्तरं भगवान् मुरारिः प्रत्यहन् प्रतीपं जघान अनीनशत् । केन गुरुदोषच्छेदिना महदापत्तिनाशकेनोपक्रमेण, प्रत्यस्त्रैरित्यर्थः । यतः क्रमवित् परिपाटीज्ञः । स हि जानीते अस्यास्त्रस्येदं प्रत्यस्त्रम् । यद्यदिति तत्तदिति वीप्सायाम् अस्त्रपरम्पराख्यापनार्थम् । क इव किं वैद्योऽस्त्रमाविश्चकार, क इव च मुरारिस्तत्तत् प्रत्यहन् इत्याह–रोग इव विकारं, भिषगिवेति । क्षिप्रं द्राक् कृणोति क्षणोतीति क्षिप्रकारी । कुपितो यथा रोगो व्याधिर्यं विकारं दोषमाविष्करोति तं तं यथा क्रमवित् शास्त्रज्ञो भिषग् वैद्यो गुरुदोषच्छेदिनोपक्रमेण चिकित्साख्येन शीघ्रं प्रतिहन्ति आच्छिनत्ति । पूर्ववदिवशब्दयोर्द्विः प्रयोगः । प्रत्यहन्निति, हन्तेर्लङ् । हल्ङ्यादिलोपः । मालिनी वृत्तम् ॥ ७६ ॥

---

1 'तीक्ष्णवर्त्मा' ग. पाठः ।

**शुद्धिंगतैरपि परामृजुभिर्विदित्वा बाणैरजय्यमविघट्टितमर्मभिस्तम्।**
**मर्मातिगैरनृजुभिर्नितरामशुद्धैर्वाक्सायकैरथ तुतोद तदा विपक्षः ७७**

विपक्षोऽरिश्चैद्यस्तं देवं बाणैरजय्यं विदित्वा अनन्तरं वाक्सायकैर्वचनशरैस्तुतोद अपीपिडत्, अशक्तत्वादाचुक्रोशेत्यर्थः । कीदृशैर्बाणैः, परामुत्कृष्टां शुद्धिमदोषभावं गतैरपि, तथा ऋजुभिरपि स्पष्टैरपि, अविघट्टितमर्मभिरनरुन्तुदैरपीडाकरैः, देवस्य दिव्यबलत्वात् । इतरैर्मर्मातिगच्छन्त्यतिक्राम्यन्तीति मर्मातिगैररुन्तुदैरनृजुभिर्वक्रैः, असतो दोषस्य चारोपणात्, सुष्ठु चाशुद्धैः कर्णकटुकैरश्लीलत्वात् । अतस्तानुत्सृज्य तानाददे । जेतुं शक्यो जय्यः "क्षय्यजय्यौ शक्यार्थे" इत्ययादेशः । वसन्ततिलकं वृत्तम् ॥ ७७ ॥

**राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथालिङ्गन-**
**व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ।**
**तेनाक्रोशत एव तस्य मुरजित् तत्काललोलानल-**
**ज्वालापल्लवितेन मूर्धविकलं चक्रेण चक्रे वपुः ॥ ७८ ॥**

अथ चैद्यस्याक्रोशतो निन्दत एव भगवान् मुरारिस्तेन चक्रेण शरीरं सहसा झगित्येव मूर्धविकलं शिरोरहितं चक्रे व्यधात् । सुदर्शनेनास्योत्तमाङ्गमच्छिनदित्यर्थः । तेनेत्यनेन चक्रस्य यो धर्मो विवक्षितस्तं वक्ति । केन तेनेत्याह–येन चक्रेण राहुस्त्रीस्तनयोः सुर्भानुललनापयोधरयोः काठिन्यातिशयो वृथा निरर्थक एवाकारि कृतः । राहोर्येन शिरः कृत्तमित्यर्थः । अतश्च कीदृशयोः, अश्लथो गाढो य आलिङ्गनव्यापारः परिरम्भणविधिः स एवैको विनोदः केलिस्तत्र दुर्ललितयोर्हेवाकिनोः, आश्लेषवर्जं व्यापारान्तरं न विद्यते इत्यर्थः । अतश्च यदा राहुः शिरोविशेषः संपन्नस्तदालिङ्गनाभावात् तयोः कार्कश्यं निष्फलमेव । तथा तस्मिन् काले आक्रोशसमये लोलाश्चटुलाः परिस्फुरन्त्यो या अनलज्वाला वह्निहेतयस्ताभिः पल्लवितेन निर्यातपत्रेण व्याप्तेन, अग्निज्वाला मुञ्चतेत्यर्थः । पर्यायप्रायोऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७८ ॥

**श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-**
**र्वपुष्टश्चैद्यस्य क्षणमृषिगणैर्नूयमानं निरीय ।**
**प्रकाशेनाकाशे दिनकरकरान् विक्षिपद्विस्मिताक्षै-**
**र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षांबभूवे ॥ ७९ ॥**

इति श्रीमाघभट्टविरचिते शिशुपालवधकाव्ये विंशः सर्गः ॥ २० ॥

अथ शिरश्छेदानन्तरं चैद्यस्य शिशुपालस्य वपुष्टः शरीरान्निरीय निर्गत्यौपेन्द्रं कार्ष्ण्यं वपुर्देहं विशत् श्रयत् धाम तेजो विस्मितास्तैर्विस्मयोत्फुल्ललोचनैर्नरेन्द्रैर्मूर्धाभिषिक्तैर्वीक्षांबभूवे आलुलोके । तथा च भगवान्पाराशर्यः—"ततश्चेदिपतेर्देहात् तेजोऽग्र्यं ददृशुर्नृपाः । उत्पतन्तं तदा राजन् गगनादिव भास्करम् ॥ ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् । ववन्दे तत्तदा तेजो विवेश च नरोत्तमम् ॥ तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीभृतः । प्रविवेश महाबाहुं तत्तेजः पुरुषोत्तमम्" इति ॥ कीदृग्भागवतं वपुः, श्रिया जुष्टं लक्ष्म्या सेवितं, तथा दिव्यैराकाशपतितैः पुष्पवर्षैः कुसुमवृष्टिभिः सपटहरवैर्दुन्दुभिध्वनियुक्तैरनुगतम्, ऋषिभिर्मुनिगणैर्नूयमानं स्तूयमानं, प्रकाशेनोद्द्योतेन देहप्रभया आकाशे खे दिनकरकरानहर्पतिमयूखान् विक्षिपत् तिरस्कुर्वत् । यदुक्तम्–"दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः" इति ॥ असावप्येवंविध एव, स हि भगवदंशः । वपुषो वपुष्टः "पञ्चम्यास्तसिल्" । ह्रस्वात्तादौ तद्धिते" इति षत्वम् "ष्टुना ष्टुः" । उपेन्द्रस्येदमौपेन्द्रम् । ईक्षांबभूवे, ईक्षेः कर्मणि लकारः । "इच्छादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । "आमः" इति लेर्लुक् । "कृञ्चानुप्रयुज्यते लिटि" इति लिट् । तस्यैशादेशः । "भुवो वुग् लुङ्लिटोः । द्वित्वं भूः, ह्रस्वः । वामनमतेन तिन्निर्देशात् "भवतेरः" इत्यत्वाभावः । स ह्येवमाह—भवतेस्तिन्निर्देशः कर्त्रर्थः, इह तु न भवति "अनुबभूवे केवलो देवदत्तेने" ति । जयादित्यस्त्वेतेन मूलोदाहरणमेव दत्तवान्, तिन्निर्देशस्य निर्देशार्थत्वादेवेत्यभिप्रायेणेति तन्मतेनात्रात्वं भवत्येव । वार्तामध्यमश्लेषसङ्करोऽलङ्कारः । सुवृत्ता नाम वृत्तम् । 'सुवृत्ते यो मश्चैतदनुलघवः पञ्चषागं (?) सरौ गौ ॥ श्रीशब्दलक्ष्मत्वात् काव्यस्य प्रतिसर्गसमाप्तौ श्रीशब्दप्रयोगः । इति भद्रम् ॥ ७९ ॥

इति श्रीमहामहोपाध्यायवर्य–आनन्ददेवायनि–श्रीवल्लभदेवाचार्यविरचितायां माघकाव्यसारटीकायां सन्देहविषौषध्याख्यायां शिशुपालवधो नाम विंशः सर्गः

॥ २० ॥



समाप्तं चेदं शिशुपालवधकाव्यम् ।

श्रीरस्तु ॥

१ 'सुवृत्ते यौ त्वं चैतदनु लघवः पञ्चषागं सगौ यौ' ग. पाठः ।

अधुना कविर्लाघवेन निजवंशवर्णनं चिकीर्षुराह—

**सर्वाधिकारी सुकृताधिकारः श्रीधर्मलाभस्य बभूव राज्ञः ।**
**असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा ॥ १ ॥**

श्रीधर्मलाभाख्यस्य राज्ञः सर्वाधिकारी निखिलस्थानाधिकृतो गृहगणनाधिपतिः सुप्रभदेवनामा बभूव । कीदृशः सुकृते पुण्यकर्मणि अधिकारो यस्य सः । यस्य सर्वाधिकृतत्वं तस्य कथं पुण्यकर्मण्येव अधिकारः स्यादिति विरोधच्छाया । तथा सदैव असक्तदृष्टिरव्यसनी अप्रतिहतज्ञानो वा । विरजा निष्कल्मषः, अत एव सर्वाधिकारित्वम् । अतश्चापरो देवो द्वितीयो राजा तत्सादृश्यात् । राजा हि सर्वाधिकारी भवति । अथवाऽपरो देवो देवसदृशः । सुरा हि सुकृताधिकृताः असक्तदृष्टयोऽनिमेषाः, विरजस्का निर्धूलयः । उपजातिर्वृत्तम् ॥१॥

**काले मितं तथ्यमुदर्कपथ्यं तथागतस्येव जनः सचेताः ।**
**विनानुरोधात् स्वहितेच्छयैव महीपतिर्यस्य वचः चकार ॥ २ ॥**

यस्य सुप्रभदेवस्य काले समये वच उपदेशकरं वचनं महीपतिर्धर्मलाभश्चकार अन्वतिष्ठत् । कदाचिन्मन्दा[1]त्वात् कुर्यात् नेत्याह–विनानुरोधात् । उपरोधाभावे च कथं चकारेत्याह–स्वस्यात्मनो हितेच्छया अनुकूलचिकीर्षया, यतोऽसौ सचेताः प्राज्ञः । कीदृग् वच इति तत्त्वमाह–मितं, स्वल्पं तथ्यं, सत्यमुदर्कपथ्यमायतौ हितम् । कस्येव क इवेत्याह–यथा तथागतस्य बुद्धस्य प्राज्ञो जनः सत्यमुदर्कपथ्यं वचः स्वहितेच्छयैव करोति, नतु अनुरोधाद् भक्तत्वाद्भगवता किलेदमुक्तमिति ॥ उपजातेरयं भेदः पञ्चदशः ॥ २ ॥

**तस्याभवद् दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः ।**
**यं वीक्ष्य वैयासमजातशत्रोर्वचो गुणग्राहि जनैः प्रतीये ॥ ३ ॥**

तस्य सुप्रभदेवस्य दत्तकाख्यस्तनूजस्तोकम् अभूत् । कीदृशः, उदात्तो विपुलचित्तः, क्षमी क्षमाशीलो, मृदुरक्रूरो, धर्मपरः स्वहितैकसक्तः । यं च दत्तकं लोको दृष्ट्वा वैयासं व्यासोक्तमजातशत्रोर्युधिष्ठिरस्य यद् गुणग्राहि गुणग्राहकं वचस्तत् प्रतीये प्रतिपन्नम् अङ्गीकृतम् । भवन्ति सत्यं गुणिनः पुरुषाः, भगवता द्वैपायनेन पार्थस्याधिकार्थवचनं न किञ्चिदुक्तम् । अत्र च दत्तकोऽयं निखिलगुणभाजनं निदर्शनम्, अन्यथा कथमेवंगुणोऽयं स्यात् । क्षमीति शमा-

[1] 'मन्दादरश्चकार नेत्याह' ग. पाठः ।

दित्वाद् घिनुण्। व्यासस्येदं वैयासं वचो भारतम् । वृद्धाच्छेन बाधितत्वादण्त्र न तथा सुलभः । गुणान् गृह्णातीति गुणग्राहि । आख्यानिका वृत्तम् ॥ ३ ॥

**सर्वेण सर्वाश्रय इत्यनिन्द्यमानन्दभाजा जनितं जनेन ।**
**यश्च द्वितीयं स्वयमद्वितीयो मुख्यः सतां गौणमवाप नाम ॥ ४ ॥**

यश्च दत्तकः स्वयमात्मना सर्वाश्रय इत्येवं द्वितीयं संज्ञान्तरं लेभे प्राप । कीदृशं, सर्वेणाखिलेन जनेन आनन्दभाजा तुष्टेन जनितं कृतम् । तथा गौणं, गुणाः प्रवृत्तिनिमित्तं तत्रागतं गौणम् अर्थानुगतं, सर्वेषामाश्रयत्वात्। यदा हि सर्वे तत्र द्विजात्यनाथातिथिमित्रबान्धवा विश्राम्यन्ति तदासौ सर्वाश्रयो नतु नाममात्रेण । अत एवानिन्द्यं प्रशस्यं श्लाघ्यम् । स कीदृशोऽद्वितीयः सर्वोत्कृष्टः । न विद्यतेऽस्मादधिकगुणो द्वितीय इति कृत्वा । तथा साधूनां मुख्यः प्रधानानामग्रणीः। सर्वं चैतद्विरुद्धमिवाभासते । यस्य द्वितीयं नाम विद्यते स कथमद्वितीयो भवेत् । यश्च मुख्यः स कथममुख्यं लभते । अविरोधस्तु व्याख्यात एव । इतिनात्र स्वरूपेणैवावस्थाप्यमानस्य सर्वाश्रयशब्दस्य प्रातिपदिकार्थमात्रत्वे सति कर्मत्वाभावात् द्वितीयानुपपत्तिः । मुखमिव मुख्यः "शाखादिभ्यो यः" । विरोधालङ्कारः । इन्द्रवज्रा वृत्तम् ॥ ४ ॥

**श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म**
**लक्ष्मीपतेश्चरितकीर्तनमात्रचारु ।**
**तस्यात्मजः सुकविकीर्तिदुराशयादः**
**काव्यं व्यधत्त शिशुपालवधाभिधानम् ॥ ५ ॥**

तस्य दत्तकस्यात्मजोऽद एतत् काव्यं शिशुपालवध इत्यभिधानं व्यधत्त व्यरचयत् । कया सुकवीनां वररुचिसुबन्धुकालिदासभारविभट्टिबाणमयूरादीनां या कीर्तिः ख्यातिर्यशस्तत्र या दुराशा दुरभिलाषस्तया, महाकविकीर्तिलिप्सयेत्यर्थः । दुष्टत्वं त्वाशायाः स्वल्पबुद्धित्वेन सुकविकीर्तेरप्राप्यत्वात् । तथा च कालिदासः "मन्दः कवियशःप्रार्थी" इति । कीदृक् काव्यं श्रीरित्ययं शब्दो मङ्गलवाचकत्वाद् रम्यं कृतं सर्गाणां समाप्तौ लक्ष्म चिह्नं यस्य तत् श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्म । तथा भगवतो लक्ष्मीपतेर्नारायणस्य यच्चरितं चेष्टितं तस्य कीर्तनं वर्णनं तन्मात्रेण चारु मनोहरं नत्वलङ्कारादियोगादित्यमौद्धत्य-

कथनम् । भङ्ग्या तु सर्वे गुणा अत्र काव्ये सन्ति इत्युक्तं भवति । श्रीरित्ययं शब्दः श्रीशब्दः । मयूरव्यंसकादित्वात् समासः । यदि वा कर्मधारयः, श्रीशब्दश्चासौ शब्दश्चेति । केवलं चरितकीर्तनं चरितकीर्तनमात्रम् इत्यस्वपदेन विग्रहः । "सुप् सुपा" इति समासः । वसन्ततिलकं वृत्तम् । उदात्तो मध्यमो वालङ्कारः ॥ इति भद्रम् ॥ ५ ॥

"सूनुरानन्ददेवस्य रणे (?) भूव्योमभास्वतः (१२०१) ।
व्यधत्त टीकां काव्येऽस्मिन् वल्लभः सूरिवल्लभाम् ॥
श्लोकानां सूचनेनैषा सहस्राणि तु द्वादश ।
मूलग्रन्थविहीना तु विद्वज्जनमनोहरा" इति ॥



समाप्तेयं शिशुपालवधटीका कृतिः श्रीआनन्ददेवसूनोः
श्रीपरमार्थचिह्नापरनाम्नो वल्लभदेवस्येति
शुभम् ॥

